यदपि भावाज्ञाने प्रमाणं नास्तीति तदसमीचीनम्। "मायां तु प्रकृतिं" "इन्द्रो मायाभिः" "नासदासीन्नो सदासीत् तम आसीत्" "नीहारेण प्रावृता" "आसीदिदं तमोभूतं" इत्यादिश्रुतिस्मृत्यादयः प्रमाणानि। न चैतेषामन्यार्थकत्वं शक्यं वक्तुम्। अनादिभावभूताज्ञानमन्तरा च न कूटस्थचैतन्यमात्रस्य ब्रह्मणो जगत्कारणत्वं घटेत। न च भ्रम एवाज्ञानशब्दप्रतिपाद्य इति वाच्यम्। तस्य जन्यत्वेनोपादानसापेक्षत्वात्। नापि ज्ञानप्रागभावरूपमज्ञानम्। अज्ञानस्य ज्ञाननिवर्त्यत्वात्। ज्ञानस्य च ज्ञानप्रागभावनिवृत्तिरूपत्वात्। प्रागभावे प्रमाणाभावाच्च। "अहमज्ञः" इत्यादिसाक्षिप्रत्यक्षमप्यज्ञानं भावरूपमेवावेदयति। किं च ज्ञानसामान्याभावरूपत्वेऽज्ञानस्य धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां व्याघातापत्तेः। धर्मिप्रतियोगिप्रतिसंधानाभावेऽपि अहमज्ञ इत्यज्ञानानुभवदर्शनाच्च। ज्ञानविशेषाभावरूपत्वे च तस्य, ज्ञातेऽपि वस्तुनि न जानामीति प्रतीतिप्रसंगो दुर्वारः। ज्ञानविशेषाभावस्य सर्वदा सत्वात्। तस्मान्नाज्ञानमभावरूपम्। अत एव पूर्वोत्तरमीमांसकैः बाह्यं तमोऽपि भावात्मकमभ्युपगम्यते। तदुक्तम्—

"नाभावोऽभाववैधर्म्यान्नारोपो बाधहानितः।
द्रव्यादिषट्कवैधर्म्यात् ज्ञेयं मेयान्तरं तमः" ॥ इति ॥

## शाब्दापरोक्षतावादः

तृतीये साधनाध्याये—"नान्यः पन्था विद्यतेऽयनाय"।
"तत्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम् ॥"

"तत्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः।
तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥"

इत्यादिवाक्योक्तरीत्या वेदान्तमहावाक्यजन्यापरोक्षाज्ञानमेव ब्रह्मप्राप्तिरूपमोक्षसाधनम्। न ज्ञानकर्मसमुच्चयस्य ब्रह्मप्राप्तिहेतुत्वं इति विस्तरेण निरूपितम्।

अत्र भामतीकाराः—शब्दात्परोक्षमेव ज्ञानं जायते। शब्दस्य परोक्षज्ञानजनकत्वस्वाभाव्यात्। न चापरोक्षे प्रत्यगभिन्ने ब्रह्मणि परोक्षज्ञानं भ्रमस्स्यादिति वाच्यम्। परोक्षत्वेनानुल्लेखात्। अपरोक्षं तु ज्ञानं श्रवणमनननि-

दिध्यासनाभ्यासजन्यसंस्कारसहकृतमनोजन्यमेव । न च भावनाजन्यत्वेन साक्षात्कारस्य कामिनीसाक्षात्कारवत् अप्रामाण्यापत्तिः । श्रुतिमूलत्वेन प्रामाण्यसंभवात् । उक्तं च कल्पतरौ—

" वेदान्तवाक्यजज्ञानभावनाजाऽपरोक्षधीः ।
मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ॥ " इति ॥

न च " यन्मनसा न मनुत " इति श्रुतिविरोधः । तस्याश्शास्त्राचार्यादिसंपादितसंस्कारशून्यापक्वमनोगम्यत्वनिषेधपरत्वात् इत्याहुः ।

**अन्ये विवरणकारास्त्वाहुः**—महावाक्यादपरोक्षज्ञानमेव जायते । तत्र च दशमस्त्वमसीति वाक्यं दृष्टान्तः । न चैवं सति श्रवणमनननिदिध्यासनानां वैयर्थ्यमापतेत् । प्रथमत एवापरोक्षज्ञानस्य जातत्वादिति वाच्यम् । श्रवणादेः प्रागेवापरोक्षज्ञानस्य महावाक्यादुत्पन्नत्वेऽपि असंभावनाविपरीतभावनाग्रस्तत्वान्न फलपर्यवसायित्वं तस्य भवति । न च फलपर्यवसायित्वाभावात् ज्ञानमेव नोत्पन्नमिति शंक्यम् । तथा सति विचारानारंभापत्तेः । एतन्मतेऽपरोक्षज्ञानमेव विचारप्रयोजकमिष्यते । अपरोक्षज्ञानानन्तरं असंभावनादौ सति विचारशास्त्रं प्रवर्तते । वेदान्तमीमांसाशास्त्रविचारेण प्रमाणगतासंभावना, मननेन प्रमेयासंभवना निदिध्यासनेन विपरीतभावना च निराक्रियते । तदनन्तरं पुनरपि महावाक्यानुसंधानजन्यं मूलाज्ञानोन्मूलनक्षमं मुक्तिफलकं ब्रह्मसाक्षात्कारात्मकं विज्ञानमुत्पद्यते ।

न चास्मिन् पक्षे प्रमाणाभावः । " तं त्वौपनिषदं " नात्रेदविन्मनुते तं बृहन्तं " इत्यादिभिरुपनिषन्मात्रवेद्यत्वावगमात् । शब्दातिरिक्तप्रमाणावेद्यत्वाच्च । न च शब्दस्वाभाव्यभंगः । अपरोक्षवस्तुविषयकत्वेन वेदान्तानां ब्रह्मापरोक्षज्ञानजनकत्वसंभवात् । अपरोक्षवस्तुविषयकत्वमेव ज्ञानस्यापरोक्षत्वम् । न त्विन्द्रियजन्यत्वादिकम् । विषयापरोक्ष्यं च विषयव्यवहारानुकूलचैतन्याभिन्नत्वम् । मनोगम्यत्वश्रुतीनां महावाक्येन साक्षात्कारे जननीये मनसः करणत्वेन सहकारित्वप्रतिपादनपरत्वमेवेति । तथा कर्मणां च चित्तशुद्धिद्वारा ज्ञानोपयोगो वर्णितः ।

## परमहंस-सन्यासवादः

परमहंससन्यासश्च दृष्टद्वारा वाऽदृष्टद्वारा वोपयुज्यते ज्ञाने इति श्रुति-स्मृतिवचनोदाहरणपूर्वकं त्रिदण्डसन्यासनियमं पराकृत्य एकदण्डसन्यासो व्यवस्थापितः ।

**अत्रापस्तंबस्मृतिविरोध**माशंक्य सन्यासविधायकबहुश्रुतिस्मृतिविरो-धात्तस्यास्स्मृतेस्सन्यासनिषेधकत्वं नास्ति । किन्तु ब्रह्मसाक्षात्कारमन्तरा क्षेम-प्राप्तिर्न संभवतीत्येव तत्स्मृत्यर्थः । "तच्छास्त्रैर्विप्रतिषिद्ध"मित्यत्र तच्छब्देन "बुद्धे क्षेमप्रापणमे"व परामृश्यते । न तु सर्वतः परिमोक्षमित्यादि । नपुं-सकलिंगतच्छब्दनिर्देशेन तस्यैव प्रत्यभिज्ञानात् । अव्यवहितपरामर्शसंभवे व्यवहितपरामर्शस्यायुक्तत्वात् । अत आपस्तंबस्मृतिस्सन्यासं न निषेधतीति समादधुरेतद्ग्रन्थकृतः ।

**श्रीमदप्पय्यदीक्षितचरणास्तु**—सन्यासनिषेधकत्वमापस्तंबस्मृतेरुररी-कृत्य कर्मप्ररोचनार्थं सन्यासाश्रम"स्तच्छास्त्रैर्विप्रतिषिद्ध"मित्यनेन दूष्यत इति निरूपयामासुः । उक्तं च तैः—

"स्फारा तत्तत्पुराणागमवचनशतप्रापिता याऽन्यनिन्दा
तत्तद्भक्त्यादिसिद्ध्यै स्तवनविरचने सा भवेद्द्वारमात्रम् ।
कर्मानुष्ठेयतार्थं किमु निरतिशयब्रह्मसंस्थादिनिन्दा-
मापस्तंबादिवाक्ये न कलयसि ततः काऽस्य हानिस्तवेष्टा ॥

इति । एवमस्मिन् ग्रन्थे विषयव्यवस्थापनरीतिरन्यविलक्षणा समादृता

## जीवेश्वरवादः

कणादादिमहर्षयो जीवभिन्नमीश्वरमनुमानेन पूर्वं प्रसाध्य पश्चात्संवा-दित्वेन श्रुतिं प्रमाणयन्ति । वेदान्तिनः पुनः श्रुत्या परमात्मास्तित्वं प्रसाध्य तत्र युक्तिं संवादयन्ति । जीवात्मानश्च प्रतिशरीरं भिन्ना इति नैयायिकादयः कथयन्ति ।

अत्रेदमालोचनीयम् । न खल्वनुमानमात्रात्सर्वज्ञत्वादिविशिष्टः परमेश्वरः प्रसाधयितुं पार्यते । ईश्वरसंभावनामात्रमनुमानेनोत्पद्येत । तद्गतविशेषगुणा-दिनिर्णये अनुमानस्यासामर्थ्यात् । अतः श्रुतिरेव भगवतीश्वरसिद्धौ शरणीकर-

णीया श्रुतिश्च जीवपरामात्मभेदो जीवानां परस्परभेदश्चौपाधिक इति प्रतिपाद्यै-कात्मवादमेवोत्तमत्वेनोपदिशति ।

विवरणाचार्यपक्षे अन्तःकरणप्रतिबिंबं अविद्याप्रतिबिंबं वा चैतन्य जीव इति । वाचस्पतिमिश्राणां मते तु अन्तःकरणावच्छिन्नं अविद्याव-च्छिन्नं वा चैतन्यं जीव इति । अन्तःकरणोपाधिकथनं चात्रानेकजीववादा-नुसारेण । अविद्योपाधिकत्वाभ्युपगमस्त्वेकजीववादानुसारेण ।

## एकजीववादः

एकात्मवादे त्रयः प्रकाराः । तत्राद्यो यथा--एकमेव शरीरं सात्मकम्, अन्यानि शरीराणि निरात्मकानि । यथा स्वप्ने स्वप्नद्रष्टृशरीरमे-कमेव सात्मकम् । तदन्यशरीराणि निरात्मकानि, तथैव जागरेऽपीति । बद्धमुक्त-गुरुशिष्यादिव्यवस्थादिसर्वव्यवहारोऽपि स्वप्नवदेव स्वीकर्तव्यः ।

द्वितीयो यथा—हिरण्यगर्भशरीरं मुख्यजीवेन सात्मकं, तदितराणि शरीराणि सात्माभासानि । इमं सविशेषानेकशरीरैकात्मवादमामनन्ति ।

तृतीयस्तु यथा—अविशेषेण सर्वशरीरेष्वेक एवात्माऽस्ति ।

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः " ।

एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इति वचनात् ॥

अत्र श्रुतौ नानादेहेष्वेक आत्मा उतानेक इति संशये एक एवेति निर्णीयते । आत्मनो भूतत्वविशेषणेन पारमार्थिकत्वमात्मनः प्रतिपा-द्यते । तेनार्थादन्येषां मिथ्यात्वमुक्तं भवति । एवं च नानादेहभेदेन भ्रान्ति-प्राप्तात्मनानात्वं निषिध्याज्ञातमेकत्वमात्मनो बोधयतीयं श्रुतिः ।

यद्येक एवात्मा तर्हि सुखदुःखबन्धमुक्त्यादिव्यवस्था कथं सेत्स्यतीति नानात्मवादिभिराक्षेप उपस्थाप्यते । अत्रेदं समाधानमभिहितं भाष्यादिषु । अज्ञानभेदाद्वाऽन्तःकरणभेदाद्वा पूर्वोक्तसर्वव्यवस्थोपपत्तेस्सुलभत्वादिति । जल-चन्द्रवदिति दृष्टान्तोऽप्यमुमर्थमुपोद्बलयति । यथा चैकस्मिन् जलचन्द्रे कंपमाने सर्वे जलचन्द्रा न कंपन्ते तथा एकस्मिन्नात्मनि सुखादिमति न सर्वे सुखादि-मन्तो भवेयुः । तथैकोपाधिनिवृत्तौ न सर्वेषामपि जलचन्द्राणां बिंबैक्यम्, परन्तु यस्योपाधिर्निवृत्तस्तस्यैव । तथा यस्य ब्रह्मसाक्षात्कार उत्पन्नः, तस्यैव

ब्रह्मैक्यं सिद्धयति नान्यस्येति बन्धमुक्तिव्यवस्थाप्येकात्मवादे सुकरैव । एवं जीवेश्वरव्यवस्थापि सुलभसंपाद्या भवति ।

## नानाजीववादः

उपाधिस्तु बह्वज्ञानवादे बहून्येवाज्ञानानि, तत्रैकाकाज्ञाननिवृत्तिरेकैकज्ञानोत्पत्त्या भवति । एकाज्ञानवादे तु तस्य शक्तिभेदो वावस्थाभेदो वा तत्तदन्तःकरणोपादानभूत इति तत्तज्ज्ञानेन निवर्त्यते । अन्यत्र जीवे बन्धोऽनुवर्तत इति ।

इयं च व्यवस्था व्यावहारिकदृष्टिमवष्टभ्य कथ्यते । वस्तुगत्या तु बन्धमोक्षाभाव इष्ट एवाद्वैतिनाम् । तथाह्याहुर्गौडपादाचार्याः—

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्नवै मुक्त इत्येषा परमार्थता" ॥ इति ॥

## अद्वैतवादे एव सुखदुःखादिव्यवस्थोपपत्तिः

एकात्मवादे यत्परैर्द्वैतवादिभिः सर्वशरीरेषु सुखदुःखाद्यनुसंधानप्रसंगः । न चेष्टापत्तिः । तथा सति देवदत्तचरणगतकण्टकोद्धाराय यज्ञदत्तस्य प्रवृत्त्यापत्तेरिति दूषणमुद्भाव्यते । तदिदमज्ञानविजृंभितम् । अदृष्टविशेषसहकृताविद्यकशरीरभेदस्यैव तत्सामर्थ्यं, यत् क्वचिद् देहे कस्यचिद्भोगानुसंधानं क्वचिन्नेति व्यवस्थायाम् । योगिनां तु योगप्रभावात् सर्वत्रानुसन्धानं युज्यते नेतरस्य । योगप्रभावाभावात् । एतेनेदमपास्तं—कायव्यूहवतो योगिनो बहुषु शरीरेषु सुखाद्यनुसंधानमिवान्येषामपि तथैवैकात्मवादे स्यादिति ।

किं चैकात्मवादे आधुनिकाः केचनेत्थमाशंकन्ते—अद्वैतिनां मते सर्वमात्माभिन्नमिति सिद्धान्तः । तथा सति अन्यस्य हृदि वर्तमानं किमित्यद्वैतिभिर्ज्ञातुं न पार्येत । द्वयोरभेदादिति । नेयमाशंका युक्ता । आत्माभेदेऽपि अवच्छेदकोपाधिभेदांगीकारादन्यहृदयस्थाज्ञानं संघटते । अवच्छेदकभेदादवच्छेद्यभेदोऽप्यनिवार्य इति तु नाशंक्यम् । अवच्छेदकावच्छेद्यभवो ह्याविद्यकः स्वीक्रियते । न । तु पारमार्थिकः । तर्हि परहृदयगतज्ञानं अशक्यवारणं पुनरापततीति चेत् । न । अज्ञानावृतत्वादन्यहृदयगतज्ञानं नास्तीति । अज्ञानस्य ब्रह्मणो भेदेऽद्वैतहानिरिति चेत् । न । पारमार्थिकतयाऽज्ञानस्य वा तद्भेदस्य

वा ब्रह्मण्यनभ्युपगमात् । अत एकात्मवादे न सुखदुःखाद्यव्यवस्थाऽऽपाद-यितुं शक्यते ।

प्रत्युतात्मभेदवादिकाणादादिमत एव सुखदुःखादिव्यवस्था न सिद्ध्यति । जीवात्मनां सर्वेषां विभुत्वेन सर्वशरीरमनस्संयोगित्वस्यावर्जनीय-त्वात् । अदृष्टस्य प्रदेशभेदस्य च सर्वात्मसाधारणत्वात् । किं च बहूनामा-त्मनां विभुत्वं न संभवति । दृष्टान्ताभावात् । अपि चात्मनां बहुत्वमप्यसं-गतम् । लक्षणभेदाभावात् । अत आत्मैकत्वस्य श्रुतिस्मृत्यादिसिद्धत्वादेकत्वे-ऽप्यात्मनः प्रागुक्तरीत्या सुखदुःखादिव्यवस्थासंभवान्नानेकात्मवादकल्पना युज्यते ।

## अविद्याश्रयवादः

अज्ञानाश्रयं चैतन्यं शुद्धमिति संक्षेपशारीरकाचार्याः । अज्ञानप्रति-बिंबितं चैतन्यमीश्वरः । वाचस्पतिमिश्रास्तु ब्रह्म नास्ति न भातीत्यादिव्यव-हारो यदाश्रितस्तस्यैव तत्कारणाज्ञानाश्रयत्वमंगीकर्तव्यम् । कार्यकारणयोर्वैय्य-धिकरणस्यायुक्तत्वात् । तादृशव्यवहारश्च जीवाश्रित एव दृश्यत इति तस्यैव तत्कारणाज्ञानाश्रयत्वमपि स्यात् । जीवस्याज्ञानविषयत्वं न संभवति । अज्ञा-नाश्रयतया जीवस्य प्रत्यक्षादिसिद्धत्वेन तत्रावरणाभात् । अतोऽज्ञानाश्रयचैत-न्यस्यैवाज्ञानविषयत्वं स्वीकर्तव्यम् । तथा चाज्ञानविषयत्वोपहितं चैतन्यमेवेश्वर इति वदन्ति । अयमेवावच्छेदवाद इति गीयते ।

“ घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥ ” इति श्रुतेः ।

इमे च ग्रन्थकाराः शुद्धचैतन्याश्रितत्वमज्ञानस्य व्यवस्थापयन्ति । जीवा-श्रितत्वमज्ञान स्येति पक्षमेते न क्षमन्ते । जीवाश्रयत्वपक्षमपि कल्पतरुका-रादयो महान्तो महता प्रयत्नेन समर्थयांबभूवुः । अन्तःकरणावच्छिन्नचैत-न्यस्याज्ञानाश्रयत्वेऽन्योन्याश्रयानवस्थादिदोषाः ग्रन्थकृता आपादिताः । उप-लिक्षतस्याश्रयत्वे च नाग्नि विवाद इति । जीवाविद्ययोरनादित्वेन नोत्पत्ताव-न्योन्याश्रयादीनां प्रसंगः इत्यादियुक्तिभिरविद्याया जीवाश्रयत्वमिति पक्षस्यापि निर्दुष्टत्वमेवामनन्ति आन्ये आचार्याः ।

एवं "आश्रयत्वविषयत्वभागिनी"ति वाक्यानुसारेण शुद्धब्रह्माश्रयत्वपक्षोऽपि निर्दुष्ट एव। स्वप्रकाशे तस्मिन् कथमज्ञानाश्रयत्वमिति नाशंकनीयम्। स्वप्रकाशस्वरूपचैतन्यस्याज्ञानविरोधित्वाभावात्। प्रत्युत तत्प्रकाशकत्वात्। प्रकाशकस्य नाशकत्वं विरुद्धं स्यात्। नित्यनिवृत्तिप्रसंगात्। परन्तु तत्वमस्यादिवाक्यजनितब्रह्माकारमनोवृत्तिप्रतिफलितचैतन्यस्यैवाज्ञानविरोधित्वमिष्यते। स्वप्रकाशमपि ब्रह्म स्वाश्रिताज्ञाननिवर्त्तनार्थं वृत्यन्तरमपेक्षते। प्रमाणवृत्तिमन्तरेणाज्ञाननिवृत्तेरसंभवात्। प्रमाणवृत्तेरज्ञाननिवर्त्तकत्वात्। प्रमात्वसंपत्त्यर्थमेव ब्रह्मणोऽखण्डाकारवृत्तिविषयत्वमुपेयते। सर्वज्ञेश्वराश्रयत्वं तु नाज्ञानस्यांगीक्रियते। पराक्रान्तं चात्र सूरिभिरिति विरम्यते।

## मोक्षस्वरूपम्

"तुरीये फलाध्याये—

"अविद्यास्तमयो मोक्षस्सा च बन्ध उदाहृतः।"

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।"

"तस्माद्विद्यास्तमयो नित्यानन्दप्रतीतितः।
निश्शेषदुःखोच्छेदाच्च पुरुषार्थः परो मतः॥"

इत्याद्याभियुक्तोक्त्या अविद्यानिवृत्तिः, अविद्यानिवृत्त्युपलक्षितात्मस्वरूमं च मोक्ष इत्यद्वैतिनां मुख्यसिद्धान्तः सम्यगुपवर्णितः।

तत्र सकार्यमूलाज्ञाननाशकत्वं ब्रह्मज्ञानस्य केचनाचार्याः स्वीकुर्वन्ति। ब्रह्मज्ञानेनाज्ञानतत्कार्यनाशकाल एव ब्रह्मज्ञानस्यापि नाश इष्यते। कतकरजोदृष्टान्तेन ज्ञानस्य स्वपरविनाशकत्वास्येपगमात्।

अन्ये तु "ज्ञानमज्ञास्यैव नाशक"मिति पञ्चपादिकाचार्यवचनानुसारेण ब्रह्मज्ञाममज्ञानमात्रनाशकम्। न तु तत्कार्यस्य प्रपञ्चस्य। अज्ञानभिन्नप्रपञ्चस्य ज्ञानेन साक्षाद्विरोधाभावात्। विरोधप्रयोजकस्य समानविषयत्वादेरज्ञान एव सत्वात्। कृत्स्नप्रपञ्चनिवृत्तिस्तूपादानभूताज्ञाननाशप्रयुक्त उपपद्यते। देहाद्युपादानभूताज्ञानलेशानुवृत्त्या जीवन्मुक्तिरपि सिद्ध्यतीत्याहुः।

वस्तुतस्तु ब्रह्मज्ञानस्य नाज्ञानतत्प्रयुक्तनाशकत्वम्। किंतु अज्ञानतत्प्रयुक्ताधिकरणकालपूर्वत्वानधिकरणक्षणवृत्तित्वरूपमेव। अत्र पक्षे च अज्ञान-

नाशः कीदृश इति न प्रश्नः प्रसज्यते। अज्ञाननाशो ज्ञानेन जन्यत इति पक्षमनुसृत्यैव तन्नाशविचारो ग्रन्थकृता चतुर्थाऽध्याये विस्तरेण कृत इति द्रष्टव्यम् ।

अज्ञाननाशो ह्यात्मस्वरूप इति ब्रह्मसिद्धिकाराणामाचार्याणामाशयः। न चाज्ञाननाशस्यात्मस्वरूपत्वे तस्यानादितया ज्ञानमन्तरापि सिद्धेर्ज्ञानसाध्यत्वमसंगतमिति शंक्यम् । ज्ञानजन्यत्वरूपसाध्यत्वासंभवेऽपि साधनादिसाधारणप्रयोज्यत्वरूपसाध्यत्वसंभवात् । अज्ञाननाश आत्मान्य इत्यन्ये मन्यन्ते। स च सदसत्त्वदिप्रकारचतुष्टयातिरिक्त इति केचन। अनिर्वाच्य इत्यपरे वदन्ति । इमे पक्षाः सर्वेऽपि निर्दुष्टा एव। एतद्ग्रन्थकृतस्तु पञ्चमप्रकारत्वमज्ञाननाशस्याभ्युपेत्य सुनिपुणं तत्समर्थनमकुर्वन् । तथा च वेदान्तवाक्यजन्यनिर्विकल्पकब्रह्मात्मसाक्षात्कारादेव पूर्वोक्तमोक्षसिद्धिः। भेदज्ञानादि तु सर्वथा मुक्तिप्रतिबन्धकमिति शिवम् ।

## ग्रन्थकृत्

एतद्ग्रन्थप्रणेतारः सर्वतन्त्रस्वतन्त्रा महानुभावाः परमहंसाश्रमिणः श्रीमदानन्दानुभव इति सुगृहीतनामधेयाः। इमे च कदा कं देशमलमकार्षुरिति निर्णेतुं न वयं पारयामः। परन्तु तत्वप्रदीपिकादिग्रन्थकर्तृणां चित्सुखाचार्याणां पूर्वकालीना एत आनन्दानुभवाचार्या इति निश्चेतुं शक्नुमः। यतस्तत्वप्रदीपिकायां स्वतःप्रामाण्यवादज्ञप्तिस्वतस्त्ववादादिष्वन्यत्र च न्यायरत्नदीपावलीयमनुमानमनूद्यमानं अवलोकयामः। न्यायमकरन्द-न्यायदीपावलिप्रमाणमालादिनिबन्धनिर्मातॄणामानन्दबोधाचार्याणां एत आनन्दानुभवाचार्याः पाश्चात्या इत्यपि निर्णेतुं शक्यते। यतोऽस्मिन् ग्रन्थे न्यायमकरन्दमतमनूद्य निरस्तं उपलभामहे ।

एतैश्च पदार्थतत्वनिर्णयः इष्टसिद्धिविवरणं च व्यरच्यतेति विज्ञायते । यतोऽस्मिन्नेव ग्रन्थे तत्र तत्र "विस्तृतं चेदमिष्टसिद्धिविवरणे" इति निर्दिष्टमुपलभ्यते ।

यतश्च सिद्धान्तलेशसंग्रहे श्रीमदप्पय्यमखीन्द्रैः "पदार्थतत्वनिर्णयकारा आहुरिति" एतदीयं मतमेवोदाहारि ।

## ग्रन्थस्वरूपम्

अयं ग्रन्थोऽनन्यसाधारण्या सरण्या, चमत्कृतचेतसां संख्यावतां चेतसि चमत्कारकारिण्याऽतिसंक्षिप्तयापि बह्वर्थधारिण्या वाण्या च निबद्धो नितरां विदुषामानन्दमादधाति। अत्र च प्रकरणे चत्वारोऽध्यायास्समन्वयाविरोधसाधनफलप्रतिपादकास्सन्ति। पूर्वोक्तनीत्या वेदप्रामाण्यमारभ्य जीवन्मुक्तिविदेहमुक्तिपर्यन्ताः विषयाः श्रुत्यनुसारिभिरतिगहनन्यायप्रयोगैरत्र विचारिताः। महाविद्यानुमानमवलंब्य च परमतनिराकरणपूर्वकं स्वमतस्थापनमत्र कृतं दृश्यते। स्वमते परमेश्वरस्थापनार्थं कल्पतरुकारैरमलानन्दैरपि "अयं घटः एतदन्यासर्वविल्कर्तृकत्वानधिकरणैतदन्यावेदत्वानधिकरणसकर्तृकान्यः घटत्वाद्घटान्तरव"दिति महाविद्यानुमानमुपाश्रितम्। मानमनोहरकारोदीरितं महाविद्यानुमानजातमुदाहृत्य चात्र दूषितं प्रतिमहाविद्यानुमानप्रयोगेण। किं च भास्करमतं पदे पदे पराक्रियते। स च कर्णाटकदेशीय इत्यस्य व्यवहारादवगम्यते। तदभिमतं त्रिदण्डसन्यासनियमं निराकृत्यैकदण्डसन्यासोऽप्यस्तीत्यत्र व्यवस्थापितम्।

## व्याख्याता

सोऽयं ग्रन्थः आनन्दज्ञानापरनामधेयैः आनन्दगिर्याचार्यैः प्रत्यक्षरं महता यत्नेन व्याख्यातः। एते च तत्वदीपनकृतां विद्योपदेष्टारः। श्रीभगवत्पादाचार्यप्रणीतानां सर्वेषामपि ग्रन्थानां व्याख्यामकुर्वन्। सुरेश्वराचार्यविरचितवार्तिकग्रन्थस्यापि व्याख्यानमकुर्वन्।

अमीषां आनन्दानुभवानन्दगिर्याचार्याणां कालादिनिर्णयविषये आधुनिकानां कालचरितविमर्शकानामेव स्वातन्त्र्यमिति तन्निर्णयार्थं तेषामेव सविधे तदिदमुपहरामः।

## ग्रन्थशोधनव्यवसायः

तस्याऽस्य निरतिशयगांभीर्योपेतस्य समीचीनव्याख्यायुतस्याप्रकाशितपूर्वस्य महनीयस्य ग्रन्थरत्नस्य संशोधनपूर्वकं प्रकाशने प्रवृत्तानामस्माकं चेन्नपुरीविराजमानराजकीयप्राच्यहस्तलिखितग्रन्थालयस्थः आदर्शकोश एक एवोपलब्धः। उपलब्धे च तस्मिन्नादर्शपुस्तके कुहचित्त्रुटिताः, कुत्रचित

विपर्यस्तवर्णाः कुत्रापि विपर्यस्तवाक्याश्च ग्रन्थमागा दृष्टाः । तथा मूलग्रन्थः क्वचिन्नास्ति । तत्र व्याख्यानं समस्ति । क्वचिन्मूलमस्ति । व्याख्यानं नास्तीत्यादि-रूपेणाशुद्धयो बाहुल्येनासन् । समीचीनस्यादर्शपुस्तकान्तरस्यान्विष्याप्यलाभेनाशुद्धिबहुलमिमं ग्रन्थं यथाकथंचित् संशोधयितुं प्रयतमानानामस्माकं महानेव परिश्रमः कालविलंबश्च समजनि । एवं परिश्रमपूर्वकेऽप्येतस्मिन्कर्मण्य-दुष्टत्वमत्र सर्वात्मना संपादितमिति प्रतिज्ञातुं न वयं प्रभवामः । यतोऽस्मदीया-नवधानदोषेण, मुद्रणयन्त्रदोषादिना वा कानिचिदशुद्धिस्थलानि अवशिष्टानि स्युरेव । तदर्थमेवात्र शुद्धाशुद्धपत्रमपि संघटितम् । अत्र च विदुषां सौलभ्याय पाठभेदाः 1, 2, इत्यादिसंख्याचिन्हं विधाय प्रदर्शिताः । विषमस्थले च स्व-ल्पाष्टिप्पण्यश्च *इति चिन्हं कृत्वा वितीर्णाः । ग्रन्थेऽस्मिन्नुद्धृतानां ग्रन्थान्त-राणां ग्रन्थकृतां प्रकरणानां च स्थलपुटप्रदर्शनार्थाः सूच्योऽपि संयोजिताः ।

## धन्यवादः

एतादृशस्य महनीयतमस्यातिदुर्लभतमस्य ग्रन्थजातस्य प्रकाशने बद्धादराणां भारतसांराज्यविद्याप्रविभागाधिकारिणां, मदरासुप्रान्तीयप्राच्य-विद्याग्रन्थकोशाध्यक्षाणां विद्वद्वर्याणामपि च विद्वत्प्रियाणां सद्गुणमणिगणालंकृतानां श्रीकाञ्चीकामकोटिपीठाधीश्वरप्रत्तवाणीकोशरक्षामणिविरुदांकितानां श्रीयुत-चन्द्रशेखरदीक्षितानां च सततं कृतज्ञताप्रदर्शनपूर्वकं धन्यवादानुदाहरामः। पुस्तकसंशोधने चास्माकं प्रमादतः समुत्पन्नानपराधान् सुहृद्भावनया क्षाम्यन्तु विद्वांस इत्यभ्यर्थयामः । अयं ग्रन्थः बोधाय वादिविजयाय च मननस्थानीय-स्सर्वैरपि पण्डितप्रकाण्डैरवश्यं पठितव्य इत्याशास्महे इति शिवम् ।

इत्थम्

**वे. जगदीश्वरशास्त्री,**

श्रीकाञ्चीकामकोटिपीठास्थानविद्वान्, आत्मविद्याभूषणम् विद्यालंकारः
इञ्जिकोल्लैग्रामाभिजनः

**व. रा. कल्याणसुन्दरशास्त्री,**

मद्रपुरी-विवेकानन्दकलाशालासंस्कृताध्यापकः,
साहित्यविशारदः, साहित्य-वेदान्तशिरोमणिः
वराहपुराभिजनः

मद्रपुरी,
५-३-१९६१.

## विषयानुक्रमणिका

### प्रथमोऽध्यायः

पृष्ठसंख्या



## द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

## एतद्ग्रन्थोद्धृतानां ग्रन्थकृतां ग्रन्थानां च नामानुक्रमणिका

॥ श्रीः ॥

# ॥ न्यायरत्नदीपावलिः ॥

## ॥ शुद्धपाठसूचिका ॥

| अशुद्धम् | शुद्धम् | | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|---|
| स्रष्ट | स्रष्टृ | .... | १६ | १ |
| अनुमानन्तर | अनुमानान्तर | .... | १९ | १ |
| औषाधि | औपाधि | .... | ,, | ४ |
| पूर्वित्वात् | पूर्वीत्वात् | .... | ,, | ८ |
| मान | मानम् | .... | २६ | ५ |
| न्तीस्यास्थेयं | न्तीत्यास्थेयं | .... | ६७ | ३ |
| मतर्थानां | मतदर्थानां | .... | ६८ | २ |
| ज्ञाधीनं | ज्ञानाधीनं | .... | ६९ | १ |
| व्युप्तपति | व्युत्पत्तिः | .... | ,, | ६ |
| ब्रुमः | ब्रूमः | .... | ,, | ७ |
| चिकीबै | चीकीर्षै | ... | ७० | ५ |
| वहुले | बहुले | .... | ७२ | ३ |
| विववाद | विवाद | .... | ७६ | ७ |
| वाद्यक्त | वाद्युक्त | .... | ७७ | १ |
| षुत्र | पुत्र | .... | ,, | ५ |
| ब्रह्म | ब्रह्म | .... | ,, | १० |
| मञ्छा | मच्छा | .... | ७८ | २ |
| त्वेप्यऽप | त्वेऽप्यप | .... | ८१ | १० |
| मंभ्रि | मक्षि | ... | ८३ | २ |
| ब्युत्षति | व्युत्पत्ति | .... | ८४ | ६ |
| उपाधिग | उपाधिः | .... | ८६ | १ |
| सष्ट्वा | स्रष्टृत्वा | .... | ८८ | ६ |

| अशुद्धम् | शुद्धम् | | पृष्टम् | पङ्क्तिः |
|---|---|---|---|---|
| क्रिम | किम | .... | १०६ | ३ |
| अर्थपत्ति | अर्थापत्ति | .... | ,, | ५ |
| कूना | कूला | .... | १०७ | ८ |
| शरीर | शारीर | .... | १०८ | ६ |
| स्वय | स्वयं | .... | ,, | ९ |
| आत्मानि | आत्मनि | .... | १०९ | ६ |
| अनुभावः | अनुभवः | .... | ,, | ,, |
| विशेष | विशेष | .... | १२१ | ६ |
| द्धयेव | द्धयेव | .... | १२९ | ९ |
| स्वाच्छयं | स्वाच्छयं | .... | १३८ | १० |
| स्यावश्या | स्या अवश्या | .... | १४७ | ७ |
| षुरो | पुरो | .... | १६९ | ३ |
| रूष्या | रूप्या | .... | १७२ | ४ |
| पाद्येत | पद्येत | .... | १७८ | ३ |
| कारभावे | कारणाभावे | .... | १८५ | १ |
| क्षणिकात्व | क्षणिकत्वा | .... | १८७ | ५ |
| श्रयणां | श्रयाणात् | .... | १८८ | ५ |
| वाधक | बाधक | .... | १९१ | ४ |
| ष्टान्ते | दृष्टान्ते | .... | १९२ | ५ |
| कुब्ब | कुंभ | .... | १९५ | ४ |
| गामात् | गमात् | .... | ,, | ८ |
| क्षणात्व | क्षणत्व | .... | १९६ | ६ |
| दोष जत्वा | दोषजत्वा | .... | १९८ | ३ |
| सिद्धयेत | सिध्येत् | .... | ,, | ७ |
| धर्मिणोऽग्रह | धर्मिणोग्रहः | .... | १९९ | ९ |
| निर्विकल्पा | सविकल्पा | .... | २०० | ३ |
| बाभावि | वाभावि | .... | २१० | १२ |

| अशुद्धम् | शुद्धम् | | पुष्टम् | पङ्क्तिः |
|---|---|---|---|---|
| तदब्येन | तदन्येन | .... | २११ | १ |
| स्यत् | स्यात् | .... | २१३ | ४ |
| तपसो | तमसो | .... | ,, | ,, |
| मितावप | मितापव | .... | २१५ | १ |
| विशेष्ण | विशेषण | .... | २१६ | ४ |
| तंवा | तवा | .... | ,, | ७ |
| पलण | पलक्षण | .... | २१८ | ३ |
| न्यष्या | न्यप्या | .... | २२७ | ७ |
| विंव | बिंब | .... | २२८ | ४ |
| नुसानं | नुमानं | .... | २२९ | २ |
| सभवात् | संभवात् | .... | २३३ | २ |
| यद्वं | यत्व | .... | ,, | ५ |
| धमित्वा | धर्मित्वा | .... | २४४ | ८ |
| दिहो | दिग्रहो | .... | २४५ | १ |
| मेद | भेद | .... | २४८ | २ |
| मेद | भेद | ... | २४९ | ५ |
| मेद | भेद | .... | २५१ | १ |
| पादायो | पादादयो | .... | २५३ | ४ |
| संषत | संपत | .... | २५५ | ३ |
| संवधे | संबंधे | .... | २५८ | ५ |
| सिद्ध | सिद्धि | .... | २६४ | ३ |
| श्रृंगस्म | श्रृंगस्य | .... | २६७ | ११ |
| त्सिद्धेः | सिद्धेः | .... | २६८ | ५ |
| तर्ह्यव्या | तर्ह्यंव्या | .... | २६९ | १ |
| ज्ञानेनै | ज्ञानेनानै | .... | २७१ | १ |
| वरस्था | वस्था | .... | २७३ | ३ |
| खंभव | संभव | .... | ,, | ५ |

| अशुद्धम् | शुद्धम् | | पृष्टम् | पङ्क्तिः |
|---|---|---|---|---|
| जायु | जात्यु | .... | २७३ | ९ |
| षुन | पुन | .... | २७६ | १ |
| आधेय विरोध | आधेयविरोध | .... | २७८ | ८ |
| त्वन | त्वन | .... | २७९ | १ |
| द्धारणं | पपादनं | .... | २८० | ५ |
| वास्तबः | वास्तवः | .... | २८१ | ६ |
| बदि | बदि | .... | २८७ | ७ |
| त्वात् | त्वात् | .... | २८९ | २ |
| सरव्या | संख्या | .... | ,, | ,, |
| बा | वा | .... | ,, | ७ |
| तब | तव | .... | ,, | ८ |
| सुख | सुखं | .... | २९१ | ४ |
| सारित्व | सारित्व | .... | २९३ | ७ |
| द्वरा | द्वारा | .... | २९७ | ७ |
| कारणो | करणो | .... | २९९ | २ |
| कर्माणि यानि | कर्माणि कवयो यानि | .... | ३०१ | १ |
| उमे | उभे | .... | ३०२ | २ |
| स्तृया | स्तृतीया | .... | ३०४ | ७ |
| ज्ञान | ज्ञानं | .... | ३०५ | १२ |
| ज्ञाने | ज्ञाते | .... | ३०६ | १३ |
| मुषि | मुष्मि | .... | ३०९ | १२ |
| बजज्ञा | बज्ञा | .... | ३१० | ५ |
| बस्या | वस्या | .... | ,, | ८ |
| वहिः | बहिः | .... | ३१२ | ७ |
| एका | एव | ... | ३१४ | १० |
| यज्ञवाल्क्य | याज्ञवल्क्य | .... | ३१५ | ९ |
| संक्षेपः | संक्षेपः | .... | ३१६ | ४ |

| अशुद्धम् | शुद्धम् | | पृष्टम् | पङ्क्तिः |
|---|---|---|---|---|
| ब्यव | व्यव | .... | ३१६ | ९ |
| मात्रंसिद्धं | मात्रसिद्धं | .... | ३१७ | ३ |
| षरि | परि | ... | ,, | ११ |
| त्यक्तवा | त्यक्त्वा | .... | ३२१ | ५ |
| पपत्तेः | नुपपत्तेः | .... | ,, | ८ |
| मेद | भेद | .... | ३३६ | ५ |
| मिन्नो | भिन्नो | .... | ,, | ६ |
| निषुणं | निपुणं | .... | ३४० | ५ |
| सोम्येकेन | सोम्यैकेन | .... | ३४२ | ५ |
| द्रूह्म | ब्रूह्म | .... | ३४४ | १ |
| कथ | कथं | .... | ३५२ | १ |
| बिदुः | विदुः | ... | ३६१ | २ |
| त्वात् । प्र | त्वात्प्र | ... | ३६७ | २ |

---

॥ श्रीरस्तु ॥

॥ ओं महागणपतये नमः ॥

आनन्दानुभवपूज्यपादविरचिता

# ॥ न्यायरत्नदीपावलिः ॥

## ॥ प्रथमोऽध्यायः ॥

हरिं हार्दं[1] प्रणम्याथ वेदान्तार्थप्रसिद्धये ।
सन्न्यायरत्नदीपानामावलिः क्रियते मया ॥

॥ श्रीः ॥

## ॥ न्यायरत्नदीपावलिव्याख्या ॥

(वेदान्तविवेकः)

॥ भगवदानन्दज्ञानविरचिता ॥

[2]यच्चैतन्यमनन्यमोहमहिमप्रद्योतितांशद्वयं
मात्रादिश्च यदन्वयेन वपुषाऽसन्भासते सन्निव ।
यन्मोहप्रभवभ्रमोद्धतजगत्प्लुष्टाऽवशिष्टं महः
तन्मे सन्ततमाविरस्तु हृदये स्वेनैव वस्त्वात्मना ॥

नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे ।
[गुरवे] [3]परपक्षौघध्वान्तध्वंसपटीयसे ॥

प्रारीप्सितप्रकरणाविघ्नपरिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय विशिष्टेष्टदेवतानुस्मरणपूर्वकं तन्नमस्काररूपं मङ्गलाचरणं मुखतस्सम्पादयन्नर्था-

1. "हरिपादं"
2. यच्चैतन्यमनन्यमोहमहिमप्रत्युग्रदाधिद्वयं
   मात्रादिश्च यदन्वयेन वपुषा .... ।
   .... .... .... .... .... प्लुष्टावशिष्टं महः ॥
3. .... .... परपक्षौघध्वांन्तध्वसपटीयसे

---

द्विषयादि व्याचक्षाणश्चिकीर्षितं प्रतिजानीते—हरिमित्यादिना। तत्र तत्त्वम्पदार्थयोरेकत्वं शास्त्रीयं विषयमभिधित्समानस्तत्पदार्थं कथयति—हरिमिति। वाक्यार्थबुद्धिवृत्त्यभिव्यक्तश्चिदात्मा सनिदानं संसारं हरतीति हरिः तं परमात्मानम्। तत्पदलक्ष्यं सत्यज्ञानादिलक्षणमित्यर्थः। तमेव चिदात्मानं सदा हृदये संनिहितं कार्यकरणसाक्षिणं त्वंपदलक्ष्यं निक्षिपति—हार्दमिति। हरिं हार्दमिति सामानाधिकरण्यात्तत्त्वमर्थयोरेकत्वं विषयो दर्शितः। विषयप्रदर्शनेन विषयविषयिभावः सम्बन्धोऽपि गदितो वेदितव्यः। प्रत्यग्ब्रह्मनिष्ठतयोक्तकर्मकारकापेक्षितां क्रियामावेदयन् भक्त्याद्यतिशयेन क्रियमाणा नमस्क्रिया फलवतीति मत्वा त्रिविधं प्रह्वीभावमभिधत्ते—**प्रणम्येति**। अभिमतदेवताप्रणतेरनन्तरं तदात्मकस्य गुरोरपि प्रणाममभिप्रेत्याथशब्दं प्रयुङ्क्ते॥

अथवा "अथातो ब्रह्मजिज्ञासे"त्यत्राथशब्दोपात्तः शास्त्रीयोऽधिकारी अधिक्रियते प्रकरणेऽपीति सूचयति—**अथेति**। अत्र पुनरपरगुरुनमस्क्रिया, परमगुरुनमस्क्रियया तदभेदादेव विहितेत्यवधेयम्। ब्रह्मात्मैकत्वावगतिद्वारा सविलासाविद्यानिवृत्तिरस्य प्रयोजनमिति शास्त्रीयप्रयोजनसम्बन्धित्वं प्रकरणस्योपन्यस्यति—वेदान्तेति। प्रयोजननिर्देशादप्यधिकारिनिर्देशो द्रष्टव्यः। शास्त्रीयानुबन्धचतुष्टयवैशिष्ट्यादस्य प्रकरणत्वम्। शास्त्रप्रकरणयोरेकार्थत्वेऽप्यवान्तरकार्यभेदोपपत्तेः शास्त्रकार्यान्तरे स्थितत्वमप्यास्थेयम्।

यथाहुः—

"शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्।
आहुः प्रकरणं नामे"ति।

प्रणम्येति ल्यप्प्रत्ययसूचितमुद्देश्यं दर्शयति—**सन्न्यायेति**। सन्तो न्यायास्तत्र तत्र सिद्धान्तोपयोगितया वक्ष्यमाणाः। तेषां सत्त्वं च चतुर्विधदोषरहितत्वम्। सन्न्याया एव रत्नानि गुरुचरणपरिचरणाद्यने[काया]सल[ब्धानि] तान्येव दीपाः तत्त्वावारकतिमिरभूतपरपक्षप्रतिक्षेपक्षमत्वात्, तत्त्वप्रतिपत्तावुपकरणत्वाच्च। तेषामावलिः पङ्क्तिः। मया क्रियत इति योजना। आवलिशब्देन न्यायानामसङ्कोचः सूचितः। मयेति [सन्न्यायतत्त्वाभिज्ञता स्वस्यावद्योतितेति]।

**यद्यपि वेदान्तार्थः स्फुटं भाष्यादिषु प्रतिपादितः तत्रभवद्भिः भाष्यकारादिभिः, तथाप्यभिनवदुस्तर्कतिमिरतिरोहित इवासौ ; अतस्तत्प्रकाशनाय प्रयत्यते ॥**

**बौद्धकृतवेदाप्रामाण्यपूर्वपक्षः**

**ननु वेदस्यापि न विवक्षितार्थता, अप्रमाणत्वात् ;[1] किमु वेद-**

---

ननु वेदान्ताः स्वयमेव स्वार्थं प्रकाशयितुमीशते, प्रामाण्यस्य स्वतस्त्वाभ्युपगमात् तत्कस्मात्प्रकरणमारभ्यते। न चोपकरणत्वेन तर्कापेक्षायां तत्प्रधानप्रकरणप्रारम्भः सम्भवति। भाष्यवार्तिककारादिभिरेव वेदान्तार्थस्य दर्शितत्वादिति चेन्न। भाष्यकारादिभिरभिहितेऽपि वेदान्तार्थे श्रोतॄणां संशयविपर्यासौ सम्भाव्येते। तथा च तन्निवृत्त्यर्थं प्रकरणप्रवृत्तिरित्याशंक्याह— **स्फुटमिति**। तेषां तथाप्रकाशने शक्तिं द्योतयति—**सहस्रेति**। [**भाष्यादिष्विति**] सुगतार्हतादिभिरतिस्पष्टतयोपदिष्टे[पि प्रारभ्यं] प्रकरणमित्याशङ्क्याह—**तत्रभवद्भिरिति**। परमाराध्यैरिति यावत्। तत्रभवान् भगवानिति शब्दो वृद्धैः प्रयुज्यते, पूज्यगत्यभिधानादिति। तर्हि प्रकरणानारम्भे प्राप्ते कथं तदारम्भप्रतिज्ञा निर्वहतीत्यत आह—**तथापीति**। अभिनवाः किरणावलीकारप्रभृतयो नूतनास्तार्किकास्तेषां दुष्टास्तर्काः व्याप्त्यादिरहिताः तत्र तत्र पूर्वपक्षतया वक्ष्यमाणाः तेषां दुष्टत्वमावेदयिष्यते। त एव तिमिराणि तत्त्वावरणमात्रहेतुत्वात् तैर्वेदान्तार्थो भाष्यकारादिदर्शितोऽपि तिरोहितवद् भाति न तु तिरोहित एव। अतो दर्शिततिरोधितिरस्करणस्य प्रकरणापेक्षत्वात्तदारंभः सम्भवतीत्यर्थः।

वेदस्य प्रमाणत्वानधिकरणत्वादुन्मत्तवाक्यवत्तात्पर्यप्रतिपाद्यार्थवत्वाभावात्तदेकदेशभूतवेदान्तार्थप्रसिद्धये प्रकरणप्रवृत्तिर्न युक्तेति शाक्यः शङ्कते— **नन्विति**। यदि मीमांसकाभ्युपगतस्यापि वेदस्याविवक्षितार्थत्वं तदा वेदान्तानां वेदोषरत्वेन[2] जपोपयोगित्वेन च तैरङ्गीकृतानामविवक्षितार्थता कैमुतिकन्यायायाता। अतो न वेदान्तार्थप्रसिध्यर्थं प्रकरणमारम्भणीयमित्यपिना सूचितमर्थमाह— **किमु वेदेति**। वेदस्याप्रमाणत्वमसिद्धमित्याशङ्क्यानुमान-

---

1. अप्रमाणकत्वात् 2. वेदोषरपरत्वेन।

वादिनोऽप्यनिष्टार्थानां वेदान्तानाम् ? तथाहि—यानि परस्परविरुद्धार्थानि वाक्यानि न तानि प्रमाणानि, यथा उन्मत्तवाक्यानि ; तथाहि—"ब्राह्मणो न हन्तव्य" इत्यादि क्वचिदहिंसोच्यते। "ब्रह्मणे ब्राह्मण" मित्यादि ब्राह्मणादिपशुविधानम् तथा नैष्ठिकं ब्रह्मचर्यमुच्यते, "न काञ्चन परिहरेत् तद्व्रतम्" इति गुर्वङ्गनादिगमनं च। तथा ब्राह्मणस्य सुरापानविधिनिषेधौ ।

एवं ब्रह्मणि "एकमेवाद्वितीय"मित्यादौ विरोधो द्रष्टव्यः । अत एवोक्तम्—

"त्रयो वेदस्य कर्तारो मुनिभाण्डनिशाचराः" इति ।

न च प्रकरणादिभेदाद्यवस्थया अविरुद्धार्थता, तद्भेदस्य

---

तस्तत्सिद्धेर्मैवमित्याह—**तथा हीति** । वेदो न प्रमाणं परस्परविरुद्धार्थत्वादुन्मत्तवाक्यवदिति [इदं] अयुक्तं हेत्वसिद्धेरित्याशङ्क्याह—**तथा हीति** । आदिशब्देन "न हिंस्यादि"त्यादि वाक्यं गृह्यते। कथमेतावता विरोधसिद्धिरित्यत आह—**तथेति** । "ब्रह्मणे ब्राह्मणमालभते क्षत्राय राजन्यमि"-त्यादिना ब्राह्मणादीनां पुरुषमेधे वधो विधीयते । अतो विरोधः हिंसाविधिनिषेधयोरित्यर्थः ।

प्रकारान्तरेण विरोधमाह—**तथा नैष्ठिकमिति** । ब्रह्मचारिणं प्रकृत्य "अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्नि"त्यात्यन्तिकं ब्रह्मचर्यं विधीयते । विधान्तरेण विरोधं दर्शयति—**तथा ब्राह्मणस्येति** । सौत्रामण्यामिष्टाविष्टं ब्राह्मणस्यापि सुरापानं "ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारमि"ति श्रुतेः । "न सुरां पिबेदि"ति च ब्राह्मणस्य तन्निषिध्यते। अतो विरोधाधिगतिरित्यर्थः। ब्रह्मकाण्डे तदभावादुक्तहेतोर्भागासिद्धिरित्याशङ्क्याह—**एवमिति** । आदिशब्देन "नेति नेति" "अस्थूलमनणु" "ब्रह्मैवेदं सर्वमि"त्यादि गृह्यते । परस्परविरुद्धार्थतया वेदाप्रामाण्ये वृद्धसंमतिमाह—**अत एवेति** । यत्र शमादिप्रतिपादनं तत्र मुनयः कर्तारः। ते हि स्वीयं धर्मं प्रामाणिकं कुर्वन्तस्तद्विषयं शास्त्रं विरचयन्ति। यत्र दानादिविधानं तत्र भण्डाः सभ्येतरवादिनः प्रणेतारः। ते हि परं प्रतारयन्तस्ततो धनादिलिप्सवो दानादिविषयं शास्त्र

प्रक्रियासिद्धत्वात्। तस्माद्विरुद्धार्थत्वाद्वेदा न प्रमाणम्। किञ्च यदाप्तवाक्येतरवाक्यं तदप्रमाणम्, यथोन्मत्तवाक्यम् आप्तवाक्येतरवाक्यं च वेदः। विपक्षे चाप्तप्रणीतता वेदास्यापद्येत। दूषणान्तरविरहः पुनः स्पष्ट इति न विव्रियते। तस्मात् सिद्धं, वेदस्याप्रामाण्यम्[1]। किमु वेदवादिनोऽप्यनिष्टार्थानां वेदान्तानामिति ?

**वेदप्रामाण्यव्यवस्थापनम्**

उच्यते। न[2] तावत् अत्र विरुद्धार्थता सामान्यविशेषविषययोः

---

कुर्वन्ति। यत्र पुनरग्नीषोमीयादिहिंसोच्यते तत्र निशाचराः अशिशिषवः पश्वादिहिंसाविषयं शास्त्रमातन्वते। तथा च प्रतारकप्रणीतो वेदो न प्रमाणमिति भावः। उत्सर्गाप(वादा)भ्यां प्रकरणभेदादधिकारिविशेषादवस्थाद्वैविध्याच्च व्यवस्थासिद्धेरुक्तहेत्वसिद्धिरित्याशङ्क्याह—**न चेति**। प्रकरणादिभेदे प्रमाणाभावं हेतुमाह—**तद्भेदस्येति**। अनुमानार्थमुपसंहरति—**तस्मादिति**।

यदि कश्चित्कथञ्चिदसिद्धिं हेतोराचक्षीत तं प्रति प्रयोगान्तरमाह—**किं चेति**। बुद्धादिवाक्येषु व्यभिचारं वारयितुमाप्तवाक्येतरपदम्। प्रत्यक्षादौ व्यभिचारं निरसितुं वाक्यविशेषणम्। वेदा न प्रमाणं आप्तवाक्येतरवाक्यत्वात् उन्मत्तवाक्यवदित्यनुमानार्थः। विपक्षे बाधकतर्काभावेन हेतोरप्रयोजकत्वमाशङ्क्याह—**विपक्षे चेति**। वेदस्य प्रमाणत्वे संप्रतिपन्नाप्तवाक्यवत्प्रमाणवाक्यत्वा[3]दाप्तोक्तत्वप्रसिद्धेरपौरुषेयत्वासिद्धिः। न च पौरुषेयत्वेऽप्याप्तोक्तत्वादेव वेदस्य प्रामाण्यं सर्वज्ञत्वातिरिक्ताप्तत्वस्य निर्वक्तुमशक्यत्वात्। न च वेदस्य तत्प्रणीतत्वं तवाभिप्रेतमित्यभिप्रायः। नापि विरुद्धत्वादेरवकाशः विपक्षावृत्तित्वादेः स्पष्टत्वादित्याह—**दूषणान्तरेति**। द्वितीयानुमानार्थं निगमयति—**तस्मादिति**। कैमुतिकन्यायमुपसंहरति—**किमु वेदान्तानामिति**।

सिद्धान्तमुपक्रमते—**उच्यत इति**। यत्तु परस्परविरुद्धार्थत्वाद्वेदा न प्रमाणमिति तत्र विशेष्यासिद्धिरित्याह—**न तावदिति**। अत्रेति वेदपरामर्शः।

---

1. अप्रामाण्यात् 2. न तावद्विरुद्ध 3. वद्वाक्यप्रमाणत्वा

**क्वचिद्भिन्नार्थत्वात्, प्रकरणादिभेदादधिकारिभेदाच्च व्यवस्थोपपत्तेः। इत्थं व्यवस्था चागमवादिभिः सर्वैरभ्युपेया। अन्यथा क्षणिकविशुद्धबोधविधिः सर्वशून्यताविधिश्च विरुध्येत। तस्माद्वेदस्यासिद्धा विरुद्धार्थता। परस्परेति च धर्मिनिर्देशेऽसाधारणता। सामान्यनिर्देशे च त्वदीयागमेन ते व्यभिचारः। तस्यास्मदागमेन विरुद्धार्थत्वात्। द्वितीयप्रयो-**

---

हिंसाऽहिंसावाक्ययोर्मिथो विरोधस्योदीरितत्वात्, कुतो विशेष्यासिद्धिरित्याशङ्क्याह—**सामान्येति**। अहिंसावाक्यं सामान्यविषयं हिंसावाक्यं तु विशेषगोचरम्। अतो भिन्नविषयत्वान्न हिंसाऽहिंसावाक्ययोर्विरुद्धतेत्यर्थः। यत्तु ब्रह्मचर्यविधिनिषेधयोर्विरुद्धतेति तत्राह—**प्रकरणेति**। आश्रमप्रकरणे नैष्ठिकं ब्रह्मचर्यमुच्यते। व्रतविशेषाधिकारे च अङ्गनासङ्गोऽभिधीयते। तथा च प्रकरणभेदात् ब्रह्मचर्यविधिनिषेधयोरविरुद्धतेत्यर्थः। विरक्ताविरक्तविषयत्वेन तयोरविरुद्धत्वमादिपदार्थः। यत्पुनर्द्वैताद्वैतवाक्ययोः सुरापानविधिनिषेधयोश्च विरुद्धार्थतेति तत्राह—**अधिकारीति**। मूढामूढविषयत्वेन तयोरविरुद्धार्थता। तथा च विशेष्यासिद्धिर्दुरुद्धरेत्यर्थः। यत्तु प्रकरणादिभेदस्य प्रक्रियामात्रत्वं तद् दूषयति—**इत्थमिति**। प्रकरणादिभेदादविरुद्धार्थता तावद्वाक्यार्थस्येति यावत्। शाक्यो व्यवस्थामागमवाक्यं विना उपेयादिति चेत्तत्राह—**अन्यथेति**। अधिकारिभेदेन विरोधसमाधिस्तु प्रस्तुतेऽपि सम्भवतीति मन्वानो विशेष्यासिद्धिं निगमयति—**तस्मादिति**। किं च हेतौ परस्परशब्देन वेदो व्यपदिश्यते, आगममात्रं वेति विकल्प्य प्रथमं प्रत्याह—**परस्परेति चेति**। न खलु वेदस्य विरुद्धार्थत्वमुन्मत्तवाक्ये शक्यं वक्तुम्। अतः सति सपक्षे पक्षमात्रवृत्तिरयमसाधारण इत्यर्थः।

द्वितीयं निरस्यति—**सामान्येति**। त्वदागमस्याऽस्मन्मते मानत्वाभावेऽपि त्वन्मते तस्य मानत्वमस्ति। अतस्तत्र साध्याभावेऽपि हेतुरस्तीत्यन्यतरव्यभिचारः स्यादिति मत्वाह—**त इति**। हेतुसत्वमेव स्फुटयति—**तस्येति**। "अस्तीत्योवोपलब्धव्यः" "सदेव सोम्येदमि"ति वेदवाक्येन त्वदागमवाक्यविशेषं शून्यतादिप्रतिपादकं विरुद्धं प्रसिद्धम्। अतोऽन्यतरव्यभिचारः स्यादेवेत्यर्थः। यत्पुनराप्तवाक्येतरवाक्यत्वाद्वेदा न प्रमाणमिति, तत्र

गेऽपि वाक्यत्वं भागासिद्धम् । गीतिरूपेषु सामसु वाक्यत्वानभ्युपगमात् । विवादपदं वाक्यं धर्मीति चेत्, न । तवागमभागे बाधात् सिद्धसाधनत्वाच्च ॥

अथ विमतो वेदो धर्मीति चेन्न । अस्याश्रयासिद्धेः । नहि लोकसिद्धमपि ते बाह्यमक्षणिकं प्रामाणिकं किंचिदस्ति, यद्यस्ति तदापि क्षणिकस्येन्द्रियाग्राह्यत्वादसिद्धिरेव । प्रामाण्यसाधनेऽप्येवमस्माकं धर्म्यसिद्धिरिति चेन्न । क्षणिकस्यापि त्वया सिध्यभ्युपगमात् । लोकसिद्ध

---

वेदमात्र पक्षीक्रियते, किं वा विमतं वाक्यं, अथवा वेदो विमत इति विकल्प्याऽऽद्यं दूषयति—**द्वितीयेति** । द्वितीयमवलम्बते—**विवादेति** । उन्मत्तादिवाक्ये सिद्धसाध्यतादिनिरासार्थं विवादपदपदम् । वाक्यशब्देनार्थान्तरनिरासः । त्वदागमवाक्येऽपि प्रामाण्याप्रामाण्यविवादात् तस्य धर्मिभागत्वाद्विमतस्य वाक्यस्याप्रमाणत्वसाधने भागे अन्यतरबाधान्नैवमित्याह—**न तवेति** । अस्माभिस्त्वदागमवाक्यानामप्रमाणत्वोपगमात्तत्रैवास्माकं सिद्धसाध्यत्वम् । अतो विमतिविशेषितवाक्यस्य न धर्मित्वमिति दोषान्तरमाह—**सिद्धेति** । तृतीयमुत्थापयति—**अथेति** । विमतपदेन गीतिरूपं साम व्युदस्यते वेदशब्देन सुगताद्यागमो निषिध्यते । वेदस्य त्वन्मते प्रमाणसिद्धस्याभावात् आश्रयासिद्धिरिति दूषयति—**नास्येति** । आश्रयासिद्धिमेव साधयन् प्रमितस्य वा धर्मित्वं, प्रतीतस्य वेति विकल्प्याद्यं निरस्यति—**न हीति** । न हि प्रामाणिकं किञ्चिन्माध्यमिकस्य सर्वशून्यवादिनस्ते सम्भवति । सर्वशून्यवादित्वव्याघातादित्यर्थः । विज्ञानवादे विज्ञानं सर्वसम्प्रतिपन्नं प्रामाणिकमस्तीत्यत आह—**लोकसिद्धमिति** । विज्ञानवादिमते विज्ञानस्य भावेऽपि बाह्यार्थाभावान्नाभिमतधर्मिसिद्धिः । न च विज्ञानस्यैव धर्मित्वं तदप्रामाण्यस्य तवानिष्टत्वादिति भावः ।

सौत्रान्तिकवैभाषिकमते बाह्यमपि वस्तु प्रामाणिकमस्तीति धर्मिसिद्धिरित्याशङ्क्याह—**अक्षणिकमिति** । [सन्ता]नस्योक्तविधस्य सर्वसम्प्रतिपन्नत्वाद्धर्मिसिद्धिरित्याशङ्क्याह—**प्रामाणिकमिति** । न हि सन्ततिभ्यो भिन्नमभिन्नं वा सन्तानं गोचरयत् प्रमाणमस्ति अतस्तदभावादाश्रयासिद्धिः

एवास्तु धर्मीति चेन्न । बाधापत्तेः । ऋग्वेदोऽयमितिह्यबाधित-महाजनप्रसिद्धेर्धर्मिसिद्धिरास्थेया । न प्राकृतप्रसिध्देः । अन्यथा भागे सिद्धसाधनताप्रसङ्गात् । तथा च सति महाजनप्रसिध्य-न्तरबाधो दुर्वारः । प्रामाण्यप्रसिध्दिर्बाध्या न बाधिकेति चेन्न । तद्बा-

---

सिद्धेति भावः । स्थिरवेदाभावेऽपि क्षणिकस्य तस्य प्रमितस्य सत्वादाश्रय-सिद्धिरित्याशङ्कते—यद्यस्तीति । किं क्षणिकत्वमाशुतरविनाशित्वं, पूर्वापर-विभागविकलकालकलावस्थितत्वं वा । नाद्यः । वैनाशिकदर्शनविरोधात् । न हि ते स्वरसभङ्गुरत्वं क्षणिकत्वमाचक्षाणा वयमिव दीपादेराशुतरविनाशित्वमा-श्रयन्ते । न द्वितीयः । तथाविधवेदस्य श्रोत्रग्राह्यत्वायोग्यत्वादाश्रयासिद्धि-तादवस्थ्यादिति दूषयति—तथापीति । यदा वेदस्य प्रामाण्यं भवता साध्यते तदापि तस्यास्मन्मते दर्शितन्यायग्रस्ततया सिद्ध्यसम्भवादाश्रयासिद्धिसाम्यमिति शङ्कते—प्रामाण्येति । यद्यपि स्वरसभङ्गुरस्य वेदस्य श्रोत्रग्राह्यत्वानुपपत्ति-रस्माभिरुच्यते । तथापि त्वया तस्य तद्ग्राह्यत्वमिष्यते । अतो न प्रामाण्यानु-माने धर्म्यसिद्धिरिति परिहरति—न क्षणिकस्यापीति ।

मा भूत्प्रमितस्य धर्मित्वं, प्रतीतस्य तु भविष्यतीति कल्पान्तरमवता-रयति–लोकेति । किं महाजनप्रतीतस्य वेदस्य धर्मिता, किंवा पामरादिप्रती-तस्येति विकल्प्याद्यं तिरस्यति—न बाधेति । बाधमेव साधयितुमाद्यपक्षस्य स्वीकार्यतां दर्शयति—ऋग्वेदेति । द्वितीयमपाकरोति—न प्राकृतेति । प्राकृतप्रतीतस्य धर्मित्वे दिगम्बरादिवाक्यस्यापि वेदत्वेन पक्षभागत्वात्तस्य चा-प्रमाणत्वेनास्मदिष्टत्वादंशे सिद्धसाध्यत्वमित्याह—अन्यथेति । अस्तु तर्हि महाजनप्रतीतस्यैव धर्मित्वं, बाधापत्तिस्तु कथमित्यत आह—तथाचेति । ये हि महाजना वेदं विदन्ति, ते तस्य प्रामाण्यमपि प्रतिपद्यन्ते । तेन महाजन-प्रतीतवेदस्याप्रामाण्ये बाधापत्तिरित्यर्थः । प्रामाण्यप्रसिद्धेर्बाध्यत्वमेव न बाध-कत्वमिति शङ्कते—प्रामाण्येति । सा किमध्यक्षतो बाध्यते, अनुमानतो वा । नाद्य इत्याह—न तदिति । न द्वितीयः । वेदाप्रामाण्यानुमानाद्वेदप्रामाण्य-प्रसिद्धिबाधसिद्धिः, तत्सिद्धौ च तदप्रामाण्यानुमानसिद्धिरिति परस्पराश्रय-त्वादित्याह—अनुमयेति । किञ्च किमिदं वेदवादिनः सर्वानेव प्रति प्रयुज्यते,

**धानुपलब्धेः। अनुमया बाधकल्पने चान्योन्याश्रयतापत्तिः। आप्त-वाक्येतरवाक्यत्वं च वेदस्य वेदवादिनां केषांचिदसिद्धम्। अज्ञातार्था-विषयत्वं चास्माकं सर्वत्रोपाधिः। किञ्चाप्रामाण्यं किं प्रमाणादन्यत्वमुत प्रमाणाभावत्वमुत तद्विरोधिता। आद्ये सिद्धसाधनता। ज्ञानं ह्यस्माकं साक्षात्प्रमाणम्। तदन्यत्वं च वेदेषु सिद्धम्। द्वितीये भावत्वग्रह-विरोधः। तृतीये त्वनुपलम्भबाधः। दृष्टान्ते च साध्यविकलता। न हि प्रमाणेनैव वेदेषु विरोध उपलभ्यते। अतन्निवर्त्यत्वात्। अथ प्रमासा-**

---

किं वा मीमांसकान्प्रत्येव। नाद्यः, वेदस्य तार्किकैराप्तवाक्यत्वाङ्गीकाराद्धेत्व-सिद्धेरित्याह---**आप्तवाक्येतरेति**। न द्वितीयः—अज्ञातार्थाविषयत्वोपाधेः सत्वात्। न च साधनव्याप्तिः, अनवगतार्थावगतिहेतुताया वेदे स्वानुभवसिद्ध-त्वात्। नापि साद्ध्याव्याप्तिः अन्वयव्यतिरेकव्याप्तेरुन्मत्तवाक्यप्रत्यक्षादिषु सिद्धत्वात्। न च व्यतिरेकासिद्धिः। विमतं प्रमाणं अज्ञातज्ञापकत्वात् प्रत्य-क्षवदित्यनुमानादित्येतदाह—**अज्ञातार्थेति**। पूर्वानुमानेऽपि सम्भवत्ययमुपा-धिरिति सूचयति—**सर्वत्रेति**। अनुमानद्वयेऽपि साध्यं विकल्पयति—**किं चेति**। यद्यपि मुख्यो नञर्थोऽभावः तथापि तद्द्वाराऽन्यविरोधिनावपि तदर्था-विति विवक्षन् किंशब्दार्थं विशदयति—**किं प्रमाणादिति**। वेदप्रामाण्य-मङ्गीकुर्वाणस्य तदन्यत्वं वेदे कथं सिद्धमित्यत आह—**ज्ञानं हीति**। वेदे प्रमाणत्वप्रसिद्धिस्तर्हि कथमित्याशङ्क्य—तज्जनकत्वेनेति मत्वा विशि-नष्टि—**साक्षादिति**। तदभावत्वं चेदप्रामाण्यं, तदा वेदोऽप्रमाणमिति वदता तस्य प्रमाणत्वाभावत्वमुक्तं भवति। तथा च प्रतियोगिनिरपेक्षतया भावत्वेन भासतो वेदस्य तदभावत्वमभिदधन्ननुभवविरोधेन निरस्यो भवतीत्याह—**द्वितीय इति**। यदि तद्विरोधित्वमप्रमाणत्वं, तत्किं तन्निवर्तकत्वं तन्निवर्त्यत्वं वा नोभयथापीत्याह—**तृतीये त्विति**। प्रमाणनिवर्तकत्वं अप्रमाणत्वमित्यत्र दोषान्तरमाह—**दृष्टान्ते चेति**। न खलून्मत्तवाक्यानि प्रमाणं निवर्तयन्ति। तन्निवर्त्यत्वादित्यर्थः। अनुपलम्भबाधमुक्तं व्यनक्ति—**न हीति**। प्रमाण-भूतज्ञानेन निवर्तकेन निवर्त्येन वा वेदेषु निवर्त्येषु निवर्तकेषु वा विरोधो नाधिगतः। तेन प्रमाणज्ञानेन वेदानां निवर्त्यत्वाभावात्तैर्वा ज्ञानस्यानिवर्त्य-त्वादद्वैतज्ञानस्य वेदनिवर्तकत्वेऽपि तथा सिद्धेरित्याह--**अतन्निवर्त्यत्वादिति**।

धनेतरत्वमप्रामाण्यं साध्यम् । न । तस्या "अग्निर्हिमस्य भेषजमि" ति भागे सिद्धत्वात् । तर्हीतरभाग एवास्तु धर्मी । हेतुदृष्टान्तौ तु पूर्वोक्तावेव ॥

अथवा वेदवाक्यत्वं हेतुः, उक्तभागो दृष्टान्तोऽस्तु । न । इतरभागस्याज्ञातार्थज्ञापकताप्रतीतिबाधात्, विपक्षे बाधकविरहादाप्तप्रणीततताप्रसङ्गस्य निराकरिष्यमाणत्वात् । अप्रमाणसाधर्म्यमात्रेणाप्रामाण्ये बौद्धागमवाक्यम् अप्रमाणम्, प्रसिद्धाप्तवाक्येतरवाक्यत्वात् उक्तवाक्यवदित्यतिप्रसङ्गरूपबाधकतर्कसद्भावाच्च । तस्माद्वेदस्याप्रामाण्यप्रलापः प्रमत्तप्रलम्ब इवोपेक्षणीयः । प्रामाण्यं चादरणीयम् । प्रयोगस्तु—कारीर्यादिवाक्यं प्रमाणं अबाधितानुवादेतरवाक्यत्वात्,

---

प्रमाणशब्देन प्रमासाधनं विवक्ष्यते तदन्यत्वं चाप्रमाणत्वं वेदेषु साध्यते । अतो न सिद्धसाध्यतेति प्रथमं पक्षमाश्रित्य शङ्कते—**अथेति** । किं वेदमात्रगतमिदं साध्यं, किं वा वेदविशेषनिष्ठमिति विकल्प्य प्रथमं प्रत्याह—**न तस्येति** । तस्याध्यक्षसिद्धाभिधायित्वेन प्रमासाधनत्वाभावादित्यर्थः । कल्पान्तरमुत्थापयति—**न हीति** । सन्निहितहेत्वादिसम्भवे व्यवहितं तन्नोपादेयं सन्निहितस्यान्तरङ्गत्वादित्याशयवानाह—**अथवेति** । स्वर्गकामादिवाक्यमनवगतावगतिहेतुत्वेनावगतं, तेनानुभवविरुद्धत्वान्नेदमनुमानमिति दूषयति—**नेतरेति**। वेदप्रामाण्ये बाधकतर्काभावाच्च शङ्किताऽप्रयोजकत्वान्न तदप्रामाण्यानुमानजातमुपपन्नमित्याह —**विपक्ष इति** । प्रमाणवाक्यत्वे वेदस्याप्तवाक्यवदाप्तप्रणीततत्वप्रसक्तिर्बाधिकेत्याशङ्क्याह—**आप्तेति** । इतश्च शङ्किताप्रयोजकत्वमप्रमाण्यानुमानानामित्याह—**अप्रमाणेति** । वेदाप्रामाण्यानुमानदूषणफलमुपसंहरति—**तस्माद्वेदस्येति** । अप्रामाण्यवत्प्रामाण्यस्यापि प्रमाणाभावादुपेक्षणीयत्वमित्याशङ्क्याह—**प्रामाण्यं चेति** । द्विविधो वेदः दृष्टार्थोऽदृष्टार्थश्च । तत्राद्यं पक्षीकृत्यानुमानमाह—**प्रयोगस्त्विति** । "अग्निर्हिमस्ये"त्यादौ व्यभिचारनिरासायानुवादेतरपदम् । "यजमानः प्रस्तरः" इत्यादिवाक्ये व्यभिचारपरिहारार्थं—अबाधितेति विशेषणम् । ईदृगर्थस्याप्रमाणत्वात्तत्रानैकान्तिकता । सा मा भूदिति वाक्यत्वादिति पदम् । उक्तसाध्याभावेऽपि दर्शितसाधनमस्तु।

**वैद्यशास्त्रवत् । विपक्षे चोक्तविधवाक्यताभङ्गप्रसङ्गो बाधः । दूषणान्तर-विरहस्त्वतिरोहित एव । एवं च सति विवादपदं वेदवाक्यं प्रमाणम्, उभयसिद्धाप्रमाणेतरत्वे[1]सति वेदवाक्यत्वात् सम्प्रतिपन्नवदितीतर-भागस्यापि प्रामाण्यं सिद्धम् ॥**

**न च विपर्ययेऽप्येवं प्रयोगः सम्भवतीति वाच्यम् । उक्तप्रमासा-धनत्वप्रतीतिबाधस्यात्रापि तुल्यत्वात् ॥**

---

अतो बाधकाभावाद्व्याप्यत्वासिद्धिरित्याशङ्क्याह—**विपक्षे चेति** । दृष्टार्थवेदस्य प्रामाण्ये सत्यदृष्टार्थवेदस्यापि तदनुमातुं शक्यमित्याह—**एवं चेति** । उन्मत्तादिवाक्ये बाधपरिहाराय वेदपदम् । प्रसाधितप्रामाण्ये वेदवाक्ये सिद्धसाध्यताव्युदासाय, "अग्निर्हिमस्ये" त्यादौ बाधव्यासेधाय च विवादपदपदम् । वेदः प्रमाणमित्युक्ते गीतिरूपसामनि बाधो मा भूदिति वाक्यमित्युक्तम् ।

यद्वा विवादपदपदेनैव गीतेर्निरासाद्वाक्यमिति स्वरूपग्रहणं द्रष्टव्यम् । बौद्धादिवाक्यभागे बाधादि निरसितुं च वेदपदम् । उन्मत्तादिवाक्ये व्यभिचा-रनिरासाय[हेतौ]वेदेति पदम् । गीतिरूपे सामनि व्यभिचारं निराकर्तुं [हेतौ] वाक्यत्वादिति पदम् । "अग्निर्हिमस्ये"त्यादौ व्यभिचारो मा प्रसाङ्क्षीदित्याह— **उभयसिद्धेति** । उभयसिद्धाप्रमाणेतरत्वादित्युक्ते, विप्रलम्भकादिवाक्यादे-कस्मात्तदीयवाक्यान्तरस्यान्यत्वमस्तीति व्यभिचारः । तत उक्तं वेदेति । उभय-सिद्धाप्रमाणत्वानधिकरणत्वे सति वेदवाक्यत्वादिति हेतुः । सुगताद्यागमे व्यभिचारं परिहर्तुं वेदेत्युक्तम् । वाक्यपदं तु पूर्ववत् । विवादपदं वेदवाक्य-मप्रमाणं उभयसिद्धप्रमाणत्वानधिकरणत्वे सति वेदत्वात् "अग्निर्हिमस्ये"त्या-दिवदित्यप्रामाण्यानुमाने समुल्लसति कथमुक्तप्रामाण्यानुमानमुन्मिषेदित्याश-ङ्क्याह—**न चेति** । अज्ञातज्ञापकत्वमदृष्टार्थे वेदवाक्ये विज्ञायते । अतो"अग्नि-र्हिमस्ये" त्यादिव्यतिरिक्तवेदपक्षीकरणे प्रमासाधनेतरत्वसाधने प्रतीतिबाधव-दिहापि तत्साम्यादिति हेतुमाह—**उक्तप्रमेति** । हेतुद्वयसिद्धार्थस्यैकहेतुसाध्यत्वे लाघवं मन्वानोऽनुमानान्तरमाह—**अथवेति** । प्रतिज्ञाहेत्वोर्विशेषणानि पूर्व-

---

1. सिद्धे इत्यधिकः पाठः

अथवा विवादपदानि वेदवाक्यानि प्रमाणम्, अबाधितानवगतार्थबोधकत्वात् वैद्यशास्त्रवत्। प्रामाण्यं च लोकप्रसिद्धमेव साध्यम्, नाज्ञातार्थावगमसाधनत्वं अतो न साध्याविशिष्टता। विपक्षे वैद्यशास्त्रस्याप्यप्रामाण्यप्रसङ्गो बाधः। न च हेत्वसिद्धिः। तस्यानुभवसिद्धेः। एवं दोषान्तराभावोऽपि द्रष्टव्यः। तस्मादनिच्छताप्यच्छमतिना आयुर्वेदवद्वेदस्यापि प्रामाण्यमेष्टव्यमिति सिद्धम्।

सार[1]मुद्धरते योऽस्मात् ग्रन्थात् स्तैन्यपरोऽधमः।
तस्य पापमतेर्भूयात् प्रतिजन्माशुभं बहु॥

---

वदुन्नेयानि। प्रामाण्यं नामाबाधितानधिगतार्थबोधकत्वम्। तदेव च साधनमिति साध्यसाधनयोरेकत्वे साधनसिद्धौ तदभिन्नसाध्यसिद्धेः सिद्धसाध्यता, साध्यासिद्धौ च तदभिन्नसाधनासिद्धेर्हेत्वसिद्धिरित्याशङ्क्याह—**प्रामाण्यं चेति**। उक्तविधस्यापि वेदस्याप्रामाण्ये वैद्यशास्त्रस्यापि [2]प्रामाण्यं न स्यादित्यतिप्रसक्तिरित्यप्रयोजकत्वं प्रतिक्षिपति—**विपक्ष इति**। स्वरूपासिद्धिं परिहरति—**न चेति**। हेतोर्धर्मिणि व्यापकतया वृत्तेरनुभवतो निश्चितत्वादित्याह—**तस्येति**। असिद्धत्वाभाववद्विरुद्धत्वाद्यभावोऽपि सपक्षवृत्तित्वादिना द्रष्टव्य इत्याह—**एवमिति**। वेदप्रामाण्यवादार्थमुपसंहरति—**तस्मादिति**। [ [3]अस्मिन्प्रकरणे श्रोतृप्रवृत्त्यर्थमेतद्गतमुपपत्तिजातमुपजीवन्तमाशिषाऽऽचार्योऽनुगृह्णाति—**सारमिति**। यस्तावदधमो वैदिकदर्शनपरिचयविधुरो दर्शनान्तरपरः स स्तेनकर्मनिरतवदनादरणीयः। यस्तु वैदिकदर्शनशीलस्तदनुसारिणोऽस्मात् प्रकरणात् सारिष्ठामुपपत्तिमुद्धृत्य जानीते तस्य पापेभ्यो दर्शनान्तरेभ्यो व्यावृत्तमतेः? सर्वेषु जन्मस्वासमन्ततः शुभमेव प्रभूतं भूयादिति श्लोकार्थः।

अथवा कश्चित्किल मन्दबुद्धिः स्वयं ग्रन्थनिर्माणनैपुणशून्यस्सन्नेतत्प्रकरणगता युक्तीरुद्धृत्य लिखित्वा स्वकीयं ग्रन्थकर्तृत्वं ख्यापयामास। न चेय-

---

1. अयं श्लोकः अस्य व्याख्यानं च मंगलश्लोकानन्तरं योज्यमिति प्रतिभाति।

2. साधकं इत्यधिकः पाठः

3. मूलग्रन्थे द्वितीयश्लोकतया संभावितस्य पद्यस्य व्याख्यारूपोऽयं ग्रन्थभागोऽपि तत्रैव निवेशमर्हति।

वैशेषिकादिकृतवेदपौरुषेयत्ववादः

नतु आयुर्वेदवद्वेदस्यापि प्रामाण्ये पौरुषेयत्वं दुष्परिहरम्। प्रयोगस्तु—वेदवाक्यं पौरुषेयम् वाक्यत्वात् कालिदासवाक्यवत्। वैदिकयानुपूर्वी प्रणेतृपूर्विका वर्णानुपूर्वीत्वात् संप्रतिपन्नवत्। वेद-वाक्यमाप्तप्रणीतम् प्रमाणत्वे सति वाक्यत्वादायुर्वेदवाक्यवत्। विपक्षे च कादाचित्कता वाक्यस्य न स्यात्॥

न च कश्चिदपि शब्दो न कादाचित्कः। अनुभवप्रसिद्धि-विरोधात्। अथाभिव्यक्तिविषयतया शब्दस्य कार्यतानुभवस्तद्वत्प्र-

---

मुचिता प्रक्रिया शिष्टनामिति शिष्यशिक्षार्थं तादृशं दुराचारं तिरस्करोतीति श्रुत्यैव श्लोको व्याख्येयः ।] वैनाशिकादिदर्शननिरसनपुरस्सरं वेदप्रामाण्ये प्रसाधिते प्रदर्शितनिदर्शनवशेन वैशेषिकादिरासादितावकाशः समाशङ्कते—**नन्विति**। प्रतिज्ञामात्रेण प्रमेयप्रसक्तावतिप्रसक्तिं प्रतिपद्य प्रतिज्ञातेऽर्थे प्रमाणं प्रस्तौति—**प्रयोगस्त्विति**। भागे सिद्धसाध्यतां निरसितुं वेदपदम्। हेतु-सिद्ध्यर्थं वाक्यविशेषणम्। पुरुषसम्बन्धमात्रस्य सिद्धतया सिद्धसाध्यत्वमाशङ्-क्यानुमान्तरमाह—**वैदिकीति**। आनुपूर्वी क्रमः। भागे सिद्धसाध्यत्वनिरासार्थं वैदिकीत्युक्तम्। साकाङ्क्षत्वनिवृत्त्यर्थमानुपूर्वीति पदम्। वर्णक्रमत्वादिति हेत्वर्थः। तत्र प्रसिद्धप्रणेतृहीनेषु क्रमवर्तिषु जीर्णकूपारामादिषु व्यभिचारनिरा-सार्थं वर्णपदम्। असिद्धिमुद्धर्तुं क्रमविशेषणम्। उन्मत्तादिप्रणीतत्वप्रत्प्त्या स्वपक्षप्रक्षयमाशङ्क्य प्रयोगान्तरमाह—**वेदेति**। भागे बाधादिपरिहाय वेद-विशेषणम्। वाक्यविशेषणं तु पूर्ववदुन्नेयम्। उन्मत्तादिवाक्ये व्यभिचारं वारयितुं प्रमाणत्वे सतीत्युक्तम्। ईश्वरप्रत्यक्षेऽनैकान्तिकत्वं मा भूदित्याह—वाक्यत्वादिति। अथोक्तं साध्यजातं मा भूत् हेतुकलापस्तु भविष्यति। तथा च विपक्षे बाधकतर्काभावाद्व्याप्यत्वासिद्धिरित्याशङ्क्याह—**विपक्षे चेति**। शब्दस्य नित्यत्वाङ्गीकारादिष्टापत्तिरित्याशङ्क्य निराचष्टे—**न चेति**। शब्दस्य कादाचित्कतायाः स्वानुभवसिद्धत्वाल्लोकप्रसिद्धत्वाच्च ताभ्यां विरोधादिति हेतु-माह—**अनुभवेति**। नित्यस्यापि शब्दस्य कदाचिदेवाभिव्यक्तेरभिव्यक्तिविष-यतया कादाचित्कत्वानुभवप्रसिद्धिसम्भवान्न शब्दनित्यत्वबाधकत्वं तयोरिति चोदयति—**अथेति**। शब्दस्य स्थिरत्वे स्थिते स्यादियं कल्पना। न च तस्य

**सिद्धिश्चाविरुद्धा। न। शब्दस्य स्थिरत्वे मानाभावात् अभिव्यक्तिकल्पनायोगात्। स एवायं शब्द इति प्रत्यभिज्ञारूपं मान[1] मस्तीति चेन्न। तस्या ज्वालाप्रत्यभिज्ञावत् सादृश्यनिबन्धनत्वात्। अन्यथा पाषण्डागमा अपि नित्या इत्यपौरुषेयाः स्युः। तस्माच्छब्दः कादाचित्क एव। प्रयोगस्तु—वर्णा उत्पत्तिमन्तः विनाशिनो वा सामान्यवत्वे सत्यस्मदादिबहिरिन्द्रियग्रहणार्हत्वात् घटवत्। वर्णा अनित्याः उत्कर्षनिकर्षवत्वात् सुखवत्। वैदिक्यानुपूर्वी इदम्प्रथमा वर्णानुपूर्वीत्वात् संप्रतिपन्नवत्। विपक्षे च बौद्धाग-**

---

स्थिरत्वमस्ति प्रमाणाभावादिति दूषयति—**न शब्दस्येति**। प्रमाणाभावस्यासिद्धिमाशङ्कते—**स एवेति**। उक्तप्रत्यभिज्ञाया विभ्रमत्वान्न शब्दनित्यत्वसाधकत्वमित्युत्तरमाह—**न तस्या इति**। वेदातिरिक्तशब्दानां नित्यत्वमनित्यत्वं वास्तु, वैदिकशब्दानां तु नित्यत्वमेवेत्याशङ्क्य, नियामकानुपलम्भान्नैवमिति मन्वानो विपक्षेऽतिप्रसक्तिं वक्ति—**अन्यथेति**। साधकाभावे बाधकसद्भावे च फलितमाह—**तस्मादिति**।

तत्र स्वानुभवप्रसिद्धी प्रागेव प्रमाणीकृते, सम्प्रति प्रमाणान्तरमाह—**प्रयोगस्त्विति**। वाशब्दश्चार्थे प्रयुक्तः। विकल्पस्याविवक्षितत्वात्। अनुमानादियोग्ये परमाण्वादौ व्यभिचारं परिहरति—इन्द्रियेति। आत्मनि मा भूदनैकान्तिकत्वमित्याह—बहिरिति। तथापि योगिबहिरिन्द्रियग्राह्ये तत्रैव* व्यभिचारः स निरस्यते—अस्मदादीति। सामान्येऽतिप्रसङ्गं प्रत्याख्यातुं प्रथमविशेषणम्। असिद्धिमुद्धर्तुमर्हपदम्। उपान्त्यादिशब्देषु हेत्वसिद्धिमाशङ्क्यानुमानान्तरं दर्शयति—**वर्णा इति**। सातिशयत्वादिति हेत्वर्थः। उत्कर्षादेरतिशयस्य ध्वनिगतत्वेन स्वरूपासिद्धिमाशङ्क्य प्रयोगान्तरमाह—**वैदिकीति**। पूर्ववदेव विशेषणकृत्यं प्रतिपत्तव्यम्। हेतुत्रयस्याप्रयोजकत्वं प्रत्यादिशति—**विपक्षे चेति**। अत्र चागमत्वाविशेषो हेतूकर्तव्यः। "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति शब्दार्थसम्बन्धनित्यत्वाभिधानात्तद्द्वारा, सम्बन्धिनः शब्दस्यापि नित्यत्वं सेत्स्यतीत्याशङ्क्याह—**तथेति**। शक्तिलक्षण-

---

1. प्रमाणं *परमाण्वादौ

मस्यापि नित्यत्वप्रसङ्गो बाधः। दूषणान्तरविरहस्त्वतिरोहित एव। तथा शब्दार्थसंबन्धोऽप्यनित्य एव। तथाहि— गवादिपदं सङ्केतपूर्वकतयैव व्यवहारपदं पदत्वात्। संप्रतिपन्नवदित्येषा दिक्॥

वेदापौरुषेयत्वसिद्धान्तारंभः

उच्यते—न तावत्कल्पादौ वेदस्योत्पत्तिः सम्भवति। तदा शरीरादेः पदरचनाहेतोरसम्भवात्। अथ तेन विनापि नित्येच्छादिशालिना अचिन्त्यमहिम्नेश्वरेण वेदो विरच्यत इति मतम्, स तर्हि स्वमहिम्नैव विरचयेत्, किं प्रयत्नादिना?। तर्हि हिरण्यगर्भ एवास्तु वेदस्य कर्ता। "स वै शरीरी प्रथमः" इति तस्य शरीरित्वावगमात्।

---

नित्यसम्बन्धद्वारा गवादिपदस्य व्यवहारविषयत्वाङ्गीकारात्। सिद्धसाध्यतां निरस्यति—सङ्केतेति। देवदत्तादिपदेषु साङ्केतिको व्यवहारः, पदान्तरेष्वन्यथेति विशेषं निरस्यति–एवेति। शब्दस्याकार्यत्वे शास्त्रयोनित्वाधिकरणविरोधः, तत्सर्गश्रुतिविरोधश्चेति मत्वा पूर्वपक्षमुपसंहरति—इत्येषेति।

वेदस्य बुद्धिपूर्वकार्यत्वेन पौरुषेयत्वे बाधकं तर्कमभिदधानः सिद्धान्तमाह—उच्यत इत्यादिना। यो हि वेदसृष्टिमाचष्टे स प्रष्टव्यः—ईश्वरो वा वेदस्रष्टा हिरण्यगर्भो वेति। नाद्य इत्याह—न तावदिति। परस्मादीश्वरादिति शेषः। तत्र हेतुमाह—तदेति। शरीराधिष्ठानं हि कण्ठाद्यष्टविधं स्थानं पदरचनाकारणम्। न च महासर्गे परस्य शरीराद्यस्ति। अतो नासौ वेदस्रष्टेत्यर्थः। अचिन्त्यमहिमत्वादीश्वरश्शरीरादिकमन्तरेणापि वेदं स्रष्टुमीष्टे। स्वसमवेतनित्येच्छाप्रयत्नादिप्रभावादिति प्रत्यवतिष्ठते—अथेति। ईश्वरस्याचिन्त्यमहिमत्वे प्रयत्नादिव्यतिरेकेण निश्वासादिवद्वेदनिर्मातृत्वसम्भवात् "अस्य महतो भूतस्ये" त्यादिश्रुतिसिद्धसिद्धान्तसिद्धिरिति सिद्धान्तयति—स तर्हीति। एतेन शास्त्रयोनित्वाधिकरणविरोधो निराकृतः।

द्वितीयमुत्थापयति—तर्हीति। तस्यापि शरीराद्यभावे कथं वेदकर्तृतेत्यत आह—स वै शरीरीति। शरीरित्वेऽपि कुतो हिरण्यगर्भस्य वेदकर्तृत्वं मानाभावादित्यत आह—इदं सर्वमिति। हिरण्यगर्भस्य शरीरादिमत्वेऽपि वेदकर्तृत्वं मानहीनमुक्तं श्रुतेराविर्भावविषयत्वादिति दूषयति—

"इदं सर्वमसृजत," इति "ऋचो यजूंषि सामानी"ति च वेदस्रष्टृत्वश्रुतेश्च । न । अत्राविर्भावाभिधानात् । प्रळये हि तिरोभूतानामीश्वरानुग्रहाद्धिरण्यगर्भबुद्धावाविर्भावो वेदानामत्रोच्यते न त्वसतां सर्गः । तथा च शास्त्रम्—"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।" इति ॥

स्यान्मतम्, स एकमिच्छाकायमधिष्ठाय ससङ्केतं च वेदं विधाय कायान्तरेण च व्यवहृत्य, हिरण्यगर्भादीनां शब्दार्थबोधं जनयतीति । न । इत्थंभावे प्रमाणाभावात् ॥

ननु वेदस्य कार्यत्वादेरेव शरीरादिमत्पूर्वकत्वं सिध्यति । तत्कार्यत्वे पौरुषेयत्वे चानुमानमुक्तम् । तद्दुरुक्तम् ।

---

**नात्रेति** । तदेव प्रपञ्चयति—**प्रलये हीति** । असृजतेति स्पष्टं सृष्टौ श्रूयमाणायामाविर्भावविषयत्वं कथमित्यत्राह—**तथा च शास्त्रमिति** । ईश्वरस्य वेदकर्तृत्वं लीलाविग्रहपरिग्रहेणेति सिंहावलोकनन्यायेनाशङ्कते—**स्यान्मतमिति** । ईश्वरस्तावदिच्छया स्वच्छं शरीरमेकमधितिष्ठति । ततस्सङ्केतसहितं वेदं निर्मिमीते । तदनु हिरण्यगर्भादिसर्गपूर्वकमध्यापयति । ततश्च तेषां वेदात्तदर्थज्ञानमुत्पादयतीत्यर्थः । वेदस्य शरीरादिमत्पूर्वकत्वे मानाभावान्नेयं कल्पना साधीयसीति समाधत्ते—**नेत्थमिति** । प्रमाणाभावस्यासिद्धिं चोदयति—**नन्विति** । कार्यत्वाद्येवासिद्धमिति चेन्नेत्याह—**तत्कार्यत्व इति** । वेदस्य कार्यत्वादावुक्तमनुमानजातमसति यथोक्ते बाधके निराबाधं प्रमाणं सिध्यति । तत्प्रामाण्यसिद्धौ च पूर्वोक्तबाधकाभावसिद्धिरिति अन्योन्याश्रयत्वमभिप्रेत्याह—**तद्दुरुक्तमिति** । दूषणान्तरमाह—**अनादीति** । उत्सर्गस्तु वाचः सम्प्रदायप्रवर्तनात्मको नान्यादृशः अनादिनिधनत्वविरोधादित्यवधेयम् ।

उक्तेऽनुमानकलापे सामान्यतो दूषणमुक्त्वा विशेषतो वक्तुमारभते—**किं चेति** । तत्रादौ दूष्यमनुभाषते—**यत्तावदिति** । व्यर्थविशेषणासिद्धिमाशंक्य दूषयति—**तत्रेति** । अतीन्द्रियदर्शिनो योगिनो मीमांसकैरनङ्गीकारादित्यर्थः । ध्वनिधर्मान्यत्ववद्वादिनो विशेषणमर्थवदित्याशङ्क्याह—

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा"॥

"ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः"॥

"वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः"॥

इति स्मृतिबाधात्। तथा "नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनमि"ति श्रुतिबाधाच्च।

### वर्णानित्यत्वानुमानखण्डनम्

किञ्च यत्तावदनित्यत्वसाधनं सामान्यवत्वे सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वं, तत्रास्मदादीति विशेषणमस्मत्पक्षे व्यर्थम्। त्वत्पक्षे च हेतोर्भागासिद्धिः। उपान्त्यादिशब्देष्वभावात्। न चास्मदादिबाह्येन्द्रियग्रहणार्हः शब्दो धर्मीति वाच्यम्। अस्यापि विशेषणस्य वैयर्थ्यात्। किञ्चैकश्शब्दो एकस्यैवेन्द्रियस्य ग्रहणार्ह इति ते स्थितिः। श्रोत्रान्तरे तस्यासमवायात्। अतस्तेऽस्मदादिबाह्येन्द्रियग्राह्यत्वा-

---

त्वत्पक्षे चेति। तेषां नित्यानुमेयत्वस्य तार्किकैरभ्युपगतत्वादिति भावः। भागासिद्धिपरिहारार्थं धर्मिणि विशेषणमाशङ्क्य दूषयति—**न चेति**। अवाच्यत्वे हेतुमाह—**अस्यापीति**। धर्मिण्यपि हेताविवास्मदादिविशेषणस्य व्यर्थत्वादिति यावत्। यद्वाऽस्मदादिबाह्येन्द्रियग्राह्यत्वविशेषणं धर्मिणि नोपपद्यते। शब्दमात्रस्य त्वयाऽनित्यत्वाङ्गीकारात्। न चैकदेशे साध्यसिद्धौ तद्दृष्टान्तादितरत्रापि तदनुमानम्। उपान्त्यादेरस्मदसिद्धस्य धर्मित्वानुपपत्तेरित्यर्थः। अथवा उपान्त्यादिव्यवच्छेदकं विशेषणं धर्मिणि न युक्तम्। व्यवच्छेद्यस्यास्माकमसिद्धेरिति हेत्वर्थः। एवं वार्थः—श्रोत्राग्राह्यशब्दाभावादीदृशशब्दविशेषणानुपपत्तिरिति। विशेषणमङ्गीकृत्यापि दूषयति—**किंचेति**। दोषं विशदीकर्तुं तदीयपरिभाषामनुभाषते—**एक इति**। प्रक्रियां प्रदर्श्य फलितं दोषमाह—**अत इति**। शब्दो हि वीचिसन्तानन्यायेन जायते। तत्रैकस्य श्रोतुः श्रोत्रे यश्शब्दोऽवतरति नासौ श्रोत्रन्तरस्य श्रोत्रे समवैति। असमवेतश्च न गृह्यते। ततश्चादिशब्दासिध्या विशेषणासिद्धौ विशिष्टधर्मिहेत्वसिद्धिरित्यर्थः। बाह्येन्द्रियग्राह्यजातीयः शब्दो धर्मी अस्मद्बाह्येन्द्रि-

सिद्धेर्विशिष्टधर्मिहेत्वोरसिध्दिः। जात्युपाधावुक्तधर्मिहेत्वोर्निर्देशान्नोक्त-दोष इति चेत्, किमपरजात्यास्मदादिग्राह्यसजातीयत्वमुच्यते, किंवा परजात्या?। आद्ये उपान्त्यादिर्धर्मिभागस्यासिद्धिः। दृष्टान्ते च साधन-विकलता, घटे शब्दत्वाभावात्। अथास्मद्ग्राह्यापरजातीयत्वमात्रं विव-क्षितं तदा नित्यरूपेण व्यभिचारः। द्वितीये त्वात्मादिनानैकान्ति-कता। अस्मदादिपदं जातीयपदं च विहाय धर्म्यादिनिर्देश इति चेन्न। त्वद्ग्राह्येष्वपि शब्देषु सर्वत्रास्माकं मानाभावात् भागासिद्धेः। विशेषणं

---

यग्राह्यजातीयत्वं च हेतुः। अतो विशिष्टधर्मिहेत्वोः सिद्धिरिति चोदयति—**जात्युपाधाविति**। किमस्मद्बाह्येन्द्रियग्राह्यापरजातीयः शब्दो धर्मी, अस्म-द्बाह्येन्द्रियग्राह्यापरजातीयत्वादिति हेतुः, किं वा तादृक्पर जातीयः शब्दो धर्मी उक्तपरजातीयत्वादिति हेतुरिति विकल्पयति—**किमपरजात्येति**। अत्र चादिशब्दो यथास्थितोऽनूद्यते। विवक्षितस्तु न भवतीति द्रष्टव्यम्। अपरजा-तिरपि शब्दत्वं वा अपरजातिमात्रं वेति वाच्यम्। यद्यस्मद्बहिरिन्द्रियग्राह्यशब्द-त्वापरजातीयो धर्मी, तथाविधशब्दत्वापरजातीयत्वादिति हेतुः, तत्राह—**आद्य इति**। उपान्त्यादेरस्माकमसम्प्रतिपन्नत्वादित्यर्थः। दोषान्तरमाह—**दृष्टान्ते चेति**। उक्तापरजातिमात्रसम्बन्धी धर्मी तादृगपरजातिमात्रसम्बन्धित्वादिति हेतुरिति पक्षमनुवदति—**अथेति**। अस्ति हि सलिलपरमाण्वादिगतरूपादावः-स्मद्बाह्येन्द्रियग्राह्यगुणत्वापरजात्याधारत्वं नाऽनित्यतेति दूषयति—**तदेति**। रूप-ग्रहणं रसादेरुपलक्षणार्थम्। यद्यस्मद्बाह्येन्द्रियपरजातीयः शब्दो धर्मी, उक्तवि-शेषणपरजातीयत्वादिति हेतुस्तत्राह—**द्वितीये त्विति**। नित्येऽप्यात्मादावस्म-द्बाह्येन्द्रियग्राह्यसत्ताजातीयस्य सत्वादिति भावः। असद्बाह्येन्द्रियग्राह्यः शब्दो धर्मी सामान्यवत्वे सत्यस्मद्बाह्येन्द्रियग्राह्यत्वादिति हेतुः। एवं धर्मि-हेतुनिर्देशेन विशिष्टधर्म्यादिसिद्धिरिति शङ्कते—**अस्मदादीति**। अत्रादिपदं जातीयपदं च विहायेति यावत्। आश्रयैकदेशासिद्ध्या निराक-रोति—**न त्वद्ग्राह्येष्वपीति**। प्रमितस्य भवन्मते धर्मित्वनियमादिति भावः। योगिनोऽनङ्गीकारादस्मद्विशेषणस्यातीन्द्रियशब्दाभावाद्बाह्येन्द्रियग्राह्य-विशेषणस्य च व्यर्थतेत्युक्तम्। दोषान्तरं स्मारयति—**विशेषणं चेति**। सामान्यवत्वे सतीति हेतुविशेषणं पूर्ववद्विकल्प्य दूष्यमिति चशब्दार्थः।

च व्यर्थमित्युक्तम्। यदप्यनुमानन्तरमुत्कर्षनिकर्षवत्वादिति, तत्राप्यागमबाधः। धर्मिभागासिद्धिश्च उपान्त्यादीनामस्माकमसिद्धत्वात्। तद्व्यावृत्त्यर्थं च विशेषणं पूर्ववद्व्यर्थम्। उत्कर्षादिमत्वं च वर्णेषु निजं किंवा औपाधिकमाहोस्वित् साधारणं हेतूक्रियते। आद्ये असिद्धिः। वर्णा निजोत्कर्षादिमन्तः सामान्यवत्वे सति श्रावणत्वात् ध्वनिवदिति चेन्न, उपान्त्यादिधर्मिभागासिद्धेः। तत्रैव तव हेत्वसिद्धेश्च। द्वितीयतृतीययोस्तु कूपकुम्भाकाशादिनानैकान्तम्। यदप्युक्तं वैदिकयानुपूर्वी इदंप्रथमा वर्णानुपूर्वित्वात् संप्रतिपन्नवत्। तथा गत्रादिपदं सङ्केतपूर्वकतयैव व्यवहारपदं पदत्वात् संप्रतिपन्नवदिति। तत्रोभयत्रापि पूर्ववदागमवि-

---

प्रयोगान्तरमनुवदति—**यदपीति**। साधारणं दूषणमनुस्मारयति—**तत्रापीति**। आश्रयैकदेशासिद्धौ हेतुमाह—**उपान्त्यादीनामिति**। बाह्येन्द्रियग्राह्यत्वं धर्मीकृतेषु वर्णेषु विशेषणमिष्यते। अतो धर्मिभागासिद्धिः शक्या समाधातुमित्याशङ्क्याह—**तद्व्यावृत्त्यर्थं चेति**। वैयर्थ्यसमर्थनप्रकारं प्रागुक्तं स्मारयति—**पूर्ववदिति**। सम्प्रत्यसाधारणदोषविवक्षया हेतुं विकल्पयति—**उत्कर्षादिमत्वमिति**। वर्णेषु स्वाभाविकमुत्कर्षादिमत्वमिति पक्षं प्रमाणाभावेन प्रतिक्षिपति—**आद्य इति**। वर्णानां स्वारसिकोत्कर्षादिमत्वे मानमादर्शयन्नसिद्धिसमाधिं चोदयति—**वर्णा इति**। सिद्धसाध्यतानिरासार्थं निजपदम्। शब्दत्वमात्मादि च क्रमेण हेतुविशेषणाभ्यां व्यवच्छिद्यते। आश्रयैकदेशासिद्ध्या दूषयति—**नोपान्त्यादीति**। उपान्त्यादेर्नित्यानुमेयत्वपक्षमनुसृत्य दोषान्तरमाह—**तत्रैवेति**। परिशिष्टौ विकल्पौ पराचष्टे—**द्वितीयेति**। आकाशादौ कूपाद्युपाधिकृतं साधारणं चोत्कर्षादिमत्वमिष्यते[1] विनाऽनित्यत्वमिति व्यक्तमनैकान्तिकत्वमित्यर्थः। परोदीरितमनुमानान्तरमनुद्रवति—**यदप्युक्तमिति**। सम्बन्धानित्यत्वानुमानमपि परोक्तमनुभाषते—**तथेति**। श्रुतिस्मृतिविरुद्धकालात्ययापदिष्टतां निर्दिष्टामाचष्टे—**तत्रेति**। आदिग्रहणेनोपान्त्यादिधर्मिभागासिद्धिर्गृह्यते। सम्बन्धानित्यत्वानुमाने दोषान्तरमाह—**द्वितीये त्विति**। अस्ति तावदुपान्त्यादेरपि धर्मित्वं, विवादस्य

---

1. तथेत्यधिकः पाठः।

**रोधादि दूषणम्। द्वितीये तूपान्त्यादिभागे व्यवहारानुपलब्धिबाधोऽतिरिच्यते ॥**

**ननु विवादपदमिति धर्मिनिर्देशे, न धर्मिभागासिध्यादिदोषः। उपान्त्यादीनां तत्रासिद्धत्वात् प्रकृतविवादागोचरत्वादधर्मिभागत्वात्। नापि व्यर्थविशेषणता, तन्निर्देशस्य निर्विशेषणत्वात्। एवं तर्हि नान्त्यशब्दस्यापि धर्मिता। तस्यापि भवत्पक्षेऽस्माकमसिद्धत्वात्। न चायं धर्मिनिर्देशो निर्विशेषणम्। प्रकरणसिद्धशब्दापेक्षया अस्य सविशेषणत्वात्। अन्यथा धर्म्यनिर्णयप्रसङ्गात्। अतो व्यर्थविशेषणतापि सिद्धा। विवादपदं वाक्यं धर्मी अतः सिद्धसाधनतानिवृत्त्यर्थं**

---

शब्दमात्रविषयत्वात्। त्वया च तस्य धर्मित्वाङ्गीकारात्। न च तत्र साङ्केतिको व्यवहारो दृश्यते। अतोऽनुपलब्ध्या बाधान्न सम्बन्धानित्यत्वं शक्यमनुमातुमित्यर्थः। विवादपदमुत्पत्त्यादिमदिति धर्मिनिर्देशे धर्मिभागस्य, तत्र हेतोश्चासिद्ध्युद्धारसिद्धिरिति शङ्कते—**नन्विति**। विवादस्य शब्दमात्रविषयत्वादुपान्त्यदिष्वपि प्रवृत्तेः भागासिद्धितादवस्थ्यमित्याशङ्क्याह—**उपान्त्यादीनामिति**। तथापि कथं धर्मिनिर्देशस्य व्यर्थविशेषणता समाधीयते तत्राह—**नापीति**। यद्युपान्त्यादीनामस्माकमसिद्धत्वादुत्पत्त्यादिमत्त्वं न वेति विवादाविषयत्वेन धर्मिभागत्वाभावाद्भागासिद्ध्याद्युद्ध्रियते, तर्हि धर्मित्वमन्त्यशब्दस्यापि न स्यात्। तस्यश्रोत्रान्तरे समवायाभावात् भवत्पक्षे। तस्मादस्मदसिद्धेर्विवादाविषयत्वात्। अतस्ते शब्दविषयो विचारो नास्माभिः सह सम्भवेदिति परिहरति—**एवं तर्हीति**।

यच्च नापि व्यर्थविशेषणेत्यादि तत्राह—**न चेति**। शब्दविषयविचारस्य प्रकृतत्वात्तस्य प्रकरणतो विशेष्यतया सम्बन्धसिद्धेरिति हेतुमाह—**प्रकरणेति**। यदि तु शब्दस्य विशेषतया प्राकरणिकः सम्बन्धो नास्थीयते तदा विवादगोचरस्य भूयसः सम्भवेन सन्दिग्धविशेष्यत्वादपार्थकं प्रतिज्ञावचनमापतेदित्याह—**अन्यथेति**। अस्तु तर्हि धर्मिनिर्देशस्य सविशेषणत्वमित्याशङ्क्य विवादपदविशेषणस्य व्यर्थतामाह—**अत इति**। अपिना यथोक्तामाश्रयासिद्धिं दृष्टान्तयति। शब्दमात्रं प्रकरणसिद्धं, तस्य निर्विशेषणस्य धर्मित्वे भागे सिद्धसाध्यता,

विशेषणमिति चेन्न, उभयवादिसिद्धवाक्यस्य त्वन्मतेऽभावात् । अस्तु तर्हि वेदजन्यं ज्ञानमुत्पत्त्यादिमच्छब्दजन्यं शाब्दज्ञानत्वात् संप्रतिपन्नज्ञानवदिति प्रयोगः । मैवम् ।

न हि त्वयाऽस्मत्सिद्धवेदजन्यं ज्ञानमिष्यते किंत्वन्त्यशब्दजन्यम् । तच्चास्माकमसिद्धम् । अतः स्फुटाऽऽश्रयासिद्धिः । अथ प्रयोगः—वर्णत्वमुत्पत्तिमदाश्रयं, वर्णाश्रयजातित्वात्, सत्त्ववदिति ।

---

तन्निवृत्तौ विवादपदविशेषणमुपयुक्तमिति शङ्कते—विवादेति । त्वन्मते वाक्यमेकं नोभयसिद्धमस्ति । एकस्य शब्दस्यैकेन्द्रियग्रहणार्हत्वनियमोपगमात् । अतो विवादपदस्योभयसिद्धवाक्यस्याभावाद्धर्म्यसिद्धिरिति दूषयति—नोभयेति । अशेषदोषपरिजिहीर्षया प्रयोगान्तरमालम्बते—अस्तु तर्हीति । भागे सिद्धसाध्यतापरिहाराय वेदजन्यपदम् । नित्यसिद्धवेदशब्दजन्यत्वेन सिद्धसाध्यत्वमुद्धर्तुमुत्पत्त्यादिमदित्युक्तम् । बाधादि निरसितुं शब्दपदम् । चक्षुरादिजन्यरूपादिज्ञाने व्यभिचारनिरासार्थमाह—शाब्देति । शाब्दत्वं शब्दजन्यत्वं तन्मात्रं हेतुः । इतरत्तु स्वरूपकथनम् । किं मीमांसकसिद्धवेदजन्यं ज्ञानं पक्षीक्रियते, किं वा तार्किकादिसम्मतवेदजन्यम्? । न प्रथमः, तस्योत्पत्त्यादिमच्छब्दजन्यत्वसाधने बाधात् । तस्य मीमांसकैरुत्पत्त्यादिरहितशब्दजन्यत्वाङ्गीकारात् । भवत्पक्षे च तस्यासिद्धत्वेनाश्रयासिद्धत्वादित्याह—न हीति । द्वितीयं दूषयति—किं त्विति । भवन्मते साधारणवेदाभावात्तज्जन्यज्ञानस्यापि साधारणत्वानुपपत्तौ पक्षद्वयेऽप्यन्यतराश्रयासिद्धिरिति फलितमाह—अत इति ।

अनुमानान्तरमाशङ्कते—अथेति । वर्णत्वं वर्णेषु वर्तते । तदुत्पत्तिमदाश्रयमित्युक्ते वर्णानामुत्पत्तिसिद्धिरिति तात्पर्यार्थः । हेतौ जातिग्रहणं स्वरूपकथनार्थम् । न चान्योन्याभावभेदपक्षे वर्णाकाशान्योन्याभावे व्यभिचारः । तस्य पक्षतुल्यत्वादिति द्रष्टव्यम् । वर्णत्वं नित्याश्रयं वर्णाश्रयत्वात् सत्त्ववदिति प्रतिबन्द्या प्रतिविधत्ते—न नित्येति । किं च पूर्वोक्तवेदानित्यत्वसाधकहेतूनां वेदनित्यत्वे बाधकाभावेन शङ्कितांप्रयोजकत्वमाह—विपक्षे चेति । वेदानां नित्यत्वेनापौरुषेयत्वे पाषण्डागमानामपि तथात्वमागमत्वाविशेषादापतेदित्युक्तं बाधके जाग्रति कुतोऽप्रयोजकत्वमित्याशङ्क्याह—वक्ष्यत इति । प्रयुक्तेषु

## वर्णानां नित्यत्वसिद्धान्तप्रारम्भः

न ; नित्याश्रयत्वसाधनेऽप्यस्य धर्म्यादेस्तुल्यत्वात् । विपक्षे च बाधासम्भवो वक्ष्यते । उत्पत्त्यादिमत्वं च साध्यं ते दुर्घटम् । उत्पत्तिमत्वं हि त्वत्पक्षे प्रागसतः सत्तायोगित्वम् । तच्चाप्रसिद्धम् । प्राक्त्वोत्पत्त्योरन्योन्याश्रयत्वात् । न च लोकप्रसिद्धं साध्यम् । त्वया प्रमाणत एव वस्तुसिद्धेराश्रयणात् । विनाशित्वमपि किं विनाशयोगित्वं किं वा तद्योग्यत्वम् , आहोस्वित् स्वप्रच्युत्युपलक्षितसत्तायोगित्वम् । आद्ये, विनाशायोगिना कुम्भादिना व्यभिचारः । द्वितीये, सिद्धसाधनता ; स्वरूपं हि ते योग्यत्वम् । तृतीये, दृष्टान्ते साध्य-

---

प्रयोगेषु साध्यस्य दुस्साधत्वेनाप्रसिद्धविशेषणतां दर्शयितुमारभते—**उत्पत्त्यादीति** । दुर्घटत्वमेव प्रतिपादयितुमुत्पत्तिमत्वशब्दार्थं कथयति—**उत्पत्तिमत्वं हीति** । प्राक्त्वे सिद्धे प्रागसतः सत्तायोगरूपोत्पत्तिः सिद्ध्यति । सिद्धायां च तस्यां तदधीननिरूपणं प्राक्त्वं सिध्यतीति परस्पराश्रयान्नान्यतरस्य सिद्धिरित्याह—**तच्चेति** । कारणाधीनात्मलाभो जन्मेति चेत् । न । कारणं हि नियतपूर्वक्षणवृत्ति, पूर्वत्वं [1]च जन्मापेक्षयेत्युक्तदोषाविशेषात् ।

अथ लोकसिद्धोत्पत्तिमत्वसाधानाद्वादिसम्मतस्यासाध्यत्वान्न पूर्वोक्तं दूषणमित्याशङ्क्याह—**न चेति** । लोकप्रसिद्धिरप्रमाणं, प्रमाणं वा ? नाद्यः । ततो वस्त्वसिद्धिप्रसङ्गात् । उत्पत्तेश्च वस्तुत्वाङ्गीकारात् । न द्वितीयः । उत्पत्तेर्मानसिद्धत्वे लक्षणस्यापि वक्तव्यत्वादुक्तदोषापरिहारादिति भावः । वर्णा उत्पत्तिमन्तः विनाशिनश्चेत्यत्रोत्पत्तिमत्वं दूषयित्वा, विनाशित्वस्य दुर्घटतां प्रतिपादयितुं विकल्पयति—**विनाशित्वमिति** । न तावद्वर्तमाने कुम्भादौ विनाशयोगित्वं, वर्तमानत्वविरोधात् साधनं तु सामान्यवत्वे सतीत्यादि तत्रास्तीत्यनैकान्तिकत्वमित्याह—**आद्य इति** । तस्य दृष्टान्तत्वे साध्यविकलतेति भावः । विनाशयोग्यत्वं विनाशित्वमिति पक्षं प्रत्याह—**द्वितीय इति** । सिद्धसाध्यतां स्फुटीकर्तुं तन्मतमनुवदति—**स्वरूपं हीति** । वर्णा विनाशं प्रति वर्णा इति हि तदा साध्यार्थः । तथा च सिद्धसाध्यता वर्णानां विनाशावस्थायामपि वर्ण-

---

1. जगज्ज इत्यधिकः पाठः ।

विरहः, स्वशब्दार्थस्य दृष्टान्तेऽनन्वयात् । सैव सत्ता तत्राप्यन्वितेति चेत्, हन्त आत्मन्यपि सैवाऽन्वितेति गतं विनाशित्वलक्षणेनेत्य-प्रसिद्धता । तर्हीदमेवास्तु साध्यम्, न तु साध्यस्य लक्षणं तेनात्मापि सपक्ष इति चेन्न, अप्रसिद्धविशेषणत्वात् । न हि वर्णप्रच्युतिरस्माकं प्रसिद्धा । अतस्तल्लक्षितसत्ताप्यप्रसिद्धैव । अनित्यत्वमपि, विनाशित्वं चेन्न्याख्यातम् । सर्वकालानवच्छेदश्चेत् सिद्धसाधनता । इष्यते हि वर्णेषु कालानवच्छेदः । कालसम्बन्धाभावात् । एवं तर्हि काल-विशेषेणैवावच्छेदोऽनित्यत्वं साध्यत इति चेन्न । भवदभिमतकाल-

---

त्वेनावस्थितावस्मत्पक्षस्याक्षतत्वादिति शेषः । कल्पान्तरं निरस्यति—तृतीय इति । न खलु सर्वनामशब्दः स्वातन्त्र्येणार्थं प्रतिपादयितुं प्रभवति । समभि-व्याहृतार्थविषयत्वात् । अतो वर्णसमानाधिकृतस्वशब्दस्य वर्णविषयत्वे वर्णध्वं-सोपलक्षितस्वरूपसत्तायोगित्वं वा विनाशित्वं, तादृशसत्तासामान्ययोगित्वं वा । प्रथमं प्रत्याह—**स्वशब्दार्थस्येति** । न हि वर्णध्वंसोपलक्षितस्वरूपसत्ता घटेऽस्ति तस्य वर्णत्वानधिकरणत्वात् । अतो दृष्टन्तस्य स्पष्टा साध्यविकलते-त्यर्थः। द्वितीयं शङ्कते—**सैवेति**। वर्णप्रच्युत्युपलक्षितसत्तायोगित्वस्य विनाशि-त्वलक्षणत्वपक्षोऽनुपपन्नश्चेत्तर्हि वर्णावर्णप्रच्युत्युपलक्षितसत्तावन्तः सामान्यवत्वात् घटवदिति द्वितीयः पक्षोऽस्त्विति शङ्कते—**तर्हीति** । अनुमानं निराकरोति—**नेति** । ननु सत्ता प्रसिद्धा तत्कथमप्रसिद्धविशेषणतेत्यत आह—**न हीति** । वर्णानामुत्पत्तिमत्वविनाशित्वे निराकृत्यानित्यत्वं निराक्रियते—[**अनित्यत्व-मिति**]॥ तत्रानित्यत्वं विनाशित्वं वा सर्वकालनवच्छेदो वा कालविशेषेणाव-च्छेदो वेति विकल्प्याद्यं दूषयति—**व्याख्यातमिति** । द्वितीयमालम्बते—**सर्वेति** । तत्र भाट्टमतेनोत्तरमाह—**सिद्धसाधनतेति** । वर्णाः सर्वगताः नित्याश्चेति मर्यादामादाय सिद्धसाधनत्वं व्युत्पादयति—**इष्यते हीति** । प्राभा-करपक्षेऽपि वर्णानामाकाशगुणत्वेन कालावच्छेदाभावात्तुल्या सिद्धसाध्यतेति मत्वाह—**कालसंबन्धेति** । यदि मीमांसको वर्णेषु कालावच्छेदं नेच्छति, तर्हि कालविशेषेणैवावच्छेदस्तेषु साध्यते । तस्याविप्रतिपन्नत्वादिति कल्पान्त-रमुत्थापयति—**एवं तर्हीति** । कोऽयं कालविशेषेणावच्छेदः? किं तेन संयोगः, समवायो वा, तत्र जन्म वा, नाद्यावित्याह—**न भवदभिमतेति** ।

**संयोगादिना तदवच्छेदस्यास्माकमप्रसिद्धत्वात् । अथ कालविशेषे शब्दोत्पत्तिस्तदवच्छिन्नत्वम् । न । [1]तस्य शब्दोत्पत्तिनिरासेन निरस्तत्वात् । तस्मादुत्पत्तिमत्वादि साध्यं ते दुर्घटम् । एवं वेदपौरुषेयत्वानुमानेष्वपि यथायोगं दोषो द्रष्टव्यः । तत्रापि ह्युक्तागमबाधधर्मिभागासिध्यादि तुल्यम् । पौरुषेयत्वं च पुरुषाधीनोत्पत्तिमत्वं;**

---

भवदभिमतकालशब्देन कालविशेषो विवक्षितः, तेन संयोगेन समवायेन वा वर्णानां कालविशेषेणावच्छेदो न शक्यसाधनः तस्य मीमांसकवेदान्तिनोरप्रसिद्धत्वात् । कालविशेषो हि त्वया कालादर्थान्तरं, कालो वा, विवक्ष्यते । आद्ये तत्संयोगादिना तदवच्छेदसाधने सिद्धसाधनता । नित्यानामपि वर्णानां घटादिसंयोगस्य भाट्टैरिष्टत्वात् । न च प्राभाकरवेदान्तिनौ प्रति कालादर्थान्तरेण संयोगद्वारा वर्णानां तदवच्छेदः साधयितुं शक्यते । गुणानां संयोगस्य ताभ्यामिव तार्किकैरप्यनिष्टत्वेन बाधापत्तेः । न च कालादर्थान्तरेण समवायद्वारा तदवच्छेदो वर्णेषु वर्णनीयः । भाट्टवेदान्तिनोः समवायाप्रसिद्ध्याऽप्रसिद्धविशेषणत्वापत्तेः, प्राभाकरस्य च सिद्धसाधनत्वात्, कालादर्थान्तरे नभसि वर्णसमुदायस्य तेनाभ्युपगतत्वात् । द्वितीयेऽपि संयोगसमवायाभ्यां कालावच्छेदो वर्णेषु न साधनीयः, त्वदभिमतनित्यनिरवयवकालासिद्ध्या तत्संयोगादेरसिद्धावप्रसिद्धविशेषणतातादवस्थ्यात । तत्संयोगसाधने च पूर्ववद्बाधात् । समवायाप्रसिद्धिनिमित्तस्य च दोषस्य तत्समवायसाधने तुल्यत्वात् । अत्रापि बाधाच्चेत्यभिप्रायाद्विकल्पान्तरमनूद्य निरस्यति— **अथेत्यादिना** । पूर्वपक्षानुमानेषु साध्यासम्भवं साधितमुपसंहरति— **तस्मादिति** । वेदानित्यत्वानुमानेषूक्तं दोषजातं पौरुषेयत्वानुमानेष्वतिदिशति— **एवमिति** । तेष्वस्मादिबाह्येन्द्रियग्राह्यत्वविशेषणाभावात् प्रयुक्तदोषातिदेशो न सम्भवतीति आशङ्क्याह— **यथायोगमिति** ।

अतिदिष्टं दोषं स्पष्टयति— **तत्रापीति** । आदिपदेनाप्रसिद्धविशेषणत्वादि गृह्यते । अप्रसिद्धविशेषणत्वादि विशदीकर्तुं पौरुषेयत्वपदार्थं कथयति— **पौरुषेयत्वं चेति** । तथा चाप्रसिद्धविशेषणत्वादि दुष्परिहरमिति मत्वाह—

---

1. तस्योत्पत्ति ।

**तदप्युत्पत्तिमत्त्वाप्रसिध्यैव तत्राप्रसिद्धम् । बाधकं च तर्कमवोचाम । कल्पादौ वेदस्य शरीरादिकारणासम्भवात् कार्यत्वाद्यसंभव इति । विपक्षे बाधकतर्काभावाच्च शङ्किताप्रयोजकता ॥**

**वेदेतरागमानामपौरुषेयत्वनिराकरणम्**

**यत्तूक्तमितरागमानामप्यपौरुषेयत्वप्रसङ्ग इति तद्गोमयपायसीकरणसमं, व्याप्तेरभावात् ॥**

**ननु ते वेद एव व्याप्तिस्सिद्धा । ननु तवापि पयसि गोविकारत्वं सिद्धम् । अनुग्राह्यमानाभावादप्ययमप्रसङ्गः । विपर्यये हि**

---

**तदपीति** । लोकप्रसिद्धं पौरुषेयत्वं साध्यमित्य तो[1]नासिद्धविशेषणत्वादीत्याशंक्य त्वन्मते प्रमाणसिद्धस्यैव प्रमाणाङ्गत्वाङ्गीकारादिति मन्वानो विशिनष्टि—**तवेति** । कार्यत्वपौरुषेयत्वानुमानेषु विपक्षे दर्शितदोषवत्सु सत्सु यथोक्ततर्क[2]स्य दुर्वचत्वमित्यभिप्रेत्य तेषु शङ्किताप्रयोजकतां वक्तुमुक्तं स्मारयति—**बाधकं चेति** । पूर्वोक्तमेव वि[3]पक्षबाधकतर्कमनुवदति—**कल्पादाविति** । वेदस्याकार्यत्वापौरुषेयत्वयोः बाधकाभावाच्चाप्रयोजकत्वमुक्तानुमानानामित्याह—**विपक्ष इति** । यदि वेदस्य नित्यत्वमपौरुषेयत्वं च आगमत्वाविशेषात्तर्हि पाषण्डागमानामपि तत्प्रसरतीत्युक्तमनुवदति—**यत्त्विति** । अव्यभिचरितः सम्बन्धो व्याप्तिः । न चागमस्यापौरुषेयत्वादिना तादृशी व्याप्तिः । मन्वादिवाक्येषु व्यभिचारात् । न च तेष्वपि प्रसङ्गसाम्यं कर्तृस्मृतिविरोधात् । तथा च यथा गोमयस्य गोविकारत्वेन पयोवत् पायससाधनत्वमापाद्यते तद्वदागमत्वेनापौरुषेयत्वादिसाधनं पाषण्डागमानामिति प्रशिथिलमूलतया तर्कं दूषयति—**तद्गोमयेति** । आगमत्वस्यापौरुषेयत्वादिना व्याप्तिः [ [4]वेदे ] सिद्धा, तथा च कथं प्रशिथिलमूलतेति चोदयति—**नन्विति** । नैवं व्याप्तिः किं तु सहदर्शनमात्रम् । न च तावन्मात्रादागमत्वमपौरुषेयत्वादिसाधकमतिप्रसङ्गादिति समाधत्ते—**ननु तवापीति** । प्रमाणानुग्राहको हि तर्कः । न चात्रानुग्राह्यं प्रमाणमस्ति । अतो विपर्ययापर्यवसानादपि नास्य [5]सत्तर्कतेति दोषान्तरमाह—**अनुग्राह्येति** । वेदा-

---

1. ...या...न....व्यं, 2. दार 3. पक्षबाधक 4. स्वागमे 5. सत्तेति ।

4

मानासम्भवो दर्शितः। एतेन युगपत्सर्ववर्णोपलम्भो व्याख्यातः। कथं चेत्थंभावस्य प्राप्तिः, युगपदिन्द्रियसम्बद्धत्वादिति चेत्; न, तस्यासिद्धेः। नहि स्वरूपेणैव वर्णा इन्द्रियसम्बद्धाः, किन्तु ध्वन्युपहिता एव। ध्वनिश्च क्रमभावीत्यस्मत्स्थितिः॥

यत्तु मान श्रोत्रं समानेन्द्रियग्राह्यसमानदेशसमानधर्मापन्नानां ग्रहणाय प्रतिनियतसंस्कारसंस्कार्यं न भवति, इन्द्रियत्वात् चक्षुर्वत्।

---

नित्यत्वपौरुषेयत्वयोर्वाक्यत्वाद्यनुमानसम्भवादनुग्राह्यमानाभावासिद्धिरिति चेत्, नेत्याह—**विपर्यये हीति**। यदि वर्णाः सर्वगता नित्याश्च निश्चीयन्ते, तदा सर्ववर्णानामपर्यायेण प्रतीतिप्रसक्तिरिति प्रसङ्गान्तरं दूषणभाषितं दूषयति—**एतेनेति**। विपर्ययापर्यवसानेनेति यावत्। [1]प्रसञ्जकाभावादपि प्रसङ्गाभासत्वमस्योपन्यस्यति—**कथं चेति**। प्रसञ्जकसद्भावमाशङ्कते—**युगपदिति**। किं वर्णानां स्वरूपेण श्रोत्रसम्बन्धः किं वोपाधिद्वारेति वक्तव्यम्। नाद्य इत्याह—**न तस्येति**। असिद्धिमेव व्यनक्ति—**न हीति**। श्रावणत्वाय वर्णानमिन्द्रियसम्बन्धो [2]मृष्यते। न च शुद्धा वर्णाः श्रूयन्ते। उपहितानामेव श्रवणादित्यर्थः। उपाधिद्वारा वर्णानामिन्द्रियसम्बन्धपक्षमङ्गीकरोति—**किं त्विति**। उपहितानामपि वर्णानामपर्यायमिन्द्रियसम्बन्धसम्भवादुक्तप्रसङ्गतादवस्थ्यमित्याशंक्याह—**ध्वनिश्चेति**। तथा चोपहितवर्णानामपि क्रमेणैव श्रोत्रसम्बन्धः। अतो विपर्ययापर्यवसानादापादकाभावाच्च प्रसङ्गाभासोऽयमिति भावः। किञ्च नित्यानां विभूनां च वर्णानामभिव्यक्तिवर्णने [3]कोष्ठप्रतिष्ठो मातरिश्वा श्रोत्रस्य वा प्रतिनियतं संस्कारमादध्यात् वर्णानां वा। तत्र [4]श्रोत्रसंस्कारपक्षे तावदव्यवस्थाप्रसञ्जनमनुवदति—**यत्त्विति**। प्रतिनियताः क्रमभाविनो ये क्रमेण वर्णग्रहणोपयोगिनः संस्कारास्तैः संस्कारवन्न भवतीत्येव साध्यम्। इन्द्रियत्वादिति हेतुसिद्धिः। [5]मनसि रूपरसादिग्रहणे प्रतिनियतसंस्कारवति व्यभिचारात्तन्निरासार्थमाह—**समानेन्द्रियग्राह्येति**। बाह्यैकेन्द्रिय[ग्राह्य]ग्रहणाय प्रतिनियतसंस्कारवन्न भवतीत्युक्तेऽपि भिन्नदेशस्थरूपादिग्रहणार्थं क्रमवर्तिसंस्कारवच्चक्षुरिति साध्यविकलो दृष्टान्तः, तन्निवृत्तये समानदेशेत्युक्तम्। समानदेशत्वं

---

1. प्र....स... 2. मृग्यते 3. कोप्रतिष्ठो 4. भेद 5. मनस्वि

**शब्दा वा प्रतिनियतसंस्कारसंस्कार्या न भवन्ति उक्तविशेषणत्वे सति युगपदिन्द्रियसम्बद्धत्वात् तद्धटवदिति । तत्राद्ये सिद्धसाधनम् । श्रोत्रस्यासंस्कार्यत्वाभ्युपगमात् । द्वितीये तु भागासिद्धिः । उपान्त्यादेरस्माकमसिद्धेः तत्र तव हेतोरसिद्धेश्च । तदेवं न वर्णनित्यत्वे कश्चिदपि बाधः सम्भवी ॥**

---

च युगपदिन्द्रियसम्बद्धत्वम् । तथापि तथाविधनीलपीतादिग्रहणाय क्रमभाविसंस्कारवच्चक्षुरिति साध्यवैकल्यतादवस्थ्यम् अत उक्तं—**समानधर्मेति** । समानधर्मापन्नानां ग्रहणाय प्रतिनियतसंस्कारवन्न भवतीत्युक्तेऽपि युगपदिन्द्रियासम्बद्धसमानधर्मकरूपादिग्रहणार्थक्रमवर्तिसंस्कारवच्चक्षुरिति साध्यविकलता । तत्राह—**समानदेशेति** । युगपदनेकेन्द्रियसम्बद्धानां गुणत्वादिना समानधर्मापन्नानां रूपरसादीनां ग्रहणाय प्रतिनियतसंस्कारवति मनसि इन्द्रियत्वहेतोर्व्यभिचारं निरसितुमाद्यं **विशेषणम्** । समानेन्द्रियशब्दश्च बाह्यैकेन्द्रियवाचको व्याख्यातः । वर्णसंस्कारपक्षेऽव्यवस्थां प्रसञ्जयति—**शब्दा वेति** । उक्तविशेषणत्वं, समानेन्द्रियग्राह्यसमानधर्मापन्नत्वं चक्षुस्सम्बद्धैकद्रव्यगते रूपरसादौ युगपदिन्द्रियसम्बद्धत्वमस्ति । अस्ति च क्रमवर्तिसंस्कारसंस्कार्यत्वमिति व्यभिचारः तन्निरासाय समानेन्द्रियग्राह्यविशेषणम् । चक्षुस्सन्निकृष्टद्रव्यद्वयनिविष्टश्वेतपीतयोर्व्यभिचारवारणाय समानधर्मापन्नत्वपदम् । व्यवस्थिताव्यवस्थितवस्तुद्वयगतरूपयोरनैकान्तिकत्वं निरस्यति—**युगपदिति** । [1]**प्रथमानुमानं** दूषयति—**तत्रेति** । द्वितीयं प्रत्याह—**द्वितीये त्विति** । स्वार्थं तदनुमानमित्याशङ्क्याह—[2]**तत्र तवेति** । उपान्त्यादेर्नित्यानुमेयत्वाभ्युपगमादिन्द्रियसम्बद्धत्वविशिष्टहेतोस्तत्रासिद्धिरित्यर्थः । पूर्वोक्तं पूर्वपक्षानुमानेषु विपक्षबाधकाभावमुपपादितमुपसंहरति—**तदेवमिति** । नित्यत्वमपौरुषेयत्वोपलक्षणम् । अनुमानतो वेदस्य कार्यत्वाद्यसिद्धावपि मानान्तरात्तत्सिद्धिरित्याशङ्कते—**नन्विति** । नित्यत्वसाधकस्मृतिविरोधे सृष्टिश्रुतिर्न कार्यत्वादिसाधिकेत्याशङ्क्याह—**न चेति** । श्रुतिस्मृत्योर्विरोधे निरपेक्षतया श्रुतेर्बलवत्त्वादितरस्याः सापेक्षत्वेन दुर्बलत्वात् । "विरोधे त्वनपेक्षं स्यादि"ति

---

1. प्रथमा...नं 2. तत्रैवेति ।

## वेदापौरुषेयत्वे श्रुतिस्मृतिवचोविचारः, अनुमानप्रयोगाश्च

ननु वेदस्य कार्यत्वादि सृष्टिश्रुतेरेव सिद्धम् । न च "अनादि-निधना नित्या वाक्" इत्यादिस्मृतिविरोधः । श्रुतेः प्राबल्यात् [1]इति चेत् । नहि तावद्धैरण्यगर्भसर्गश्रुत्या वेदस्य कार्यत्वादिसिद्धिः । श्रुत्यन्तरविरोधस्योक्तत्वात् । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति ह्युक्तम् । उक्तश्च "नाचिकेतमुपाख्यानमि"त्यादि श्रुत्यन्तरम् । एवं च सति हैरण्यगर्भसृष्टिश्रुत्या न स्मृतेर्विरोधोऽपि । तथा "तस्माद्यज्ञात्सर्वहुतः । ऋचस्सामानि जज्ञिरे" इत्यादि परमात्मसृष्टि-श्रुत्यापीति द्रष्टव्यम् ॥ अन्यथोक्तश्रुत्यन्तरविरोधात् । वंशश्रुतौ च "परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभ्वि"ति ब्रह्मैव वेदरूपेणाविर्भवतीति श्रूयते । ब्रह्म-

---

न्यायादित्याह—श्रुतेरिति । "इदं सर्वमसृजते"त्यादिहिरण्यगर्भकर्तृकसर्ग-श्रुत्या वेदस्य कार्यत्वादिसिद्धिः उत परमात्मसर्गश्रुत्येति विकल्प्याऽऽद्यं दूषयति—न हीति । अभिव्यक्तिविषयत्वेनान्यथासिद्धा हिरण्यगर्भसर्गश्रुति-रनन्यथासिद्धश्रुत्यन्तरविरोधे [2]यथाश्रुतेऽर्थे न पर्यवस्यतीति मन्वानो हेतुमाह—श्रुत्यन्तरेति । न केवलं श्रुतिसामर्थ्यतो लिङ्गतो वेदसृष्टिश्रुतिरन्यथयितव्या किं तु श्रुतितोऽपीत्याह—उक्तं चेति ॥

यत्तु श्रुतेर्बलवत्तया सृष्टिश्रुत्या नित्यत्व[3]स्मृतेर्बाधाभिधानं तत्राह—एवं चेति । यद्यपि [4]केवला स्मृतिः श्रुतेर्बलविकलतामवलम्बते तथापि साऽनन्यथा-सिद्धा, तथासिद्धायाः श्रुतेर्बलवती । सुतरामनन्यथासिद्धश्रुतिसहितेत्याशयः । परमात्मकर्तृकवेदसृष्टिश्रुत्यापि वेदनित्यतास्मृतेर्विरोधो नास्तीति ब्रुवाणो विकल्पान्तरं निरस्यति—तथेति । परमात्मसृष्टिश्रुतेर्यथाश्रुतार्थत्वे का हानि-रित्याशङ्क्याह—अन्यथेति । किं च बृहदारण्यके वंशब्राह्मणे परमेष्ठी ब्रह्मणो वेदाख्याद्विद्यामापेदे । ब्रह्म तु वेदाख्यं स्वयम्भु स्वयमेव परमात्मा तद्रूपेण-भवतीति व्युत्पत्तेरिति ब्रह्मणो वेदात्मनाविर्भावः श्रुतः । "ब्रह्म स्वयंभ्वि"ति सामानाधिकरण्यश्रवणात् । अतो वेदसृष्टिश्रुतिर्न यथाश्रुतार्थेत्याह—वंशेति । वेदसृष्टिश्रुतेरमुख्यार्थत्वे युक्त्यन्तरमाह—वेदेति । न तावत्कल्पादावित्या-

---

1. प्राबल्यात् 2. तात्पर्यमित्यधिकः पाठः । 3. श्रुतेः 4. श्रुतिरित्यधिकः पाठः ।

**सामानाधिकरण्यश्रुतेः । वेदस्योत्पत्यसम्भवश्चोक्तः । अतो वेदसृष्टिश्रुतिर्बाध्येत दर्शितश्रुत्या "अनादिनिधना नित्या वागि"ति स्मृत्या च । यथा "वेदं कृत्वा वेदिं करोती"ति श्रुतिः "क्षुत आचामेदि"ति स्मृत्या । तस्मात् श्रुतिस्मृतिन्यायबलाद्वेदस्य नित्यत्वं निश्चीयते । दर्शिते हि श्रुतिस्मृती । प्रयोगस्तु—वेदोऽपौरुषेयः शरीरवृत्तीतरत्वे सति प्रळयस्थत्वादात्मवत् । हेतुसिद्धिस्तूक्तागमबलात् । नित्यत्वमसाकमुपाधिरिति चेत्तत्किं सार्वकालीनत्वं [1]असार्वकालीनत्वविपर्ययः अथवा**

---

दिनेति शेषः । का तर्हि वेदसृष्टिश्रुतेर्गतिरित्याशङ्क्यानन्यथासिद्धवेदनित्यत्वश्रुत्या बाध्यत्वमित्याह—**अत इति** । न केवलं श्रुतेरेव बाधकत्वं किन्तु स्मृतेरपीत्याह—**अनादीति** । श्रुतेः स्मृत्या बाध्यत्वमदृष्टमित्याशङ्क्य दृष्टान्तमाह—**यथेति** । वेदवेदिकरणयोरव्यवहितत्वं श्रूयते, "समानकर्तृकयोः पूर्वकाले क्त्वे"ति स्मरणात् । क्षुते सत्याचमनं स्मृतेरवसीयते । तत्र स्मृत्यनुसरणे श्रुतमव्यवधानमात्रं बाध्यते । श्रुत्यनुसारे तु स्मृतेरनवकाशता । तथा चाचमनस्मृत्या वेदिकरणश्रुतेर्बाधवत् प्रकृतेऽपि बाध्यबाधकत्वव्यवस्थेत्यर्थः । अत्र वेदशब्देन "वेदेन वेदिं विविदु"रिति मंत्रोक्तवेदशब्दवाच्यदर्भमुष्टिविशेषो द्रष्टव्यः ॥

परपक्षं निराकृत्य स्वपक्षमवतारयति—**तस्मादिति** । श्रुतिस्मृत्योर्दर्शितत्वादवशिष्टन्यायं दर्शयति—**प्रयोगस्त्विति** । "अस्य महतो भूतस्ये"त्यादौ पूर्वकल्पस्थितक्रमसदृशक्रमविशिष्टवर्णानां वर्तमानकल्पादावीश्वरादनायासेनाभिव्यक्तिर्विवक्षितेति मन्वानस्सन् प्रयोगमेवारचयति—**वेद इति** । धर्मादौ जीवगते तदधीनजन्मनि जन्मान्तरका[2]रणत्वेन प्रलयकालीने व्यभिचारं निरस्यति—**शरीरवृत्तीतरत्वे सतीति** । एतच्च पाकजन्यत्वोपलक्षणम् । अन्यथा पार्थिवपरमाणुरूपादावन्यतरव्यभिचारस्य दुरुद्धरत्वात् । घटादौ व्यभिचारवारणाय प्रलयस्थत्वादिति पदम् । वेदस्यापौरुषेयत्वममृष्यं न मृष्यते । प्रलयस्थत्वमिति विशेष्यासिद्धेरित्याशङ्क्याह—**हेतुसिद्धिरिति** । न चैवमनुमानवैयर्थ्यं, तस्याऽस्वातन्त्र्येऽप्यागमानुग्राहकतर्कत्वोपपत्तेः । आगममनङ्गी-

---

1. तत किं सार्वकालीनत्वविपर्यय इत्येव मूले दृश्यते । 2. कालत्वेन

**अविनाशित्वम्। आद्ये साध्याव्याप्तिः। काले साध्यभावेऽप्युपाध्यभावात्। द्वितीयतृतीययोरप्ययमेव दोषः। प्रागभावे साध्यवत्वेऽप्युपाध्यभावात्। अकार्यत्वं तर्ह्युपाधिरस्तु। न। तस्य तवासिद्धेः। कार्यत्वसिद्धितन्त्रा ह्यकार्यत्वसिद्धिः। कार्यत्वं च ते न**

---

कृत्याप्यनुमाने श्रद्धधानं प्रति च तस्य बोधकत्वात्। न चागमानङ्गीकारः सम्भवति। तत्प्रामाण्यस्य प्रसाधितत्वादिति भावः। अन्यतरोपाधिमाशङ्कते—**नित्यत्वमिति**। आत्मादावपौरुषेयत्वे पूर्वोक्तं साधनमप्रयोजकं, नित्यत्वं तु प्रयोजकमित्युक्ते हेतुसाध्ययोः सम्बन्धस्य स्वाभाविकत्वासिद्धिः। मीमांसकसमये साधनव्याप्त्यादावपि तार्किकमते नासावस्ति। अन्यतरोपाधिभावे च उभयाभिमतनिरुपाधिकसम्बन्धाभावादनुमानाप्रवृत्तिरिति शङ्कितुरभिप्रायः॥

उपाधिं दूषयितुं विकल्पयति—**तत्किमिति**। न च [असार्वकालीनत्वविपर्ययः] सार्वकालीनत्वमेवेति पुनरुक्तिः। घटादौ सार्वकालीनत्वाभावेऽप्यसार्वकालीनत्वविपर्ययस्य सत्वादेककालसम्बन्धेऽपि तदुपपत्तेरिति। यदपौरुषेयं तत्सार्वकालीनमिति न व्याप्तिः। काले खल्वपौरुषेयत्वमिष्यते। न च सार्वकालीनत्वं तस्य। स्वासम्बन्धात्। कालान्तरस्य चाभावात्। ततो न सार्वकालीनत्वमपौरुषेयत्वोपाधिरित्याह—**आद्य इति**। प्रागभावे स्वीकृतमपौरुषेयत्वं, नाऽसार्वकालीनत्वविपर्ययोऽविनाशित्वं वा। अन्यथा घटाद्यनुदयप्रसङ्गात्। असार्वकालीनत्वाविपर्ययो हि सार्वकालीनत्वं वा कालकलामात्रसम्बन्धित्वं वा। आद्ये प्रागभावे साध्याव्याप्तिः। अविनाशित्वस्य च प्रागभावे साध्याव्याप्तिरतिव्यक्तेति मन्वानो विकल्पयन्निराकरोति—**द्वितीयेति**। यदि नित्यत्वं नोपाधिरुपाध्यन्तरं तर्हि भविष्यतीति शङ्कते—**आकार्यत्वमिति**। न च साधनव्याप्तिः। वेदान्तिभिर्वेदस्य कार्यत्वाभ्युपगमादिति भावः। असंभवेन निरस्यति—**न तस्येति**। असिद्धिमेव साधयति—**कार्यत्वेति**। प्रतियोगिप्रतीतिमन्तरेण प्रतिषेधानधिगतेरित्यर्थः। प्रसिद्धिवशेन कार्यत्वसिद्धिरित्याशङ्क्याह—**कार्यत्वं चेति**। त्वत्पक्षे प्रसिद्धिरेव नार्थसिद्धिनिबन्धनं, प्रमाणाधीनत्वादर्थसिद्धेरित्यर्थः। **उक्तमिति**। उत्पत्तिमत्वं हीत्यादावित्यर्थः।

**सिध्यतीत्युक्तम्। एवमकारणवत्त्वमप्यसिद्धं नात्रोपाधिः। उत्पत्त्यसिद्धौ हि तत्सापेक्षप्रागभाविकारणासिद्धेरकारणवत्त्वासिद्धिः। विपक्षे बाधकतर्कस्योक्तत्वात्। बाधकतर्काभावाच्च न शङ्कितोपाधिता। नापि विरुद्धता, हेतोः सपक्षवृत्तित्वात्। असाधारणताविरहस्त्वतिरोहित एव। सपक्षवृत्तेः स्पष्टत्वात्। नापि कालात्ययापदिष्टता। बाधाभावात्। सत्प्रतिपक्षता त्वनाशङ्कनीया। उक्तदिशा प्रतिप्रयोगासम्भवस्योक्तत्वात्। स्फुटो दृष्टान्तदोषविरहोऽपि। अत्र, उक्तिदोषस्तु प्रमेयाविरोधीति निस्तरङ्गमेव वेदस्यापौरुषेयत्वानुमानम्॥**

---

उपाध्यन्तरमाशङ्क्याह—**एवमिति**। कार्यत्वासिद्धौ तदपेक्ष[1] [कारणत्वासिद्धिः। तदसिद्धौ च] [2]अकारणवत्वसिद्धिः कुतस्त्ये[3]त्याह—**उत्पत्तीति**। उत्पत्तिर्हि परस्पराश्रयतया दूषिता। तदव्यवहितपूर्वक्षणवर्ति च कारणम्। तेन तदसिद्धौ कारणासिद्धेस्तत्प्रतियोगिकनिषेधस्याकारणस्यासम्भवा न्नतद्वत्वमुक्तहेतोः। अपौरुषेयत्वस्य चात्मादौ सम्बन्धेनोपा[4]धिस्स्यादित्यर्थः। निश्चितोपाध्यभावेऽपि शङ्कितोपाधेः सत्वमाशङ्क्याह—**विपक्ष इति**। द्विविधमुपाधिशङ्काबीजं विपक्षबाधकाभावः पक्षबाधकभावश्च। प्रकृते तु वेदपौरुषेयत्वलक्षणे विपक्षे "न तावत्कल्पादावि"त्यादिना बाधकस्तर्को दर्शितः। न च वेदापौरुषेयत्वपक्षे सोऽस्ति। अतो निर्बीजोपाधिशङ्काऽतिप्रसङ्गिनीत्यभिप्रायः। सत्प्रतिपक्षतायाः शङ्कनीयत्वाभावे हेतुमाह—**उक्तदिशेति**। [5]"तदुदुरुक्त"मित्यादिनेत्यर्थः। यो दर्शितसाधनः स दर्शितसाध्य इति व्याप्तिमन्तरेण दृष्टान्तोक्तेर्वाचनिको दोषोऽस्तीत्याशङ्क्य तत्वनिर्णयप्रधानवादकथायामदोष इत्यभिप्रेत्याह—**अत्रेति**। शरीरवृत्तीतरत्वे सति प्रलयस्थत्वादित्यनुमानमुपसंहरति—**इति निस्तरङ्गमिति**। वेदस्यापौरुषेयत्वसिद्ध्यर्थमेव, तदध्ययनस्यानाद्यनन्तत्वमनुमिनोति — **किं चेति**। भागे सिद्धसाध्यत्वमुद्धर्तुं कल्पादाविति विशेषणम्। माणवकाध्ययनस्य स्वपूर्वकत्वं स्वाश्रयत्वदुष्टमिति बाधं निरसितुं—**गुरुविशेषणम्**। [पक्षे] वेदपदमादिकल्पीयैभारताध्यय-

---

1. कार्यत्वासिद्धावप्य 2. अकारणत्वासिद्धिः 3. त्याशंक्या 4. उपाधिरित्यर्थः 5. तदुक्त

किञ्च कल्पादौ वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वात् इदानीन्तनवेदाध्ययनवत् । एवमयमनादिरनन्तो वेदाध्ययनसन्तानः । अन्यथोक्तनीत्या वेदस्योत्पत्त्यसम्भवादध्ययनसन्तानाभावप्रसङ्गः । भारतादेश्चोत्पत्तिसम्भवान्नातिप्रसङ्गः । दोषान्तरासम्भवोऽत्राप्युक्तदिशा दर्शनीयः[1] । तस्मान्नित्याः अनाप्तप्रणीताश्च वेदाः । यदप्यनाप्तवाक्यत्वेन वेदस्याप्रामाण्योद्घोषणं, तन्निरस्तं पुरस्तात् । नित्यत्वेऽपि च वेदस्यानपेक्षत्वात् किमिति न प्रामाण्यम्? किमिति वा [2]न स्वत एव[3]

---

नस्य गुर्वध्ययनपूर्वकत्वप्रसक्त्या बाधनिराकरणार्थं[4] । [इदानीन्तनस्वतन्त्रभारताध्ययने] व्यभिचारो मा भूदिति हेतौ वेदग्रहणम् ॥

उक्तानुमानफलमाह—**एवमिति** । कल्पादौ वेदाध्ययनस्य गुर्वध्ययनपूर्वकत्वाभावे वेदाध्ययनसन्तानो न सिध्येत् । वेदोत्पत्तेरपास्तत्वादित्यप्रयोजकत्वं परिहरति—**अन्यथेति** । विपक्षबाधकाभावप्रयुक्ताप्रयोजकत्वाभावेऽपि कल्पादौ भारताध्ययनं गुर्वध्ययनपूर्वकं भारताध्ययनत्वात् इदानीन्तनवदित्यतिप्रसङ्गरूप [5][ सत्प्रतिक्षता ] प्रयुक्ताप्रयोजकत्वमस्तीत्याशङ्क्याह—**भारतादेरिति** । न हि पक्षीकृतभारताध्ययनस्य गुर्वध्ययनपूर्वकत्वाभावे सत्वाभावः । परमेश्वरानुगृहीतव्यासादिकर्तृकभारतोत्पत्त्यापि तदध्ययनसिद्धेः । न चास्य प्रसङ्गस्य विपर्यये पर्यवसानम् । कल्पादौ वेदाध्ययनस्य गुर्वध्ययनपूर्व[6]कत्वाभावे मानाभावादिति भावः। उक्तदिशेति "असाधारणविरहस्त्वतिरोहित एवे "त्यादि परामृश्यते । उक्तानुमानद्वयफलमाह—**तस्मादिति** । अनाप्तप्रणीतत्वे विप्रलम्भकवाक्यवदप्रामाण्यं वेदानामापतेदित्याशङ्क्य प्रामाण्यवादोक्तं स्मारयति—**यदपीत्यादिना** । किं च विप्रलम्भकवाक्यस्याप्रामाण्यमनाप्तवाक्यत्वान्न भवति किन्तु मानान्तरनिरपेक्षत्वाभावात् । न च स्मृतेर्मानान्तरसापेक्षत्वेऽपि दृष्टं प्रामाण्यमिति वाच्यम् । तस्या श्रुत्यर्थानुवादिन्याः स्वतन्त्रप्रामाण्याभावात् । वेदस्य पुनराप्तवाक्यत्वाभावेऽपि निरपेक्षत्वात् प्रामाण्यमप्रत्यूहमित्याह—**नित्यत्वेऽपीति** । यद्यपि प्रमाणं वेदःतथापि तस्य परतः

---

1. सूर्या 2. स्वयमेव इत्यधिकः पाठः । 3. प्रमाणज्ञानज्ञानं च इत्यधिकः पाठः । 4. तारकाध्ययने हेतौ 5. षक्षबाधक 6. कत्वे माना

यच्चक्षुर्वद्वेदः प्रमाणं न स्यात् । प्रपञ्चितं च वेदस्यानपेक्षत्वं नित्यत्वमपौरुषेयत्वं च बहुभिरगाधबुद्धिभिरित्युपरम्यते ॥

### वेदस्य परतः प्रामाण्यवादपूर्वपक्षः

नन्वस्तु वेदस्य प्रामाण्यं, स्वत इति तु न क्षम्यते । तत्प्रमाणाभावात् । स्वतस्त्वं हि प्रामाण्यस्य ज्ञानहेतुमात्राधीनत्वं ते विवक्षितम् । नचात्र प्रमाणमस्ति । यत्तु प्रमाणम्–[प्रमाणं ज्ञानहेतुजन्यमात्र-

---

प्रामाण्यमिति मतं प्रतिवदन्ननन्तरं प्रस्तौति––**किमिति वेति** । वेदस्यापि निरपेक्षत्वाद्यसम्प्रतिपन्नमित्याशङ्क्याह––**प्रपञ्चितमिति** । वेदो हि स्वसिद्धये स्वार्थसिद्धये वा मानान्तरमपेक्षते? । तत्राद्योऽङ्गीक्रियते, द्वितीयो नोपपद्यते । सर्वप्रमाणानां स्वप्रमेयशूरत्वात् । प्रमाणस्य च स्वार्थसिद्धौ प्रमाणान्तरापेक्षायां तस्यापि तदन्तरापेक्षासाम्यादनवस्थानात् । क्वचिदपेक्षाविश्रान्तौ चादावेव निरपेक्षत्वकक्षीकारस्य लघीयस्त्वात् । नित्यश्च वेदो निश्चीयते "वाचा विरूप नित्यये" तिश्रुतेः "वृष्णे चोदस्व सष्टुतिमि"ति वाक्यशेषे स्तुतिविधिपरत्वप्रतिपत्तावपि पूर्ववाक्ये प्रतीयमानार्थे विरोधाभावात्प्रामाण्योपपत्तेः । स च वेदोऽपौरुषेयोऽभ्युपेयः, तत्पौरुषेयत्वस्य दुर्निरूपत्वात् । तद्धि पुरुषेण विरचितत्वमात्रं वा मानान्तरेणार्थमुपलभ्य तस्मिन्नर्थे विरचितत्वं वा ? नाद्यः, शास्त्रयोनित्वाधिकरणन्यायेनाभ्युपगमात् । न द्वितीयः, निश्वसितश्रुतिविरोधात् । तदेवं वेदस्यानपेक्षत्वादि प्रामाणिकसम्प्रतिपन्नमित्यभिप्रायः ।

वेदस्य प्रमाणत्वमपौरुषेयत्वं च पूर्वोक्तमङ्गीकरोति–**नन्विति** । प्रामाण्यमित्युपलक्षणम् । यत्तु वेदः स्वत एव प्रमाणं इत्युक्तं तदाक्षिपति—[1]**स्वत इति** । स्वतस्त्वे प्रमाणाभावं प्रतिपादयितुं तस्य स्वरूपं निरूपयति—**स्वतस्त्वं हीति** । ज्ञानसामग्रीमात्रजन्यव्यक्तिवृत्तित्वं प्रामाण्यस्य स्वतस्त्वम् । न तज्जन्यत्वं प्रामाण्यस्य । स्मृतित्वानधिकरणज्ञानगतबाधात्यन्ताभावरूपोपाधित्वे जातित्वे च जन्मायोगात् । ज्ञानसामग्रीमात्रजन्यत्वे च ज्ञानवत्तद्धर्मतासम्भवादिति भावः । उक्तलक्षणे प्रामाण्यस्वतस्त्वे प्रमाणाभावं प्रतिजानीते—**न चेति** । प्रमाणाभावस्यासिद्धिमाशङ्क्य पराभिप्रेतं प्रमाणमनुवदति––**यत्त्विति** । ज्ञानहेत्वति-

---

1. प्रामाण्यमिति

**वृत्ति दोषाजन्यज्ञानैकधर्मत्वात् इति। तदसत्। अतिप्रसंगात्। ननु अप्रामाण्यं ज्ञानसामग्रीजन्यमात्रवृत्ति प्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वात् ज्ञानत्ववत् इति प्रतिप्रयोगः स] नोपपद्यते, अप्रामाण्यस्य दोषहेतुताया अवश्याभ्युपेयत्वात्। अन्यथातिप्रसङ्गात्। एवं तर्हि भवत एवैवमनुमानमस्तु। दोषान्वयव्यतिरेकयोश्च गुणान्वयव्यति-**

---

रिक्तहेतुजन्याश्रयत्वेऽपि ज्ञानहेतुजन्याश्रयत्वं सिद्धमेवेति सिद्धसाध्यता, तन्निरासाय [ मात्र ] पदम्। अप्रमाणत्वे व्यभिचारनिरासार्थं दोषाजन्यत्वं धर्मविशेषणम्। घटत्वादौ व्यभिचारं वारयितुं ज्ञानधर्मत्वपदम्। गुणत्वादौ, दोषजन्यविभ्रमादिधर्मे एतदजन्यरूपादिधर्मे च [1]व्यभिचारनिरासार्थमेकेत्युक्तम्। अप्रामाण्यं ज्ञानसामग्रीमात्रजन्यवृत्ति, प्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वात्, ज्ञानत्ववदित्यतिप्रसङ्गलक्षण सत्प्रति[2]पक्षेणशङ्कितप्रयोजकतया दूषयति-- **तदसदिति**। अप्रमाण्यस्य हि स्वतस्त्वं बौद्धोऽभ्युपैति। न च तन्मते दर्शितानुमानोपपत्तिरिति चोदयति--**नन्विति**। उक्तप्रयोगानुपपत्तौ हेतुमाह— **अप्रामाण्यस्येति**। परमते प्रामाण्यस्य गुणजन्यज्ञानवृत्तित्ववदप्रामाण्यापि ज्ञानमात्रहेत्वतिरिक्तदोषजन्यज्ञानवृत्तित्वस्य स्वीकरणीयत्वादित्यर्थः। यद्यप्रामाण्यं दोषजन्यज्ञानावृत्तिज्ञानमात्रहेतुजन्याश्रितमिष्यते तदा रजतादेर्दोषकृतबहिष्टदृष्टिवदान्तरत्वप्रतीतेरपि करणदोषमन्तरेणाप्रमाणत्वप्रसक्तिरित्यप्रामाण्यस्य दोष हेतुतायाः स्वीकर्तव्यत्वे सूचितामावश्यमित्युपपत्तिमेव विशदयति–**अन्यथेति**। स्वपक्षबाधनं [3]च तथागतस्य न घटते। मा घटिष्ट, स्वतःप्रामाण्यवादिपक्षप्रतिक्षेपस्तु दर्शितानुमानवशात् भविष्यतीति शङ्कते--**एवं तर्हीति**। सति कारणदोषे ज्ञानमप्रमाणमुदयते। असति तस्मिन्नेत्यन्वयव्यतिरेकाभ्यामधिगते दोषस्याप्रमाणज्ञानकारणत्वे तन्निरपेक्षतासाधनं तस्यान्वयव्यतिरेकविरुद्धम्। अतो ममापि नेदृगनुमानमुचितमिति शङ्कमानं प्रत्याह--**दोषेति**। सति कारणगुणे प्रमाणज्ञानं जायते नान्यथेत्यन्वयव्यतिरेकयोः प्रमाणज्ञानप्रतिबन्धभूतदोषविरोधिगुणविषयतयाऽन्यथासिद्धिवद्दोषान्वयव्यतिरेकयोरप्यप्रमाणप्रतिबन्धरूपगुणविरोधिदोषविषयत्वेनान्यथासिद्धिसम्भवान्न दोषान्वयव्यतिरेकाभ्यामप्रामाण्य-

---

1. व्यभिचारार्थं 2. पक्षबाधकेन 3. चेदीत्यक्षं

**रेकयोरिव प्रतिबन्धिविरोधिविषयतयान्यथासिद्धिः। न चापसिद्धान्तता। प्रमाणवत्वेनैवास्य सिद्धान्ततापत्तेः। न च प्रामाण्यपरतस्त्वे बाधः कश्चित्। अनुमानान्तरेऽप्येवमूहनीयम्। प्रमापरतस्त्वेऽनुमानम्—प्रमा न ज्ञानहेतुमात्राधीना ज्ञानविशेषत्वात् अप्रमावदिति। ज्ञानविशेषत्वहानिर्विपक्षे बाधः। दोषान्तराभावश्च यथासम्भवमूहनीयः। तथा प्रमा प्रमाणाप्रमाणसाधारणकारणातिरिक्तजन्या कार्यत्वात् घटवदिति प्रयोगः। दोषासम्भवोऽत्रापि यथायोगमूहनीयः।**

---

स्वतस्त्वसाधनबाधनसम्भावनेति भावः। अपसिद्धान्तनिग्रहोपहतत्वान्नाप्रामाण्यस्वतस्त्वानुमानं मीमांसकसमये सम्भवति। तत्परतस्त्वस्य मीमांसकेनाभ्युपगमादित्याशङ्क्याह—**न चेति**। पक्षबाधकतर्कवशेन शङ्किताप्रयोजकत्वमुक्त्वा विपक्षे तदभावेनापि दोषाजन्यधर्मत्वविशेषितज्ञानैकधर्मत्वहेतोः शङ्किताप्रयोजकत्वमित्याह—**न च प्रामाण्येति**। प्रामाण्यं ज्ञानहेतुमानजन्याश्रयम् अप्रामाण्येतरत्वे सति ज्ञानत्वन्यूनवृत्तित्वात् प्रत्यक्षत्ववदित्यनुमानान्तरमाशङ्क्य, शङ्किताप्रयोजकत्वमतिदिशति—**अनुमानान्तरेऽपीति**। प्रमा ज्ञानसामग्रीजन्यत्वे सत्यन्यजन्या न भवति, अप्रमेतरत्वात्, घटवदित्याशङ्क्य प्रत्यनुमानमाह—**प्रमापरतस्त्वे त्विति**। ज्ञानविशेषो हि प्रमा, सा चेत् न ज्ञानहेतुजन्या तर्हि व्याहतिरित्याशङ्क्याह—[1]मात्रेति। ज्ञानमात्रे व्यभिचारवारणाय विशेषत्वादिति[हेतु]विशेषणम्। प्रमाया ज्ञानहेतुमात्राधीनत्वे ज्ञानवत् ज्ञानविशेषत्वानुपपत्तिरित्यप्रयोजकत्वं प्रतिक्षिपति—**ज्ञानविशेषत्वेति**। किमिदं ज्ञानविशेषत्वं? प्रमात्वमप्रमात्वं वा। आद्ये दृष्टान्तस्य साधनविकलता, द्वितीये त्वसिद्धिरित्याशङ्क्याह—**दोषान्तरेति**। प्रमाऽप्रमयोर्मिथो व्यावृत्तयोः साधारणं ज्ञानविशेषत्वं हेतूक्रियते। न च तज्ज्ञानत्वमेव, त्वयापि प्रमाऽप्रमयोर्ज्ञानत्वातिरिक्तज्ञानविशेषत्वाभ्युपगमादिति भावः।

प्रमापरतस्त्वे प्रयोगान्तरमाह—**तथेति**। घटादिकारणातिरिक्तज्ञानजन्यत्वं प्रमायां सिद्धमिति तन्निवृत्तये साधारणपदम्। तथापि सर्वकार्यसाधारणकारणान्यकारणजत्वं प्रमायां सिद्धम्। तन्निवृत्त्यर्थं प्रमाणेत्यादिविशेषणम्।

---

1. मातृपदं

## परतः प्रामाण्यनिरसनम्

**उच्यते—न तावत् प्रमापरतस्त्वे आद्यः प्रयोगो मानम्। प्रत्यक्षादिना ज्ञानविशेषेण व्यभिचारात्। ननु सोऽपि प्रमाणत्वाद्धर्मी। अतः [1]कथं व्यभिचारः। इत्थं—**

**तत्र हि किं ज्ञानव्यक्तेः प्रमाव्यक्तितोऽस्ति विशेषः किं वा प्रमाव्यक्तिरेव ज्ञानव्यक्तिः?। आद्ये—प्रत्यक्षज्ञानव्यक्त्या स्फुटो व्यभिचारः। द्वितीये तु जन्यापि ज्ञानरूपा प्रमा ज्ञानहेत्वधीना न भवती-**

---

ज्ञानसामग्रीजन्यत्वे सत्यतिरिक्ताजन्यप्रमावृत्तित्वं प्रमाण्यस्य स्वतस्त्वमिति सिद्धान्तयति—**उच्यत इति**।

यत्तु—प्रमा ज्ञानसामग्रीजन्यत्वे सति नान्यजन्या अप्रमेतरत्वात् घटवदित्यत्र प्रत्यनुमानमुक्तं तत्राह—**न तावदिति**। प्रत्यक्षादौ ज्ञानविशेपत्वमस्ति। न च ज्ञानहेतुमात्राधीनत्वाभावःतस्य ज्ञानत्वादिति व्यभिचारं हेतुमाह—**प्रत्यक्षादिनेति**। सर्वस्यापि प्रमाणस्य पक्षत्वात् प्रत्यक्षादेरपि प्रमाणत्वेन पक्षान्तर्भावान्न विपक्षत्वं, सन्दिग्धसाध्यस्य च निश्चितसाध्याभावस्य च नानात्वादिति व्यभिचारपरिहारमाशङ्कते—**नन्विति**। व्यभिचारप्रकारं प्रतिजानीते—**इत्थमिति**। तमेव दर्शयितुं विकल्पयति—**तत्रेति**। प्रत्यक्षादौ ज्ञानत्वव्यञ्जकव्यक्तेः प्रमात्वव्यञ्जकव्यक्तेश्च भेदोऽभेदो वेति विकल्पार्थः। भेदपक्षं निरस्यति—**आद्य इति**। प्रत्यक्षज्ञानव्यक्तेर्ज्ञानहेत्वतिरिक्तहेत्वधीनत्वाभावेऽपि ज्ञानविशेषत्वादित्यर्थः। यथा ज्ञानं ज्ञानहेत्वतिरिक्तहेत्वधीनमित्युक्ते बाधः, व्यतिरिक्तत्वेन विवक्षितस्य ज्ञानंप्रति हेतुत्वे, ज्ञानहेत्वतिरिक्तत्वाभावात्। ज्ञानं प्रत्यहेतुत्वे च ज्ञानविशेषस्य प्रमायास्तदधीनत्वानुपपत्तेः। एवं प्रमाज्ञानव्यक्त्योरभेदे प्रमाया ज्ञानहेत्वतिरिक्तहेत्वधीनत्वसाधने बाधः स्यात्। ज्ञानं ज्ञानहत्वधीनं न भवतीति। वचनपर्यवसानादित्याह—**द्वितीये त्विति**। ज्ञानप्रमयोरभेदेऽपि ज्ञानत्वप्रमात्वयोर्भेदात् प्रयोजकस्य व्यवस्थायां गौरवम्। न च प्रमात्वस्य ज्ञानत्वप्रयोजकमात्रप्रयोज्यत्वे तयोरभेदादप्रमायामपि ज्ञानत्ववत्प्रमात्वप्रसक्तिः। दोषासहकृत-

---

1. ते नेत्यधिकः पाठः

त्युक्तं भवेत् । अतः स्फुटो बाधः । प्रत्यक्षान्यत्वं च विशेषणं ते व्यर्थम्

न चात्र विपक्षे बाधः कश्चित् । ज्ञानविशेषत्वं तु तटस्थोपाधिवशादुपपद्यत इति वक्ष्यते । अतिप्रसङ्गः कल्पनागौरवप्रसङ्गश्च प्रमापरतस्त्वे बाधकः । तस्मादाद्यः सावद्यः प्रयोगः । द्वितीयप्रयोगेऽपि बाधकतर्कसद्भावो विपक्षे बाधकतर्काभावश्च तुल्यः । भवत्पक्ष एवेश्वरप्रमायां प्रतिज्ञाबाधो हेत्वसिद्धिश्चोक्ता । अथैतत्परिजिहीर्षया [1]किंचिद्विशेषणमुप[2]ाददीत तदापीतरपक्षे व्यर्थविशेषणतैव । तं वारयेद्विवादपदं

---

ज्ञानसामग्र्यभावात् । ज्ञानत्वप्रमात्वाप्रमात्वेषु ज्ञानसामग्रीमात्रस्य दोषाभावतद्भावसहकृतायाश्च तस्याः प्रयोजकत्वाज्ज्ञानत्वस्य प्रमाप्रमयोरनुवृत्तिः प्रमात्वाप्रमात्वयोश्च व्यवस्था । दोषा[3]भावस्य प्रमाहेतुत्वे तस्याः स्वतस्त्ववैपरीत्यमुपरिष्टान्निराकर्तव्यमिति भावः । प्रत्यक्षाद्यन्यत्वे सति ज्ञानविशेषत्वादिति हेत्वपदेश व्यभिचारो नास्तीत्याशङ्क्याह—**प्रत्य[4]क्षान्यत्वमिति** । प्रत्यक्षादेरपि त्वया ज्ञानहेत्वन्यहेतुजन्यत्वस्वीकारादित्यर्थः । ज्ञानविशेषत्वानुमाने दोषा[न्तर]माह—**न चेति** । प्रमाया ज्ञानहेतुमात्राधीनत्वे तद्विशेषत्वानुपपत्तिर्बाधिकंयुक्तमित्याशङ्क्याह—**ज्ञानविशेषत्वं त्विति** । प्रमाया ज्ञानहेतुमात्राधीनत्वे हेतुविशेषात् ज्ञानविशेषत्वाभावेऽप्यज्ञातार्थविषयत्वेन तदुपपत्तिरुत्तरत्र व्यक्तीभविष्यतीत्यर्थः । प्रमा प्रमाहेत्वतिरिक्तहेत्वधीना, ज्ञानविशेषत्वात् अप्रमावदिति पक्षबाधकं दर्शयति—**अतिप्रसङ्ग इति** । ज्ञानहेतुमात्रादेव प्रमोत्पत्तिसम्भवे तदन्यगुणादेस्तद्धेतुत्वकल्पने गौरवं प्रसरेदिति बाधकान्तरमाह—**कल्पनेति** । ज्ञानविशेषत्वानुमानदूषणं निगमयति—**तस्मादिति** । कार्यत्वानुमानेऽपि शङ्किताप्रयोजकत्वसाम्यं दर्शयति—**द्वितीयेति** । किंच प्रमामात्रं पक्षः, अनीश्वरप्रमा वेति विकल्प्याऽऽद्यं दूषयति—भवत्पक्ष इति । ईश्वरवादिभिरीश्वरप्रमाया नित्यत्वाश्रयणादित्यर्थः । द्वितीयं शङ्कते—**अथेति** । किञ्चिद्विशेषणम् ईश्वरप्रामाव्यतिरिक्तेति विशेषणमित्यर्थः । अनीश्वरवादे विशेषणवैय्यर्थ्यमिति दूषयति—**तदापीति** । उभयसिद्धस्यैव विवादविषत्वम् । ईश्वरप्रमाच तवा-

---

1. कश्चित् 2. उपपादितं 3. भावदोषत्वेप्रत्य 4. प्रत्यक्षादीति

ज्ञानं धर्मीति चेन्न, वक्ष्यमाणदिशा प्रत्यक्षज्ञानभागे बाधप्रसङ्गात्। एतेनैतदपि परास्तम्।

यदाहोदयनः—"प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति ज्ञानविशेषत्वात्। अप्रमाव"दिति। अत्रापि हि प्रत्यक्षादिना व्यभिचारः। ईश्वराश्रयप्रमायां च बाधोऽविशिष्टः, हेत्वसिद्धिश्च तुल्या। अस्तु तर्हि प्रामाण्यम् ज्ञानहेत्वतिरिक्तहेत्वधीनाश्रयं ज्ञानत्वन्यूनवृत्तित्वात् अप्रामाण्यवदिति प्रयोगः। न। प्रत्यक्षत्वादिना व्यभिचारात्॥

नन्विन्द्रियाद्येव तदाश्रयस्यातिरिक्तं कारणम्। कियत्तर्हि ज्ञानं

---

सिद्धा न विवादगोचरः। अतो विवादपदविशेषणेन भागासिद्ध्यादिसमुद्धारसिद्धिरिति शङ्कते—**विवादपदमिति**। अस्ति प्रत्यक्षव्यक्तेरपि प्रकृतविवादविषयत्वम्। न च तस्याः प्रमाप्रमासाधारणकारणातिरिक्तकारणजन्यत्वमिति वक्ष्यते। अतो बाधतादावस्थ्यमित्युत्तरमाह—**न वक्ष्यमाणेति**। कार्यत्वाद्यनुमानदूषणातिदेशेनानुमानान्तरमपाकरोति—**एतेनेति**। ईश्वरप्रमायां व्यभिचारं वारयति—**कार्यत्वे सतीति**। ज्ञानमात्रे तन्निरासार्थं **ज्ञानविशेषत्वादित्युक्तम्**। एतेनेति पदपरामृष्टन्यायमाचष्टे—**अत्रापीति**। तस्य ज्ञानहेतुमात्राधीनत्वस्याभिधास्यमानत्वादिति भावः। प्रमामात्रस्य धर्मित्वे, पूर्वोक्तं भागे बाधादि स्मारयति—**ईश्वरेति**। अनीश्वरप्रमाया धर्मित्वे विशेषणवैय्यर्थ्यं द्रष्टव्यम्। यदि प्रमां पक्षीकृत्य तदुत्पत्तिपरतस्त्वानुमाने भागासिध्यादिदोषः तर्हि प्रामाण्यं पक्षीकृत्यानुमास्यते। अतो नोक्तदोषानुषक्तिरिति शङ्कते—**अस्तु तर्हीति**। घटादिहेत्वतिरिक्तज्ञानहेत्वधीनप्रमाश्रयत्वं प्राणाण्यस्य स्वतस्त्ववादेऽपि सिद्धमिति सिद्धसाध्यता। सा मा भूदिति **ज्ञानहेत्वतिरिक्तपदम्**। ज्ञानत्वेऽपि गुणत्वाद्यपेक्षाया न्यूनवृत्तित्वमस्तीति व्यभिचारः, तं निरस्यति—**ज्ञानत्वेति**। प्रत्यक्षत्वादौ दर्शितहेतुभावेऽपि नोक्तं साध्यमस्ति, तदाश्रयस्य ज्ञानहेत्वन्यत्वभावादिति परिहरति—**न प्रत्यक्षत्वादिनेति**। व्यभिचारं साधयितुं शङ्कते—**नन्विति**। इन्द्रियादेर्ज्ञानहेत्वतिरेके, ज्ञानसामग्र्या दुर्ज्ञानत्वात्तदतिरिक्तहेत्वधीनत्वं प्रत्यक्षादेः प्रमाया दुर्वचमिति मन्वानो ब्रूते—**कियदिति**।

**प्रति प्रयोजकम्। आत्ममनस्संयोग इति चेन्न, सुखादेरपि ज्ञानत्व-प्रसङ्गात्।**

**यदपि कुसुमाञ्जलौ प्रमाज्ञप्तिपरतस्त्वे मानमुक्तम् "प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवदिति। विपक्षे च प्रामाण्यसंशयो न स्यादिति बाधः। ज्ञाननिश्चायकादेव तन्निश्चयप्राप्तेः तदपि वार्तम्। धर्मिहेत्वोरसिद्धेः। आनुमानिक एव हि ते प्रामाण्यनिश्चयः, तन्निश्चयश्च तत्संशयपूर्वकः, अन्यथा सिसाधयिषाभावादनुमानासम्भवात्। संशयश्च निश्चयपुरस्सरः प्रसिद्धः।**

---

प्रमास्वतस्त्वपक्षे चेन्द्रियाद्यन्तर्भावेण ज्ञानसामग्रीनिरूपणात्प्रत्ययत्वाद्याश्रयस्यातिरिक्तहेत्वनिरूपणा[दु]क्तमनैकान्तिकत्वं स्थितमिति मत्वा परस्य शङ्कामनुभाष्य दूषयति—**आत्मेत्यादिना**। वक्ष्यमाणदिशा प्रत्यक्षज्ञानभागे बाधादित्यत्रैव द्रष्टव्यम्। प्रमोत्पत्तिपरतस्त्वसाधनं निराकृत्य तज्ज्ञप्तिपरतस्त्वसाधनमनुवदति—**यदपीति**। अभ्यासदशापन्नघटादिज्ञानेषु सांशयिकत्वाभावेनासिद्धताप्राप्तौ तद्व्यावृत्त्यर्थमनभ्यासदशायामिति विशेषणम्। प्रामाण्यस्य ज्ञानग्राहकमात्रग्राह्यत्वे क्वचिदपि ज्ञाने प्रमाणमप्रमाणं वेति प्रामाण्यसंशयो न स्यादित्यप्रयोजकत्वं परिहरति—**विपक्षे चेति**। प्रमोत्पत्तिपरतस्त्वानुमानसमानत्वमस्य प्रतिजानीते—**तदपीति**। दोषद्वयमापादयितुं परकीयं मतमनुद्रवति—**आनुमानिक इति**। विमतं प्रमाणं समर्थप्रवृत्तिजनकत्वाद्यन्नैवं न तदेवं यथा प्रमाणाभास इति व्यतिरेकिणा ज्ञानप्रामाण्यमनुमेयमित्यर्थः। किं तावतेति? तत्राह—**तन्निश्चयश्चेति**। सन्दिग्धे न्यायप्रवृत्तिनियमादित्यर्थः। भवतु सन्दिग्धे न्यायप्रवृत्तिः, तथापि कथं दोषद्वयमित्यत आह—**संशयश्चेति**। **प्रसिद्धः** स्थाणुर्वा पुरुषोवेत्यादाविति शेषः। संशयस्य क्वचिन्निश्चयपूर्वकत्वात् प्रवृत्तिसामर्थ्यानुमानेन प्रामाण्यनिश्चये सति संशयः तस्मिन्सति, प्रवृत्तिसामर्थ्यानुमानात्तन्निश्चय इति परस्पराश्रयत्वम्। अनुमानान्तरेण तन्निश्चये तस्यापि संशयपूर्वकत्वात्तस्य च निश्चयाधीनतया तदर्थं मानान्तरान्वेषणे तस्यापि संशयपूर्वकत्वान्निश्चयार्थं मानान्तरमित्यनवस्था। अतो

अतः प्रामाण्यसंशयनिश्चययोरन्योन्याश्रयत्वादनवस्थानाद्वा नैकमपि सिध्यति ।

स्यान्मतं लोकसिद्धमेव प्रामाण्यम्, अतः क्वचित्तत्संशयनिश्चयोपपत्तिः। अन्यथा तवाप्यप्रामाण्ये संशयनिश्चयानुपपत्तिस्तुल्या स्यात्। न। त्वया हि प्रमाणसिद्धमेवानुमानमङ्गीक्रियते ।

न च लोकाख्यमनुमानाद्यतिरिक्तं किञ्चिन्मानमस्ति। न च मानं विना ते किञ्चित्सिध्यति। अप्रामाण्यं त्वस्माकं स्वरूपतो

---

न प्रामाण्यरूपधर्मिसिद्धिः । नापि हेतुसिद्धिरित्याह—अत इति। न खलु स्वार्थं परार्थंवानुमानमसन्दिग्धे प्रवर्तितुमर्हति, सिषाधयिषाभावेनानुमानानुदयात्। निश्चयाभावस्य च संशयेन व्याप्तेः अज्ञाते चाश्रयासिद्धेरसन्दिग्धे च न्यायवैयर्थ्यम्। विपर्यासनिवृत्त्यर्थत्वे दहनादौ तदभावे न्यायो न स्यात्। साध्यासन्देहे पक्षाभावेनानुमानानवकाशः। अतो यत्र संशयो न दृश्यते तत्रापि संशयमापाद्यैवानुमानं प्रयोक्तव्यम्। प्रतीतिमात्रानुसारे यौक्तिकत्वव्याहतिरिति भावः। प्रामाण्यस्य लोकसिद्धत्वात् क्वचित् ज्ञाते प्रामाण्यसंशयनिश्चयसम्भवान्नान्योन्याश्रयादीति शङ्कते—स्यान्मतमिति । लोकप्रसिद्धेरसाधकत्वे दोषमाह—अन्यथेति। अप्रामाण्यस्य हि परतस्त्वं परेणेष्यते। विमतमप्रमाणं समर्थप्रवृत्त्यजनकत्वात् प्रमाणवदित्यनुमानात्। लोकप्रसिद्धेरसाधकत्वे चाप्रामाण्यसंशयादिनानुमाने तन्निश्चयासिद्धेरप्रामाण्यपरतस्त्वं दुर्ज्ञानमित्यर्थः। तार्किकलोकसिद्धस्य नानुमानाङ्गतेति परिहरति—न त्वयेति। लोकस्यापि प्रमाणत्वात्तत्सिद्धस्यानुमानाङ्गत्वमविरुद्धमित्याशङ्क्याह—[न चेति।] लोकस्य प्रत्यक्षान्तर्भावे प्रामाण्यस्य प्रत्यक्षत्वे तत्प्रामाण्यस्यापि प्रत्यक्षान्तरविषयत्वेनाऽनवस्था। अनुमानान्तर्भावे च प्रामाण्यस्यानुमेयत्वे परस्पराश्रयत्वादितदवस्थमेव। वाक्यान्तर्भावे प्रामाण्यस्य तद्गम्यत्वे, तत्प्रामाण्यस्यापि वाक्यान्तरगम्यत्वादनवस्थैवेति भावः। अमानस्यैव लोकस्य साधकत्वमाशङ्क्याह—न च [मानमि]ति। यत् सिध्यति तन्मानादेवेत्यभ्युपगमादित्यर्थः। अप्रामाण्यप्रतिबन्दीग्रहं प्रत्याचष्टे—अप्रामाण्यं त्विति। न हि

लोकप्रसिद्धं, धर्मिविशेषे अनुमेयमिति नास्य प्रतिबन्दिता। किञ्च अर्थविशेषितमेव ज्ञानं प्रतीयते। तद्विशेषितत्वञ्च किञ्चित्सन्दिग्धम्। कुम्भोपलम्भस्याम्भो विषय आसीत् नवेत्यतो व्यभिचारो दुर्वारः। अनभ्यासदशायामिति च विशेषणं व्यर्थम्। असिद्धिपरिहारार्थं तदिति चेन्न, व्यभिचारनिवृत्त्यर्थत्वाद्धेतुविशेषणस्य यथाहुः—"सम्भवे व्यभिचारे च विशेषणमर्थवदि"ति। असिध्यसम्भवाच्चात्र न

---

भवतामिवास्माकं मानसिद्धस्यैवानुमानाङ्गतानियमः। प्रतिपन्नत्वमात्रेण साध्याभावः हेतुश्चास्तीत्यनैकान्तिकत्वमित्यतस्तदङ्गत्वोपपत्तेरित्यर्थः। ज्ञप्ति-परतस्त्वानुमाने दोषान्तरं समुच्चिनोति—**किंचेति**। तदेव दर्शयितुं प्रतीय-मानमर्थं कथयति—**अर्थविशेषितमिति**। घटज्ञानं पटज्ञानमिति ज्ञानस्वरूप-मवगम्यते। तथा च घटाद्यर्थविशेषितत्वं ज्ञानधर्मो ज्ञानज्ञापकसामग्रीमात्र-ज्ञाप्यश्चेत्यर्थविशेषितत्वे साध्याभावः हेतुश्चास्तीत्यनैकान्तिकत्वमित्याह—**तद्विशेषितत्वं चेति**। देवदत्तस्य कुम्भोपलम्भे सति तदभ्याशवर्ती किमस्या-म्भोऽपि विषयो नेति संशेते। साम्भसामनम्भसामपि कुम्भानामुपलम्भात्। तथा च कुम्भोपलम्भस्य कुम्भादन्येन विशेषितत्वं सन्दिग्धमिति व्यभिचारं स्फोरयति—**कुम्भोपलम्भस्येति**। अम्भसः कुम्भग्राहकसामग्रीग्राह्यत्वा-नियमेऽपि पूर्णकुम्भोपलम्भे कुम्भाम्भस उक्तसामग्रीग्राह्यत्वनियमात्। एकस्य पूर्णकुम्भोपलम्भे तन्नियमेऽप्यन्यस्य संशयदर्शनात्। कुम्भान्तर्वर्तिसमस्तार्थो-पलम्भानियमाद्व्यभिचारस्य दुर्वारतेति भावः। किं चानभ्यासदशायामिति हेतोर्वा प्रतिज्ञाया वा विशेषणम्?। नाद्य इत्याह—**अनभ्यासेति**। अभ्या-सदशापन्नघटादिज्ञानेषु सांशयिकत्वाभावेन हेतोरसिद्धता, तन्निरासार्थं विशेषणमिति शङ्कते—**असिद्धीति**। भागासिद्धिपरिहारार्थं हेतुविशेषण-मनुचितमिति परिहरति—**न व्यभिचारेति**। तत्र वृद्धसंमतिमाह—**यथा-हुरिति**। आदीयमानविशेषणस्य सम्भवे व्यावर्त्यव्यभिचारे सति व्यावर्तकत्वेन विशेषणं प्रयोजनवदित्यर्थः। चक्षुस्तैजसं रूपादिषु मध्ये रूपस्यैव व्यञ्जकद्र-व्यत्वात् प्रदीपवदित्यत्र हेतुविशेषणवदिदमपि हेतुविशेषणमसिद्धिनिवारक-मित्याशंक्याह—**असिद्ध्यसम्भवादिति**। चक्षुस्तैजसत्वे रसाग्राहकत्वे सति

**तत्परिहारो युक्तः। एकमेव हि ते प्रामाण्यं, तच्चेत् क्वचित्सन्दिग्धं कथं तस्य तथात्वमसिद्धम्।**

**अथेदं प्रतिज्ञाविशेषणं, तदापि व्यर्थमेव तत्। सर्वत्रैव हि ते प्रामाण्यं परतो ज्ञायते। न त्वनभ्यस्तस्थल एव। न चात्र विपक्षे बाधः कश्चित्। प्रामाण्यस्य हि ज्ञानसमानज्ञापकत्वेऽपि दोषात् संशयोपपत्तिः, ज्ञानस्यार्थविशेषितत्वस्येव, तस्मात् प्रमाज्ञप्तिपरतस्त्वेऽपि न किञ्चिन्मानमस्ति। एवं व्यवहृतिपरतस्त्वमपि त्रिमानमेव।**

---

रूपग्राहकद्रव्यत्वस्य हेतुतया विवक्षितत्वात्। प्रकृते चासिद्धेरसंभवान्न तन्निवृत्त्यर्थं विशेषणमित्यर्थः। प्रामाण्यं हि क्वचित्सन्दिह्यते क्वचिन्निश्चीयते। तथाच कथं भागासिद्ध्यसम्भवाभिधानमित्याशङ्क्याह— **एकमेवेति**। प्रामाण्यस्योपाधित्वे, कालभेदा***दविरोधेऽपि** संशयस्य दोषकृतत्वात् ज्ञाननिश्चये तत्प्रामाण्यनिश्चयस्य, ज्ञानत्वनिश्चयवदौत्सर्गिकत्वम्। जातित्वे च भेदासिद्धिः। न चैकत्र संशयतदभावौ विरोधात्। तत्रविभागाभावात्। ततश्च कथञ्चिद्भागासिद्धिशङ्कायामपि तन्निरासासिद्धिरिति भावः॥

द्वितीयमुपन्यस्य निरस्यति—**अथेत्यादिना**। वैयर्थ्यं समर्थयते—**सर्वत्रेति**। ज्ञप्तिपरतस्त्वानुमाने दोषान्तरमाह—**न चेति**। [1]प्रामाण्यस्य ज्ञानज्ञापकमात्राधीनत्वे ज्ञानत्ववत् प्रमात्वेऽपि ज्ञानविशेषे संशयानुपपत्तिर्बाधिकेत्युक्तमाशङ्क्याह—**प्रामाण्यस्येति**। यथा ज्ञानस्यार्थविशेषितत्वे ज्ञानज्ञापकमात्रज्ञाप्येऽपि संशयो दर्शितः। यथा च "सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्ययः" इत्यभ्युपगमेन सन्देहानास्कन्दितत्वाद्विभ्रमेषु धर्म्यंशज्ञाने स्वतःप्रमाणेऽपि सौगतानां विपर्यासो दृष्टः तथा स्वतःप्रमाणेऽपि ज्ञाने कारणदोषबलात् प्रामाण्यसंशयः सम्भवतीति भावः। ज्ञप्तिपरतस्त्वे प्रमाणदूषणमुपसंहरति—**तस्मादिति**। उत्पत्तौ ज्ञप्तौच परतस्त्वं मानाभावेन निरस्य फलेऽपि तेनैव परतस्त्वंनिरस्यति—**एवमिति**। येन ज्ञानं व्यवह्रियते[2] न ततोऽन्येन प्रमाव्यवहारः मानाभावादित्यर्थः। मानाभावस्यासिद्धिमाशङ्कते—**अथेति**।

---

* द्भेदेऽपीत्यर्थः 1. प्रजाज्ञापकत्वेऽपि 2. व्यवह्रियते ततो

अथ मानं, प्रामाण्यं परतो व्यवहारगोचरः ज्ञानत्वेतरत्वे सति ज्ञान-धर्मत्वात् अप्रामाण्यवत् । न । ज्ञानस्यार्थविशेषितत्वेन व्यभिचारात् । तदन्यत्वविशेषणेऽपि ज्ञानस्यार्थविशेषणत्वेन व्यभिचारस्तुल्यः । अतः सर्वतः प्रामाण्यपरतस्त्वं मानाभावादसम्भवि ।

### प्रामाण्यस्य स्वतोग्राह्यत्वे प्रयोगाः

प्रामाण्यस्य स्वतस्त्वेऽनुमानम्—प्रामाण्यं ज्ञानहेतुमात्रजन्याश्रयम् अप्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वात् ज्ञानत्ववत् । दोषजत्वेन व्यभिचारो मा भूदिति ज्ञानैकधर्मत्वमुक्तम् । तद्धि व्याधेरपि धर्मः ।

---

ज्ञानव्यवहारहेतुनैव तत्प्रामाण्यस्यापि व्यवहाराङ्गीकारात् सिद्धसाध्यत्वम् । तन्निर-सितुं **परत इति** पदम् । ज्ञाने व्यभिचारनिरासार्थं ज्ञानधर्मत्वादित्युक्तम् । ज्ञानत्वे व्यभिचारं वारयितुमाद्यं विशेषणम् । ज्ञानत्वेतरत्वादित्युक्तेऽपि ज्ञाने व्यभिचारः, तन्निरासार्थं ज्ञानधर्मत्वादिति । विशिष्टस्य हेतोरनैकान्तिकत्वमुद्भावयन्नुत्तरमाह—**न ज्ञानस्येति** । अर्थविशेषितत्वान्यत्वेन हेतोर्विशेषणान्नानैकान्तिकत्वमित्याशङ्क्याह—**तदन्यत्वेति** । उभयान्यत्वविशेषणेऽपि प्रदर्शितप्रक्रियया प्रत्यक्षत्वादिना व्यभिचारः । ततोऽन्यत्वेनापि विशेषणे प्रत्येकं व्यभिचारः । प्रत्येकसमुच्चितान्यत्वविशेषणेऽपि स एव दोषः । एकैकस्य विशिष्टान्यत्वादिति भावः ॥

परपक्षदूषणमुपसंहरति—**अत इति** । स्वपक्षस्यापि परपक्षवदुपेक्षणीयत्वशङ्कां शिथिलयति—**प्रामाण्यमिति** । दोषाभावादिसहकृतज्ञानहेतुजन्याश्रयत्वेऽपि प्रामाण्यस्य ज्ञानहेतुजन्याश्रयत्वमस्तीति सिद्धसाध्यता । सा मा भूदिति **मात्रपदम्** । अप्रामाण्येतरत्वादित्युक्ते घटादिधर्मेषु व्यभिचारः । तं निरस्यति—**धर्मत्वादिति** । तथापि ज्ञाने व्यभिचारः, तत्राह—**ज्ञानेति** । अप्रामाण्ये व्यभिचारं वारयितुं प्रथमविशेषणम् । एकविशेषणस्य कृत्यं दर्शयति—**दोषजत्वेनेति** । कथं पुनरेकपदोपादानादयं व्यभिचारो निरस्यते तत्राह—**तद्धीति** । अत्र च भावपदमुपसंहर्तव्यम् । अन्यथा प्रमाऽप्रमान्योन्याभावे व्यभिचारात् । न च स्मृतित्वानधिकरणस्य ज्ञानस्य बाधात्यन्ताभावः

तदपि दोषस्य ज्ञानाहेतुत्वोपपादनेन निरस्तम्। ज्ञानहेतुमात्रजन्यत्व-साधने च भ्रमस्य दोषजन्यत्वप्रसिद्धिबाधः। विपर्ययापर्यवसानाच्च-नायं प्रसङ्गः। उक्तश्च प्रमापरतस्त्वेऽनुमानासम्भवः। अत एव न बाधप्रतिरोधौ शङ्कनीयौ।

न च हेत्वसिद्धिः। तत्पक्षधर्मतायाः स्पष्टत्वात्। न चान्यथा-सिद्धता। उपाधेरसम्भवात्। अथ प्रमाणाप्रमाणसाधारण्यं उपाधिः। न चास्य साधनव्यापकता, प्रामाण्ये साधनभावेऽप्युपाधेरभावात्। साध्यसमव्याप्तिता तु ज्ञानत्व एवातिस्पष्टेति। न। साध्याव्यापक-

---

प्रमावृत्तित्वानधिकरणत्वे सति ज्ञानैकवृत्तिभावत्वम्। उक्तविशेषणत्वे सति ज्ञानत्वन्यूनवृत्तित्वं वा तथापि ज्ञानहेतुमात्रजन्याश्रयत्वाभावे किमनुपपन्नम्। हेतुद्वयं तु ज्ञानहेत्वतिरिक्तदोषजन्याऽप्रमामात्रवृत्तित्वेनापि भविष्यतीति मत्वा दूषयति—**तदपीति**। स्वार्थानुमानपक्षे दोषान्तरमाह—**ज्ञानेति**। द्वितीयं निरस्यति—**विपर्ययेति**। प्रामाण्यं स्वतश्चेदप्रामाण्यमपि स्वतः स्यादिति प्रसङ्गस्य प्रामाण्यपरतस्त्वे पर्यवसानाभावात् प्रसङ्गाभासत्वमिति। अत्रोपपत्तिमाह—**उक्तश्चेति**। प्रमापरतस्त्वे मानाभावमुक्तमुपजीव्य, दोषद्वय प्रत्यादिशति—**अत एवेति**। हेत्वोः स्वरूपासिद्धिं निराकरोति—**न चेति**। उभयोरपि हेत्वोर्व्याप्यत्वासिद्धिमाशङ्क्य परिहरति—**न चान्यथेति**। उपा-धिप्रयुक्तव्याप्त्युपजीविव्याप्यत्वासिद्धो हेतुः। न चात्रोपाधिः। स हि दर्शन-योग्यो योग्यानुपलब्ध्या निषिध्यते। असिद्धस्तु प्रसिद्धानुमानभङ्गप्रसङ्गरूप-तर्केणेत्यभिप्रेत्याह—**उपाधेरिति**। अस्ति हि ज्ञानत्वे प्रत्यक्षत्वे च प्रमाणा-प्रमाणसाधरणत्वम्। तेन तत्र ज्ञानहेतुमात्रजन्याश्रयत्वम्, न तूक्तहेतुभ्यामिति हेत्वोरन्यथासिद्धिं साधयन्नाशङ्कते—**अथेति**। उक्तहेतुद्वयस्य ज्ञानहेतुमात्र-जन्याश्रयत्वेनेव प्रमाणाप्रमाणसाधरणत्वेनापि, व्याप्तेर्नायमुपाधिः तल्लक्षणाभावा-दित्याशङ्क्याह—**न चेति**। उपाधिर्हि साधनाव्यापकः साध्यव्यापकश्च। तत्र साधनाव्यापकत्वं प्रकृतोपाधेरित्यभिप्रेत्यांशान्तरं दर्शयति—**साध्येति**। यत्र ज्ञानहेतुजन्याश्रयत्वं तत्र प्रमाणाप्रमाणसाधारणत्वं, यत्र चायमुपाधिस्तत्रेदं साध्यमिति व्याप्तिः ज्ञानत्वादावतिव्यक्तेत्यर्थः। नायमुपाधिः, तल्लक्षणाभावादिति

त्वात् । प्रत्यक्षत्वं ह्युक्तनीत्या साध्ययुक्तम् । न च तत्रायमुपाधिरस्तीति साध्याव्याप्तिः ।

न च शङ्कितोपाधिता । बाधकतर्कभावात् । विपक्षे बाधकतर्कस्याभिहितत्वाच्च ।

ननु प्रमायां ज्ञानहेतुमात्रजन्यत्वे कथं ज्ञानविशेषता ?। तटस्थोपाधिवशादिति ब्रूमः । उपाधिश्चाज्ञातोऽर्थः । हन्त गतं धारावाहिकज्ञानानां प्रामाण्येन, नहि तेषामर्थभेदोऽस्ति । एतेन प्रमाणसंप्लवो व्याख्यातः । स इत्यज्ञातविषया स्मृतिश्च प्रमाणं स्यात् । न । पूर्वज्ञान-

---

दूषयति—**नेति** । साध्याव्यापकत्वमेव प्रकटयति—**प्रत्यक्षत्वं हीति** । सम्यगपरोक्षानुभवः प्रत्यक्षं, तद्वृत्तिजातिः प्रत्यक्षत्वम् । तत्र ज्ञानहेतुमात्रजन्याश्रयत्वमस्ति, तदश्रयजनकचक्षुरादे र्ज्ञानहेतोरप्यतिरेकात् । तथापि न प्रमाणाप्रमाणसाधारणत्वम् । उक्तलक्षणप्रत्यक्षत्वस्याप्रमाणावृत्तित्वादित्यर्थः । अदृश्यस्तूपाधिर्निषिध्यते तर्केणेत्युक्तम् । तदिदानीं विवृणोति—**न चेति** । द्विविधमुपाधिशङ्काबीजं पक्षे बाधकतर्कः विपक्षे तदभावश्च । प्रकृते तु नोभयमस्ति । अप्रामाण्यस्वतस्त्वप्रसङ्गलक्षणपक्षबाधकस्य निरस्तत्वात् । विपक्षबाधकस्यापि दर्शितत्वात् । न च निर्बीजाशङ्काऽवकाशवती । अतिप्रसङ्गादित्यभिप्रेत्याह—**बाधकेति** । बाधकतर्काभावस्यासिद्धिमभिसन्धाय पूर्वोक्तं स्मारयति—**नन्विति** । किं कारणगतविशेषाभावात् ज्ञानविशेषत्वानुपपत्तिः । किं वा विषयगतविशेषाभावात् ? । तत्र कारणविशेषद्वारा ज्ञानविशेषत्वमनुपपन्नमित्याद्यमङ्गीकृत्य द्वितीयं दूषयति—**तटस्थेति** । ज्ञानहेतुमात्रजन्यत्वेऽपि प्रमाया ज्ञानविशेषत्वमज्ञातार्थविषयत्वादुपपन्नमित्युपाधिमधिगमयति—**उपाधिश्चेति** । अज्ञातार्थविषयत्वं प्रमाया न नियतम् । अव्याप्तेरिति शङ्कते—**हन्तेति** । तेषामपि प्रामाण्यमज्ञातार्थविषयत्वादेवेति नाव्याप्तिरिति चेन्नेत्याह—**न हीति** । किञ्चाज्ञातार्थविषयत्वं प्रमाया नियतं चेदिष्यते, तर्हि भूयसां प्रत्यक्षादीनामेकस्मिन्नेव वह्न्यादौ प्रवृत्तिर्दृश्यमाना न स्यात् । अतो व्यक्तैवाव्याप्तिरित्याह—**एतेनेति** । प्रमात्वे यथोक्तप्रयोजकाभ्युपगमेनेति यावत् । किं चाप्रमाणे स्मृतावज्ञातार्थविषयत्वदर्शनान्न तस्य प्रमात्वप्रयोजकत्वमतिव्याप्तेरि-

**विषयस्याप्युत्तरकाले अज्ञातत्वात्तद्ग्राहिणः प्रामाण्योपपत्तेः। संप्लवस्तु प्रलीयत एव। मानानामज्ञातविषयभेदात् संप्लवासम्भवात्, क्वचिन्न प्रलीयते। वह्न्यादिमात्रावलम्बनाभेदात् स्मृतेश्च नाज्ञातार्थता सम्भवेत्। संस्कारमात्रजत्वात्। स इत्याकारस्य गत्यन्तरं परेणापि वर्णनीयम्।**

**गुणस्य दोषाभावस्य च प्रमाहेतुत्वनिराकरणम्**

**नन्वौपाधिकत्वे प्रमाया उपाधिजन्यत्वात् परतस्त्वापत्तिः। न।**

---

त्याह—**स इत्यज्ञातेति**। प्रत्यक्षस्य वर्तमानग्राहित्वनियमादुत्तरकाले जायमानस्यापि तस्याज्ञातार्थविषयत्वसम्भवादुपपन्नं धारावाहिकप्रत्ययप्रामाण्यमित्यव्याप्तिं समाधत्ते—**न पूर्वेति**।

यत्तु प्रमाणसम्प्लवप्रत्याख्यानं तदस्माकमिष्टमेवेत्याह—**सम्प्लवस्त्विति**। कथं तर्हि दहनादावेकस्मिन्नेव बहूनि प्रमाणानि प्रतीयमानानि निर्वहतीति चेत् किमेकस्मिन्नाकारे बहूनि मानानि प्रतीयन्ते, किं वा एकस्मिन्नाकारिणीति निरूपणीयम्। नाद्यः, प्रतिप्रमाणं विषयाकारभेदात्, अन्यथा द्वितीयतृतीयमानानुपयोगादिति मन्वानो द्वितीयमङ्गीकरोति—**क्वचिदिति**। न चाकारभेदपुरस्कारमन्तरेण क्वचिदपि विषये प्रत्यक्षादिप्रामाण्यमस्ति। अतो युक्तमज्ञातार्थविषत्वस्य प्रमात्वप्रयोजकत्वमित्यभिप्रायः। यत्तूपाधेः स्मृतिव्याप्तेरतिव्याप्तिवचनं तन्निराकरोति—**स्मृतेश्चेति**। कथं तर्हि स इत्याकारस्याज्ञातस्य स्मृतौ भानम्। अत आह—**स इत्याकारस्येति**।

अयं भावः—न तावदयमाकारः संशयस्य सम्भवति। कोटिद्वयाभावात्। नापि विपर्ययस्य, बाधाभावात्। न च स्मृतेरयमाकारः। स इत्याकारशून्यानुभवजन्यत्वात्। अतश्च परिशेषात् पूर्वकालविषयोऽयं साक्ष्यवभास इति। अज्ञातार्थविषयत्वस्य प्रमात्वप्रयोक्त्वे तस्य ज्ञानत्वप्रयोजकेऽन्तर्भावोऽनन्तर्भावो वा, आद्ये सर्वमेव ज्ञानं प्रमा स्यादिति, अप्रमाया दत्तजलाञ्जलित्वमिति मन्वानो द्वितीये दोषमाह—**नन्विति**। चोदितमापसिद्धान्तं परिहरति—**न तस्या इति**। न तावदुपाधेर्ज्ञानसामग्र्यनन्तर्भूतस्य प्रमाज्ञापकत्वं, ज्ञप्तिस्वतस्त्वविरोधात्। अयमुपाधिश्चेत् प्रमां नोत्पादयेत् तर्हि तस्य वै[य्यर्थ्यं] प्रापतदिति

तस्यास्तज्जन्यत्वाभावात्। तर्ह्युपाधिर्व्यर्थः। न। प्रमाभेदे तच्छब्द-प्रवृत्तौ च निमित्तत्वात्। अतो न प्रामाण्यपरतस्त्वे विरोधगन्धोऽपि। विरुद्धत्वासाधारणत्वे हेतोः सपक्षवृत्त्या निरस्ते। नापि साधारणानैकान्तता। व्यभिचाराभावात्।

नन्वेवमपि गुणान्वयव्यतिरेकबाधो दुर्वारः। न। तयोरन्यथा-सिद्धत्वात्। दोषो हि प्रामाण्यप्रतिबन्धकः, तद्विरोधी च गुणः, अतस्तदन्वयव्यतिरेकावन्यथासिद्धौ न गुणं कारणतयोपस्थापयतः। हन्तैवं गुणस्य कारणताऽऽपद्यते। तथाहि—विशेषाग्रहः प्रमाणस्य

---

चोदयति—**तर्हीति**। अप्रमातः प्रमाया व्यावृत्तौ क्वचित् ज्ञाने प्रमाशब्दप्रवृत्तौ चोपाधेर्निमित्तत्वान्न वैयर्थ्यमिति उत्तरमाह—**न प्रमेति**। यतो ज्ञानविशेषत्वं ज्ञानहेतुमात्रजन्यत्वेऽप्यज्ञातार्थविषयत्वात् प्रमायाः सम्भवति, अतः पक्षसाधकाभावान्नाप्रयोजकता हेतुद्वय इत्युपसंहरति—**अतो नेति**। हेतुद्वयस्य दोषत्रयासम्भावनामुपन्यस्यति—**विरुद्धत्वेति**। सति कारणगुणदोषाभावे च प्रमा जायते, असति तस्मिन्नेत्यन्वयव्यतिरेकाभ्यां गुणस्य दोषाभावस्य च प्रमाहेतुत्वज्ञापकाभ्यां विरोधान्न ज्ञानहेतुमात्रजन्या प्रमेति हेतुद्वयस्य कालातीतत्वं चोदयति—**नन्वेवमिति**। अनन्यथासिद्धावन्वयव्यतिरेकौ कारणक्लृप्तिं कुर्वाते। प्रकृतौ तौ प्रमाविरोध्यप्रमाप्रतिबन्धकगुणादिविषयत्वेनोपक्षीणौ न कारणत्वमावेदयितुमीशाते। अतो न हेतुद्वयमन्वयव्यतिरेकापहृतविषयमिति परिहरति—**न तयोरिति**। ननु कुल्याप्रणयनन्यायेन गुणादेरप्रमाप्रतिबन्धकत्वं प्रमाहेतुत्वं च किं न स्यादित्याशङ्क्य ज्ञानसामग्रीमात्रादेव प्रमोद्भवसम्भवे गुणादेरपि तद्धेतुत्वकल्पनमाप्रामाणिकमित्यभिप्रेत्यान्यथासिद्धत्वं प्रपञ्चयति—**दोषो हीति**। गुणग्रहणं, दोषाभावस्याप्युपलक्षणम्। प्रतिबन्धाकभावविषयत्वेन गुणाद्यन्वयव्यतिरेकयोरन्यथासिद्धिमभिदधता गुणादेरङ्गीकृतं प्रमाहेतुत्वम्। प्रतिबन्धाभावस्य कारणत्वादिति घट्टकुटीप्रभातन्यायेन चोदयति—**हन्तेति**। अत्रापि गुणग्रहणं दोषाभावोपलक्षणम्। विशेषाग्रहो दोषो गुणाभावश्च। "तदभावश्चे"ति चकारो गुणसमुच्चयार्थः। विशेषाग्रहो दोषाभाव इति द्रष्टव्यम्। प्रामाण्यपरतस्त्ववादिमते शक्तेरभावात्तद्रहितस्य प्रतिबन्धकत्वेऽतिप्रसङ्गात् प्रतिबन्धासिद्धे-

प्रतिबन्धकः तदभावश्च विशेषग्रहः कारणम् । प्रतिबन्धाभावस्य कारणताश्रयणात् । न । शक्त्यपलापे हि प्रतिबन्ध एवासम्भवी । तत्र कुतस्तदभावस्य कारणता ।

ननु दोषभावे तदभावरूपगुणाभावात् सामग्रीवैकल्यमेव प्रतिबन्धः । उक्तं हि—"प्रतिबन्धो विसामग्री"ति । न । अन्योन्याश्रयताप्रसङ्गात् । प्रतिबन्धापेक्षो हि तदभावः कारणं, कारणापेक्षश्च तदभावः प्रतिबन्ध इति । यदपि [1]मतं कार्यव्यतिरेकद्वारा हि कार्यप्रतिकूलता

---

स्तदभावस्य गुणादेर्वा न [का]रणतेति समाधत्ते—न शक्तीति । शक्त्यभावपक्षे प्रतिबन्धविषयाभावाच्च प्रतिबन्धासिद्धिरित्यभिसन्धाय फलितमाह—तत्रेति । शक्त्यभावेऽपि सामग्रीत्वेन प्रतिबन्धसिद्धेस्तदभावस्य कारणत्वोपपत्तिरित्याशङ्कते—ननु दोषेति । प्रतिबन्धः सामग्रीवैकल्यमेवेत्यत्र तार्किकसंप्रतिपत्तिं दर्शयति—उक्तं हीति ।

"भावो यथा तथाभावः कारणं कार्यजन्मनः ।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ॥"

इति कुसुमाञ्जलावुक्तं सामग्रीवैकल्यस्य प्रतिबन्धकत्वमित्यर्थः । शक्त्यपलापपक्षप्रतिबन्धोक्तिमुक्तां प्रतिवक्ति—नान्योन्येति । तमेव प्रसङ्गं प्रकटयति—प्रतिबन्धापेक्ष इति । प्रतिबन्धनिरूप्य इति यावत् । तदभावः, प्रतिबन्धप्रतियोगिकाभाव इत्येतत् । कारणापेक्षः कारणनिरूप्यः । तदभावः कारणप्रतियोगिकाभावः[2] । तथा च कारणज्ञाने तदभावरूपप्रतिबन्धज्ञानं तज्ज्ञाने प्रतिबन्धाभावरूपकारणज्ञानमिति परस्पराश्रयत्वात् प्रतिबन्धादेरसिद्धिरित्यर्थः ।

परोदीरितं परस्पराश्रयसमाधानमनुभाषते—यदपीति । परस्पराश्रयत्वं परिहर्तुं कारणज्ञानमन्तरेण प्रतिबन्धज्ञानं दर्शयति—कार्यव्यतिरेकेति । सति मंत्रादौ यदा कार्यं न दृश्यते, तदा मन्त्रादेः कार्यं प्रति प्रतिकूलता न कारणापेक्षाऽवसेया किन्तु कार्यानुत्पत्त्यैव निश्चेतव्येत्यर्थः । कारणज्ञानमपि प्रतिबन्धज्ञानमन्तरेण भवतीत्याह—कारणतापीति । मन्त्राद्यभावस्य कारण-

---

1. तव नस्य स्यात्  2. तथा च कारणज्ञाने तदभावः कारणप्रतियोगिकाभावः इत्यधिकः पाठः ।

**मन्त्रादेः कारणनिरपेक्षावसीयते। कारणतापि निरपेक्षैवान्वयव्यतिरेकावसेयेति कथमन्योन्याश्रयता। अपि चेयमुत्पत्तौ ज्ञप्तौ वा स्यात्। नाद्यः असम्भवात्। मन्त्रतदभावयोरपरस्परहेतुत्वात्। नापि चरमः, अज्ञातयोरेव तयोस्तथात्वादिति। तदसत्। कार्याभावावसेयोऽपि हि प्रतिबन्धः शक्तिनिरपेक्षस्त्वया कारणाभाव इष्यते। कारणं च तदभावरूपं, अतो यद्यपि मन्त्रतदभावयोर्न परस्परहेतुता, तथापि तयोः**

---

तापि मन्त्रादि नापेक्षते। सति मन्त्राद्यभावे कार्यं तदभावे नेत्यन्वयादिना तन्निश्चयादित्यर्थः। एवं प्रतिबन्धकारणतयोर्मिथोऽनपेक्षत्वान्न परस्पराश्रयत्वमिति फलितमाह—**इति कथमिति**। इतश्च प्रतिबन्धकारणतयोर्न परस्पराश्रयतेत्याह—**अपि चेति**। तदेव दर्शयितुं विकल्पयति—**इयमिति**। प्रतिबन्धकारणयोरुत्पत्तौ परस्पराश्रयतां दूषयति—**नाद्य इति**। असम्भवमेवाभिनयति—**मन्त्रेति**। प्रतिबन्धकारणयोर्ज्ञप्तावन्योन्याश्रयत्वं निराकरोति—**नापीति**। मन्त्रतदभावयोस्सत्तामात्रेण प्रतिबन्धकत्वकारणत्वसम्भवादिति हेत्वर्थः। अन्योन्याश्रयत्वमापादयन्नुत्तरमाह—**तदसदिति**। यत्तावत् कार्यव्यतिरेकद्वारा कार्यप्रतिकूलता मन्त्रादेः कारणनिरपेक्षाऽवसीयत इति तत्राह—**कार्याभावेति**। यद्यपि स्फोटादिकार्याभावेन प्रतिबन्धकरूपो मन्त्रादिरवसीयते। तथापि कारणाभावरूपो मन्त्रादिस्त्वयेष्यते। मन्त्राद्यभावस्य कारणत्वात्। मन्त्रादेस्तदभावतया तदभावाभावस्य भावादव्यतिरेकादित्यर्थः। त्वन्मतवदस्मन्मतेऽपि कारणापेक्षामन्तरेण प्रतिबन्धत्वं मन्त्रादेः सिध्यतीत्याशङ्क्याह—**शक्तीति**। प्रतिपदार्थं प्रतिनियता शक्तिरस्ति चेत् मंत्रादेः स्वगतशक्तिवशादेव कार्यप्रतिकूलत्वमुपपद्येत। न च त्वन्मते शक्तिरस्ति। अतः शक्तिनिरपेक्षो भवान् कारणाभावत्वकृतमेव कार्यप्रतिकूलत्वं मन्त्रादेरिच्छतीत्यर्थः। यत्तु कारणतापि प्रतिबन्धनिरपेक्षैवान्वयव्यतिरेकावसेयेति तत्राह—**कारणं चेति**। मन्त्राद्यभावस्य कारणत्वमपि प्रतिबन्धाभावत्वकृतं न स्वरूपेणैवेति प्रतिबन्धकत्वकारणत्वे सम्भाव्येते। अपरथा पुनरशक्तस्यापि तत्प्रसङ्गात्। अन्वयव्यतिरेकौ चानुगतस्य प्रतिबन्धाभावस्यैव करणत्वावेदकावित्यर्थः। यत्पुनर्नोत्पत्तावन्योन्याश्रयता मन्त्रतदभावयोरपरस्परहेतुत्वादिति तत्राह—**अत इति**।

प्रतिबन्धत्वकारणत्वयोरन्योन्योपाधिकत्वात् उत्पत्तावन्योन्याश्रयता सुस्थितैव ।

अतस्तज्ज्ञप्तावन्योन्याश्रयताऽस्खलितेति न गुणानां कारणता । अतस्तदन्वयव्यतिरेकयोरन्यथासिद्धिरिति सिद्धम् । तस्मान्निष्प्रत्यूहं प्रमोत्पत्तेः स्वतस्त्वम् ।

---

स्वरूपतो मन्त्रादेस्तदभावत्वस्य चान्योन्याश्रयता । मन्त्रादिनिष्ठप्रतिबन्धत्वस्य सामग्रीवैकल्यरूपस्य मन्त्राद्यभावगतकारणत्वाधीनत्वात् । तत्कारणतायाश्च मन्त्राद्याश्रितप्रतिबन्धत्वनिबन्धनत्वात् अभावज्ञानस्य प्रतियोगिज्ञानपूर्वकत्वनियमात् । मन्त्राद्यभावगते कारणत्वे जाते, मन्त्रादिनिष्ठं तत्कारणत्वकृतं प्रतिबन्धत्वं जायेत । जाते च तद्गते प्रतिबन्धत्वे प्रतिबन्धाभावत्वकृतं मन्त्राद्यभावनिष्ठं कारणत्वं जायेतेति व्यक्तमुत्पत्तावन्योन्याश्रयत्वमित्यर्थः । यत्तु ज्ञप्तौ नान्योन्याश्रयत्वं, अज्ञातयोरेव तयोस्तथात्वादिति तत्राह—अत इति । प्रतिबन्धत्वकारणत्वप्रतिपत्त्योरितरेतरापेक्षत्वात् ज्ञप्तावपि दुर्वारमितरेतराश्रयत्वमिति । अतो न प्रतिबन्धाभावस्य कारणता । यद्यपि मन्त्रादेः कार्यप्रतिकूलत्वमन्वयव्यतिरेकसिद्धम् । तथापि विसामग्रीलक्षणं प्रतिबन्धत्वं, मन्त्राद्यभावस्य सामग्र्यन्तर्भावज्ञानसापेक्षम् । प्रतिबन्धो हि विसामग्री । तेन विसामग्रीत्वसामग्रीत्वयोरन्योन्याधीनाधिगतित्वात् कथं नेतरेतराश्रयता ।

ननु मन्त्रादेर्विसामग्रीत्वज्ञानस्य मन्त्राद्यभावानां सामग्र्यन्तर्भावज्ञानसापेक्षत्वेऽपि मन्त्राद्यभावानां कारणत्वस्यान्वयव्यतिरेकसिद्धत्वान्नैवमिति चेत् । नैवम् । न तावदेते प्रत्येकमन्वयादिना कारणत्वेनावसीयन्ते । मन्त्राद्यभावानामनन्तानामेकमुपसङ्ग्राहकमन्तरेणान्वयादेरेकैकस्मिर्थेऽसर्वज्ञेन विज्ञातुमशक्यत्वात् । नापि प्रतिबन्धाभावत्वोपाधिक्रोडीकृतास्तथावगम्यन्ते । *तज्ज्ञानस्य विसामग्रीलक्षणप्रतिबन्धज्ञानाधीनत्वात् , प्रतिबन्धाभावत्वोपाधिविशिष्टतया कारणत्वज्ञानं कारणाभावश्च प्रतिबन्ध इति, स्यादेवोक्तो दोषः । कारणानामेव सामग्रीत्वात् सामग्र्यभावत्वाच्च प्रतिबन्धस्येत्यभिसन्धिः । पर[स्पराश्र]यात्प्रतिबन्धाभावस्य

---

* प्रतिबन्धाभवत्वज्ञानस्य ।

## ज्ञप्तिस्वतस्त्वे अनुमानप्रयोगाः

**तथा तज्ज्ञप्तिस्वतस्त्वेऽपि प्रयोगः—प्रमा स्वतो ज्ञायते परनिरपेक्षोत्पत्तिकत्वात् ज्ञानवत् । तथा प्रामाण्यं स्वतो ज्ञायते अप्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वात् ज्ञानत्ववत् । हेतोः पक्षधर्मत्वे तावदविवाद एव । विपक्षे च बाधः प्रामाण्यसंशयासम्भवो दर्शितः । अनवस्थाप्रसङ्गश्च**

---

कारणत्वासंभवे तद्रूपत्वेन गुणादेर्न प्रमाहेतुतेति फलितमाह—**इति नेति ।** गुणानां दोषाभावस्य च प्रमाकारणत्वाभावे तदन्वयव्यतिरेकयोरपि विरोध्यभावप्रतिबन्धकविषयत्वेनोपक्षयान्न कार[ण]त्वावेदकत्वमित्यवान्तरप्रकृतं निगमयति—**अत इति ।** न च दोषान्वयव्यतिरेकयोरपि विरोध्यभावप्रतिबन्धकविषयत्वेनोपक्षीणत्वान्नाप्रमाकारणत्वापादकत्वमित्यप्रमास्वतस्त्वापत्तिः । अप्रमायाः दोषाजन्यत्वे सर्वज्ञानानां प्रमात्वप्रसङ्गात् । प्रमाया गुणाद्यजन्यत्वे सर्वत्र स्वतस्त्वप्रसङ्गस्तु स्वतःप्रामाण्यवादिनामिष्टत्वान्नानिष्टमापादयितुमीष्टे, दोषादप्रमात्वाङ्गीकारात् । न च स्वतोऽप्रमात्वेऽपि सर्वत्र अप्रमात्वमिति वैपरीत्यम् । अनुव्यवसायादिषु स्वतःप्रमात्वस्य तार्किकैरिष्टत्वात् । बौद्धैरपि ज्ञानस्याऽन्तरवभासस्य स्वतःप्रमात्वस्वीकारात् । तत्रापि दोषाभावादेः कारणत्वे गौरवादिप्रसक्तेरुक्तत्वात् । दोषस्याप्रमाहेतुत्वाभावे तु प्रमात्वाप्रमात्वयोरुभयोरपि स्वतस्त्वप्रसङ्गविरोधात् । अतो मानाभावादप्रमात्वं न स्वतः। स्वतश्च प्रमात्वम् । तन्मानस्य दर्शितत्वादित्याशयेन परमप्रकृतमुपसंहरति—**तस्मादिति ।** उत्पत्तिस्वतस्त्वं प्रसाध्य प्रमाया ज्ञप्तिस्वतस्त्वं साधयति—**तथेति ।** स्वतो ज्ञायते ज्ञानग्राहकसामग्रीमात्रेण गृह्यत इति यावत् । ज्ञानसामग्र्यतिरिक्तहेत्वनपेक्षतया ज्ञायमानत्वादिति हेत्वर्थः । अप्रमामात्रवृत्तित्वानधिकरणत्वे सति ज्ञानैकवृत्तिभावत्वादिति द्वितीयहेत्वर्थः । न च स्वप्रभत्वादौ हेत्वोर्व्यभिचारः । तस्य ज्ञानत्वे, साध्यस्यापि भावात् अन्यत्वे हेत्वभावात् । ज्ञानादन्यस्यान्यसामग्रीजन्यत्वादप्रमावृत्तित्वाच्चेति भावः । परेण प्रमाया ज्ञानस्य च भिन्नसामग्रीजन्यत्वाङ्गीकारादाद्यप्रयोगे हेत्वसिद्धिरित्याशङ्क्याह—**हेतोरिति ।** प्रमाया ज्ञानसग्रीमात्रजन्यत्वस्य समर्थितत्वादित्यर्थः ।

हेतुद्वयस्याप्रयोजकत्वं नि[1]रस्यति—**विपक्षे चेति** । यदि प्रमा परतो

---

1. दर्शयतिं

**ज्ञप्तिपरतस्त्वे स्पष्टः। मानान्तरस्यानवश्यम्भावित्वान्नानवस्थेति चेन्न। स्फुरदेव हि मानं विषयातिशयहेतुः। अन्यथा स्थाणुवत् ज्ञानेऽप्यनन्तरमेव सन्देहः स्यात्। तदपि स्फुरणमन्यत इति कथं नानवस्था। अस्मत्पक्षे तु नित्यस्वप्रकाशानुभवत्वात् ज्ञानस्य, सोपाधेर्मानस्य च सिद्धेर्नानवस्थाज्ञप्तिपरतस्त्वयोः प्रसङ्गः। प्रामाण्यसंशयोपपत्तिश्च दर्शिता। नापि सत्प्रतिपक्षता। प्रतिप्रयोगस्य निरस्तत्वात्। दूषणा-**

---

ज्ञायते तदा प्रामाण्यविषयः संशयो निश्चयश्च न स्यात्। संशयस्य निश्चयपूर्वकत्वात्। तस्य चानुमानिकत्वे संशयमन्तरेणानुमानप्रवृत्तेरसम्भवादितरेतराश्रयादिदोषादित्यर्थः। संशयाभावः निश्चयाभावस्योपलक्षणम्। **दर्शित इति**। "धर्मिहेत्वोरसिद्धेरित्यादावि"त्यर्थः। विपक्षे बाधकान्तरमाह—**अनवस्थेति**। प्रमाणान्तरेण प्रमितमेव प्रमाणं प्रामाण्यप्रत्यायकं चेदनवस्था स्यात्। न त्वेतदस्ति। प्रामाण्यग्राहक प्रमाणस्यावश्यम्भावित्वाभावात्। अतो नानवस्थेति शङ्कते—**मानान्तरस्येति**। अनवस्थामापादयितुं ज्ञानस्य ज्ञेयाभिव्यक्तिकाले भासमानत्वं साधयति—**न स्फुरदिति**। यत् स्वसत्तायां प्रकाशव्यभिचारि तत्कदाचित् सन्दिह्यते यथा स्थाण्वादिः। न च [ज्ञाने]कदाचिदपि संशयः। तेन तदर्थप्रकाशकाले प्रकाशमानमेषितव्यमिति प्रतिज्ञातमर्थं समर्थयते—**अन्यथेति**। भवतु मानं मेयभानसमये भासमानम्, तथापि कथमनवस्थेति तत्राह—**तदपीति**।

ननु भवतापि बुद्धिवृत्तिरूपस्य ज्ञानस्य स्वप्रकाशत्वानाश्रयणात्, प्रकाशमानज्ञानान्तरेण तत्प्रकाशनमाश्रयितव्यं तस्यापि तथेत्यनवस्था तवापि समापतेत्। प्रमाण्यस्याज्ञातार्थविषयत्वोपाधिनिबन्धनस्योपाधिज्ञानाधीनज्ञानस्य परतो ज्ञप्तिरपि ते स्यात्। अत आह—**अस्मत्पक्षे त्विति**। ज्ञानग्राहकमात्रग्राह्यत्वे प्रामाण्यस्य ज्ञाने प्रमाणमप्रमाणं वेति संशयो न स्यादित्याशङ्क्य "प्रामाण्यस्य हि ज्ञानसमानज्ञापकत्वेऽपीत्या"दावुक्तं स्मारयति—**प्रामाण्येति**। प्रमात्वं ज्ञानज्ञापकान्यज्ञाप्यं, ज्ञानत्वन्यूनवृत्तित्वात् अप्रमात्ववदित्याशङ्क्य प्रत्यक्षत्वादावनैकान्तिकत्वमभिप्रेत्याह—**नापीति**। प्रमा परतो ज्ञायते ज्ञानविशेषत्वात् अप्रमावदित्याशङ्क्याह [1]**प्रतिप्रयोगस्येति**।

---

1. प्रतीपेति

न्तरासम्भवोऽपि यथायोगमूहनीयः। प्रमा, ज्ञानज्ञाप्तेर्व्यवह्रियते परनिरपेक्षज्ञप्तित्वात् ज्ञानवत्। यद्वा प्रामाण्यं परनिरपेक्षव्यवहारास्पदम्, [1]अप्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वात् ज्ञानत्ववत्। दोषनिरासस्तूक्तदिशा द्रष्टव्यः। तस्मात्प्रामाण्यमुत्पत्तौ ज्ञप्तौ व्यवहृतौ चान्यनिरपेक्षं वेदादय एव स्वशक्तिवशाज्जनयन्तीति सिद्धम्।

### अतिरिक्तशक्तौ पूर्वपक्षनिरूपणम्

**ननु शक्तौ किं कृत्यं? कार्यं तावत् कारणेभ्य एवोदेतीति।**

---

पक्षीकृतां प्रमां विपक्षभूतां चाप्रमां विहाय ज्ञानस्यापरभागाभावात् ज्ञानवदित्यसिद्धमुदाहरणमित्याशङ्क्याह—**दूषणान्तरेति**। अवधीरितप्रमाप्रमाविशेषं साधारणं ज्ञानं ज्ञानसामग्रीमात्रजन्यमुदाहरणं, न हि प्रमाप्रमयोस्तन्मात्रजन्यत्वं, द्वयोरपि स्वतस्त्वप्रसक्तेरुक्तत्वात्। न च प्रमाया ज्ञानसामग्रीमात्राधीनत्वे ज्ञानादप्यतिरेकात् पक्षसपक्षभेदासिद्धिः। अप्रमायां प्रमाशब्दाप्रयोगेऽपि ज्ञानशब्दप्रयोगाद् भेदोपलम्भात्। न च प्रमाशब्दस्यापि स्वत्पक्षे स्यादप्रमायां प्रवृत्तिरिति वाच्यम्। प्रमायास्तटस्थोपाधेरनिषेधादप्रमातो व्यावृत्तेरावेदितत्वादिति भावः।

एवमुत्पत्तौ ज्ञप्तौ च स्वतस्त्वमुक्त्वा फलेऽपि तदुपदर्शयति—**प्रमेति**। ज्ञानं येन व्यवह्रियते तेनैव प्रमापीति प्रतिज्ञार्थः। ज्ञानग्राहकमात्रग्राह्यत्वादिति हेत्वर्थः। अनुमानान्तरमाह—यद्वेति। येन ज्ञानं व्यवह्रियते तेनैव व्यवह्रियमाणप्रमानिष्ठत्वं प्रामाण्यस्य साध्यते। हेत्वर्थस्तु पूर्ववत्। प्रथमानुमाने प्रमाप्रमातिरिक्तज्ञानाभावात् दृष्टान्तासिद्धिः। द्वितीयानुमाने संशयत्वादिना व्यभिचारो हेतोरित्याशङ्क्याह—**दोषनिरासस्त्विति**। वादार्थमुपसंहरति—**तस्मादिति**। प्रामाण्यशब्देन तदाधारभूता प्रमा गृह्यते। अन्यथा जनयन्तीति वाक्यशेषानुपपत्तिः। [2]उत्तरवादं प्रस्तौति—**शक्तिवशादिति**। इतिशब्देन स्वरूपसहकारिसमवधानातिरिक्ता शक्तिरुक्ता। तामाक्षिपति—**नन्विति**। शक्तेर्हि प्रयोजनं कार्योत्पत्तिर्वा कार्यकारणनियमसिद्धिर्वा प्रतिबन्धसिद्धिर्वेति विकल्पयति—**किं कृत्यमिति**। प्रथमं प्रत्याह—**कार्यं तावदिति**।

---

1. प्रामाण्येतरत्वे सति 2. उत्तरपादं

तिलेभ्य एव तैलं, दधि दुग्धेभ्य एवेत्यादिनियमः, तया विना नोपपद्यते। तिलाः हि तैलं प्रति दध्यादि प्रत्यपीत्यनियमः स्यात्। अतः कार्यकारणनियमसिद्धेः शक्तिरास्थेयेति चेन्न। शक्तिपक्षेऽप्यस्यानियमस्य तुल्यत्वात्। न हि शक्तेः शृङ्गमस्ति। यत्रैकमेव कार्यंनिबद्धं स्यात्। अथ तस्यास्स्वभाव एव नियामकः। तथा तिलादेरेव स्वभावः स्यात्। तर्हि प्रतिबन्धसिद्धये शक्तिराश्रीयताम्। न ह्यग्निः प्रतिबद्धयते।

न च विसामग्र्येव प्रतिबन्धः। तस्यान्योन्याश्रयताया उक्तत्वात्। अतः शक्तौ प्रतिबन्धोऽर्थवानिति चेत्, न। तत्रापि प्रतिबन्धा-

---

**कारणेभ्य इति**। प्रतिबन्धाभावसहकृतेभ्य इति शेषः। एवकारः शक्तिनिरपेक्षताद्योतनार्थः। द्वितीयं शङ्कते—**तिलेभ्य इति**। शक्तिमन्तरेणापि तिलादिस्वभावतो नियमसिद्धिरित्याशङ्क्याह— **तिला हीति**। स्वभावानुसारिणो नियमस्यासम्भवे फलितमाह—**अत इति**। उपादानोपादेयभावनियमस्यानादिसिद्धवृद्धव्यवहाराधिगततत्तत्कार्यानुकूलस्वभावभेदादेवोपपत्तेर्मैवमिति परिहरति—**न शक्तीति**। शक्तेः शक्तिवशान्नियामकत्वसंभवान्नानियमः शक्तिवादेऽस्तीत्याशङ्क्याह—**न हीति**। शृङ्गशब्देन शक्तिरुक्ता। तस्या हि कार्यभूता वा शक्तिः स्वभावभूता वा?। नाद्यः, अनवस्थितेरित्यर्थः। द्वितीयमाशङ्कते—**अथेति**। शक्तिमङ्गीकृत्यापि स्वभावस्य नियामकत्वे तिलादेरेव स्वभावो नियामकोऽस्तु लाघवादित्युत्तरमाह— **तथेति**।

तृतीयमुत्थापयति—**तर्हीति**। शक्तेरभावेऽपि कारणस्वरूपे प्रतिबन्धः सिध्यतीत्याशङ्क्याह —**न हीति**। मन्त्रादिसन्निधानासन्निधानयोः स्वरूपस्य निर्विशेषत्वादित्यर्थः। ननु विनापि शक्तिं प्रतिबन्धो विसामग्रीरूपः सम्भवतीत्यत आह—**न चेति**। मन्त्रादिसंनिधौ कार्यौदासीन्यस्य प्रतिबन्धपदवेदनीयस्य वह्न्यादिस्वरूपे विद्यमानत्वात्तस्यैव प्रतिबध्यमानत्वम्। अन्यथा शक्तिपक्षेऽपि प्रतिबन्धो न सिध्येदित्यभिसन्धाय समाधत्ते—**न तत्रापीति**। शक्तिपक्षे प्रतिबन्धाभावं साधयति—**तथा हीति**। शक्तौ प्रतिबन्धः, शक्तिनाशको वा प्रतिबन्धकसामीप्यं वेति विकल्पयति—**शक्ताविति**। तत्राद्यमनूद्य

सम्भवात् । तथाहि—शक्तौ कः प्रतिबन्धः ? शक्तिनाशकश्चेत् । प्रतिबन्धकापाये कार्यं न स्यात् । नच शक्त्यन्तरं जातम् । कारणाभावात् । प्रतिबन्धकसामीप्यं चेत्, उत्तंभके सत्यपि कार्यं न स्यात् । तस्मान्न शक्तेरपिप्रतिबन्धसम्भवः । उभयपक्षानुपपत्तौ च मानदृष्टकारणपक्ष एवाश्रयणीयः । न कल्पितशक्तिपक्षः । नचात्र मानं समस्ति । अर्थापत्तिस्तावदनुपपत्त्यसम्भवादेव परास्ता । उक्तो हि कार्याद्यनुत्पत्त्यसम्भवः । यदपि मानं अयमग्निरद्रिष्ठातीन्द्रियाधारः कारणत्वात् गुरुत्वाधारवदिति ।

---

दूषयति—**शक्तौीति** । पूर्वशक्तिनाशेऽपि शक्त्यन्तरात् कार्योदयः सम्भवतीत्याशङ्क्याह—**न च [शक्त्यन्तरमि]ति**। न हि शक्त्यन्तरोत्पत्तौ वह्न्यादिस्वरूपमेव प्रतिबन्धाभावसहकृतं कारणं, स्फोटादिकार्योदयेऽपि तथा सम्भवाच्छक्तेरकिञ्चित्करत्वापत्तेः । न च शक्तिसहितमेव स्वरूपं शक्त्यन्तरोत्पत्तौ हेतुः अनवस्थानादिति मत्वाह—**कारणाभावादिति** । द्वितीयमनूद्य निरस्यति—**प्रतिबन्धकेति** । विकल्पद्वयनिरासमुपसंहरति—**तस्मान्नेति** । शक्तिपक्षे कारणपक्षे च प्रतिबन्धासंभवे प्रतिबन्धार्थं मन्त्रादौ कथं प्रेक्षावत्प्रवृत्तिरित्याशङ्क्याह—**उभयेति** । कारणपक्षे हि मन्त्रादिसंनिधाने कार्यं प्रत्यौदासीन्यं प्रतिबन्धः सिध्यतीत्यवोचाम । न तु शक्तिपक्षे । प्रत्यक्षत्वाप्रत्यक्षत्वाभ्यां कारणशक्त्योर्विशेषादित्याशयः । प्रयोजनाभावेन शक्तिं पराकुर्वता कल्पिता शक्तिरित्युक्तम् ।

ननु न कल्पिता शक्तिर्मानसिद्धत्वादित्याशङ्क्याह—**न चेति** । एतत्स्वरूपैतत्सहकारिसमवधानातिरिक्तस्य शक्तिशब्दवाच्यत्वं न प्रमितमित्यर्थः । द्विविधा हि शक्तिर्वस्तुसहभाविनी आधेया च । पूर्वत्र प्रमाणमर्थापत्तिरनुमानं वा ? । अर्थापत्तिरपि कार्यानुपपत्तिर्वा कार्यकारणनियमानुपपत्तिर्वा, प्रतिबन्धानुपपत्तिर्वेति विकल्प्यार्थापत्तित्रयं निरस्यति—**अर्थापत्तिरिति** । अनुपपत्त्यसम्भवमुक्तं स्मारयति—**उक्तो हीति** । द्वितीयं प्रमाणमुत्थापयति—**यदपीति** । अग्निरतीन्द्रियाधार इत्युक्ते सिद्धसाधनता । अग्नेरतीन्द्रियवाय्वादिसंयोगाश्रयत्वात् । अत आह—**अद्रिष्ठेति** । अग्निरद्रिष्ठाधार इत्युक्तेऽपि सिद्धसाध्यत्वम् अद्रिष्ठरूपाद्याश्रयत्वात् । अत आह—**अतीन्द्रियेति** । तेजोद्व्यणुकमेवं-

**तदप्यसत् । विपक्षे बाधकाभावात् । परमाण्वाधारत्वसिद्धेः सिद्ध-साधनत्वाच्च । असंयोगवृत्त्याऽऽधेयत्वविवक्षायामप्ययमेव दोषः । पर-माण्वभावस्यापि तथात्वात् । भावत्वविशेषणत्वेऽपि स एव दोषः । तदभावविशेषितत्वस्यापि तथात्वात् । एतेनाधेयशक्तिरपि व्याख्याता । नहि प्रोक्षणादिनाऽचेतनेषु व्रीह्यादिषु पुण्यं जन्यते, अन्यो वातिशयो**

---

विधरूपादेरधिकरणमिति भागे सिद्धसाध्यता । तन्निरासार्थमयमिति विशेषणम् । उत्थापितमनुमानमपाकरोति— **तदपीति** । किं च किमुक्त-विधवस्त्वाधारत्वमात्रं साध्यं उत असंयोगवृत्त्या तदाधारत्वम् ? ।

नाद्य इत्याह— **परमाण्विति** । असंयोगरूपवृत्त्या वह्न्यावाधारे दर्शित-विधपदार्थस्याधेयत्वमभिमतमिति द्वितीयमनुवदति— **असंयोगेति** । किम-संयोगवृत्तिः संयोगेनावृत्तिमात्रं किं वा समवायः, नाद्य इत्याह— **अयमेवेति** । वह्निर्न परमाणुरिति परमाण्वन्योन्याभावस्याद्विष्ठातीन्द्रियस्य संयोगाद्यवृत्त्या वह्नौ सिद्धेः सिद्धसाध्यतेति दोषमेव विशदयति— **परमाण्वभावस्येति** । अद्विष्ठातीन्द्रियभावस्य संयोगान्यवृत्त्या वह्निरधिकरणमिति साध्ये नास्ति सिद्ध-साध्यतेत्याशङ्क्याह— **भावत्वेति** । परमाण्वन्योन्याभावविशेषितस्याद्विष्ठाती-न्द्रियभावस्याग्नौ भावादिति हेत्वर्थः । न द्वितीयः, सिद्धसाध्यत्वात् । अद्विष्ठातीन्द्रियत्वाभावेतरस्थितस्थापकस्याग्नौ सत्वादिति द्रष्टव्यम् । मा भूत् सहजा शक्तिः आधेया तु स्यात् । दृश्यते हि प्रोक्षणादिना व्रीह्यादेः संस्कारः कथमन्यथा कालान्तरे तादृशमेव कार्यविशेषोपयोग इति द्वितीयां शक्तिमा-शङ्क्य सहजशक्तौ मानाभावमुक्तमतिदिशति— **एतेनेति** ।

ननु "व्रीहीन्प्रोक्षति" "यूपं तक्षती" त्यादिवाक्येषु द्वितीयाश्रुत्या व्रीह्यादीनां कर्मत्वमवगम्यते । तच्चान्यनिष्ठक्रियाजन्यफलाश्रयत्वं, तत्र दृष्टफलस्या-दृष्टत्वाद्व्रीह्यादिषु किञ्चिददृष्टसिद्धावाधेयशक्तिसिद्धिरिति । तत्राह— **नहीति** । यद्यपि व्रीह्यादिषु पुरुषानाश्रयत्वात्पुण्यं न जन्यते तथापि प्रोक्षणादिकृत-संस्कारातिशयः शक्त्यपरपर्यायो यज्ञेषु जनिष्यते, तथा चाधेयशक्तिरित्या-शङ्क्याह— **अन्यो वेति** । व्रीह्यादिषु संस्कृता व्रीह्यादय इति कथं संस्कारस्य तदीयत्वप्रतीतिरित्याशङ्क्य, प्रोक्षणाद्युद्भूतसंस्कारस्य व्रीह्यादिविषयक्रियाजन्य-

मानाभावात्। किन्तु पुंस्येव। यदाहोदयनः—"संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिरि"ति। अथवैकैवावभृथान्ता यागादिक्रिया; तया च पुंस्येव पुण्यं जन्यते। सेतुगमनक्रिययेवेति युक्तम्। तस्मान्नातीन्द्रियशक्तौ मानं किञ्चिदपीति प्रत्यक्षादिसिद्धप्रतिबन्धाभावादि कारणमिति सिद्धम्।

## अतिरिक्तशक्तिसमर्थनम्

उच्यते, न तावच्छक्तौ प्रमाणासम्भवः। तथाहि—अग्निरतीन्द्रियसामान्यवन्निष्क्रियाश्रयः कारणत्वात् गुरुत्वाश्रयवत्। तेजोऽप्यणु-

---

तामात्रेण तदीयत्वप्रतिपत्तिरित्यभिप्रेत्याह—**मानाभावादिति**। कस्य तर्हि संस्काराश्रयत्वं, अत आह—**किं त्विति**। उक्तेऽर्थे कुसुमाञ्जलिकारवचनमुदाहरति—**यदाहेति**। व्रीह्यादिविषया प्रोक्षणादिक्रिया कथं पुंसि संस्कारं करोति। गमनादेः स्वाश्रये देवदत्तादौ स्वविषयमनादृत्यातिशयहेतुत्वादर्शनादित्याशङ्क्य पक्षान्तरमाह—**अथवेति**। अवान्तरक्रियाभेदेऽपि प्रधानक्रियैकत्वं, तस्याश्च कर्तर्यतिशयाधायकत्वमित्यत्र दृष्टान्तमाह—**सेतुगमनेति**। द्विविधशक्तौ प्रमाणाभावं प्रतिपादितमुपसंहरति—**तस्मान्नेति**। प्रमाणप्रयोजनयोरभावेन शक्तेरसम्भवान्न शक्तिमत्कारणम्। किं तु प्रमाणसिद्धप्रतिबन्धाभावसहितमग्न्यादिस्फोटनकारणमिति पूर्वपक्षमुपसंहरति—**इति प्रत्यक्षादिति**।

सिद्धान्तमुपक्रमते—**उच्यत इति**। यत्तावन्नात्र मानं समस्तीति तत्राह—**न तावदिति**। मानासम्भवमपास्यन् मानमुपन्यस्यति—**तथा हीति**। अग्निर्निष्क्रियाश्रय इत्युक्ते तेजस्त्वाद्याश्रयत्वेन सिद्धसाध्यत्वं, तन्मा भूदित्याह—**सामान्यवदिति**। तथापि सामान्यवतो निष्क्रियस्य रूपादेरन्याश्रितत्वात्तदेव सिद्धसाध्यत्वम्। तन्निरसितुमतीन्द्रियपदम्। यद्यपि वह्निगतरूपादि, सामान्यवन्निष्क्रियं च तथापि न तदतीन्द्रियसामान्यवत्तद्गतरूपत्वादीनां द्व्यणुकाश्रितरूपादिव्यक्तिष्वप्रत्यक्षत्वेऽपि, व्यक्त्यन्तरे प्रत्यक्षत्वात्। अतो न सिद्धसाध्यतेति भावः। अतीन्द्रियसामान्यवदाश्रयो-

**कमतीन्द्रियरूपस्य वायोश्चाधिकरणं सिद्धमित्यतीन्द्रियसामान्यवन्निष्क्रियेत्युक्तम् । परस्य सर्वं योगीन्द्रियगम्यं, अतोऽतीन्द्रियासिद्धेरप्रसिद्धविशेषणः पक्षः ।**

**दृष्टान्तश्च साध्यविकल इति चेत् । न । विमतं न गुरुत्वजातिविषयं इन्द्रियत्वात् अस्मच्चक्षुर्वदित्यतीन्द्रियसिद्धेः । तर्हि तेजसि स्थित-**

---

ऽग्निरित्येतावति साध्ये, वायोरप्रत्यक्षत्वपक्षे अतीन्द्रियवायुत्वजात्याश्रयपवनाधारता संयोगवृत्त्या वह्नेरस्तीति सिद्धसाध्यता, तां निरस्यति—**निष्क्रियेति** । अतीन्द्रियसामान्याधारत्वे सति यन्निष्क्रियं तदाश्रयोऽग्निरिति प्रतिज्ञार्थः । सामान्यवन्निष्क्रियविशेषणयोरुक्तमेव प्रयोजनं प्रकटयति—**तेजोद्व्यणुकमिति** । अतीन्द्रियसामान्यवदिति रूपव्यावृत्त्यर्थं, निष्क्रियेति वायुव्यवच्छेदार्थमिति विभागः । योगिस्वीकारवादिनं प्रति अतीन्द्रियविशेषणासिद्धेर्विशिष्टसाध्यासिद्धेरप्रसिद्धविशेषणतेति शङ्कते—**परस्येति** । गुरुत्वाश्रये पाषाणादौ साध्यप्रसिद्धेर्नाप्रसिद्धविशेषणतेत्याशङ्क्याह—**दृष्टान्तश्चेति** । दोषद्वयमनुमानेन परिहरति—**न विमतमिति** । परसिद्धं योगीन्द्रियं विमतपदार्थः । जातिपदं गुणोपलक्षणं गुणजात्योर्द्वयोरतीन्द्रियत्वमत्र साध्यमिति द्योतयत् सन्देहं व्यावर्तयति । तथा च गुरुत्वस्यातीन्द्रियस्य सिद्धेर्नाप्रसिद्धविशेषणता । नापि दृष्टान्तस्य साध्यविकलता । "गुरुत्वधर्माधर्मभावना अतीन्द्रिया" इति हि प्रशस्तपादः । अतो अतीन्द्रियं वस्तु परस्यापि सम्मतमिति दोषद्वयमनवकाशं इत्याशयः ।

नन्वाश्रयशब्देन समवायी वा विवक्षितः आधारमात्रं वा ? नाद्यः, * भाट्टवेदन्तिनोरप्रसिद्धविशेषणत्वात् । तेजसः स्थितस्थापकसमवायित्वेन सिद्धसाध्यत्वाच्च । ** द्वितीयेऽप्ययमेव दोष इति मनीषया चोदयति—**तर्हीति** । अयुतसिद्धतया विशिष्टधर्माधारत्वस्य वह्नेर्विवक्षितत्वान्नाप्रसिद्धविशेषणतेति मन्वानः सिद्धसाध्यत्वमुद्धरति—**नाग्नाविति** । मानाभावमपह्नुवानः शङ्कते—**विमतमिति** । हेताववयविपदं विमतं उक्तविधं अवय-

---

* भाट्टवेदान्तिभिः समवायानभ्युपगमादिति भावः ।

** अग्नेः कदाचित्परमाणवाधरत्वसंभवेन सिद्धसाधनतैव दोष इत्यर्थः

स्थापकत्वसिद्धेः सिद्धसाधनतेति चेन्न। अग्नौ तत्सत्वे मानाभावात्। विमतं स्थितस्थापकवत् तेजोवयवित्वात् सुवर्णवदिति मानमिति चेन्न। विपक्षे बाधकाभावात् दृष्टान्ते साध्यसन्देहात् गुरुत्ववत्तस्यान्यधर्मत्वसम्भवात् प्रभायामनैकान्त्याच्च। अथ विमतं स्थितस्थापकवत् रूपस्पर्शवत्वात् कटवदिति मानं, न। विपक्षे बाधाभावात् स्थितस्थापककार्यवत्वोपाधिभावाच्च।

न च साधनव्याप्तिः। चक्षुरादौ साधनवति उपाध्यनुपलब्धेः। न च मानं विना ते किञ्चित्सिध्यति, असिध्याद्यभावस्तु स्पष्ट एव।

---

वित्वादित्यनुमानान्तरं दर्शयितुमित्यवधेयम्। तेजस्त्वादिति हेतुरस्तु. स्थितस्थापकत्वं मा भूत्। तथा च बाधकाभावादप्रयोजकं हेतुद्वयमिति परिहरति––**न विपक्ष इति**। किं च सुवर्णेऽप्रतीयमानगुरुत्ववदत्राप्रतीयमानस्थितस्थापकस्योपष्टम्भकपार्थिवभागनिष्ठत्वसम्भवान्न सुवर्णदृष्टान्ते साध्यं निश्चितमित्याद्यानुमाने दोषान्तरमाह––**दृष्टान्त इति**। किं च प्रभायां तेजस्त्वमस्ति नतु स्थितस्थापकवत्वमिति उभयत्र दोषान्तरमाह—**प्रभायामिति**। व्यभिचारं निरसितुमनुमानान्तरमाशङ्कते—**अथेति**। रूपवत्वात् स्पर्शवत्वादिति हेतुद्वयमप्रयोजकमिति दूषयति––**न विपक्ष इति**। कटे हि संवेष्टनं स्थितस्थापककार्यं दृश्यते। तेन तत्र तदुन्नेया स्थितस्थापकस्थितिः, न पुनरुक्तहेतुभ्यामित्यप्रयोजकत्वम्। सोपाधिकत्वमपि हेतुद्वयस्योपन्यस्यति–**स्थितस्थापकेति**। न चोत्पन्नमात्रविनष्टकटादिषु कार्यानुपलम्भेऽपि तथाविधसंस्काराभ्युपगमेन साध्याव्याप्तिः, अनुत्पन्नकार्येषु कार्यैकगम्यस्थितस्थापकस्यैवाभावात्। न च संवेष्टनाद्यभावेऽपि रूपवत्वादिना स्थितस्थापकानुमानम्। वज्रादौ रूपादिमति कदाचिदपि स्थितस्थापककार्यानुपलब्ध्या तदभावनिश्चयात्। तत्रापि तस्यानुमाने रूपवत्वादिना दहनादावपि गुरुत्वाद्यनुमानप्रसङ्गः। एतेन साधनव्याप्तिरपि प्रत्युक्तेत्यभिप्रेत्याह—**न चेति**। ननु तेजसि स्थितस्थापकसत्वे मानासत्वेऽपि स्वसिद्धान्तानुसारेण सिद्धसाध्यतां ब्रुवन् कथमनुमानाशक्तोऽपि स्वसिद्धान्तात् प्रच्याव्येत, कथं वा तदीयं सिद्धसाध्यत्वाभिधानं प्रत्युद्ध्रियेत। अत आह—**न च मानमिति**।

**पक्षवृत्यादेः स्पष्टत्वात्। नापि सत्प्रतिपक्षता। प्रतिप्रयोगे दृष्टान्ताभावात्। विपक्षे च प्रतिबन्धासम्भवो बाधः। यथा च विसामग्र्येव न प्रतिबन्धः तथा स्वतःप्रामाण्यवादे दर्शितम्। नन्वितरत्रापि कः प्रतिबन्धः? शक्तेरभिभव एव। उत्तम्भके च सति पुनरुद्भवः, यथा रूपस्यानुद्भूतत्वमुद्भूतत्वं च।**

---

भवतु वा प्रतिज्ञायाः स्थितस्थापकेतरत्वविशेषणं, न च कर्माप्रत्यक्षवादे वह्नेः स्थितस्थापकातिरिक्तातीन्द्रियसामान्यवन्निष्क्रियकर्माश्रयत्वादर्थान्तरता। शक्तिवादिनोऽपि भाट्टादेः कर्मातीन्द्रियत्वासिद्धेरिति द्रष्टव्यम्। अप्रसिद्धविशेषणत्वादि परिहृत्य कारणत्वहेतोर्दोषान्तराणि निराकरोति—**असिध्यादीति**। विमतं उक्तविधसाध्यवन्न भवति, प्रमेयत्वात्, शक्तिवदित्याशङ्क्याह—**नापीति**। गुरुत्वाश्रये कुम्भादौ व्यभिचारादिति भावः। किं च न शक्तिमनिच्छतः शक्तिदृष्टान्तः सम्भवति। न च परसिद्धदृष्टान्तेन तवानुमानमुपपद्यते। उभयवादिप्रमितस्य साधनाङ्गताङ्गीकारभङ्गप्रसङ्गादित्यभिप्रेत्याह—**प्रतिप्रयोग इति**। कारणत्वहेतोरप्रयोजकत्वं प्रत्यादिशति—**विपक्षे चेति**। शक्तेरभावे प्रतिबन्धकस्य विषयाभावादसामर्थ्याच्च प्रतिबन्धानुपपत्तेर्नाप्रयोजको हेतुरित्यर्थः। शक्तेरभावेऽपि सामग्रीवैकल्यं प्रतिबन्धः सिद्ध्यतीत्याशङ्क्याह—**यथा चेति**। शक्त्यनङ्गीकारे स्वरूपस्यैव कारणत्वात्प्रतिबन्धाभावकारणताया निरस्तत्वान्मन्त्रसन्निध्यसंनिध्योरविशेषेण कार्यप्रसवप्रसक्तिर्बाधिकेत्यभिप्रायः। शक्तिपक्षेऽपि प्रतिबन्धासिद्धिमुक्तां स्मारयति—**नन्विति**। उत्तरमाह—**शक्तेरिति**। शक्तिरभिभूता कथं कार्यं कुर्यादित्याशङ्क्याह—**उत्तम्भके चेति**। प्रथममभिभूतस्यैव पुनरुद्भूतत्वमित्येतददृष्टचरमित्याशङ्क्य दृष्टान्तमाह—**यथेति**। उद्भूतत्वमनुद्भूतत्वं चेति जातिद्वयमेकस्यां रूपव्यक्तौ समवेतं न सम्भवति, विरोधात्। नहि प्रकाशत्वतमस्त्वयोरेकत्र समावेशः। अतो भिन्नव्यक्तिनिष्ठत्वेन तदुभयमुपपन्नमिति चोदयति—**नन्विति**। शक्तेरपि तर्हि भिन्नव्यक्तिनिष्ठं जातिद्वयमिष्यतामित्याशङ्क्याह—**न चेति**। मंत्रादिसंनिधावुत्तम्भककाले च शक्तेरेकत्वात्तस्या विरुद्धं जातिद्वयमनुपपन्नमित्यर्थः। उद्भूतत्वादेर्जातित्वमङ्गीकृत्यैकस्यां रूपव्यक्तौ कालभेदेनोद्भवाभिभवयोरुपलम्भादेकस्यामपि शक्तौ

ननु रूपस्योद्भूतत्वादिजातिद्वयं भिन्नव्यक्त्युपपद्यते। न चैकस्याः शक्तेः विरुद्धजातिद्वयं घटते। न। अनयोर्जातित्वानुपपत्तेः। रूपत्वादिनाहि परापरभावोऽनयोरशक्यः सम्पादयितुम्। रूपे स्पर्शे च क्वचिदेवानयोर्भावात्। विरुद्धातिशयद्वयवत्त्वञ्च एकत्र कालभेदादविरुद्धम् भावाभाववत्। अथवा प्रतिबन्धकोत्तम्भकसामीप्यमेव तत्कृतोऽतिशयः भ्रामकमणेरिव। अतः शक्तिपक्ष एव प्रतिबन्धसिद्धिः। एवं च प्रतिबन्धान्यथानुपपत्तिरूपार्थापत्तिरपि शक्या शक्तौ प्रमाणयितुम्।

---

तथा सम्भवान्न वैषम्यमिति दूषयति—नेति। किं चोद्भूतत्वादेर्जातित्वमेव नास्ति। अतस्तज्जातित्वाङ्गीकारपूर्वकं चोद्यमसङ्गतमित्याह—अनयोरिति। उद्भूतत्वानुद्भूतत्वयोर्जातित्वानुपपत्तिमुपपादयति—रूपत्वादिनेति। एकव्यक्तिगतजातिद्वयस्य परापरभावो नियतः, यथा द्रव्यत्वपृथिवीत्वयोः। न चोद्भूतत्वानुद्भूतत्वयोः रूपत्वस्पर्शत्वसमानाधारयोस्ताभ्यां परापरभावः सम्भवतीत्यर्थः तत्र हेतुमाह—रूप इति। न खलु रूपत्वात्परमपरं वा उद्भूतत्वादि स्पर्शेऽपि तस्य भावात्। नापि रूपत्वमपरं इतरत् परमिति वैपरीत्यम्। रूपेऽपि क्वचिदेवोद्भूतत्वादेर्भावात्। एवं स्पर्शत्वेनापि परापरत्वमुद्भूतत्वादेरपास्यम्। अतो न तस्य जातित्वमित्यर्थः। उद्भूतत्वादेर्जातित्वाभावेऽपि मिथो विरोधान्नैकत्र सत्वमित्याशङ्क्याह—विरुद्धेति। विरुद्धयोरपि कालभेदादेकत्रसमावेशे दृष्टन्तमाह—भावेति। प्रतिबन्धककृतोऽतिशयः शक्तेरभिभवः, उत्तम्भककृतोऽतिशयस्तु शक्तेरुद्भव इत्यभिधाय पक्षान्तरमाह—अथवेति। कथं प्रतिबन्धकसामीप्यमेव प्रतिबन्धककृतोऽतिशयः प्रतिबन्धः, कथं चोत्तम्भकसामीप्यमेव तत्कृतातिशयरूपं प्रतिबन्धापगमस्तत्राह—भ्रामकेति। यथा भ्रामकमणिसामीप्यं लोहस्थितिविशेषप्रतिबन्धः, मण्यन्तरसामीप्यं च तदपनयः, तथा प्रतिबन्धकसामीप्यमेव तत्कृतातिशयरूपं प्रतिबन्धः, उत्तम्भकसामीप्यमेव च प्रतिबन्धापगम इत्यर्थः।

ननु कारणपक्षेऽपि मन्त्रादिसंनिधाने कार्योदासीनतारूपप्रतिबन्धसिद्धिस्तदसन्निधाने तदाभिमुख्यकारणत्वसिद्धिरित्याशङ्क्याह—अत इति। स्वरूपस्यैव कारणत्वे मंत्राद्यसंनिधाविवतत्सन्निधानेऽपि कार्यौदासीन्यमनुपपन्नम्। अपेक्षणीया-

अतीन्द्रियातिशयसिद्धौ प्रोक्षणादिभिरपि व्रीह्यादिष्वेवातिशयो जन्यत इति सिध्यति। "व्रीहीन् प्रोक्षती"ति द्वितीयाश्रुतेः प्रोक्षणस्य व्रीहिगुणभावप्रतीतेः।

यत्तु "संस्कारः पुंस एवेष्ट" इत्यभिधानं तदश्रुतमीमांसावृत्तान्तस्येत्युपेक्षणीयम्। न हि पुंसो व्रीहिप्रोक्षणजन्यातिशयवत्वे किञ्चिन्मानमस्तीति। क्रियैकत्वञ्च प्रोक्षणादिविधिभेदविरुद्धं न शक्यं कल्पयितुम्। क्रत्वर्थपुरुषार्थभेदविरुद्धश्च। अतोऽग्न्यादेः शक्तिः

---

न्तराभावात्। प्रतिबन्धाभावस्य कारणत्वमनन्तरमेव परास्तमिति भावः। शक्तिपक्ष एव प्रतिबन्धसिद्धिरिति स्थिते, शक्तिमन्तरेण प्रतिबन्धानुपपत्तिरित्यर्थापत्तिरपि शक्तिसाधिकेति प्रमाणान्तरमाह—**एवं चेति**। अनुमानार्थापत्तिभ्यां सहजा शक्तिरुक्ता। यत्पुन"रेतेनाधेयशक्तिरपि व्याख्याते"त्युक्तं तद्दूषयति—**अतीन्द्रियेति**। शक्तिर्हि सलिलपरमाणुरूपवन्नित्येषु नित्या, घटादिषु रूपवदनित्येषु चानित्या, एवं द्विविधातीन्द्रियस्य शक्तिनाम्नो द्रव्यादिषु प्रमाणतः सिद्धौ प्रोक्षणादितो व्रीह्यादिष्वाधेयातीन्द्रियशक्तिसिद्धिरित्यर्थः। न त्वदृष्टस्य चेतनधर्मस्याचेतनव्रीह्यादिष्वसम्भवात्तद्विषयक्रियाजन्यतामात्रेण तदीयत्वप्रतीत्युपपत्तेर्न प्रोक्षणादिभिर्व्रीह्यादिष्वतिशयो जन्यते मानाभावादित्युक्तं, तत्राह—**व्रीहीनिति**। गुणस्य प्रधानातिशयहेतुत्वाददृष्टातिरिक्तातिशयपरत्वेन द्वितीयाश्रुतेर्मुख्यार्थत्वसम्भवे गौणार्थत्वस्यायुक्तत्वात्। व्रीह्यादिषु तादृशातिशये द्वितीयाश्रुतिवत्, प्रोक्षणादिविध्यनुपपत्तिरपि प्रमाणमित्यभिप्रायः। आत्मनिष्ठातिशयजननेनार्थापत्तेरन्यथोपपत्तिमुक्तामनुवदति—**यत्त्विति**। स्नानादीनामिव प्रोक्षणादीनां कर्तृसंस्कारत्वाप्रसिद्धेः। द्वितीयाश्रुत्या च व्रीह्यादीनामेव संस्कारकर्मत्वप्रतीतेर्वेदवचनविचारविधुरस्येदं प्रत्यवस्थानमिति दूषयति—**तदश्रुतेति**। यत्पुनरथवेत्यादिपक्षान्तरं तत्राह—**क्रियेति**। विधिभेदो हि क्रियाभेदनियतः। भावार्थमात्रविषयत्वाद्विधीनाम्। द्रव्यादेरपि क्रियावशेनैव तद्विषयत्वमिति भावः। किं च प्रणयनादीनां क्रत्वर्थत्वं गोदोहनादीनां पुमर्थत्वमित्ययमपि भेदो विधिभेदवत् क्रियाभेदं कल्पयतीत्याह—**क्रत्वर्थेति**। प्रमाणत्रयफलमुपसंहरति—**अत इति**। अग्न्यादौ शक्तिसाधनं मायातिरिक्ता

सिद्धा। यच्च वार्तिककृद्भिरुक्तं "आत्माविद्यैव नः शक्तिः सर्वशक्यस्य सर्जन" इति, तच्छ्रुतिसिद्धमायामयं जगदाश्रित्य, न तु व्यावहारिकप्रमाणसिद्धमित्यविरुद्धम्। तस्माच्छक्तिमदेव कारणं न प्रतिबन्धाभाववत्। अपि च प्रतिबन्धप्रागभावादिविशेषः कारणं किं वा अभावमात्रम्। आद्ये तत्प्रध्वंसादौ कार्यं न स्यात्। द्वितीये तु प्रतिबन्धभावेऽपि कार्यं स्यात्। तदन्योन्याभावस्य भावात्। तदन्ये अभावाः कारणमिति चेन्न। ततोऽन्यत्वासम्भवात्। अन्यो हि प्रतियोगी

---

शक्तिर्नेति वार्तिकबाधितत्वादवहेयमित्याशङ्क्य समाधत्ते—यच्चेति। "नातोऽन्यथा शक्तिवादः प्रमाणेनावसीयत" इत्युत्तरार्धम्। "मायां तु प्रकृतिं" "देवात्मशक्तिमि"त्यादिश्रुतिमाश्रित्य मायैव शक्तिरिति व्यपदिश्यते। व्यवहारतश्च पावकादौ शक्तिरुक्तेति नापसिद्धान्तप्रसक्तिरित्यर्थः। यस्मात्त्रिभिर्मानैर्भावेषु नित्याऽनित्या च शक्तिः सिद्धा, तस्मादित्युपसंहारः। प्रतिबन्धाभाववत्कारणमिति पक्षे प्रतिबन्धाभावस्यापि विशेषणत्वेन कारणत्वमिष्टम्। तच्च दुर्वचमित्याह—अपि चेति। तदेव वक्तुं विकल्पयति—प्रतिबन्धेति। प्रतिबन्धप्रागभावस्य कारणत्वे तद्ध्वंसादौ कार्यं न स्यात्। तदा तत्प्रागभावाभावात्। तद्ध्वंसस्य हेतुत्वे तत्प्रागभावादौ न कार्यं स्यात्। तदा तध्द्वंसाभावात्। तदन्योन्याभावस्य कारणत्वे सदा कार्यमापतेत्। प्रतिबन्धे सत्यपि तस्य भावात्। तदत्यन्ताभावस्य कारणत्वे, तत्प्रागभावप्रध्वंसयोर्न कार्यं जायेत। न प्रतिबन्धाभावविशेषस्य कारणत्वमित्याह—आद्य इति। न च प्रतिबन्धसंसर्गाभावस्य कारणत्वम्। उत्तम्भके सति मन्त्रादिसंसर्गेऽपि कार्यदृष्टेः। न चोत्तम्भकाभावसहितस्य मन्त्रादेः प्रतिबन्धकत्वादुत्तम्भके सति मन्त्रादिसंसर्गेऽपि प्रतिबन्धकसंसर्गो नास्तीति वाच्यम्। उत्तम्भकाभावेऽपि सहकारिणि विकल्पदोषसाम्यादिति द्रष्टव्यम्।

प्रतिबन्धाभावमात्रं कारणमिति पक्षं प्रत्याह—द्वितीये त्विति। प्रतिबन्धान्योन्याभावादन्यस्य तदभावमात्रस्य कारणत्वं शङ्कित्वा दूषयति—तदन्य इत्यादिना। तत इति। अन्योन्याभावादित्यर्थः। असंभवमेव दर्शयितुं धर्मिणोऽन्यस्य प्रतियोगित्वं अन्यस्य चान्योन्याभाववत्त्वमिति सामान्यन्यायं

**अन्यश्चान्योन्याभाववान् । नचान्योन्याभावोऽप्यन्योन्याभाववान् । अनवस्थाप्रसङ्गात् । अभावान्तरस्यानवश्यम्भावित्वान्नानवस्थेति चेन्न । अभावो हि विशेषणादिभावेन प्रतीयते । विशेषणादिभावश्चान्योन्याभावप्रतीतौ प्रतीयते । तदप्रतीतौ दूरस्थयोर्विशेषणादिभावादृष्टेः । एवमनन्ताभावदृष्टिसापेक्षाऽभावदृष्टिर्न क्वापि भवेदित्यनर्थफलेयमनवस्थाऽऽपद्यत एव ।**

**अपि च प्रतिकारणं बहवः प्रतिबन्धाः । तेषां च प्रत्येकं**

---

दर्शयति-–**अन्यो हीति** । भवत्वन्योन्याभावस्यापि धर्मिणोऽन्यत्वेन प्रतियोगित्वं, तथा च ततोऽन्यस्य प्रतिबन्धाभावस्य कारणत्वोपपत्तिरित्याशङ्क्याह— **न चेति** । इतराभावसमूहस्य प्रतिबन्धान्योन्याभावादन्यत्वसिद्धये तस्य प्रतियोगित्वार्थमन्योऽभावोऽपेक्ष्यते । ननु न द्वितीयान्योन्याभावस्यान्योन्याभावापेक्षा, तदीयप्रतियोगित्वस्याविवक्षितत्वादिति शङ्कते–**अभावान्तरस्येति** । अनवस्थापरिहारममृष्यन्नाह-–**नेति** । तमेव व्यवस्थापयितुमभावप्रतीतिं प्रकटयति–**अभावो हीति** । घटस्यान्योन्याभावः, पटस्यान्योन्याभावः, घटोऽन्यः पटोऽन्य इति घटादेर्विशेषणविशेष्यत्वेनान्योऽभावो भातीत्यर्थः । तथापि कथमनवस्थेत्यत आह—**विशेषणादीति** । अन्योन्याभाववतोः स्वरूपेण प्रतीतयोर्विशेषणादिभावेन भानसम्भवान्नानवस्थेत्याशङ्क्याह—**तदप्रतीताविति** । भवतु तर्हि विशेषणादिभावप्रतिभासोऽन्योन्याभावप्रतीतिपूर्वक इत्यत आह—**एवमिति** । प्रथमान्योन्याभाववद्विशेषणादिभावभाननिर्वाहकत्वेनापेक्ष्यमाणद्वितीयान्योन्याभावोऽपि विशेषणभावेन स्वप्रतीत्यर्थमन्योन्याभावान्तरप्रतीतिमपेक्षेत । तथा चोत्तरोत्तरनिर्वाहकान्योन्याभावभानं विना पूर्वपूर्वनिर्वाह्यान्योन्याभावाप्रतीतेः प्रतिबन्धान्योन्याभावादन्यस्य प्रतिबन्धाभावस्य कारणत्वमित्ययुक्तमित्यर्थः । प्रतिबन्धाभावस्य कारणत्वानुपपत्तेर्न तद्विशेषितमग्न्यादिः कारणम् । किं तु शक्तिमानित्यत्रैव युक्त्यन्तरमाह– **अपि चेति** । प्रतिबन्धाभावस्याकारणत्वे प्रतिबद्धापि शक्तिः स्फोटादिकार्यं कुर्यादिति चेत् । न । सति पुष्कलकारणे कार्योत्पदविरोधि प्रतिबन्धकमित्यभ्युपगमान्न सामग्रीवैकल्यात्तत्र कार्यानुदयः । किंतु विरोधिसद्भावात् । न

बहवोऽभावाः कारणमिति कल्पनागौरवाद्युक्तं प्रतिकारणमेका शक्तिरिति कल्पयितुम्। तस्मात् स्वशक्तिसम्बन्धावष्टम्भेनैव कारणानि नियतंकार्यं जनयन्ति। एवं वेदा अपि धर्मब्रह्मविषयं ज्ञानं जनयन्तीत्यास्थेयं श्रेयोऽर्थिभिः।

वेदानां सिद्धार्थबोधकत्वे कार्यशक्तिवादिनां पूर्वपक्षोद्भावनम्

नन्वेतन्न सहामहे यद्वेदोऽकार्यमपि बोधयतीति। तात्पर्याधीना हि शब्दस्य प्रामाण्यम्। उक्तं हि "यत्परश्शब्दः स शब्दार्थः" इति। तात्पर्यं च कार्य एवावधार्यते, सर्वशब्दानां तत्परतयैव प्रयोगदर्शनात्।

---

च सामग्रीवैकल्यमेव प्रतिबन्ध इति साधितम्। न चैवं विरोध्यभावत्वेन प्रतिबन्धाभावस्यापि कारणता। विरोधिनिषेधत्वेनान्यथासिद्धत्वात्। न च विरोध्यभावोऽपि इति विकल्पसाम्यम्। तदन्योन्याभावातिरिक्ततदभावस्य तत्वेनानिरुक्तेः। प्रतीतिमात्रेणास्मन्मते तस्यान्यत्वप्रतियोगित्वसम्भवात् प्रतीतिव्यवहारौ दुर्निरूपमायाकृतौ निरूपकैरिष्येते।

"उपपादयितुं तैस्तैर्मतैराशङ्कनीययोः।
अनिर्वक्तव्यतावादपादसेवा गतिस्तयोः॥"

इति हि खण्डनकृतः। एतेन योग्यानुपलब्धिप्रतिबन्दीग्रहोऽपि प्रतिबन्दितव्य इत्यभिप्रेत्योपसंहरति—**तस्मादिति**।

वादान्तरं प्रस्तौति—**एवमिति**। वेदस्य धर्मबोधकत्वमङ्गीकृत्य ब्रह्मबोधकत्वमसहमानो मीमांसकः शङ्कते—**नन्वेतदिति**। कार्यवाक्यात् कार्यवत् ब्रह्मवाक्यात् ब्रह्मापि बोध्यमित्याशङ्क्य ब्रह्मवाक्याभावमभिप्रेत्याह—**तात्पर्येति**। यत्र शब्दस्य तात्पर्यं तस्यैव तदर्थत्वम्। ननु प्रतीयमानस्य सर्वस्य शब्दार्थत्वसम्भवः। अन्यथा कामग्रन्थेऽपि काठिन्यं शब्दार्थः स्यादित्यर्थः। "सत्यं ज्ञानमनन्तं" इत्यादिवाक्यस्यापि तर्हि तात्पर्याधीनं ब्रह्मणि प्रामाण्यं भविष्यतीत्याशङ्क्य तस्य वस्तुपरत्वाभावं मन्वानः यथोक्तेऽर्थे मीमांसकसंमतिमाह—**उक्तं हीति**। ननु वाक्यस्य तात्पर्यं कार्यवस्तुनीव सिद्धवस्तुन्यपि किं न सिध्येदित्याशङ्क्याह—**तात्पर्यं चेति**। तत्र हेतुमाह—**सर्वशब्दानामिति**। लोके सकलपदानां कार्यपरत्वेनैव प्रयोगो दृश्यते—

**अतत्पराणां च निष्प्रयोजनत्वात्। तथा च "आम्नायस्य क्रियार्थत्वादानर्थक्यमतर्थानामि"त्यक्रियार्थानां निष्फलत्वमाशङ्क्य, "स्तुत्यर्थेन विधीनां स्युरि"ति कार्यपरत्वेनार्थपरत्वं सूत्रितम्। तथा च भाष्यमपि "दृष्टो हि तस्यार्थः कर्मावबोधनमि"ति।**

---

"लोकोपनतसामर्थ्यः शब्दो वेदेऽपि बोधकः।" इति न्यायात् वेदेऽपि शब्दस्य कार्यपर्यवसायित्वमेव युक्तमित्यर्थः।

"निधिमानेष भूभागः" "फलिता द्रुमाः" "राज्ञः पुमानि"त्यादिप्रयोगस्याकार्यपरस्यापि लोके दर्शनादवधारणमनुचितमित्याशङ्क्याह—**अतत्पराणां चेति**। प्रयोजनवति हि शब्दस्य तात्पर्यम्। 'तात्पर्यं च पुरुषार्थेऽपूर्वे, इत्यभ्युपगमात्। प्रयोजनं च प्रवृत्तिनिवृत्त्यायत्तं, ते च विधिनिषेधाधीने, तौ च कार्यगोचरावेवेति शब्दमात्रस्य कार्यविषयं तात्पर्यम्। अतो यथोक्तवाक्यानामपि कार्यपरत्वान्न सिद्धार्थपरः शब्दप्रयोगोऽस्तीति भावः। शब्दमात्रस्य कार्यपरत्वे सूत्रकारसंमतिमाह—**तथा चेति**। प्रथमे पादे वेदस्यापौरुषेयत्वेन प्रयोजनवत्कार्यार्थत्वेन च विधीनां प्रामाण्यं प्रतिपाद्याऽर्थवादानामकार्यार्थत्वादप्रामाण्यमाशङ्कितं—**आम्नायस्येति**। **क्रियार्थत्वात्**। प्रयोजनवत् कार्यपरत्वादिति यावत्। **आनर्थक्यं** निर्विषयत्वं निष्फलत्वं च। **अतदर्थानां** फलवत्कार्याप्रतिपादकवाक्यानां "देवा वै देवयजनमि"त्यादीनामित्यर्थः। तत्र सिद्धान्तितं "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरि"ति विधीनां प्रवर्तकत्वनिवर्तकत्वाकाङ्क्षितद्रव्यदेवतास्तुतिनिन्दाद्वारा संनिहितविधिनिषेधैकवाक्यत्वादर्थवादा अप्यर्थवन्तो भवन्तीत्यक्षरार्थः।

ननु सूत्रकारो वेदमात्रस्य कार्यपर्यवसायित्वं नाभिप्रेयाय, किन्तु कर्मकाण्डस्यैव तत्परत्वं सूचयति स्म। प्रतिज्ञासूत्रे धर्मशब्दप्रयोगवच्चोदनासूत्रेऽपि तत्प्रयोगात्। उत्तराधिकरणानां च तदनुसारित्वादित्याशङ्क्य प्रथमसूत्रगतभाष्यविरोधान्नैवमित्याह—**तथा चेति**। तस्य वेदस्य; दृष्टोऽर्थः दृष्टं प्रयोजनं, यत् कर्मावबोधनं नियोगज्ञानम्। अतो "वेदमधीत्य स्नायादि"ति वाक्यमतिक्रमणं नार्हतीत्यर्थः। वाक्यतात्पर्यालोचनया वेदस्य कार्यगोचरत्वनियममभिधाय पदशक्तिवशादपि यथोक्तनियमसिद्धिरित्याह—**किं चेति**। शक्ति-

किञ्च शक्तिज्ञाधीनं हि शब्दस्य बोधकत्वम् । शक्तिश्च कार्यान्वित एवावसीयते । व्यवहाराधीनत्वाच्छक्त्यवगमस्य । व्यवहारो हि गवानयनादिलक्षणकार्यताज्ञानजन्यचिकीर्षासाध्यः अतो व्यवहारद्वारा शब्दशक्तिः कार्य एवावधार्यते ।

नन्विष्टसाधनताबोधाच्चिकीर्षाजनिः । ततः प्रवृत्तिरिति सिद्धे व्युत्पत्तिः किं न स्यात् । अतीतेष्टसाधनताबोधेन व्यभिचारादिति ब्रुमः । अथ कार्यतैकार्थसमवायित्वेनेष्टसाधनता विशेष्येत । तदापि कार्यतानुप्रवेशान्न केवले सिद्धे शब्दशक्तिः सिध्येत् । किञ्च इष्टसाधन-

---

ज्ञानाभावेऽपि श्रुतशब्दादर्थज्ञाने व्युत्पत्तिविरहिणामपि श्रुतः शब्दोऽर्थबुद्धि-मादध्यादित्यभिसन्धिः । [1]कार्यान्वयवत् सिद्धेऽपि तत् किं न स्यादित्याशङ्क्याह—**शक्तिश्चेति**। तत्र हेतुमाह—**व्यवहारेति**। **व्यवहारः** मध्यमवृद्ध-प्रवृत्तिः शक्त्यवगतिलिङ्गम्। 'श्रोतृव्यव[2]हारो हि मूलं बालानां व्युत्पत्ते''रिति पञ्चपादिकाचार्यवचनादित्यर्थः। व्यवहारोऽपि सिद्धेऽर्थे किं न स्यादित्याशङ्क्याह— **व्यवहारो हीति**। मध्यमवृद्धस्य प्रवृत्तिः प्रवर्तकप्रत्ययपूर्विका, स्वतन्त्रप्रवृत्तित्वात् मदीयप्रवृत्तिवत् इत्यनुमितप्रवर्तकप्रत्ययस्य शब्दान्वयव्यतिरेकवतः शब्दजन्यत्वेऽधिगते पदसमुदायस्य प्रवर्तकप्रत्ययजनने सामर्थ्य-मवगम्यते । प्रवर्तकं च कार्यमेवेति तद्गोचरैव शब्दशक्तिर्व्यवहारलिङ्गा-वगतेति फलितमाह—**अत इति** । इष्टसाधनताज्ञानं चिकीर्षाद्वारा प्रवर्त्तकमिति सैव ज्ञायमाना शब्दशक्तिप्रतियोगिनीति शङ्कते—**नन्विति** । किमिष्टसाधनताज्ञानमात्रं प्रवर्तकं किं वा कृतियोग्यतैकार्थसमवेतेषु साधनताज्ञानमिति विकल्प्याद्ये दोषमाह—**अतीतेति** । अतीतग्रहणमनागतादेरुपलक्षणम् । द्वितीयमाशङ्कते—**अथेति**। उक्तविशेषणवदिष्टसाधनता ज्ञाता प्रवृत्तिहेतुरिति कार्यास्पृष्टसिद्धवस्तुनश्शक्तिविषयत्वासिद्धिरिति दूषयति—**तदापीति** । कार्यतैकार्थसमवेतेषु साधनताज्ञानस्य चिकीर्षाहेतुत्वमङ्गीकृत्योक्तम्। इदानीं तदपि दुर्वचमित्याह—**किं चेति**। तदेव दर्शयितुं विकल्पयति—**इष्टसाधनतेति**। अज्ञाते सति कार्ये इष्टसाधनताबोधाच्चिकीर्षेति

---

1. कथ...नवत 2. व्यवहारोहि

ताज्ज्ञानाच्चिकीर्षा कार्ये अज्ञाते जायते, किं वा ज्ञाते? नाद्यः, अज्ञाते कार्ये चिकीर्षायाः असम्भवात्। विषयज्ञानं हीच्छायाः कारणम्। अतस्तदभावे सा न सम्भवेत्। द्वितीये तु कार्यज्ञानं तदनन्तरभाविचिकीर्षाकारणम्। एतेनैतत्परास्तम्। यदाहुः "ममेदं कार्यमिति चिकीर्षैवैषा न कार्यताज्ञानमि"ति।

ननु यथा तत्र गवानयनादिकार्यविशेषव्यवहारावसेयापि शक्तिर्न तं विषयीकरोति, किन्तु कार्यान्वितमात्रं, तथैव कार्यान्वितमपि

---

पक्षं प्रत्याह—**नाद्य इति**। असम्भवमेव साधयति—**विषयज्ञानमिति**। चिकीर्षाऽभीष्टं कार्यं विषयीकरोति, कार्यत्वहीने नभोभक्षणादौ चिकीर्षानुपपत्तेः। विषयज्ञानजन्यत्वं चेच्छाया नियतम्। अतश्चिकीर्षाविषयकार्यज्ञाने चिकीर्षाहेताविष्टे सति नेष्टसाधनतामात्रज्ञानाच्चिकीर्षासिद्धिरित्यर्थः। कार्यज्ञाने समीहितसाधनताबोधाच्चिकीर्षेति पक्षे कार्यवादिनः स्वपक्षसिद्धिरित्याह—**द्वितीये त्विति**। इष्टसाधनताज्ञानं कार्यज्ञाने कारणम्। तच्च चिकीर्षाहेतुरित्यन्वयव्यतिरेकसिद्धम्। तथा च कार्यज्ञानमेव चिकीर्षाद्वारा प्रवृत्तिहेतुरित्यस्मत्पक्षसिद्धिरित्यर्थः। कार्यज्ञानस्य चिकीर्षाहेतुत्ववचनेन मतान्तरं निरस्यति—**एतेनेति**। ममेदं कार्यमितीच्छैवानुभूयते। न तु तदतिरिक्ता बुद्धिः, मानाभावात्। अतो न तद्विषयतया कार्यज्ञानं सिध्येदिति निषेध्यं मतं दर्शयति—**यदाहुरिति**। ममेदं कार्यमिति चिकीर्षा चेदेषैवानुपपद्यमाना स्वकारणतया कार्यविधिमुपस्थापयति—इच्छाज्ञानयोर्जन्यजनकभावात्। न चान्या कार्यधीरनुभूयते। तथा चेदमेव तज्ज्ञानमिति भावः। कार्यज्ञानजन्यचिकीर्षाकार्यव्यवहारलिङ्गावगताऽपि पदशक्तिश्चिकीर्षाकारणीभूतकार्यज्ञानविषयगवानयनादिविशेष न विषयीकरोति। आनन्त्यव्यभिचाराभ्यां विशेषस्य शक्तिविषयत्वानुपपत्तेः। अतः सर्वविशेषानुगतं कार्यान्वितमात्रं शब्दशक्तिर्गोचरयति। तथा कार्यान्वितस्यापि त्यागेन सर्वत्रानुगतमन्वितमर्थमात्रं वा शक्तिविषयो भविष्यतीति सिद्धान्ती शङ्कते—**नन्विति**। योग्यान्विते अन्वितस्यानन्वितस्य च सम्भवादुभयानुगतमेतदेव पदसामर्थ्यप्रयोजकं, कार्येण तस्य विशेषणे गौरवादित्युक्ते अर्थे युक्तिमाह—**युक्तं चेति**।

त्यक्त्वा योग्यान्वितमनन्वितं वा विषयीकरोति। युक्तं चैतल्लाघवादिति। न। यतोऽस्ति विशेषत्यागे हेतुः, विशेषाणामानन्त्याच्छक्तिग्रहासम्भवः। नानुगतकार्यत्यागे हेतुरस्ति। न च लाघवादेव परिग्रहो युक्तः। अतिप्रसङ्गात्। नापि कल्पनागौरवादेव त्यागः। यत आहुः—"[1] प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपी"ति। स्यान्मतम्-'पुत्रस्ते-जात' इति वाक्यश्रवणानन्तरमुखविकासलिङ्गं हर्षमुन्नीय, तत्कारणं च ज्ञानमनन्तरभाविशब्दजन्यं कल्पयतीति सिद्धे व्युत्पत्तिरुपपन्ना। न

---

वैषम्याभिधानेन परिहरति—**न यतोऽस्तीति**। यत्तु लाघवादन्वितमनन्वितं वा वस्तु, शक्तिप्रतियोगीति तत्राह—**न चेति**। लाघवमात्रानुसारेण कार्यान्वितस्य शक्तिप्रतियोगित्वपरिहारश्चेदन्वितमपि त्यक्त्वा स्वरूपमात्रं शक्तिविषयत्वेनोपादेयम्। तस्यान्वितादपि लघीयस्त्वात्। तथा चाभिहितान्वयप्रसङ्गाद्वाक्यार्थप्रतीतेरशाब्दत्वापत्तिरित्याह—**अतिप्रसङ्गादिति**। यदपि कार्येण प्रयोजकविशेषणे गौरवात् कार्यान्वितं न शक्तिप्रतियोगीति तत्राह—**नापीति**। प्रामाणिकं गौरवमदूषणमित्यत्र भट्टसंमतिमाह—**यत इति**। कार्यान्वितस्य शक्तिविषयस्यानुभवतः सिद्धेर्मानसिद्धतेति भावः। शक्तिग्रहणे व्यवहारस्यादिमार्गत्वात्तस्य च कार्यैकगोचरत्वात् कार्ये शक्तिर्न सिद्धे, लिङ्गाभावादित्युक्तम्। तदानीं व्यवहारं विना सिद्धेऽपि सङ्गतिग्रहः सम्भवतीति शङ्कते—**स्यान्मतमिति**। पुत्रजन्मवाक्यश्रवणानन्तरं श्रोतुर्वदनविकसनलिङ्गेन हर्षोत्पत्तिरनुमीयते 'अयं हर्षवान् विकसितवदनत्वात् मद्वदि'ति। स च हर्षः प्रियार्थज्ञानपूर्वकः हर्षत्वान्मदीयहर्षवत्। तस्य च कुतो जन्मेति जिज्ञासायां शब्दानन्तरभावित्वात्तस्य ततो जन्म निश्चीयते। अतो हर्षहेतौ पुत्रजन्मनि सिद्धेऽपि शब्दशक्तिः सिध्यतीत्यर्थः।

ननु वचनात् प्रियार्थप्रतिपत्तावपि न पुत्रजन्मलक्षणवाक्यार्थनिर्णयः। हर्षहेतूनां प्रियासुखप्रसवादीनां बहुलत्वादिति, तत्राह—**न चेति**। प्रकृतेन पुत्रजन्मना प्रत्यक्षेण पुत्रजन्मवाक्यार्थनिर्णयसम्भवे हर्षहेत्वन्तराशङ्कया तदनिर्णये दोषमाह—**अन्यथेति**। प्रत्यक्षदृष्टगवानयनं विना कार्यान्तर-

---

1. 'अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः' इत्युत्तरार्धम्।

च हर्षहेतुबाहुल्यादनिर्णयः। प्रकृतेन निर्णयोपपत्तेः। अन्यथाति-प्रसङ्गादिति। न। प्राप्तप्रियामरणाभावस्यापि हर्षहेतोः प्रकृतत्वात्।

किञ्च प्रयासबहुलेयं व्युत्पत्तिकल्पना। तथाहि—प्रथमं मुखविकासदर्शनम्। ततो हर्षोन्नयनं, पश्चात्तत्कारणज्ञानावधारणं, तदनन्तरं च तस्यप्रकृतत्वेन पुत्रजन्मविषयतानिर्णय इति मन्थरेयं व्युत्पत्तिकल्पना अनायाससिद्धकार्यव्युत्पत्तौ सत्यां न युज्यते।

नन्विह "प्रभिन्नकमलोदरे मधूनि मधुकरः पिबती"ति प्रसिद्धपदसमभिव्याहारादप्रसिद्धे मधुकरपदार्थे व्युत्पत्तिर्लीलालभ्येति।

---

परिज्ञानात् प्रवृत्तिरिति शङ्कायाः सावकाशत्वात् कार्यवाक्यार्थनिर्णयप्राप्तेरित्यर्थः। प्रकृतानामेव हर्षहेतूनां बहुत्वान्नात्र पुत्रजन्मवाक्ये प्रकृतेन निर्णयः संभवतीति परिहरति—**न प्राप्तेति**। अत्र जन्मप्रतिपत्तेर्हर्षहेतुत्वनिश्चयेऽपि न तत्र हर्षहेतौ शक्तिः सिध्यति। तस्य कार्यापेक्षया विलम्बितप्रतिपत्तित्वात्। अतस्तं पश्येदिति वक्तुराभिप्रायिककार्यान्विते पदसामर्थ्यमास्थेयमित्याह—**किं चेति**। प्रत्यक्षतो वदनविकसनमुपलभ्यायं हर्षवान् विकसितवदनत्वादित्यनुमानसमये कार्यपक्षे प्रवृत्तिलिङ्गात् प्रवर्तकज्ञानानुमानमित्यनुमानद्वयस्य यौगपद्यं मत्वाह—**प्रथममिति**। हर्षस्य प्रियार्थप्रतिपत्तिपूर्वकत्वानुमानकाले कार्यपक्षे प्रवर्तकज्ञानस्य कार्यविषयत्वमनुमीयते। विमतं कार्यविषयं प्रवर्तकज्ञानत्वात् मदीयप्रवर्तकज्ञानवदित्यनुमानयोर्यौगपद्यमाह—**पश्चादिति**। पुत्रप्रसवस्य प्रकृतत्वेन प्रियार्थप्रतिपत्तिविषयत्वनिर्धारणावस्थायामितरत्र कार्यज्ञानस्य शब्दानुविधायितया तज्जन्यत्वनिश्चये तत्र तस्य सामर्थ्याधिगतिरित्याह—**तदनन्तरं चेति**। अतो गौरवान्न पुत्रजन्मनि शक्त्यधिगतिः, किं तु कार्यान्विते लाघवादिति फलितमाह—**इति मन्थरेति**। अलसा गुर्वीति यावत्।

सिद्धेऽर्थे सङ्गतिग्रहोपायान्तरमाशङ्कते—**नन्विहेति**। अत्र हि वर्तमानापदेशे मधुकरपदस्य पिबतिपदसाहचर्यात् पानकर्ता प्रतीयते। प्रत्यक्षेण च मधुकरस्य पाने कर्तृत्वमवगम्यते। अतस्तन्निष्ठता मधुकरपदस्य नायाससिद्धेत्यर्थः।

न। विकल्पासहत्वात्। तथाहि—इतरपदार्थेषु किं व्युत्पत्तिः कार्यनिरपेक्षा, तत्सापेक्षा वा, नाद्यः—आद्यव्युत्पत्तेः कार्यनैरपेक्ष्यासम्भवस्य प्रपञ्चितत्वात्। नेतरः इतरपदार्थवत् मधुकरपदार्थेऽपि कार्यान्वयस्यावश्यकल्पनीयत्वात्। अन्यथा व्युत्पत्तिद्वैरूप्यप्रसङ्गात्। [1] कार्यान्विते व्युत्पन्नानामितरपदानां कार्याभावे अबोधकत्वप्रसङ्गाच्च। एतेनोपदेशद्वारापि सिद्धार्थव्युत्पत्तिर्व्याख्याता।

---

उक्तं सिद्धार्थव्युत्पत्तिप्रकारं प्रत्याचष्टे—**न विकल्पेति**। विकल्पासहत्वमेव दर्शयितुं विकल्पयति—**तथा हीति**। मधुकरव्यतिरिक्तेषु मध्वादिषु पदार्थेषु कार्यनिरपेक्षा सङ्गतिरिति पक्षं प्रत्याह—**नाद्य इति**। व्युत्पन्नेतरपदविभक्त्यर्थस्याव्युत्पन्नमधुकरप्रातिपदिकार्थस्य पिबतीति प्रसिद्धार्थपदसमभिव्याहारान्मधुकरपदस्य प्रत्यक्षे मधुपानकर्तरि सङ्गतिरिष्यते। इतरपदार्थेषु च सा कार्यविषयचिकीर्षाजन्यव्यवहारलिङ्गावगम्यैवेति साधितत्वात् कार्यनिरपेक्षशक्तिग्रहायोगात् प्रसिद्धार्थत्वस्यैवासम्भवान्न प्रसिद्धार्थपदसमभिव्याहारेणाप्रसिद्धार्थे कार्यं विना, व्युत्पत्त्युपपत्तिरित्यर्थः। इतरपदार्थेषु कार्यसापेक्षा व्युत्पत्तिरिति कल्पान्तरं दूषयति—**नेतर इति**। मध्वादिपदानां कार्यपरत्वाधिगमोत्तरकालतया समभिव्याहारव्युत्पत्तेर्वर्तमानापदेशेऽपि यः पिबति तं पश्येति कार्यपरत्वमेवेत्यर्थः। मधुकरपदार्थे कार्यानन्वये दोषमाह—**अन्यथेति**। पदार्थान्तरेषु कार्यान्वितेषु व्युत्पत्तिः। मधुकरपदार्थे तु तदनन्विते सेति व्युत्पत्तेरनेकरूपत्वप्रसक्तेः सर्वत्र कार्यान्वयोऽभ्युपगन्तव्यः। तर्हि व्युत्पत्तेरेकरूपत्वप्रसिध्यर्थं सर्वत्रैव कार्यान्वयो मा भूदिति चेत् नेत्याह—**कार्यान्वित इति**। वर्तमानापदेशे कार्याध्याहाराभावे, मधुकरेतरपदानां कार्यान्विते व्युत्पन्नानां कार्यमवधीर्य बोधकत्वानुपपत्तेस्तत्र कार्यमध्याहार्यमिति भावः। गौरयमित्याद्युपदेशद्वारा कार्यमन्तरेणापि सिद्धेऽर्थे व्युत्पत्तिः सिध्येदित्याशङ्क्याह—**एतेनेति**। प्रथमव्युत्पत्तेः कार्यसापेक्षत्वनियमात्तन्निरपेक्षसमभिव्याहारव्युत्पत्तिनिरासेनेति यावत्। प्रमाणमालातः सिद्धेऽर्थे शब्दशक्तिः सिध्यतीत्यशङ्क्याह—**यत्त्विति**।

---

1. कार्याधीनताप्यु।

यत्तु मानं विवादाध्यासितः शब्दव्युत्पत्तिगोचरः प्रमेयत्वात् उभयवादिसिद्धप्रमेयवदिति, तदसत्। कार्यत्वोपाधिहतत्वात्। गवादिव्यक्त्यानैकान्त्याच्च। आकृतिः शब्दार्थ इति हि स्थिताः शब्दार्थविदः।

ननु व्यक्तिरपीदमादिशब्दगोचरः। न। तस्य पुरोदेशादिसंसर्गोपाधिकत्वात्। स तटस्थ एवोपाधिरिति चेन्न। सोऽयं देवदत्त इत्यत्र लक्षणाविरहापत्तेः। यदपि विवादपदानि पदानि न कार्यान्वितस्वार्थे नियतसामर्थ्यानि पदत्वात् कार्यपदवदिति मानं, तदप्यसत्।

---

विवादाध्यासितपदेन सिद्धोऽर्थो निरुच्यते। सोपाधिकत्वेनाऽनुमानं प्रत्यादिशति—**तदसदिति**।

ननु साधनव्याप्तेरभावेऽपि न साध्यव्याप्तिः। व्युत्पत्तिगोचरेऽपि कार्यत्वे कार्यताभावादित्याशङ्क्य दोषान्तरमाह—**गवादीति**। तस्या गवादिपदसंगत्यगोचरत्वेऽपि पदान्तरशक्तिविषयत्वान्न व्यभिचारशङ्केति शङ्कते—**नन्विति**। इदमादिशब्दस्योपाधिविषयत्वान्न व्यक्तिविषयतेति दूषयति—**न तस्येति**। उपाधेर्न शक्तिविषयत्वं तद्विषयव्यक्त्युपलक्षणत्वादिति चोदयति—**स तटस्थ इति**। उपाधेरुपलक्षणत्वे सोयमित्यत्र तदेतद्देशकालयोरशब्दार्थत्वाद्देवदत्तस्वरूपमात्रस्य विधूतोपाधिकस्य शब्दाभ्यां प्रतिपाद्यत्वे सति लक्षणाभावापत्तिरिति उत्तरमाह— **न सोऽयमिति**। सिद्धेऽर्थे पदसामर्थ्यनिरासवत्कार्यान्वितेऽप्यर्थे तत्सामर्थ्यमनुमानबलान्निरसितुं शक्यमित्याशङ्क्याह—**यदपीति**। कार्यपदभागे सिद्धसाध्यत्वनिरासार्थं विवादपदा[नी]त्युक्तम्। कार्यपदव्यतिरिक्तानि पदानीत्यर्थः। न कार्यान्वितस्वार्थसामर्थ्यानीत्युक्ते बाधः स्यात्। योग्येतरत्वेन कार्यानुप्रवेशे तदन्वितस्वार्थे पदसामर्थ्यस्याभ्युपगमात्। अत आह—**नियतेति**। नियमेन कार्यान्वितपराणि न भवन्तीत्यर्थः। कार्यान्वितं[1] न नियमेन शक्तिप्रतियोगीति कार्यवादिनामिष्टमेवेत्यङ्गीकृत्यानुमानं निराचष्टे—**तदपीति**। विवादपदानि नान्विते कार्ये कार्यान्वयान्वयिनि वा शक्तिमन्ति पदत्वात् कार्यपदवदित्याशङ्क्याह—**तदभावेति**। पदानि पक्षीकृत्य कार्यवादापवादतानुमानासम्भवेऽपि कार्यं पक्षीकृत्य तादृग-

---

1. न शक्ति

सिद्धसाधनत्वात् । न हि कार्यान्वितमात्रे सामर्थ्यमाश्रयामः । अपि त्वन्विते कार्ये कार्यान्वयान्वयिनि वा । तदभावानुमाने च दृष्टान्ते साध्यविरहः । कार्यपदस्याप्यन्वितकार्यविषयत्वात् कार्यान्वयान्वयिविषयत्वाद्वा ।

अथ मानं कार्यं न समस्तपदसामर्थ्यप्रतियोगि अन्वयातिरेकित्वात् पदार्थान्तरवदिति, न। अन्वितेन व्यभिचारात् । योग्यान्विते हि सर्वपदानां भवता शक्तिरिष्यते । अतः स्फुटो व्यभिचारः । एवं निष्प्रत्यनीका कार्य एव शक्तिराश्रयणीया । प्रयोगस्तु—विवादाध्यासिता अन्वितकार्यगोचरा कार्यान्वयान्वयवत्गोचरा वा व्यवहारबोध्यत्वात् । यथा परकीयगवानयनज्ञानमिति । विपक्षे चोक्तनीत्या

---

नुमानं भविष्यतीत्याशङ्कते—अथेति । प्रतियोगिशब्दो विषयपरः । कार्यं पदसामर्थ्यप्रतियोगीत्युक्ते बाधः । तस्य कार्यपदसामर्थ्यविषयत्वात् कार्यपदवदित्याशङ्क्याह—समस्तेति । योग्येतरान्वयादन्यत्वादिति हेत्वर्थः । तदन्यत्वं योग्येतरान्वि[1]तेऽपि विद्यते । न च तत्र समस्तपदसामर्थ्यविषयत्वाभाव इति व्यभिचारः । न च योग्येतरान्वयतदन्वि[2]तान्यतरान्यत्वं हेतुः । कार्यस्याप्यन्वितार्थत्वेनासिद्धिप्रसङ्गादित्यभिप्रेत्य दूषयति—नान्वितेनेति । परोदीरितानुमाननिरासफलमभिदधाति—एवमिति । प्रत्यनीकरहिता कार्ये शब्दशक्तिरि[3]त्युक्तं अयुक्तं प्रमाणाभावादित्याशङ्क्याह—प्रयोगस्त्विति । विवादाध्यासितेति शब्दशक्तिरुच्यते । मध्यमवृद्धप्रवृत्त्यनुमितप्रवर्तकप्रत्ययं दृष्टान्तयति—यथेति । हेतोरप्रयोजकत्वं परिहरति—विपक्षे चेति । यदि शब्दशक्तिर्न कार्यं गोचरयति तर्हि "नानुगतकार्यत्यागे हेतुरस्तीत्यादि" नोक्तन्यायेन सिद्धमपि सा न गोचरयेत्ततः शक्यग्रहादगृहीतशक्तिकस्य शब्दस्याबोधकत्वादप्रामाण्यं प्रसरेदित्यर्थः । कार्यपर्यवसायित्वे शक्तितात्पर्ययोः सिद्धयोरन्यथानुपपत्तिः आम्नायस्य कार्यैकनिष्ठत्वं प्रतिष्ठापयतीत्यर्थापत्तिं कथयति—तस्मादिति । सिद्धे वेदो न प्रमाणमित्ययुक्तं, तत्रैव तत्प्रामाण्यस्य प्रामाणिकैरुक्तत्वादित्याशङ्क्याह—यदपीति । कार्यसंसृष्टतया सिद्धेऽपि परैः

---

1. अन्वये 2. भ्याहृगमत्वं 3. रित्युक्तं

**व्युत्पत्तिविरहाच्छब्दप्रामाण्यविरहो बाधः। दूषणान्तरविरहस्त्वतिरोहित एव। तस्माच्छब्दशक्तितात्पर्यान्यथानुपपत्त्या कार्ये वेदः प्रमाणं, न सिद्ध इति निश्चीयते। यदपि वेदः सिद्ध एवार्थे प्रमाणं। प्रमाणत्वात् अक्षवदित्यनुमानं, तत्राग्निर्हिमस्य भेषजमिति भागे बाधोऽसिद्धिश्च। विवादगोचरो धर्मीति चेत् तदापि मन्त्रभागे असिद्धिः। मन्त्रोऽपि हि कोऽपि धर्मी। स हि भवतां देवताधिकरणन्यायेन प्रमाणम्। अस्माकं चाप्रमाणम्। अतो विवादगोचरत्वात् मन्त्रोऽपि धर्मी तत्रासिद्धिश्च हेतोः। न चात्र विपक्षे बाधः कश्चित्। अतो यत्किञ्चिदेतदिति।**

---

शब्दप्रामाण्याङ्गीकारात् सिद्धसाध्यतां परिहर्तुमवधारणम्। वेदमात्रस्य वा धर्मित्वं, तद्विशेषस्य वेति विकल्प्याद्ये दोषमाह—**तत्रेति**। "अग्निर्हिमस्ये"त्यादिवाक्यस्य प्रत्यक्षादिसिद्धार्थतया देवताधिकरणन्यायाविषयत्वादित्यर्थः।

द्वितीयमनुभाष्य दूषयति—**विवादेत्यादिना**। भागासिद्धिमापादयितुं भूमिकामारचयति **मन्त्रोऽपीति**। स्व[1]सम्प्रतिपन्नं प्रमाणादितरत्वं सूचयति **कोऽपीति**। "तदुपर्यपि बादरायणः सम्भवादि"ति देवताधिकरणम्। तत्रान्यपराणामपि मंत्रादीनां मानान्तरसंवादविसंवादयोरसतोः स्वार्थेऽपि मानत्वन्यायः, तदनुसारेण स्वार्थे मन्त्रस्य त्वन्मते मानत्वमस्तीत्याह—**स हीति**। भवतामितिविशेषणपरिसूचितमर्थं कथयति—**अस्माकं चेति**। मन्त्रस्य धर्मित्वं निगमयति—**अत इति**। फलितं दूषणमाह तत्रेति। चशब्देन यजेत दद्यात् जुहुयादित्यादौ बाधोऽवधेयः। "सन्ध्यामुपासीते"त्यादिश्रुत्या व्यभिचारश्च निश्चेतव्यः। सिद्ध एव प्रमाणमिति नियमाभावे दोषाभावादप्रयोजको हेतुरिति दोषान्तरमाह—**न चेति**। प्रमाणत्वानुपपत्तिर्बाधिकेत्याशङ्क्याज्ञातज्ञापकत्वमात्रेण तदुपपत्तिरिति मत्वाह—**अत इति**। [इति] शब्देन पूर्वपक्षमुपसंहृत्य सिद्धान्तयति—**अत्रेति**। किं तात्पर्यस्य कार्यपर्यवसायित्वादाम्नायस्य कार्यैकनिष्ठत्वं, किंवा तत्रैव शब्दशक्तेर्भावादिति विकल्प्याद्यं

---

1. संप्रतिपन्न

कार्यशक्तिवाद्युक्तयुक्तिनिरकरणपूर्वकं उत्तरपक्षप्रारंभः

अत्रोच्यते—न तावत्तात्पर्यं कार्य एवेति शब्दस्य निश्चयः सम्भवी। तद्धेत्वसम्भवात्। नन्वित्थंभावः प्रयोजनबलात् कल्प्यते। दृश्यते हि 'कटस्त्वया कर्तव्यः' 'ग्रामो गन्तव्यः' इत्यादेरेव वाक्यस्य प्रयोजनवत्त्वं, न। 'पुत्रस्ते जातः' 'दिष्ट्या वर्धसे' चिरं जीव 'उरुकल्याण हतास्तेपरिपन्थिनः' इत्यादेः प्रियाख्यानस्यापि प्रयोजनवत्त्वदर्शनात्। अकार्येऽपि च भोजनाभावे परं 'विषंभुङ्क्ष्वे'ति तात्पर्यमाप्तवाक्यस्य प्रसिद्धम्। कर्ममीमांसासूत्रभाष्यवशात् कार्यं एव तात्पर्यं, वेदस्य तत्परस्यैवार्थवत्त्वं च निश्चीयत इति चेन्नैवम्। ब्रह्ममीमांसासूत्रभाष्यविरोधात्। ब्रह्मण्येवोपनिषत्समन्वयं "तत्तु समन्वयादि"ति सूत्रयामास भगवान् वेदव्यासः। तदनुसारि च श्री-

---

प्रत्याह—**न तावदिति**। कार्य एव तात्पर्यं वेदस्येति निश्चये कथं हेत्वभाववचनमित्याशङ्क्य प्रयोजनबलादर्थनिश्चयः, आप्तवाक्यसामर्थ्याद्वा, अनुमानवशाद्वेति विकल्प्य प्रथममुत्थापयति—**नन्विति**। प्रयोजनानुसारि हि तात्पर्यं, "पुरुषार्थेऽपूर्वे तदि"ति अभ्युपगमात्। कार्यनिष्ठस्य च वाक्यस्य प्रयोजनवत्त्वं प्रतीयते। तेन तत्रैव वाक्यस्य तात्पर्यमिति स्फुटयति—**दृश्यते हीति**। कार्यनिष्ठवाक्यस्य प्रयोजनवत्त्वेऽपि तस्यैव प्रयोजनवत्त्वमिति न नियन्तुं शक्यम्। अकार्यनिष्ठस्यापि वाक्यस्य तद्वत्त्वप्रतीतेः। अतो न फलबलात्कार्ये वाक्यतात्पर्यं निर्धारयितुमुचितमिति परिहरति—**न पुत्र इति**। इतोऽपि कार्यैकनिष्ठत्वं वाक्यतात्पर्यस्य न सिध्यतीत्याह—**अकार्येऽपीति**। द्वितीयमाशङ्कते—**कर्ममीमांसेति**। आप्तवाक्यमाप्तवाक्यान्तरेण विरुद्धं, न भवदभिमतमर्थं व्यवस्थापयतीति परिहरति—**मैवमिति**। "आम्नायस्य क्रियार्थत्वादि"त्यादिसूत्रस्य कार्यपरो वेदः सर्वोऽपीति साधयतो ब्रह्ममीमांसासूत्रविरुद्धता कथमित्याशङ्क्याह—**ब्रह्मण्येवेति**। तद्ब्रह्म, वेदान्तेभ्योऽवगम्यते, तस्मिन्नस्पृष्टकार्ये तेषां सम्यगन्वयात्। सम्यक्त्वं चास्यापुनरुक्तानेकपदानामेकरसप्रातिपदिकार्थमात्रपर्यवसायित्वमिति सूत्राक्षरार्थः। तथापि कथं "दृष्टोऽप्यस्यार्थः धर्मावबोधन"मित्यादिभाष्यस्य कार्यैकनिष्ठत्वं वेदमात्रस्य प्रतिष्ठापयतो भाष्यान्तरविरुद्धत्वं तत्राह—**तदनुसारि चेति**। तत् किमिदानीं कर्ममीमांसासूत्रभाष्ययो-

मच्छारीरकभाष्यं प्रसिद्धम् । तस्मात् कर्मप्रकरणगतानामेव "सोऽरोदीदि"त्यादिवाक्यानां कर्मपरताम[1]सुसूचज्जैमिनिराचार्यः । इत्थमेव भाष्यकारोऽपि बभाषे । अन्यथा कथमात्मविचारे ज्योतिर्ब्राह्मणं मैत्रीयीब्राह्मणं चात्र प्रमाणमित्याह स्म । तस्मान्न युक्तं सर्वो वेदः कार्यपर्यवसायीति ।

ननु विवादपदं कार्यपरं वेदत्वात्, संप्रतिपन्नवदित्यनुमानात्तथात्वमध्यवसीयते । न । भाष्यवचनविरोधात् । उक्तं हि तद्वचनं 'ज्योतिर्ब्राह्मणमि'त्यादि । ब्रह्मपरतालिङ्गविरोधाच्च । तथाहि—"सदेव सोम्येद"मिति ब्रह्मणा उपक्रम्य "तद्धास्य विजज्ञा" विति ब्रह्मणैवोपसंहरति । तथा च 'तत्त्वमसी'ति नवधाऽभ्यासादिकं लिङ्गान्तरं

---

रदूष्ययोरेव परित्यागमभिलषसि नेत्याह—**तस्मादिति**। कर्ममीमांसासूत्रभाष्ययोर्वेदैकदेशविषयत्वेन सङ्कोचनमनभ्युपगन्तुरनिष्टमाचष्टे—**अन्यथेति**। द्वितीयविकल्पदूषणमुपसंहरति—**तस्मादिति**। यस्मादाप्तवाक्यान्तरेण स्वकीयभाष्यवाक्येन च विरोधः तस्मादाप्तवाक्यवशान्न वेदमात्रस्य कार्यपरत्वाशङ्केत्यर्थः। तृतीयमवलम्बते—**नन्विति**। विवादपदमित्युपनिषद्वाक्यमुच्यते। **तथात्वं** कार्य एव वेदमात्रस्य तात्पर्यमित्यर्थः। उपनिषदां कार्यपरत्वानुमानं शबरभाष्यविरुद्धमिति सिद्धान्ती परिहरति—**न भाष्येति**। किञ्च तासां ब्रह्मपरत्वाभावे तत्परत्वप्रत्यायकषड्विधलिङ्गविरुद्धं भवदनुमानं नाभिप्रेतं प्रसाधयितुं प्रभवतीत्याह—**ब्रह्मेति**। ब्रह्मपरलिङ्गानि छान्दोग्यगतान्युदाहरति—**तथा हीत्यादिना**। तद्ब्रह्म, अस्य पितुर्वचनाद्विज्ञातवान् किल श्वेतकेतुरित्यर्थः। अभ्यासादीत्यादिग्रहणेनापूर्वताफलार्थवादोपपत्तयो गृह्यन्ते। न हि ब्रह्मात्मत्वं प्रत्यक्षादिना गम्यते। रूपादिहीनत्वेन तदयोग्यत्वात्। "आचार्यवानि"त्यादिना च तद्वेदनस्य कैवल्यं फलमभिलप्यते। "अनेन जीवेनात्मने" त्यादिरर्थवादः। "यथा सोम्यैकेन मृत्पिण्डेने"त्याद्योपपत्तिः। एवं वेदान्तान्तरेष्वपि ब्रह्मात्मपरत्वलिङ्गानि षड्विधान्यधिगन्तव्यानि। अतस्तद्विरुद्धं त्वदनुमानमप्रमाणमित्यर्थः। किंच प्रतिषेधवाक्ये वेदत्वमस्ति न तु कार्यपरत्वम्। तथा चानैका-

---

1. असूसुचत्

वेदान्तस्य ब्रह्मपरत्वे स्पष्टम् । "ब्राह्मणो न हन्तव्य इत्यनेन व्यभिचाराच्च। इदमपि वाक्यं संकल्पकार्यतापरं, यथा 'नेक्षेतोद्यन्तमादित्य"-मिति चेन्न। युक्तं ह्यनीक्षणवाक्यस्य कर्तव्यतापरत्वं प्रजापतिव्रत-प्रकरणात् न तथेह किंचिद्गमकमस्ति। न च तथात्वं कल्पयितुं युक्तम्। हननस्य प्राप्तेष्टसाधनताविपर्ययबोधेन वाक्यस्य चरितार्थ-त्वात्। अस्तु तर्हि तदन्यत्वे सतीति विशेषणमिति चेन्न त्वत्पक्षे व्यर्थत्वात्। न चात्र विपक्षे बाधः कश्चित्। तस्मान्न कार्यपरता सर्व-वेदस्येति स्थितम्।

## पदानां कार्यबोधकत्वनिराकरणं

नापि शब्दशक्तिरपि कार्य एव सम्भविनी। तथाहि—यद्यपि

---

न्तिकत्वादप्रामाण्यमुक्तानुमानस्येत्याह—**ब्राह्मण इति**। अनीक्षणवाक्यस्य सङ्कल्परूपकार्यत्वपरत्ववदस्यापि संकल्पकार्यपरत्वान्न व्यभिचारशङ्केति शङ्कते—**इदमपीति**। प्रकरणादनीक्षणवाक्यस्य कार्यपरत्वं युक्तम्। अहननवाक्यस्य तु मानाभावान्न कार्यपरत्वमिति परिहरति—**न युक्तमिति**। अथापि कार्यपर-त्वमस्य कल्प्यमित्याशङ्क्य कल्पकाभावान्नैवमित्याह—**न चेति**। लिङादि-प्रत्ययः स्वभावेन प्रकृत्यर्थस्येष्टसाधनत्वमभिधत्ते। निषेधान्वितेन च तेन प्रकृत्यर्थस्य समीहितोपायत्वाभावोऽवगम्यते। तथा च प्रवृत्तिहेत्वपेक्षितेष्टोपा-यत्वाभाव[ज्ञाना]देव प्रसक्तक्रियानिवृत्तेर्वाक्यस्यौदासीन्ये पर्यवसानात्तदवस्था व्यभिचारशङ्केत्यर्थः। व्यभिचारनिरासार्थं, निषेधवाक्यान्यत्वे सति वेदत्वादिति विशेषणमाश्रित्य शङ्कते—**अस्तु तर्हीति**। मीमांसकसमये निषेधवाक्यमपि विधिवाक्यवत्कार्यपरमित्यभ्युपगमाद्विशेषणवैयर्थ्यमित्युत्तरमाह—**न त्वत्पक्ष इति**। उपनिषदां वेदत्वेऽपि कार्यपरत्वाभावे बाधकाभावादप्रयोजकत्वं वेदत्व-हेतोरिति दोषान्तरमाह—**न चेति**। वेदत्वानुपपत्तिस्तु कर्मवाक्येष्वपि तुल्या। तेषां ब्रह्मपरत्वाभावेनावेदत्वस्य सुवचत्वात् प्रसिद्धिविरोधस्य तुल्य-त्वादिति भावः। कार्य एव तात्पर्यं वेदस्येत्यत्र हेत्वभावं प्रतिपाद्य फलितमुपसंहरति—**तस्मान्नेति**। कल्पान्तरं निरस्यति—**नापीति**। कार्य-

व्यवहारः शक्तिग्रहहेतुः, तथापि योग्यान्वितेऽनन्विते वा शक्तिर्निश्चीयते। गवानयादिविशेषान्वयवत् कार्यान्वयस्यापि त्याज्यत्वात्।

ननु कार्यज्ञानजन्यचिकीर्षासाध्यप्रवृत्तिनिमित्ता व्युत्पत्तिः कथं कार्यं जह्यात्। इत्थं—यद्यपि कार्यविषयिणी इच्छा चिकीर्षा, तथापि नासौ कार्यज्ञानजन्या। कार्यस्य दुःखहेतुत्वात्। कार्यं हि जनयन्ति श्राम्यन्ति करणानीति तद्दुःखोपजनकारणं प्रसिद्धम्। अत एवेदं

---

विषयत्वेन शब्दशक्तेर्नियमाभावं साधयति—तथा हीति। मध्यमवृद्धव्यवहारस्य शक्तिग्रहहेतुत्वात्तस्य च कार्यैकगोचरत्वात्तत्रैव शक्तिरिति नियमसिद्धिरित्याशङ्क्य व्यवहारस्य शक्तिग्रहहेतुत्वमङ्गीकरोति—यद्यपीति।

यत्तु कार्यविषयत्वं शब्दशक्तेर्नियम्यते तन्निरस्यति—तथापीति। अन्विताभिधानमभिहितान्वयश्चेति मतभेदेन विकल्पः। यद्यपि योग्यान्विते शक्तिः। तथापि योग्यकार्यान्विते सेत्यङ्गीकर्तव्यम्। अनुगतकार्यत्यागे हेत्वभावादित्याशङ्क्याह—गवानयनादीति। आनन्त्याननुगमाभ्यां विशेषान्वयस्य शक्त्यविषयत्ववत् कार्यमात्रान्वयस्यापि गौरवादेव तदविषयत्वम्। अतो योग्यान्विते शक्तिर्युक्तिमतीत्यर्थः। कार्यज्ञानकारणकचिकीर्षाकार्यव्यवहा[1]रावसेया शक्तिर्न कार्यान्वयं हातुमुत्सहते, तल्लिङ्गप्रवृत्तेः कार्यनियमात्। न च व्यवहाराभावे व्युत्पत्त्युपपत्तिः। अतो गौरवमदूषणं प्रामाणिकत्वादिति चोदयति—नन्विति। शक्तेः कार्यविषयत्वाभावप्रकारं प्रतिजानीते—इत्थमिति। चिकीर्षा हि कार्यं विषयीकरोति, तज्जन्यव्यवहारसाध्या च व्युत्पत्तिः। सा कथं न कार्यं गोचरयेदित्युक्तमाशङ्क्य कार्यविषयत्वं चिकीर्षायाः स्वीकरोति यद्यपीति। तर्हि कार्यविषयज्ञानजन्यत्वात् कार्यज्ञानेन तद्विषयचिकीर्षोदयात् तज्जन्यप्रवृत्तिकृतव्युत्पत्तेस्तदवस्थं कार्यविषयत्वमित्याशंक्याह—तथापीति। दुःखहेतुज्ञानाच्चिकीर्षानुपपत्तेः अहिकण्टकादिज्ञानात्तददर्शनादिति हेतुमाह—कार्यस्येति। तदेव साधयति—कार्यं हीति। कार्यस्य दुःखहेतुत्वं भगवतापि अनुवादव्याजेन व्याहृतमित्याह—अत एवेति। कार्यविषया चिकीर्षा तज्ज्ञानाजन्या चेत् कथमिच्छाया विषयज्ञानजन्यत्वनियतिरित्याशङ्क्य चिकीर्षायाः कार्यविषयत्वाङ्गीकारं

---

1. रासीना

भगवताप्यनूद्यते "[1]दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेदि"ति। किञ्च हितं हितसाधनं चेच्छागोचर इति प्रसिद्धम्, अनुभवसिद्धश्च। तथाच न्यायवार्तिकं "फलस्यप्रयोजकत्वादि"ति। तत इष्टसाधनत्वमेव प्रवर्तकम्। कृतिसाध्यत्वैकार्थसमवायित्वं तूपलक्षणमिति नातीतेष्टसाधनत्वादिना व्यभिचारः। नापि कृतिसाध्यतायाः प्रवर्तकता। अस्तु वा कार्यमेव प्रवर्तकम्।

तथापि न कार्यान्विते सर्वपदानां व्युत्पत्तिस्सम्भविनी। कार्यपदस्य तदसम्भवात्। कार्ये कार्यान्वयासम्भवात्। अन्विते कार्ये सर्वपदानां व्युत्पत्तिरिति चेन्न। सर्वपदानां पर्यायत्वप्रसङ्गात्। यथा तेऽन्यान्वितस्वार्थस्य सर्वपदशक्तिविषयत्वेप्यऽपर्यायता, एवमितरान्वि-

---

परित्यजति—किं चेति। अनुभवप्रसिद्धिभ्यां सिद्धमर्थमुद्योतकराचार्यवचनेन द्रढयति—तथा चेति। फलस्येच्छां प्रति साक्षाद्वा साधनव्यवधानेन वा हेतुत्वात्तयोरन्यतरस्येच्छाविषयत्वं, नार्थान्तरस्येति वार्तिकार्थः। इच्छायाः तत्तदुपा[2]यान्यतरविषयत्वे फलितमाह—तत इति।

ननु भूतादौ व्यभिचारान्न हितसाधनस्य प्रवर्तकत्वं कृतियोग्यत्वेन विशेषणे तस्यैव प्राप्ताप्राप्तविवेकेन प्रवर्तकत्वप्रसक्तिरित्युक्तं तत्राह—कृतीति। कार्यस्य प्रवर्तकत्वनियमनिरासेन कार्यान्विते शब्दशक्तिरपाकृता। सम्प्रति कार्यस्य प्रवर्तकत्वमङ्गीकरोति—अस्तु वेति। तर्हि तस्य शक्तिविषयत्वमपि स्वीकर्तव्यमित्याशङ्क्याह—तथापीति। किं कार्यान्विते शक्तिः, किंवान्विते कार्ये, [3]कार्यान्वयान्वयिनि वेति विकल्प्य प्रथमं प्रत्याह—न कार्येति। द्वितीयमुत्थाप्य दूषयति—अन्वित इत्यादिना। सर्वपदानामन्वितकार्यविषयत्वेऽपि न पर्यायतेति दृष्टान्तेन शङ्कते—यथेति। परिहरति—न वैषम्यादिति। वैषम्यमेव दर्शयति—इतरत्रेति। योग्येतरान्वयस्यैकत्वेऽपि तदन्वितशक्तिविषयार्थानां भेदादस्मत्पक्षे नास्ति पदानां पर्यायता। भवत्पक्षे तु शक्तिविषयकार्यस्यैकत्वात्पर्यायत्वं दुर्वारमित्यर्थः। प्रकारान्तरेण पर्यायत्वपरि[4]हारमाशङ्कते—

---

1. 'स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्' इत्युत्तरार्धम्। 2. दुपायान्तर
3. कार्यान्वयिनि 4. परिहार

तकार्यशक्तिपक्षेऽपीति चेन्न । वैषम्यात् । इतरत्र हि स्वार्थानां भेदाद-पर्यायता । न चैवं ते कार्यस्य भेदोऽस्ति । कार्यस्यैकत्वेऽपि गवाद्यर्थभेदादपर्यायतेति चेन्न । तस्यापदार्थत्वात् । अथ तस्योप-सर्जनत्वेन पदार्थता । न कार्यपदस्यानन्तार्थत्वप्रसङ्गात् ।

स्यान्मतम्—कार्यान्वयान्विते पदानां शक्तिर्निश्चीयते । न च कार्ये तदसम्भवः । कार्यतदितरान्वयस्योभयनिष्ठत्वादिति चेत्, न । कार्यान्वयस्य कार्ये असम्भवात् । तथाहि—किं कार्यं विशेषणमन्व-यस्य, किं चोपलक्षणम् । नाद्यः—अन्वयस्य कार्यविशिष्टस्य कार्यान्वये सति कार्यस्य सम्बन्धद्वयप्रसङ्गात् । युगपच्च कार्यान्वययोर्विशेषणता विशेष्यता चाऽऽपद्येत । न चैतत्सर्वमुपपन्नम् । अलौकिकत्वात् । तत्कल्पने चातिप्रसङ्गात् । तदेवं न कार्यं विशेषणमन्वयस्य । नापि

---

**कार्यस्येति** । प्राधान्येन गवादेः पदार्थत्वं गुणभावेन वेति वक्तव्यम् । नाद्य इत्याह—**न तस्येति** । अन्यथा गवादेरकार्यत्वादन्विते कार्ये शक्तिरिति पक्षा-सिद्धिरिति भावः । कल्पान्तरमादत्ते—**अथेति** । गवाद्यर्थस्य कार्यं प्रति गुणत्वेन शक्तिविषयत्वे गुणभूतार्थस्यानन्तत्वादन्वितकार्यविषयपदस्यानन्तार्थता, अनन्ता-र्थान्वितकार्यस्यानन्तत्वाच्च तद्विषयलिङादेरनन्तार्थत्वमिति दूषयति—**न कार्यपदस्येति** । कल्पान्तरमाशङ्कते—**स्यान्मतमिति** । कार्ये कार्यान्वया-भावात् कार्यपदस्योक्तप्रयोजकव्यभिचारमाशङ्क्याह—**न चेति** । कार्यपदस्यो-क्तप्रयोजकाभावेन शक्तिग्रहानुपपत्तिरित्युत्तरमाह—**न कार्यान्वयस्येति** । असम्भवमभिधित्समानो विकल्पयति—**तथा हीति** । कार्यमन्वयस्य विशेषण-मिति पक्षं प्रतिक्षिपति—**नाद्य इति** । कार्येण विशेषितान्वयस्य पुनः कार्येणा-न्वये प्रथमतो विशेषणतया कार्यस्यान्वयेन सम्बन्धः पश्चाद्विशेष्यतया तस्य तेन सम्बन्ध इति सम्बन्धद्वयप्रसक्तेर्विशेषणपक्षानुपपत्तिरित्यर्थः । विशेषणपक्षे दोषा-न्तरमाह—**युगपच्चेति** । उभयमप्यस्तु को दोष इत्यत आह—**न चेति** । अलौकि-ककल्पने कल्पनाया निरङ्कुशत्वादधर्मस्यापि धर्मवदभ्युदयहेतुत्वप्रसक्तिरित्याह—**तत्कल्पने चेति** । प्रथमपक्षदूषणं निगमयति—**तदेवमिति** । उपलक्षणपक्षं दूषयति—**नापीति** । विशेषणस्यैव क्रियासम्बन्धित्वनियमात् कार्यस्य च

द्वितीयः कल्पः, अकार्यस्य शक्तिगोचरत्वप्रसङ्गात्। तस्माद्व्यवहारावसेया नामपदानां शक्तिः न कार्यसङ्कन्विकनीनिकयापि स्पृशति। सति चैवं कार्यव्युत्पत्त्यनुमानं कार्यपदस्य व्युत्पत्त्यसम्भवप्रसङ्गबाधात्, विपक्षे बाधकतर्काभावाच्च शङ्किताप्रयोजकम्। मुखविकासादिव्यवहारगम्य-हर्षादिना चानैकान्तम्। अतो न सर्वपदानां कार्यशक्तिर्न्याय्या। प्रयोगस्तु--विवादपदानि पदानि नान्विते कार्ये शक्तिमन्ति विधि-पदेतरत्वात् मन्त्रवत्। तथा न कार्यान्वयान्वयिनि शक्तिमन्ति पदत्वात् कार्यपदवदिति। विपक्षे सर्वपदानां पर्यायत्वप्रसङ्गः।

---

विशेषणत्वाभावात् अन्वयवत एव शक्तिगोचरत्वं न तु कार्यस्येत्यर्थः। कार्यस्य विशेषणोपलक्षणानुगतान्वयव्यावर्तकत्वमात्राङ्गीकारेऽपि न कार्यान्वया-न्वयिनि शक्तिसिद्धिः। अन्वितमात्रस्य प्रयोजकत्वसम्भवे कार्यान्वयान्वयिनीति वक्रिमोक्तेरकिञ्चित्करत्वादित्यभिप्रेत्य कार्यस्य प्रवर्तकत्वेऽपि शक्त्यविषयत्वमुप-पादितमुपसंहरति--**तस्मादिति**। व्यवहारावसेयत्वहेतुना कार्यस्य शक्तिविष-यत्वमनुमितमधस्तात्। तत्कथमनुमाने जाग्रति कार्यस्य शक्तिविषय [त्वत्याग इ] त्याशङ्क्याह--**सति चेति**। कार्यान्वयान्वयिगोचरा शक्तिरिति साधने लिङा-दिपदस्य पदान्तरस्य च व्युत्पत्त्यसम्भवः, गौरवप्रसङ्गात्। अन्वितकार्यविषय-शक्तिसाधने पर्यायत्वापत्तेर्न शक्तेरुपपत्तिः। सिद्धबोधकत्वेनापि शब्दप्रामा-ण्यात्। विपक्षे बाधकाभावात्। तथा चाप्रयोजको व्यवहारावसेयत्वहेतुरिति भावः। तस्यैव हेतोर्दोषान्तरमाह--**मुखेति**। परकी[1]यानुमानासम्भवे सिद्धमर्थं कथयति--**अतो नेति**। उक्ततर्कानुग्राह्यं प्रमाणमाह--**प्रयोगस्त्विति**। सिद्धार्थवादिनापि विधिपदानां योग्यान्विते कार्ये शक्त्यङ्गीकारात भागे बाधः। तं निरसितुं--**विवादपदानीति** पदम्। विधिपदेतराणि पदानीति यावत्। असंसृष्टे कार्ये शक्तिरन्विताभिधानवादिना नेष्यते। अतः सिद्धसाध्यत्वम्। तदुद्धर्तुं विशिनष्टि--**अन्वित इति**। न चान्विते कार्ये मन्त्रपदानामपि शक्तिरिति दृष्टान्तस्य साध्यविकलता। तेभ्यो देवताधिकरणन्यायेनाकार्ये[2] प्रत्ययात्तस्य च शक्त्यधीनत्वतात्पर्यात्प्रयोगसमवेतार्थतेति द्रष्टव्यम्।

---

1. परकीयाना 2. प्रया

**उक्तनीया कार्यपदस्य व्युत्पत्त्यसम्भवप्रसङ्गश्च बाधः। दूषणान्तरविरहे त्वविवाद एव। एवं च सति 'पुत्रस्तेजात' इत्यत्र सिद्धार्थव्युत्पत्तौ नानुपपत्तिः। न च हर्षहेतुबाहुल्यादनिर्णयः। प्रकृतेन निर्णयोपपत्तेः। अन्यथातिप्रसङ्गात्। प्राप्तप्रियामरणाभावोक्तिसम्भवेऽप्यसौ "पुत्रस्ते-गच्छतीति साङ्गुलिप्रसारणव्यपदेशात् पश्चान्निर्णयः। अन्यथा प्रवृत्त्या कार्येऽपि व्युत्पत्तिर्न स्यात्। कार्यविवेकाग्रहादपि प्रवृत्तिसम्भवात्।**

---

अथास्मिन्प्रयोगे सिद्धसाध्यता कार्यान्वयान्वयिनि पदानां शक्तिमत्त्वाभ्युपगमादित्याशङ्क्याह—**तथेति**। कार्यस्य योग्यत्वेन कारकान्वये तदन्वयित्वस्य सिद्धेऽपि सिद्धेस्तत्र च पदशक्तिस्वीकारात्प्रतिज्ञा बाधितेति चेन्न। कार्यस्य योग्यत्वेनान्वयेऽपि कार्यत्वस्य प्रयोजकानन्तर्भावात्, अन्तर्भावे च गौरवात्। न च दृष्टान्तस्य साध्यविकलता। प्रयोजकैक्यलाभार्थमन्विते कार्ये कार्यपदस्यापि शक्तेर्वक्तव्यत्वात्। न च कार्यान्वयान्वयित्वमनुगतं प्रयोजकं तस्य गौरवपराहतत्वादिति भावः। विधिपदेतरत्वहेतोरप्रयोजकत्वं निरस्यति—**विपक्ष इति**। पदत्वहेतोरप्रयोजकत्वं प्रत्याचष्टे—**उक्तेति**। गौरवप्रसङ्गेनेति यावत्। कार्यस्य सर्वपदशक्त्यविषयत्वे शक्तिरेवानुपपन्ना। तथा च शब्दप्रामाण्यप्रहतिरित्याशङ्क्याह—**दूषणान्तरेति**। वक्ष्यमाणन्यायेन सिद्धेऽपि शब्दशक्तिसम्भवादकार्यवादेऽपि शब्दप्रामाण्यमुपपन्नमिति भावः। कथं पुनः सिद्धे शब्दशक्तिमाश्रित्याकार्यवादिना शब्दप्रामाण्यं प्रतिपाद्यते तत्राह—**एवं चेति**। कार्यस्य समस्तपदशक्त्यविषयत्वे सतीति यावत्।

ननु प्रकृतहर्षहेतुबाहुल्यादयमेव पुत्रजन्माख्यो हर्षहेतुरनेनाबोधीत्यनिर्धारितत्वात्कुतः सिद्धार्थव्युत्पत्त्युपपत्तिः। अत आह—**न चेति**। प्रकृतेन सुतप्रसूतिसाक्षात्कारेण वा तन्नियतकुङ्कुमाङ्कितसुतपादावलिप्तपटवासोदर्शनादिलिङ्गावगमेन वा पुत्रजन्मैव हर्षकारणं शब्दबोधितमिति निर्णयसम्भवेऽपि तदभावशङ्कायां कार्यवाक्ये गोदण्डानयनाद्यनेकविधकार्याधिगतेरिदमेव कार्यमनेन बोधितमिति निर्धारणासम्भवेन तत्रापि सम्बन्धाध्यवसायासिद्धिरित्याह--**अन्यथेति**। पुत्रजन्मवत् प्रियामरणाभावस्यापि साक्षात्कृतत्वात्तस्यापि वार्ताहरव्याहारविषयत्वसम्भवेनानिर्णयतादवस्थ्यमाशङ्क्य, तात्कालिकसंशयेऽपि निर्णयोप-

न च शिशुजन्मवत्प्राप्तप्रियामरणाभावोऽस्य निरपेक्षोऽवसीयते । प्राप्तप्रतीतिसापेक्षत्वात् । सा च प्रसवान्तरस्य मरणहेतुत्वान्वयापेक्षेत्यतः शिशुजन्मैव झटिति बुद्धिस्थम् । उपजीव्यत्वाच्च पुरःस्फूर्तिकं हर्षकारणं कल्पयितुं युक्तम् । एवं चोपदेशप्रसिद्धपदसमभिव्याहाराभ्यामपि सिद्धे शक्तिर्लीलालभ्यैव । तदयं प्रयोगः—विवादाध्यासिता आकृतिः कार्यनिरपेक्षा शब्दशक्तिगोचरः आकृतित्वात् यथा कार्यत्वमिति । न

---

पत्तिरित्याह—प्राप्तेति । [1]यस्तु हर्षहेत्वन्तराशङ्कायां दुर्वारत्वान्न सिद्धे व्युत्पत्तिरिति मन्यते तं प्रत्याह—अन्यथेति । कार्यज्ञानस्य प्रवर्तकत्वनियमात् प्रवृत्तिदर्शने तत्र व्युत्पत्तिः सुकरेत्याशङ्क्याह—कार्येति । तथा च कार्यवादे प्रवर्तके कार्ये शब्दप्रामाण्याभिप्रायो न युक्तिमानित्यभिप्रायः । किं च सापेक्षनिरपेक्षयोः निरपेक्षमेव पुरः स्फुरति, प्राप्तप्रियामरणाभावश्च प्रतियोगितन्मरणप्राप्तिप्रतीतिसापेक्षो न, प्रथमं प्रथामास्कन्देदिति प्राप्तप्रियामरणाभावोक्तिसम्भवेऽपीत्यपिना सूचितामरुचिमादर्शयति—न चेति ।

अस्तु तर्हि सुतप्रसूतिप्रतिपत्तेः प्रागेव प्रियामरणप्राप्तिप्रतीतिपूर्विका तदभावप्रतिपत्तिः, तथा च वाक्यार्थनिर्णयासिद्धिरिति, तत्राह-सा चेति । या प्रतियोगिप्रियामारणप्राप्तिः सापि न प्रथमं प्रथेत । प्रसवान्तरस्य मरणहेतुतापरामर्शाधीनत्वादित्यर्थः । पुत्रजन्मापि कथं प्रथमं स्फुरेदित्यत आह—इत्यत इति । किं च पुत्रजन्मना प्रियामरणे प्राप्ते तदभावो वाच्यः । अतस्तस्य पुत्रजन्मोपजीवित्वादुपजीव्यपुत्रप्रसवस्य पुरःस्फूर्तिकत्वाद्वाक्यार्थनिर्धारणसिद्धिरित्याह—उपजीव्यत्वाच्चेति । किं च "पुत्रोत्पत्तिविपत्तिभ्यां न परं सुखदुःखयोः" इति वचनादेतत्तुल्यहर्षहेत्वभावात् पुत्रजन्मनैव हर्षहेतुना वाक्यार्थनिश्चयो युक्तिमानित्याह—हर्षेति । पुत्रजन्मवाक्ये कार्यमवधीर्य प्रथमव्युत्पत्तिः सम्भवतीति साधितम् । सम्प्रति समभिव्याहारोपदेशाभ्यां सिद्धेऽर्थे पदसामर्थ्यं शक्यग्रहमित्याह—एवं चेति । प्रवर्तकादन्यत्रापि पदसामर्थ्ये समर्थिते सतीति यावत् । किं पुनः सिद्धेऽर्थे शक्तिरस्तीत्यत्र मानमित्याशङ्क्य सिद्धार्थस्य शक्तिविषयत्वे मेयत्वानुमानमुक्तं स्मारयति—तदयमिति । आकृतेः शब्दार्थ-

---

1. यदि तु

तावत्कार्यत्वमुपाधिः । साध्याव्यापकत्वात् । शब्दशक्तिगोचरेऽपि कार्यत्वे कार्यत्वाभावात् । विपक्षे शब्दप्रामाण्यासम्भवो बाधः । एवं निरवद्या सिद्धे व्युत्पत्तिः । अतस्सिद्धं सिद्धे वेदः प्रमाणमिति ।

### वेदानां सिद्धवस्तुबोधकत्वे प्रयोगः

प्रयोगस्तु—विवादपदं सिद्ध एव प्रमाणम्, अबाधितानवगतसिद्धनिश्चयकारणत्वात् प्रत्यक्षवदिति ।

नन्वेवपदं व्यर्थं, तत्त्यागे च साध्याविशिष्टता । न । ब्रह्मज्ञान-

---

त्वेऽपि व्यक्त्यालिङ्गितायास्तथात्वेन व्यक्तेरपि शब्दादनुभवान्न व्यभिचारः । इदमादिशब्दवाच्यता च व्यक्तेरुपाधिद्वारा वारयितुं न शक्यते । लक्ष्यत्वेऽपि तस्या वाच्यत्वस्य पदान्तरेण त्वयाङ्गीकार्यत्वदिति भावः ।

प्रयोगान्तरमाह—**विवादेति** । कार्यत्वे सिद्धसाध्यत्वनिरासार्थं विवादाध्यासितेति विशेषणम् । कार्यान्वितताया जातेः शक्तिगोचरत्वं कार्यवादिनामपीष्टमिति सिद्धसाध्यता । तां निरस्यति—**कार्यनिरपेक्षेति** । कार्यत्वस्योक्तशक्तिगोचरत्वे नाकृतित्वं प्रयोजकम् । किं तु कार्यत्वमित्याशङ्क्य, यत्रोक्तशक्तिगोचरत्वं तत्र कार्यत्वमित्यन्वयाभावान्नैवमित्याह—**न तावदिति** । एतेन मेयत्वानुमानेऽपि कार्यत्वोपाधिनिरसनमभिप्रेत्य साध्याव्यापकत्वं व्यक्तीकरोति—**शब्देति** । स्वस्य स्वस्मिन्नवृत्तेस्तद्भेदे चानुगतप्रयोजकासिद्धिरित्यभिसन्धिः । भवत्वाकृतित्वं, उक्तशक्तिगोचरत्वं तु मा भूत् किं बाधकमित्याशङ्क्य, कार्यस्य शक्तिगोचरताया निरस्तत्वात्तन्निरपेक्षे सिद्धेऽर्थे शब्दशक्त्यनभ्युपगतावगृहीतसङ्गतिकपदानामबोधकतया शब्दप्रामाण्यानुपपत्तिर्बाधिकेत्याह—**विपक्ष इति** । पदत्वान्वयव्यतिरेकित्वानुमानाभ्यां च न कार्ये शक्तिरिति मत्वाह—**एवमिति** । सिद्धसाध्यता तु प्रयोजकद्वयप्रतिवचनेन प्रत्युक्ता । अन्वयातिरेकित्वादित्यत्रान्वितादन्यत्वस्यापि विवक्षितत्वान्न व्यभिचारः । कार्यस्यान्वितत्वेऽपि तत्र हेतुसिद्धिरन्वयादन्विताच्च तस्यान्यत्वोपपत्तेः । एतेन साधनविकलत्वमपि प्रतिविधेयमिति भावः । लोके [1]कार्याकार्य-

---

1. कार्यकार्य

**विधौ शाब्दे, ब्रह्मणोऽपि शब्दमानत्वात् । अतः सिद्धसाधनतानिवृत्त्यर्थमेवपदं निरवद्यम् । विपक्षे च सिद्धे शाब्दव्यवहारहानिप्रसङ्गो**

---

साधारण्यामपि व्युत्पत्तौ वेदे कार्यनियता सेत्याशङ्क्य लोकावगतशक्तीनां पदानां वेदेऽपि बोधकत्वान्नैवमित्याह—**अत इति** । वेदः सिद्ध एव प्रमाणं प्रमाणत्वाच्चक्षुर्वदित्युक्तेऽर्थे प्रमाणमाह—**प्रयोगस्त्विति** । न च भागे बाधासिद्धी शक्यशङ्के, अध्ययनविध्युपात्तस्याक्षरमात्रस्याप्रामाण्यानुपपत्तेर्विमतविशेषणेन वा तन्निरासः । न च मन्त्रादावसिद्धिः । तस्यापि तात्पर्यविषये मानत्वात् । द्वारार्थेऽपि संवादविसंवादयोरसतोस्तद्भावस्य दुर्निवारत्वाद्विपक्षे च प्रमाणत्वानुपपत्तिः । कार्यबोधकतया तत्त्वस्य निरस्तत्वादित्याशयः ।

सत्यज्ञानादिवाक्यमादाय प्रयोगान्तरमाह—**विवादपदमिति** । प्रत्यक्षादिभागे सिद्धसाध्यत्वनिरासार्थं प्रथमविशेषणम् । प्रतिपत्तिकर्तव्यताप्रामाण्यद्वारा सिद्धेऽपि प्रामाण्यमभ्युपगच्छतस्तदेव सिद्धसाधनत्वं, तदुद्धरत्ये**वेति** । कार्यानुवादविप्रलम्भकवाक्येषु व्यभिचारं निरसितुं हेतुविशेषणानि । पक्षस्य व्यर्थविशेषणत्वमाशङ्कते—**नन्विति** । विवादपदं सिद्धे प्रमाणमित्युक्ते सिद्धसाध्यत्वाद्यभावात् प्रतिपत्तिकर्तव्यताप्रामाण्यवादिना च सिद्धे प्रामाण्यानभ्युपगमात्तस्य विधिशेषत्वेनानुवादात् सिद्धत्वादेव मानान्तरयोग्यत्वादिति भावः । तत्तर्हि त्याज्यमित्याशङ्क्याह—**तत्त्यागे चेति** । तदत्यागे अन्ययोगव्यावृत्तिः साध्यते । अयोगनिवृत्तिश्च हेतुरित्यर्थभेदः । अन्यथा न तयोरर्थभेदः । न च तर्हि तदर्थमेव विशेषणं, हेतुविशेषणस्य व्यभिचारवारकतानियमवत्प्रतिज्ञाविशेषणस्यापि सिद्धसाध्यतादिनिवर्तकत्वनियमादिति चोदयिता मन्यते । "विज्ञाय प्रज्ञां कुर्वीत"त्यादिशब्दात् ब्रह्मज्ञानस्य विधेयत्वपक्षे, तद्विशेषणतया ब्रह्मापि शाब्दमिति सिद्धसाध्यत्वं, तन्निरसितुमेवपदमित्युत्तरमाह—**न ब्रह्मेति** । ज्ञानविधिवादिना विशेषणत्वेनापि ब्रह्म शब्दप्रमेयं नेष्यते । तस्य विधिशेषत्वेनानूद्यमानत्वादिति चेन्मैवम् । अन्यतोऽप्राप्तस्यानुवादायोगात् । न च सिद्धत्वं मानान्तरयोग्यत्वं, रूपादिहीनत्वात् । अन्यथा कार्यस्यापि गवानयनवन्मानान्तरशक्यत्वेनाशाब्दत्वप्रसङ्गादित्यभिप्रेत्याह—**अत इति** । हेतोरप्रयोजकत्वं परिहरति—**विपक्षे चेति** । वेदान्तानामपि कार्य-

बाधः। उक्तनीत्या प्रकारान्तरेणापि तदसम्भवात्। असिध्यादि-विरहस्त्वतिरोहित एव। तस्मात्कार्य एव शब्दव्युत्पत्तिः। तत्रैव वेदः प्रमाणमिति मतिमोक्षादेवायमाग्रहो दुर्विनीतानामित्युपेक्ष्यते।

सिद्धे च सिद्धेऽर्थे वेदस्य प्रामाण्ये सर्वज्ञे जगदन्तरात्मनि निखिलप्रपञ्चोपादानकारणे ब्रह्मणि वेदान्ताः प्रमाणमित्यास्थेयम्। न तु प्रधानादौ। तस्यानात्मनोऽचेतनस्य श्रूयमाणेक्षणपुरस्सरस्रष्टृत्वानु-

---

निष्ठत्वे ब्रह्मणि तेषामतात्पर्यान्न तत्प्रमाणकं ब्रह्म, नापि रूपादिहीनत्वात् प्रत्यक्षादिगम्यमिति तदसिद्धौ तद्विशेषितज्ञानासिद्धेर्न तद्विधिपरत्वं तेषामित्यभिप्रायः। ब्रह्मज्ञानविधिपरैरेव वेदान्तैर्विधेयविशेषणतया ब्रह्म बोध्यते। तथा च तत्र शब्दव्यवहारसिद्धिरित्याशङ्क्याह—**उक्तनीत्येति**। कार्य-प्रकरणस्थसिद्धार्थवाक्यानां कार्यपरत्वं सूत्राद्यधिगतमित्यादिदर्शितन्यायान्न विधिद्वारा ब्रह्मणि स्वप्रकरणस्थे वेदान्ताधीनव्यवहारसम्भवः। न खलु विधेय-विशेषणं ब्रह्म अपहतपाप्मत्वादिलक्षणं वस्तुसद्भवितुमर्हति। आरोपेणापि तदुपपत्तेः। अतो विध्यस्पृष्टे शुद्धे ब्रह्मणि वेदान्ता मानमित्यर्थः। यदि सिद्धेऽर्थे पदशक्तिः वाक्यतात्पर्यं चेष्यते तर्हि [कथं] तदुभयं कार्यविषयमेवेति निर्बन्धो वादिनामित्याशङ्क्योपसंहारव्याजेनोत्तरमाह—**तस्मादिति**।

भवतु सिद्धेऽर्थे वेदप्रामाण्यं तथापि नाद्वितीये ब्रह्मणि वेदान्तानां प्रामाण्यं सम्भवति, तेषां प्रधानादिपरत्वादित्याशङ्क्याह—**सिद्धे चेति**। प्रधानादिवादव्युदासार्थं विशिनष्टि—**सर्वज्ञ इति**। अशेषविषयाकारधारि-स्वमायापरिणामद्वारा स्वाध्यस्तं समस्तमपरोक्षीकरोतीति ब्रह्म सर्वज्ञमुच्यते। तस्मिन्नित्यर्थः। केचिदीश्वरं सर्वज्ञमपि तटस्थमास्थिषत, तान्प्रत्याह—**जगदिति**। अन्ये तूक्तलक्षणमपि ब्रह्म स्वमायया साधारणप्रपञ्चस्योपादानं, जीवाश्च स्वाविद्यावशादसाधारणप्रपञ्चस्येति प्रपञ्चद्वैविध्यं मायाविद्याभेदं चाचक्षते। तान्प्रत्युक्तं—**निखिलेति**। "सदेव सोम्येदमि"त्यत्र सच्छब्देन प्रधानादिग्रहाद्युक्तं प्रधानादौ वेदान्तमानत्वमित्याशङ्क्याह—**तस्येति**। सतो हि ईक्षणपूर्वकं स्रष्टृत्वं "तदैक्षत तत्तेजोऽसृजत" इति श्रुतम्। प्रधानादेश्चा-

पपत्तेः। चेतनस्य श्रुतिसिद्धतत्तादात्म्यापरोक्ष्यान्मोक्षासम्भवाच्च। न च गरुडोऽहमितिवत्तत्तादात्म्यं अवास्तवम्। तप्तपरशुग्रहणदृष्टान्तेन तस्य वास्तवत्वोपदेशात्।

मायाशबलितं ब्रह्मैवोपादानं, माया तु तत्सहकारिमात्रमिति निरूपणम्

ननु तवापि मायावादिनो मायैवोपादानं, न त्वविक्रियं ब्रह्म। अतस्तवाप्युक्तानुपपत्तिस्तुल्येति। न। तस्येन्द्रजालकुशलस्येव माय-

---

नात्मत्वादचेतनस्य नेक्षितृत्वम्। अतो [1]न [तत्] सत्पदोदितमित्यर्थः। अप्ते-जसोरिव सतोऽपीक्षणं गौणमिति चेत्। न। तत्रापीक्षणस्य स्वानुगतचैतन्य-द्वारा मुख्यत्वात्। प्रधानादेरचेतनस्य सतो गुणवृत्त्येक्षितृत्वे च चिदात्मनो जीवस्य "तत्त्वमसी"ति सता प्रतिपन्नतादात्म्यसाक्षात्कारात् "आचार्यवानि"-त्यादिनोक्ता मुक्तिर्न स्यात्। न हि चेतनस्याचेतनत्वावगतौ पुमर्थो युक्तः। अतः सतो न गौणमीक्षणमित्याह—**चेतनस्येति**। तादात्म्यमपि गौणमित्या-शङ्क्याह—**न चेति**। तत्र हेतुमाह—**तप्तेति**। चौर्यमारोप्य पाशवशी-कृते पुरुषे निग्रहानुग्रहयोश्शोधनाधीनत्वात्तदर्थं शपथे प्रकृते मिथ्याप्रतिज्ञो गृहीते तप्ते परशावपजयी सन्ननर्थमृच्छति। सत्यप्रतिज्ञस्तु विजयी विमुक्त सुखी भवतीति दृष्टान्तेन देहादिष्वहंममाभिमानेनानृताभिसन्धो बध्यते। सत्ये तु प्रतीचि ब्रह्मणि साक्षात्प्रतिबद्धो मुच्यत इति ब्रुवती छन्दोगश्रुतिर्जीवात्मनः सत्तादात्म्यं वास्तवं मन्यते। अतो न प्रधानादि सच्छब्दमर्हतीत्यर्थः। ईक्षणाद्यसंभवात्प्रधानादि चेन्न सच्छब्दमुपादानं, ब्रह्मणोऽपि तर्हि निर्विकार-त्वात्तदनुपपत्तेस्तुल्यत्वान्न सच्छब्दवाच्योपादानत्वोपपत्तिरिति कथं तस्मिन्नपि वेदान्ताः प्रमाणमित्याशङ्कते—**ननु तवेति**। अविकारिणोऽपि मायया विकारसिद्धेरीक्षणपूर्वककारणत्वोपपत्तेर्युक्तं तत्र वेदान्तप्रामाण्यमित्युत्तरमाह—**न तस्येति**। मायाद्वारा ब्रह्म कारणमित्यत्र श्रुतिं प्रमाणयति—**तथा चेति**। बहुवचनान्मायाभेदे प्रसक्ते तन्निरासार्थं श्रुत्यन्तरं [2]पठति—**मायां त्विति**। मायाया जगत्प्रकृतेः स्वातन्त्र्ये सति प्रधानवादः समापततीत्याशंक्याह—

---

1. दिम 2. न्यायास्तु

योपादानत्वोपपत्तेः । तथा च शास्त्रम्—“इन्द्रो मायाभिः पुरुरूप-ईयत” इति ।

“मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्” इति चामुमर्थं बोधयति ।

### मायाशब्दस्य ज्ञानार्थकत्ववर्णनम्

नन्वत्र मायेति ज्ञानं कस्मान्नोच्यते । प्रज्ञानामत्वेनापि क्वचिदभिधानग्रन्थे मायाशब्दः पठ्यते । तथा सति ‘मायाभि’रिति बहुवचनमप्युपपद्यते । उपासनज्ञानैः परमात्मा बहुरूपोऽवगम्यत इत्यर्थः । ‘मायां तु प्रकृतिमि’त्यत्र ब्रह्मणो गुणो ज्ञानं मायेत्युच्यते । प्रकृतिता च तस्य निमित्तकारणता । प्रक्रिय[1]तेऽनयेति व्युत्पत्तेः । ब्रह्मणो निर्गुणत्वान्न ज्ञानं तद्गुण इति चेत् न । ‘तदैक्षत’ ‘यः सर्वज्ञः’

---

मायिनमिति । “इन्द्रो मायाभिरि”ति वाक्यं मायाद्वारा ब्रह्मणो नोपादानत्वोपपादकमिति शङ्कते—नन्वत्रेति । वृद्धव्यवहाराभावे कथं मायाशब्दस्य ज्ञानविषयत्वं अनिर्वाच्यानाद्यज्ञाने तस्य प्रसिद्धत्वादित्याशङ्क्याह—प्रज्ञेति ।

“मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः ।
माया प्रज्ञा तथा मेधा स्मृतिश्च परिपठ्यते ॥”

इत्यत्रेत्यर्थः । अनिर्वाच्याज्ञानस्य मायाशब्देनोपादाने तस्यैकत्वाद्बहुवचनानुपपत्तिः । प्रज्ञायां तु नैवं तदभेदात् । अतश्च मायाशब्दः प्रज्ञावाचीत्याह—तथा सतीति । उपपत्तिमेवाभिनयति—उपासनाज्ञानैरिति । वाक्यान्तरमपि विज्ञानद्वारा ब्रह्मप्रकृतित्वप्रसाधकमित्याह—मायां त्विति । मायाशब्दसमानाधिकृतप्रकृतिशब्दस्योपादानत्ववचनत्वाद् गुणस्य चानुपादानत्वान्न ब्रह्मगुणो ज्ञानं मायेत्याशंक्याह—प्रकृतिता चेति । उपादाने रूढप्रकृतिपदस्य कथं निमित्तपरत्वमित्याशंक्याह—प्रक्रियत इति । “रूढिर्योगमपहरती”ति मन्वानः सिद्धान्ती शङ्कते—ब्रह्मण इति । अतो न ब्रह्मगुणज्ञानवाचित्वं मायापदस्येति शेषः । ज्ञानस्य ब्रह्मगुणत्वं श्रुतिसिद्धमिति परिहरति—न

---

1. अनेन

इत्यादिश्रुतिविरोधात्। अपि च ब्रह्मैव मूलप्रकृतिः। न माया, "येनाश्रुतं श्रुतमि"त्यादेः एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायैतत्सिद्धये "सदेव सोम्येदमग्र आसीत्" "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं" "ऐतदात्म्य"मिति सदृष्टान्तं सर्वस्य सल्लक्षण-ब्रह्मात्मत्वाभिधानात्। तथा च ब्रह्मवित्पूज्यचरणप्रणीतं प्रमाणोपेतं सूत्रम्—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा"दिति। कूटस्थता तु ब्रह्मणोऽविनाशिता। नापरिणामिता। न च परिणामिनो नाशपुरस्सरः परिणाम इति नियमः। हेमपरिणामेऽदर्शनात्। न चैवं मायायाः प्रपञ्चोपादानत्वे मानमस्ति। तस्मात् ब्रह्मैव जगद्रूपेण परिणमत इति प्रधानकारणपक्षवन्मायाकारणपक्षोऽप्युपेक्ष्यत इति।

---

तदैक्षतेति। श्रुतीनां पूर्वापरपरामर्शे ब्रह्मणो मूलप्रकृतित्वप्रतीतेरपि रूढिं भङ्क्त्वा प्रकृतिपदस्य योगमङ्गीकृत्य तद्गुणो ज्ञानं मायेत्याह—अपि चेति। कथमेकस्य ज्ञानेऽन्यस्य ज्ञानमतिप्रसङ्गात् अत आह—एतत्सिद्धय इति। ब्रह्मणो मूलप्रकृतित्वे प्रमाणान्तरमाह—तथा चेति। ब्रह्म जगतो वियदादेरुपादानं निमित्तं चेत्यभ्युपगन्तव्यम्। एकविज्ञानेन सर्ववि[1]ज्ञान-प्रतिज्ञाया "यथा सोम्ये"त्यादिदृष्टान्तस्य चैवं सति [2]सामञ्जस्यं स्यादिति सूत्रार्थः। श्रुतिस्मृतिप्रमितकू[3]टस्थस्वभावस्य ब्रह्मणो मूलप्रकृतित्वमयुक्तम्। कूटस्थत्वविरोधादित्याशंक्याह—कूटस्थतेति। पूर्वरूपनाशेन रूपान्तराप्तेरेव परिणामित्वादविनाशिनः न परिणामः सिध्येदिति चेन्नेत्याह—न चेति। हेम्नो रुचकादिरूपधर्मपरिणामे रुचकादेरेव नूतनत्वाद्यवस्थापरिणामे तस्यैव प्रत्युत्पन्नत्वादिलक्षणपरिणामे च स्वरूपनाशादर्शनादिति हेतुमाह—हेमेति। ब्रह्मवन्मायापि जगदुपादानं किं न स्यादित्याशङ्क्याह—न चेति। "मायां तु प्रकृति"मित्यादिश्रुतेरन्यपरताया दर्शितत्वादित्याशयः। एकदेशिमतमुप-संहरति—तस्मादिति। मायैव जगतो मूलप्रकृतिस्तदधिष्ठातृ ब्रह्मेति मतं त्याज्यमिति फलितमाह—इति प्रधानेति।

---

1. विज्ञानेन 2. सामञ्जस्यात् 3. कूटस्वभाव

## मायाशब्दस्य ज्ञानार्थकत्वनिराकरणम्

उच्यते, न तावन्मायेति ब्रह्मणो गुणोऽभिधीयते। तस्य गुणासम्भवात्। असङ्गाद्वितीयं हि ब्रह्म श्रुतावनेकशः श्रूयते। तत्कथं गुणवत्सम्भवेत्। विज्ञायते च साक्षा"त्साक्षी चेता केवलो निर्गुणश्चे"ति। अत एवेक्षणादि स्वरूपज्ञानावष्टम्भादभ्युपेयम्। न च प्रकृतिशब्दो निमित्तपरः। न ह्यकस्माद्रूढित्यागो योगमाश्रित्य युज्यते।

यत्तूपासनाज्ञानावष्टम्भेन 'मायाभिरि'ति बहुवचनव्याख्यानं, तदसमञ्जसम्। उपासना हि मानसी क्रिया। न ज्ञानम्। यदपि ब्रह्मप्रकृतित्वे मानं तदनुमोदामहे। न माया प्रकृतिरिति तु न क्षम्यते। ब्रह्मणो मायाशबलितस्य मूलप्रकृतिता हि श्रौती। तथाहि—

---

सिद्धान्तमवतारयति—**उच्यत इति**। "मायां तु प्रकृतिमि"त्यत्र ब्रह्मगुणो ज्ञानं मायेत्युक्तं दूषयति—**न तावदिति**। ब्रह्मणो गुणासंभवं श्रुतार्थापत्त्या समर्थयते—**असङ्गेति**। ब्रह्मणो निर्गुणत्वे श्रुतिमपि प्रमाणयति—**विज्ञायते चेति**। यत्तु "तदैक्षते"त्यादिश्रुत्या ज्ञानस्य ब्रह्मगुणत्वं निर्ज्ञातमिति तत्राह—**अत एवेति**। श्रुतितदर्थापत्तिभ्यां ब्रह्मणो निर्गुणत्वनिर्धारणादिति यावत्। सकलविषयाकारधारिसत्वप्रधानमायापरिणामद्वारा चिद्रूपं ब्रह्म सर्वज्ञं विवक्ष्यते। सिसृक्षितसमस्तप्रपञ्चकारणरजस्समधिकमायावृत्तिप्रतिबिम्बितचैतन्यमीक्षणं तद्वतो बिम्बस्येक्षितृत्वमित्यर्थः। यत्तु "मायां तु प्रकृतिमि" त्यत्र प्रकृतिशब्दस्य निमित्तपरत्वमिति तत्राह—**न चेति**। "रूढिर्योगमपहरती"ति न्यायस्य बाधकमन्तरेण परित्यागायोगादिति हेतुमाह—**न हीति**। "इन्द्रो मायाभिरि"त्यत्रोक्तमनुभाष्य दूषयति —**यत्त्वित्यादिना**। मायापदेनोपासनोपादाने तस्य न प्रज्ञानामता, उपासनाज्ञानयोर्भेदस्य समन्वयसूत्रे साधितत्वादिति भावः। बहुवचनं तु मिथ्याज्ञानभेदादेकस्यामेव मायायां प्रकारभेदाद्वा द्रष्टव्यम्। ब्रह्मणो मायया जगदुपादानत्वमुक्त्वा परोक्तमनूद्याङ्गीकरोति—**यदपीत्यादिना**। न माया मूलप्रकृतिरित्युक्तं प्रत्याह—**नेति**। तत्र हेतुमाह **ब्रह्मण इति**। कथं पुनर्मायाविशिष्टस्य ब्रह्मणो मूलप्रकृतित्वं श्रुत्योच्यते। तत्राह—**तथा हीति**। यदि ब्रह्म मायातत्कार्यसत्तास्फूर्तिप्रदत्वेन जगत्कारणं,

क्वचिदधिष्ठानप्राधान्येन व्यपदेशः। "सदेव सोम्येद"मित्यादि। तथा मायाप्राधान्येन निर्देशः, "नासदासीन्नो सदासी"दित्युपक्रम्य "तम आसी"दित्यादिश्रुतौ शतशः प्रसिद्धः। तथा—

"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥

इत्यादिस्मृतीतिहासपुराणेषु बहुलमुपलभ्यते। न च नैकरूपस्य जगत उपादानविकल्पोऽवकल्पते। अतो मायाशबलितं ब्रह्मैव मूलप्रकृतिः। अपि च कूटस्थासङ्गमिदं ब्रह्म न विना मायां कारणतां

---

मायायास्तर्हि तत्कारणत्वं कथमिति तत्राह—**तथेति**। परिणामित्वेन मायाया जगत्कारणत्वे श्रुतिं दर्शयित्वा स्मृतिमपि दर्शयति—**आसीदिति**। सकलमपि जगत्प्रागवस्थायां साभासमज्ञानमात्रमासीत्। तच्च न प्रत्यक्षयोग्यमित्याह—**अप्रज्ञातमिति**। लक्षणेन व्यतिरेकिणाऽनुमानान्तरेण वा तदग्राह्यमित्याह—**अलक्षणमिति**। अभ्युपेतव्याप्यं प्रत्यनिष्टव्यापकप्रसञ्जनं तर्कः, तदगोचरत्वमाह—**अप्रतर्क्यमिति**। ज्ञातत्वाज्ञातत्वयोरभावादशेषमानायोग्यत्वमाह—**अविज्ञेयमिति**। तस्य स्वप्रकाशत्वं प्रतिषेधति—**प्रसुप्तमिति**। न च तर्हि तन्नास्त्येव, साक्षिवेद्यत्वादित्याह—**इवेति**। सर्वपरिणामितया सर्वेषु परिणामेष्वनुस्यूतत्वेनानवच्छिन्नत्वमाह—**सर्वत इति**। तथा च केनचिदपि प्रकारेण निश्चित्य वक्तुमशक्यत्वादनाद्यनिर्वाच्यमज्ञानं [1]प्रपञ्चस्य परिणामित्वेन कारणमिति तात्पर्यार्थः।

अस्तु तर्हि द्विविधश्रुतिवशादुदितानुदितहोमवद्वैकल्पिकं, मायाब्रह्मणोरुपादानत्वमित्याशंक्य कार्यप्रपञ्चे सत्यानृतसंमिश्रतादर्शनादुभयोरितरेतरापेक्षया कारणत्वमित्याह—**न चेति**। नैक[2]रूपस्य सत्यानृतात्मकस्येत्यर्थः। उभयात्मककार्यदर्शनान्मायाद्वारा ब्रह्म कारणमित्युपसंहरति—**अत इति**। जन्मादिसूत्रमनुसृत्य केवलं ब्रह्म कारणमेष्टव्यमित्याशङ्क्य विशिष्टस्य कारणत्वे सूत्रं न प्रतिकूलमित्यभिप्रेत्य तत्रैव श्रुतार्थापत्तिमाह—**अपि चेति**। "कूटस्थ-

---

1. प्रपञ्चस्य 1. एकरूपस्य

यायात् । केवलाद्वैतरूपं च ब्रह्म "एकमेवाद्वितीयमि"ति सविशेषण-श्रुत्या बोध्यते । कूटस्थशब्दश्च कूटवत्तिष्ठतीति निष्क्रियतामाह न त्वविनाशिताम् । तत्र वृत्त्यसम्भवात् । हेमादिपरिणामोऽप्यविचारित-सुन्दरव्यवहारसिद्ध इति वक्ष्यते । एतामेव दृष्टिमाश्रित्य सौत्रं परिणा-मोदाहरणम् । व्यावहारिको हि परिणाम आचार्येणोपासनार्थमास्थी-यते । अन्यथा कथं कार्यमिथ्यात्वबोधकं "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति वाक्यं प्रमाणयति स्म भगवान् सूत्रकारः "तदनन्यत्वमारम्भणशब्दादिभ्य" इति । कथं वा "नेह

---

मचलं ध्रुवम्" "असङ्गो ह्ययं" "अत्यतिष्ठ"दित्यादिश्रुत्या कूटस्थासङ्गस्यापि ब्रह्मणो नाद्वितीयत्वं, द्वैतग्राहिप्रत्यक्षादिविरोधादित्याशंक्याह—**केवलेति** । द्वैताद्वैतरूपं ब्रह्मेति मतव्यासेधार्थं केवलपदम् । प्रत्यक्षादेराविद्यद्वैतविषयत्वान्न विरोधितेति वक्ष्यते । यत्तु परिणामिनोऽपि कूटस्थत्वमविनाशित्वादिति तत्राह—**कूटस्थेति** । न हि परिणामिन्यविनाशिनि कूटस्थशब्दस्य रूढिर्योगो वा सम्भवतीति हेतुमाह—**तत्रेति** । न च परिणामिनोऽविनाशित्वम् । अपि तु पूर्वरूपत्यागेनापूर्वाप्तेरेव परिणामित्वात् । यत्तु त्रिविधेऽपि परिणामे धर्मिणो हेम्नो नाशादृष्टेर्न परिणामिनो नाशनियतिरिति तत्राह—**हेमादीति** ।

ननु वास्तवपरिणामाभावे ब्रह्मणः सकाशाज्जगतः सर्गे तस्य तस्माद-भेदात् भोक्तृभोग्यादेरेकत्वप्राप्तेस्तद्भेदग्राहिप्रत्यक्षादिविरोधः स्यादित्याशंक्य "स्याल्लोकवदि"ति परिणामोदाहरणेन कथं सूत्रकारः पर्यहार्षीदिति चोदयन्तं प्रत्याह—**एतामिति** । पारलौकिकपुरुषार्थविरहिव्यावहारिकपरिणामाश्रयणं किमर्थमित्यत आह—**व्यावहारिको हीति** । मन्दमध्यमाधिकारिणोरनुग्रहार्थं व्यावहारिकपरिणामोपादानमिति भावः । सूत्रितपरिणामस्य फलवतो याथा-र्थ्यमेव किं न स्यादित्यशंक्यारम्भणाधिकरणविरोधान्नैवमित्याह—**अन्यथेति** । आकाशादि न ब्रह्मातिरेकेणास्ति "वाचारम्भणम्" "ऐतदात्म्यम्" "आत्मैवे-दमि"त्यादिश्रुतेरिति सूत्रार्थः । वाक्यान्तरविरोधादपि परिणामो वास्तवो न भवतीत्याह— **कथं वेति** । "नेह नाने"त्यत्र नानाशब्देन नानात्वमनूद्य ब्रह्मणि तन्निषिध्यते । भेदप्रपञ्चस्तु नानूद्यते निषिध्यते वा । अतो नानात्म-

नानास्ति किञ्चने''त्यनात्मजातस्य प्रतिपन्नोपाधौ निषेधकं वाक्यं न पश्येत् ।

### नेह नानास्ति किंचनेति वाक्यार्थविचारः

नन्वत्र नानाशब्देन नानात्वमुच्यते गोशब्देनेव गोत्वम् । तेन ब्रह्मणि नानात्वं निषिध्यते । अतो ब्रह्मैकमेवेति वाक्यार्थः संपद्यते । नानात्वस्य नानापदेनोक्तत्वात्त्वशब्दोक्तिस्त्वदीया व्यर्थेति चेत् । न । अस्या गोत्वशब्दोक्तिवदर्थवत्त्वोपपत्तेः । यथा हि गोशब्दस्य गोत्वमर्थ इत्यनेन व्यक्तेर्निष्कृष्य सामान्यमुच्यते । एवं प्रकृतेऽपि निरवद्यमिति ।

उच्यते––नानाशब्दः किं नानात्वमेवाह––उत कथञ्चिद्व्यक्ति-

---

जातस्य प्रतिपन्नोपाधौ प्रतिषेधकमिदं वाक्यमिति चोदयति––नन्वत्रेति । [[1]त्वशब्दस्यात्राभावे] कथं नानाशब्देन नानात्वोक्तिरित्याशङ्क्य दृष्टान्तमाह–गोशब्देनेवेति । नानाशब्देन नानात्ववचने फलितमाह––तेनेति । नानात्वनिषेधे निष्पन्नवाक्यार्थं कथयति––अत इति । सन्दिग्धस्य व्याख्येयत्वादत्र तदभावान्न व्याख्यानापेक्षेति शङ्कते––नानात्वस्येति । प्रसिद्धमपि प्रयोजनवशाद्व्याख्येयमिति परिहरति––नास्या इति । प्रसिद्धं हि गोशब्दस्य गोत्वमभिधेयम् । आकृतिः शब्दार्थ इत्यभ्युपगमात् । तथापि गोशब्दस्य गोत्वमर्थ इति व्यक्तेर्विविक्तं सामान्यं ग्राहयितुं व्याख्यातारः शिष्यान्प्रति व्याचक्षते । तथा नानापदस्य नानात्वे वाच्ये सिद्धेऽपि व्यक्तेर्निष्कृष्य सामान्यकथनार्थं व्याख्यानमर्थवदित्युक्तमेव समर्थयते–यथा हीति । "नेह नाने"त्यादिवाक्यं प्रतिपन्नोपाधावनात्मजातस्य भवति प्रतिषेधकमिति प्रतिजानीते–उच्यत इति । यत्तु नानाशब्देन नानात्वमुच्यते गोशब्देनेव गोत्वमिति तत्राह–नानाशब्द इति । कथंचिदिति । सामान्यद्वारेत्यर्थः । नानात्वमेव नानाशब्दो वक्तीति*

---

1. वशब्दोन्तराभावे

*R 4459 मातृकायां प्रथमाध्यायसम्बद्धो भागः एतावानेवोपलभ्यते । इतः परं प्रथमध्यायावशिष्टभागः द्वितीयाध्यायः तृतीयाध्यायप्रारम्भश्च R 5603 मातृकायां दृश्यते । अतः इतः परं R 5603 लिख्यते । तत्रापि प्रारम्भे किञ्चित्त्रुटितमिव भाति ॥

मपि। आद्ये त्वशब्दोक्तिर्व्यर्था। नानाशब्देनैव निष्कृष्टस्य सामान्यस्याभिहितत्वात्। द्वितीये तु नानारूपः प्रपञ्चो निषिद्धः स्यात्। नानाशब्दस्योद्दामत्वात् यथा नात्र कश्चित् गौरस्तीति।

स्यान्मतम्, सामान्यानां साक्षात् परस्परसंसर्गात्मकवाक्यार्थताऽसम्भवादन्यत्र व्यक्तेः कथंचिच्छब्दार्थत्वमास्थीयते। ब्रह्मणि तु साक्षान्नानात्वनिषेधसम्भवे कुतो व्यक्तेः शब्दार्थत्वावसरः। व्यक्तिनिषेधे च प्रत्यक्षादिविरोधो दुर्वार इति। मैवम्। 'नेह नानास्ति किञ्चने'ति नानात्वमात्रनिषेधे किञ्चनपदवैयर्थ्यप्रसङ्गात्। न हि नानात्वमप्यनेकं, येन किंचनेत्यर्थवत्स्यात्। प्रत्यक्षादिविरोधोऽपि चन्द्रभेदनिषेध इव नेह प्रभवति। किञ्च प्रपञ्चस्य मिथ्यात्वात् माया-

---

*[पक्षे दोषमाह—**आद्य इति**। वैयर्थ्यमेव स्पष्टयति—**नानेति**। नानाशब्दस्सामान्यद्वारा व्यक्तिमपि वक्तीति द्वितीयपक्षं प्रतिक्षिपति—**द्वितीये त्विति**। **उद्दामत्वात्**। नानात्वद्वारा प्रपञ्चसामान्यबोधकत्वात्। तत्र दृष्टान्तमाह—**यथेति**। दृष्टान्ते गोत्वसामान्यनिषेधो न संभवति। तस्यात्रऽप्रसक्तेः। एवं च गोत्वविशिष्टव्यक्तिनिषेध एवाभ्युपेय इति भावः। अस्तु तर्हि गवादौ व्यक्तेश्शब्दार्थत्वं, नानाशब्दस्य तु नानात्वार्थकत्वे बाधकाभावादयुक्तं व्यक्तिवाचकत्वमिति शंकते—**स्यान्मतमिति**। आशंकामेवोपपादयति—**सामान्यानामिति**। विपक्षे बाधं चाह—**व्यक्तिनिषेध इति**। उक्तामाशंकां निराकरोति—**मैवमिति**। ब्रह्मणि नानात्वनिषेधोऽसंवीत्याह—**नेहेति**। असंभवे किंचनपदवैयर्थ्यं हेतुमाह—**नानात्वेति**। वैयर्थ्यं व्यनक्ति—**न हीति**। उक्तं प्रत्यक्षादिविरोधं परिहरति—**प्रत्यक्षादीति**। यथा चन्द्रभेदनिषेधे न चन्द्रभेदप्रत्यक्षादिविरोधो भवति तत्प्रत्यक्षस्य भ्रमत्वादेवं प्रपञ्चनिषेधे न तत्प्रत्यक्षादिविरोधः। तत्प्रत्यक्षस्य भ्रमत्वादिति भावः। ननु चन्द्रभेदप्रत्यक्षस्यागंतुकदोषजन्यत्वेन भ्रमत्वान्न निषेधे विरोधः। प्रपञ्चप्रत्यक्षस्य तु न भ्रमत्वं, दोषाजन्यत्वात्। तथा च प्रपञ्चनिषेधे प्रत्यक्षादिविरोधो दुरुद्धर एवेत्याशंक्याह—**किं चेति**। प्रपञ्चप्रत्यक्षे मायैव दोष इति भावः।

---

* [ ] मातृकायामदृष्टोऽप्ययं भागः पठितॄणां बोधसौकर्यार्थमस्माभिरेव यथामति सङ्कलितः।

मयत्वमास्थेयम् । मिथ्यात्वे चास्य मानवत्त्वमवोचाम इष्टसिद्धि-विवरणे । वक्ष्यामश्चात्रापि द्वितीयाध्याये । तस्मान्माययैव सच्चिदानन्दात्मस्वरूपं ब्रह्म जगदाकारेण शुक्तिरिव रूप्याकारेण विवर्तत इति स्थितम् ।

### ब्रह्मणि सच्चिदानन्दानामभिन्नत्वप्रतिपादनम्

ननु सदनुगतं व्यावृत्तात् कुम्भादेरिव चिदानन्दादेर्भिन्नं कथं तत्स्वरूपं भवेत् । एवं चिदानन्दाद्यपि भिन्नं नान्योन्यस्वरूपमभ्युपेयम् , भेदप्रतीतिविरोधात् । उच्यते, नात्र भेदप्रतीतिविरोधः । चन्द्रस्येव हि सतः प्रातीतिको भेदः इष्यते वास्तवस्तु भेदो नोपेयते । तन्मानाभावात् । अथ मानम्—सत् चिदानन्दादेः भिन्नं, चाक्षुषत्वात् कुम्भवदिति । तत्र यदि वास्तवो भेदः साध्यः ततोऽप्रसिद्धविशेषणता । दृष्टान्ते च साध्यविरहः । अवास्तवादिसाधने च सिद्धसाधनता । कुम्भादिभेदेन चानैकान्तम् । न हि भेदः कुतश्चिद्भिन्नः । अनवस्था-

---

मिथ्यात्वे प्रपञ्चस्य न मानमस्तीत्याशंक्याह—मिथ्यात्वे चेति । विमतं सदसद्विलक्षणं दोषप्रयुक्तभानत्वात् भ्रमसिद्धतादात्म्यवत् इत्याद्यनुमानेनात्रापि मिथ्यात्वस्य मानवत्वं प्रपञ्चयिष्यत इत्याह—वक्ष्यामश्चेति । तदनन्यत्वाधिकरणसिद्धं विवर्तवादमुपसंहरति—तस्मादिति । ब्रह्मणस्सच्चिदानन्दात्मकत्वमसहमानश्शंकते—नन्विति । चिदानन्दादि, सद्भिन्नं, व्यावृत्तत्वात्कुंभवदित्यनुमानेन भिन्नस्य सच्चिदानन्दादेर्न ब्रह्मरूपता घटत इत्यभिधाय परस्पराभिन्नत्वमपि तेषां निरस्यति—एवमिति । तत्र हेतुमाह—भेदेति । सिद्धान्तयति—उच्यत इति । भेदप्रतीतिः प्रातीतिकी वा वास्तवी वेति विकल्प्याद्येऽविरोधं साधयति—चन्द्रस्येवेति । द्वितीयं प्रत्याह—वास्तवस्त्विति । तत्र हेतुमाह—तदिति । तत्र मानमाशंकते—अथेति । अनुमानेन वास्तवो भेदः प्रसाध्यते उतावास्तवः ? आद्ये दोषमाह—तत इति । दोषान्तरमाह—दृष्टान्ते चेति । द्वितीये सिद्धसाधनतेत्याह—अवास्तवेति । कुंभादिभेदे व्यभिचारश्चेत्याह—कुंभादीति । तदुपपादयति—नहीति ।]

प्रसङ्गात्। अस्तु तर्हि तदन्यत्वे सतीति विशेषणम्, न। भेदस्य भेदाभावे ततोऽन्यत्वासिद्धेः। अथ भेदो वास्तवः, अबाधितप्रसिद्धिसिद्धत्वात् आत्मवदिति मानम्, न। विशेषणासिद्धेः श्रुत्या बाधाच्च। 'नेह नानास्ति किंचने'ति श्रुतिर्भिन्नं वस्तु निषेधतीत्युक्तम्। दृष्टान्ते च साध्यविकलता। अहङ्कार एव हि प्रसिद्ध आत्मा च। स चावास्तव एवास्माकम्। विपक्षे बाधाभावात् पक्षबाधकतर्कसद्भावाच्च शङ्किताप्रयोजकता। तथाहि—यदि सत् कुम्भादिभ्यो भिन्नं भवेत् न भवेत्तदा कुम्भादयः सन्तीति प्रतीतिः। कुम्भादौ सत्प्रतीतिः सत्ताजाति-

---

न अनैकान्तिकत्वमित्याशङ्कते-अस्तु तर्हीति। विशेषणासिध्या दूषयति-न भेदस्येति। भिन्नस्यैव प्रतियोगित्वादिति भावः। अप्रसिद्धविशेषणत्वादि परिजिहीर्षुस्सदादिभेदस्य वास्तवत्वमनुमिनोति—अथेति। शुक्तिरजतादिसंसर्गे व्यभिचारं व्यासेधति—अबाधितेति। साध्याविशिष्टतां निराचष्टे—प्रसिद्धीति। अवाधितविशेषणासिद्धेर्नानुमानोपपत्तिरित्युत्तरमाह—न विशेषणेति। न केवलं विशेषणासिद्धो हेतुः, कालातीतश्चेत्याह—श्रुत्येति। अथात्र भिन्नं वस्तु न निषिध्यते किं तु नानात्वमेवेत्याशङ्क्याह— इत्युक्तमिति। किं चात्मशब्देनाहङ्कारोऽभिधीयते, तत्साक्षी वेति विकल्प्याद्यं प्रत्याह—दृष्टान्ते चेति। तत्र हेतुमाह—अहङ्कार इति। तथापि कथं साध्यविकलतेत्यत आह—स चेति। अहङ्कारस्सुषुप्ते व्यभिचारादनात्मा, न चाहम्प्रत्ययस्यैव व्यभिचारः।[1] अहंकारसद्भावे मानाभावात्। न चासौ स्वतः स्फुरति। [अनुपलब्धेः] अहङ्कारादेशात्पृथगात्मादेशाच्च तदनात्मत्वम्। अतो नासौ वास्तवो रज्जुसर्पवदित्यभिप्रायः। न द्वितीयः, तस्य तवासिद्धेराश्र[2]यासिध्यापत्तेरिति। सतश्चिदानन्दादेर्भेदसाधने दोषान्तरमाह[3]—विपक्ष इति। तदेव प्रपञ्चयति—तथा हीति। आदिपदेन चिदान[4]दादि गृह्यते। सत्वजातिसम्बन्धः सद्व्यवहारे प्रयोजकः[5] न सत्तादात्म्यं केवलव्यतिरेकाभावादिति शङ्कते—कुम्भादाविति। तर्हि जातिरहितेषु सद्व्यवहारो न स्यादिति परिहरति—

---

1. तारादावे 2. आश्रयापत्तेः 3. माह प्रपञ्चयति 4. चिदानन्दा....सत्व 5. प्रयोजकः सत्ता

सम्बन्धादिति चेन्न। गोत्वादौ सद्व्यवहाराभावप्रसङ्गात्। नायं दोषः, गोत्वादौ स्वरूपसत्ताश्रयणादिति चेन्न। तेष्वनुगतसद्व्यवहारविरहापत्तेः। गोत्वादिषु स्वरूपसत्वसाधर्म्येण सत्ताध्यारोपात् सत्सदित्यनुगम इति चेन्न। द्रव्यादिष्वपि तथैवानुगमप्रसङ्गात्। न च मुख्यसत्ताऽभावान्न द्रव्यादिषु सत्तारोपः, "सदेव सोम्येदमि"त्याद्यागमसिद्धस्य सर्वात्मनो मुख्यसत्वस्य भावात्। सत्तया सहैकार्थसमवायात् गोत्वादिषु सद्व्यवहारानुगम इति चेन्न। गोत्वसत्तासमवाययोः सत्प्रत्ययानुगमविगमप्रसङ्गात्। एतेन गोत्वादिष्वपि सत्वस्योपाधेर्वा सम्बन्धोत्प्रेक्षा-

---

**न गोत्वादाविति**। जातिरहितेषु प्रकारान्तरेण सद्व्यवहारोपपत्तिमाशङ्कते—**गोत्वादाविति**[1]। तत्र स्वरूपसत्ता[2] स्वरूपं व्यावृत्तमव्यावृत्तं वा। तत्राद्यं दूषयति—**न तेष्विति**। द्वितीये तस्यैवानुगतप्रतीतिविषयतया सामान्यतापत्तौ जातिहीनेषु सद्व्यवहारो न स्यात् इत्युक्तमेव [3]पूर्वम्। पूर्वत्रिके समस्त्युत्तरत्रिकस्य स्वरूपसत्वसादृश्यम्। तेन निमित्तेनोत्तरत्रिकेऽपि सत्ताजातिमारोप्य सद्व्यवहा[4]रोपपत्तिरिति शङ्कते—**गोत्वादिष्विति**। अतिप्रसङ्गेन प्रत्याचष्टे—**न द्रव्यादिष्विति**। सामान्यादाविव द्रव्यादावपि समारोपितसत्वजात्या सद्व्यवहारानुगमोपगमे प्रयोजकैक्यसिद्धेरनारोपितसत्वासिद्धिरित्यसिद्धिः। आरोपितसत्ताया अनारोपितसत्तापूर्वकत्वात् अनारोपितस[5]त्वाभावे तदारोपासंभवात्। द्रव्यादौ वास्तवमेव सत्वमित्याशङ्क्याह—**न चेति**। येषु गवाश्वादिषु गोत्वाश्वत्वादिसमवायः तेषु सत्तापि समवैति। तथा चैकस्मिन्नाश्रये समवायोपाधेर्गोत्वादिषुसद्व्यवहारानुगतिः, न त्वारोपितसत्वजातेरिति शङ्कते—**सत्तयेति**। नित्यद्रव्यसमवाययोरसमवेतत्वमिति स्थितेरसमवेतसमवायस्य सत्तयैकार्थसमवायात् गोत्वे, समवाये च सद्व्यवहारानुगमो न स्यात्। गोत्वे यथोक्तप्रयोजकसत्वेऽपि समवायेऽसत्वादिति परिहरति—**न गोत्वेति**। जात्यादेर्जातिरहितत्वपक्षे पक्षबाधकतर्कमुक्त्वा, तत्रापि सत्वजातिरस्ति, मानयोग्यत्वाद्युपाधिलक्षणं वा सत्वं तत्र वर्तते। अतो जातेरुपाधेर्वा गोत्वादिषु सद्व्यवहारानुगतिरिति पक्षं प्रतिक्षिपति—**एतेनेति**। एतत्पदपरामृष्टं हेतुमाचष्टे—**सत्वेनेति**। सत्वजात्या मानयोग्यत्वाद्युपाधिना वा गोत्वाश्वत्वादीनां उत्प्रेक्षितसम्बन्धेषु सद्व्यवहारा-

---

1. स्वरूप 2. सत्ता व्या 3. न्तिके ... त्त 4. व्यवहारपत्ति 5. सत्वारोपे

ऽपास्या। सत्वेनोपाधिना वा गोत्वादीनां सम्बन्धेष्वपि हि सद्व्यवहारानुगमानुपपत्तिस्तुल्या। तेष्वपि सत्तादिसम्बन्धेऽनवस्थापत्तेर्न क्वापि सत्प्रतिभासो भवेत्। सत्वेन स्फुरन्नेव हि सम्बन्धोऽन्यत्र सदिति प्रत्ययनिमित्तम्। स्वरूपसत्वेनैव ज्ञातः स तथास्त्विति चेत्तर्हि "सदेव सोम्येदमि'त्यादिवेदोदितसर्वस्वरूपसत्ताश्रयणेन सर्वत्र सद्व्यवहारोपपत्तावनन्तसत्ताकल्पनावैयर्थ्यम्। ततः सदन्तरकल्पनेऽनवस्थानात् सत्ताप्रतीतेर्मूलक्षतिरक्षता। अतः श्रुतिन्यायसिद्धे विगलिताखिलभेदे

---

नुगमस्यानुपपत्तिः। जात्यादि जातिहीनमिति मतवदत्रापि समाना सत्वादिसम्बन्धेषु तदभावादिः, सत्वादिसंबन्धेष्वपि सत्तादिसम्बन्धान्तराङ्गीकारादुपपन्ना तेषु सद्व्यवहारानुगतिरिति चेत् नेत्याह—तेष्वपीति। कुम्भादिष्वपि सत्प्रतीत्यनुपपत्तिरिति मूलक्षतिं दर्शयति-न क्वापीति। सत्वादिसम्बन्धः सत्वमात्रेणाज्ञात एव सद्व्यवहारहेतुरिति नानवस्थेत्याशंक्याह—सत्वेनेति। यत्र कदाचिदपि सत्वेन ज्ञायते तदसदित्युच्यते। अतो न तस्य सद्व्यवहारहेतुता शशविषाणवदित्याशयः। सत्वादिसम्बन्धः स्वरूपसत्वेन प्रतिपन्नोऽन्यत्र सद्व्यवहारहेतुरिति नानवस्थेति शङ्कते—स्वरूपसत्वेनेति। सत्वादिसम्बन्धात् कुम्भादिषु सद्व्यवहारः। तत्र तु स्वरूपसत्वेनेति ब्रुवतो गौरवात् न सद्भेदकल्पनेत्युत्तरमाह—तर्हीति। स्वरूपसत्वं व्यवहारहेतुत्वेनाशिश्रियिषितं चेत् तदेव प्रामाणिकं सर्वत्राश्रयितुं युक्तमित्यर्थः। यदि वैदिकं अखण्डैकरसं सत् अन्तरेण सदन्तरं परिकल्प्यते तदा तत्रापि सद्व्यवहाराय सदन्तरकल्पनायां युगपदनन्तसत्ताप्रतीत्ययोगादाद्यमपि सत्वं न प्रतीयेतेति नाद्येऽपि सद्व्यवहार इति परपक्षदूषणं [1]निरस्यति—तत इति।

कथं तर्हि सकलमपि जगदसदनृतमिति वदतोऽपि मते जगति सद्व्यवहार इत्याशङ्क्य सदेवेत्यादिश्रुतेरे'क*स्यैवास्तु महिमे'त्यादिन्यायाच्च सिद्ध सत्त्वे तादात्म्याध्यासाज्जगति तद्व्यवहार इति स्वसिद्धान्तमाह—अत इति। अथ सत् आनन्दादेर्भिद्यते घटसमाना[2]धिकरणत्वात्, तद्गतरूपवत्। यद्वा सत्वं जड-

---

1. निगमयति 2. समानत्वा

*एकस्यैवास्तु महिमा, यन्नानेव, प्रकाशते।
लाघवान्न तु भिन्नानां यच्चकास्त्यभिन्नवत्॥

सत्तत्वे जगदध्यस्तं सद्व्यवहारगोचर इत्यास्थेयम् । तदेवं तर्कबाधादि-बहुदोषदुष्टत्वात् सद्भेदे, नानुमानान्तरमपि सम्भवेत् ।

### सच्चिदानन्दानां भेदपूर्वपक्षमुपन्यस्य तेषामभेदव्यवस्थापनम्

अथ मानम्---सन्न चिदानन्दाद्यभिन्नं चक्षुर्ग्राह्यत्वात् कुम्भवत्, अनेकवृत्तित्वाद्वा कुम्भत्ववदिति। नैवम्। अभेदाभावो हि त्वया भेदो अन्योन्याभावो वा आश्रयणीयः। परस्परविरोधिनोरन्यतरनिषेधेऽन्य-तरविधानाश्रयणात्। तत्र नाद्यः, भेदसाधनस्य दूषितत्वात्। चरमे विकल्पे आद्यो हेतुरन्योन्याभावेनानैकान्तः। न च तदन्यत्वेन हेतुर्विशेषणीयः, तदसम्भवात्। न ह्यन्योन्याभावादन्यत्वं सम्भवती-त्युक्तम्। द्वितीयस्तु हेतुरेवासिद्धः। मया हि सति सर्वः प्रपञ्चो वर्तत इतीष्यते, न तु तत्सर्वत्र वर्तत इति।

---

वृत्ति सद्वृत्तित्वात्, मेयत्ववदित्यादिप्रयोगात् सदादिभेदमाशङ्कमानं प्रत्याह---**तदेवमिति**। भेदमपवदतोऽभेदानुमितिमभिप्रेत्याशङ्कते--**अथेति**। चाक्षुषत्वं शङ्कितांप्रयोजकत्वादिना प्रत्युक्तमित्याशङ्क्य हेत्वन्तरमाह---**अनेकेति**। अभेदस्तादात्म्यमैक्यं वा? तादात्म्ये, तदभावोऽन्योन्याभावः ऐक्ये तदभावो भेदः "परस्परविरोधे हि न प्रकारान्तरस्थिति"रिति न्यायादिति मन्वानो विकल्पयति---**नैवमित्यादिना**। सदादिभेदस्य विकल्प्य निरासादभेदा-भावस्य भेदत्वपक्षो न युक्त इत्याह---**तत्रेति**। अभेदाभावोऽन्योन्याभाव इति पक्षान्तरं प्रत्याह---**चरम इति**। चाक्षुषत्वमन्योन्याभावेऽस्ति न च तस्मि-न्नसौ वर्तते अनवस्थानादित्यनैकान्तिक[1]त्वमित्यर्थः। अन्योन्याभावादन्यत्वे सति चाक्षुषत्वं हेतुरित्याशङ्क्याह---**न चेति**। अन्योन्याभावादन्यत्वस्यासंभवं साधयति--**न हीति** "भेदस्य भेदाभावे ततोऽन्यत्वासिद्धेरि"त्यत्र दर्शितमेत-दित्याह---**इत्युक्तमिति**। अनेकवृत्तित्वहेतुं प्रत्याह---**द्वितीयस्त्विति**। असिद्धत्वमेव साधयति---**मया हीति**। दृष्टान्तावष्टम्भेन शङ्कते---**ननु यथेति**। परस्य भेदान्योन्याभावातिरिक्ताभेदाभावासिद्धेस्तस्य न साध्यतेति

---

1. त्वमि अ

ननु यथा ते दृक्दृश्ययोर्भेदाद्यतिरिक्तो अभेदाभावस्तथा सच्चिदादीनामभेदाभावः साध्यः स्यात् । न । अप्रसिद्धत्वात् । त्वया हि भेदाभेदयोरन्यतरनिषेधेऽन्यतरविधिरिष्यते । यतस्ते भावाभावौ वस्तुनी इति मतम् । अतोऽप्रसिद्धो भेदाद्यतिरिक्तोऽभेदाभावो न साधयितुं शक्यः । आगमविरोधाच्च । "सदेवेत्यु"पक्रम्य "तत्वमसी"त्यन्तेन सद्रूपस्य ब्रह्मणश्चिदात्मैक्यं सतात्पर्येणागमेन बोध्यते । अतस्तद्विरोधो दुर्वारः सतोऽभेदाभावानुमाने । तस्मान्न सतो भेदोऽनुमेयः । नाप्यभेदाभाव इति स्थितम् ।

नन्वेवमप्यनुभवात्मनोर्भेदो मनसावसीयते । अहमनुभवामीत्यनुभवाश्रयतयात्मनो मनोऽवगम्यत्वात् । ज्ञानं च भिन्नाश्रयविषयं प्रसिद्धम् । प्रयोगस्तु—विवादपदं भिन्नाश्रयविषयं ज्ञानत्वात्कुम्भज्ञानवत् । अनात्मविषयत्वमत्रोपाधिरिति चेन्न । परात्मज्ञाने

---

दूषयति––नाप्रसिद्धत्वादिति । तदेव साधयति––त्वया हीति । इत्थमङ्गीकारे हेतुमाह––यत इति । भेदेतरेतराभावातिरिक्ताभेदाभावसाधनमप्रसिद्धविशेषणत्वादयुक्तमिति निगमयति––अत इति । सदादेरभेदाभावसाधने दोषान्तरमाह––आगमेति । उपक्रमोपसंहारैकरूप्या[1]दिवशादागमबोधितं नान्यथयितुं शक्यमित्याशयेन विशिनष्टि सतात्पर्येति । भेदसाधनदूषणमुपसंहरति–तस्मान्नेति । अभेदाभावसाधनबाधनं निगमयति–नापीति । सच्चिदानन्दानामभेदेऽपि चिदात्मनोर्भेदोऽस्तीति शङ्कते––नन्विति । आत्मनो मनोगम्यत्वाभावात्, भेदस्य न तद्गम्यत्वमित्याशङ्क्याह––अहमिति ।

मनोवेद्यत्वे च सुखादिवदनात्मते[2]ति यः उक्तमर्थं न श्रद्धत्ते तं प्रत्यनुमानं वक्तव्यम् । [3]तत्र व्याप्तिमाह–ज्ञानं चेति । यज्ज्ञानं तत् भिन्नाश्रयविषयं[4] दृष्टं घटज्ञानमि[5]त्यादौ । अहमिति ज्ञानं पक्षीकृत्यानुमानमारचयति— प्रयोगस्त्विति । भागे सिद्धसाध्यतानिरासार्थं विवादपदमिति पदम् । अनात्मविषयत्वं कुम्भज्ञानस्य भिन्नाश्रयविषयत्वे प्रयोजकं, न ज्ञानत्वमिति व्याप्यत्वा-

---

1. सप्यादि....दा 2. त्मतेति श्रौतय 3. व्याप्तियाह 4. भिन्नाश्रयविषय 5. मित्या

साध्याव्यापकत्वात् । नित्यात्मप्रकाशेनात्मनोऽस्फुरणे च 'सुखमहमस्वाप्समि'ति सुषुप्तिकालीनात्मा न परामृश्येतेति बाधकतर्कसद्भावात् न शङ्कितोपाधितापि । न । आत्मनोऽगम्यताश्रुतेः "यन्मनसा न मनुते येनाहुर्मनो मतमि"ति हि श्रुतिः । अत आत्मनो मनोऽगम्यत्वात् न तद्भेदस्तद्गम्यः । स्वप्रकाशत्वाच्चात्मनो न भेदो मानगम्यः । न हि धर्मिप्रतियोगिनावस्पृशन्मानं भेदं संस्पृशेत् । तथात्वे च भेद इत्येवावभासेत । न त्विदमस्मात् भिन्नमिति । स्वरूपभेदपक्षेऽप्ययं दोषस्तुल्यः । वस्तुनो निरपेक्षत्वात् । भेदस्य सापेक्षदृष्टिविषयतया प्रसिद्धस्य वस्तुस्वरूपतोच्यते किं वा ततोऽन्यस्य । नाद्यः, सापेक्ष-

---

सिद्धिमाशङ्कते---अनात्मविषयत्वमिति । यत्र भिन्नाश्रयविषयत्वं तत्रानात्मविषयत्वमित्यस्यान्यथाभावेन दूषयति—न परात्मेति । एतेनात्माविषयत्वोपाधिरपास्तः । आत्मनि स्वाश्रयज्ञानविषयत्वे बाधकाभावादुपाधिशङ्केति चेन्नेत्याह—नित्येति । न च प्रकरान्तरेण परामर्शोपपत्तिरिति वक्ष्यते । आत्मनो मनोवेद्यत्वस्य श्रुत्या निषिद्ध[1]त्वादात्मप्रतियोगिको भेदो मानसो न भवतीति समाधत्ते---नात्मन इति । न चासंस्कृतमनोविषया श्रुतिः नियामकाभावात् । न च "मनसैवानुद्रष्टव्यमि"त्यादि नियामकं, तस्य करणान्तरदृश्य[2]त्वप्रतिषेधार्थत्वात् । अन्यथोपनिषदर्थव्याघातात्, संस्कृतस्य मनसो वाक्यसहायताया विवक्षितत्वाच्च । आत्मभेदस्य मानसत्वं निरस्य मानान्तरगम्यत्वं निरस्यति---स्वप्रकाशत्वाच्चेति । कथं पुनः स्वप्रकाशस्य भेदो न मानगोचरः । तत्र वक्तव्यं भेदो धर्मो, वस्तुस्वरूपं वेति । आद्ये दोषमाह---न हीति । धर्म्यादिसत्त्वैव भेदज्ञानोपयोगिनी, न तस्य भेदग्राहकमानग्राह्यतेति चेत्तत्राह---तथात्वे चेति । [3]धर्म्याद्यघटितभेदासम्भवसाम्येन पक्षान्तरं निरस्यति---स्वरूपेति । निरपेक्षवस्तुस्वरूपस्य भेदस्यापि तथात्वाद्विशिष्टप्रतीत्यनुपपत्तिरिति तुल्यत्वमेव स्फुटयति---वस्तुन इति । दोषान्तरं वक्तुं विकल्पयति---भेदस्येति । 'अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माकारे[4]णावभास' इति वचनमनुसृत्य लोकसिद्धभेदस्य वस्तुस्वरूपत्वपक्षं दूषयति—

---

1. निषिद्धत्व...प्रति 2. दृश्यप्रति 3. धर्मादिघटित 4. रुद्धधर्माकारेणभेदश्च

निरपेक्षदृष्ट्योस्तादात्म्यायोगात् । द्वितीये तु संज्ञाविवादः स्यात् । तस्मान्न वस्तुस्वरूपं भेदः । नापि वस्तुसंस्पर्शी भेदग्रहः ।

ननु विशिष्टज्ञानं विशेषणज्ञानपुरस्सरं न तु विशेषणगोचरम् । अन्यथा कथं 'सुरभि चन्दनमि'ति विशिष्टज्ञानं भवेत् । अतः स्वप्रकाशस्यापि भेदग्रहो नानुपपन्नः । न । शब्दादिभेदस्य चाक्षुषत्वप्रसङ्गात् । यत्र सामग्र्यभावेऽप्यापरोक्ष्यं दृश्यते तत्रास्माकं नित्यानुभवादेव तदापरोक्ष्यम् । यथास्मिन्नाकाशदेशे पक्षी प्लवत इत्यापरोक्ष्यम् । तस्मान्न स्वतस्सिद्धस्य भेदो मानगम्य इति सिद्धम् ।

### आत्मनः स्वप्रकाशत्वे प्रमाणनिरूपणम्

नन्वात्मनः स्वयंप्रकाशत्वे किं मानम् । "अत्रायं पुरुषः स्वयं

---

नाद्य इति । अलौकिकस्य वस्तुस्वरूपत्वपक्षे, वस्तुनि भेदसंज्ञा त्वया क्रियते । मया तु नेति नाममात्रे विप्रतिपत्तिरापतेत् । [1]त्वयापि लोकसिद्धभेदस्य वस्तुस्वरूपत्वानङ्गीकारादित्याह—द्वितीये त्विति । स्वरूपभेदवाददोषमुपसंहरति—तस्मान्नेति । धर्मभेदवादेऽपि पूर्वोक्तं दोषं निगमयति——नापीति । स्वप्रकाशस्य मानागोचरत्वात्तद्भेदस्यातद्गोचरत्वमित्यत्र चोदयति——नन्विति । विशिष्टज्ञानस्य विशेषणविषयत्वे दोषमाह——अन्यथेति । तस्य तदविषयत्वे लाभमाह——अत इति । विशेषणविषयं विशिष्टज्ञानमेष्टव्यम् । अन्यथा श्रोत्रनेत्राभ्यां शब्दरूपाव[2]साये रूपं भिन्नं[3] शब्दादिति विशिष्टज्ञानं चाक्षुषमापतेत् । तथा च रूपत्यागेन शब्दे प्रवृत्तिर्न स्यात् इति परिहरति—न शब्दादिभेदस्येति । विशिष्टज्ञानस्य विशेषणविषयत्वे सुरभि चन्दनमिति विशिष्टज्ञानमयु[4]क्तं, अन्यथा सौरभ्यमपि चन्दनवच्चाक्षु[5]षं स्यादिति तत्राह—यत्रेति । घ्राणचक्षुषोर्विशेष्यमात्रे साक्षी प्रविशतीत्यभिप्रायः । सच्चिदानन्दात्मस्वरूपं ब्रह्मेत्युपपादितमुपसंहरति—तस्मान्नेति । स्वत[6]स्सिद्धत्वमसहमान श्शङ्कते——नन्विति । आगमोऽनुमानमर्थापत्तिर्वा मानमिति विकल्पमाशङ्क्य-

---

1. तथापि 2. वसाये शब्दो 3. भिन्नो रूपादिति 4. ....सौरभ्यमपि 5. चाक्षुषं तदपि चेतरवत् । ....भ 6. सिद्धस्व

ज्योतिरि"त्यागम इति चेन्न। "वागेवास्य ज्योति"रितिवदात्मनो ज्योतिःकरणत्वात् ज्योतिष्ट्वाभिधानात्। अन्यथाहमिति वेद्यतानुभवविरोधः। एतेनानुमानमप्यपास्तम्। अपि च स्वयंज्योतिष्ट्वमन्यत्र प्रसिद्धमप्रसिद्धं वा। आद्ये असाधारणमात्मत्वादिसाधनं सपक्षाप्रवेशात्। न च साधनान्तरमत्रान्वयि सम्भवेत्। आत्मानात्मनोः साधारणधर्मानङ्गीकारात्। द्वितीये चाप्रसिद्धविशेषणः पक्षः। आत्मा

---

परिहरति—अत्रेत्यादिना। बहिरिन्द्रियोपरमेऽपि स्वप्ने मनसः सत्वात्तज्जन्यज्योति[1]र्विशिष्टतया ज्योतिष्ट्वमात्मनो व्यपदिश्यते। अतो वागादिकरणेष्विव कर्तरि ज्योतिष्ट्वं भाक्तमिति भावः। सम्भवति मुख्ये पक्षे गौणो न ग्रहणमर्हतीत्याशङ्क्[2]य स्वपक्षविरोधान्मुख्यपक्षो न सम्भवतीत्याह—अन्यथेति। आत्मा स्वप्रकाशः आत्मत्वात् कुम्भ[3]वदिति व्यतिरेक्यनुमानमाशङ्क्य, वेद्यत्वानुभवविरोधेन निरस्यति—एतेनेति। अत्रातिदेशस्याधिकापेक्षत्वादपेक्षितमधिकमादर्शयितुमारभते—अपि चेति। तदर्थमेव साध्यं विकल्पयति—स्वयंज्योतिष्ट्वमिति। पक्षादन्यत्र साध्यम् प्रसिद्धमिति पक्षं प्रत्याह—आद्य इति। आदिपदेन द्रष्टृत्वादि निर्दिष्टम्। सपक्षाप्रवेशादिति। सति सपक्षे पक्षमात्रवृत्तित्वादित्यर्थः।

अथात्मा ज्ञानरूपो वेदान्तेषु ज्ञायते। तथा चानुभूतिः, तद्व्यवहारहेतुप्रकाशः, अनुभूतित्वादनुव्यवसायवदित्याशङ्क्याह—न चेति। न तावदात्मैवानुभूतिरनुभवविरोधात्, सामानाधिकरण्यश्रुतेश्च गुणगुणिभावविषयत्वात्। न चानुभूतित्वमुभयसाधारणं, तस्यात्ममात्रनिष्ठतया त्वयेष्टत्वात्। अनुव्यवसायश्च व्यवसायग्राहको, न वा। आद्ये प्रतिज्ञोदाहरणयोर्विरोधात्, ज्ञानग्राहकज्ञानस्यानङ्गीकारेण प्रतिज्ञाया अंगीकारेण च दृष्टान्तस्य प्रवृत्तेः। द्वितीये दृष्टान्तासिद्धिः व्यवसायग्राहकस्यैवानुव्यवसायत्वादिति भावः। स्वयञ्ज्योतिष्ट्वमन्यत्राप्रसिद्धमिति पक्षं प्रतिक्षिपति—द्वितीयेति। आत्मान्[4]यव्यवहारहेतुत्वेनोभयसिद्धप्रकाशस्यात्माव्यतिरेकसाधनान्नाप्रसिद्धविशेषणतेति शङ्कते—आत्मेति। आत्मव्यवहारकारणप्रकाशाभेदस्यात्मनोऽन्यत्र प्रसिध्यप्रसिद्धिभ्या-

---

1. ज्योति....तया 2. आशंक्य...क्ष 3. वदित्यनुमान 4. आत्मान्यहेतु

स्वव्यवहारकारणप्रकाशः आत्मत्वात् कुम्भवदिति व्यतिरेकिप्रयोगे नायं दोष इति चेन्न। आत्मनः सर्वव्यवहारागोचरत्वाभ्युपगमात्। तद्गोचरत्वे चात्मनः किमपराद्धं ज्ञानगोचरत्वेन। किञ्च अहमिति प्रसिद्धस्य धर्मित्वे उक्तोऽनुभवविरोधः, तदितरस्य धर्मित्वे च परस्याश्रयासिद्धिः। अपि चात्मनो वेद्यत्वे न किञ्चिद्बाधकमस्ति। एतेनार्थपत्तिरपि निरस्ता। अनुपपत्तेरभावात्। आत्मनो वेद्यत्वे प्रमातृत्वं न स्यादिति चेन्न। वेद्यानां नयनादीनां प्रमाणकरणत्ववदात्मनः प्रमाणोपादानत्वोपपत्तेः। तथापि कथमात्मनः स्वयं ज्ञातेति चेत् गुरुत्ववत् ज्ञानस्य स्वाश्रयातिशयहेतुत्वे विरोधानुपलब्धेरिति ब्रूमः। एतेन स्वात्मनि

---

मुक्तदोषप्रवृत्तिरित्यभिप्रेत्य परिहरति—**नात्मन इति**। तद्धेतुप्रकाशाभावात्तदात्मत्वसाध्यमप्रसिद्धमिति विशेषः। सर्वव्यवहारागोचरत्वमसिद्धमित्याशङ्क्याह—**तद्गोचरत्वे चेति**। आत्मनो व्यवहारविषयत्वस्यापि सम्भवाद्विपक्षबाधकाभावादप्रयोजकतेत्यभिप्रायः। स्वप्रकाशत्वानुमाने दोषान्तरं प्रतिजानीते—**किं चेति**। अहङ्कारो वा धर्मी तत्साक्षीवा, नाद्यो वेद्यत्वानुभवविरोधात्, अपसिद्धान्ताच्चेत्याह—**अहमिति प्रसिद्धस्येति**। द्वितीये त्वाश्रयासिद्धिः। परस्याहङ्कारसाक्षिणि प्रसिध्यभावादित्याह—**तदितरस्येति**। विपक्षबाधकाभावादप्रयोजकत्वं प्रतिज्ञातं प्रपञ्चयति—**अपि चेति**। बाधकाभावाभिधानमुपजीव्य तृतीयं निराकारोति—**एतेनेति**। जडवैधर्म्यमात्मनि मातृत्वं, तत्तस्य स्वप्रकाशत्वमन्तरेणानुपपन्नमित्यनुपपत्तेरभावस्यासिद्धिमाशङ्कते—**आत्मन इति**। प्रमातृत्वं हि प्रमां प्रत्युपादानत्वं, तच्च तस्य विषयत्वेऽपि सम्भवतीति दृष्टान्तेनोत्तरमाह—**न वेद्यानामिति**। वेद्यस्य प्रमातृत्वसिद्धावपि नयनादीनां स्वजन्यज्ञानाविषयत्वादात्मनोऽपि [1]ज्ञानकर्मकर्तृविरोधात् अयुक्तमात्मनः *स्वप्रकाशत्वमित्याशयेनाशङ्कते—**तथापीति**। गुरुत्वाश्रयकुम्भादेस्स्वगुरुत्वजन्यपतनातिशयशालित्ववत् ज्ञानाश्रयस्यात्मनः स्वज्ञानजन्यातिशयवत्वरूपं स्वज्ञेयत्वमविरुद्धमित्युत्तरमाह—**गुरुत्ववदिति**। गुरुत्वदृष्टान्तेन फलितमर्थं दर्शयति—**एतेनेति**। स्थाण्वादिषु

---

1. नोऽपि कर्म  * स्वज्ञातृत्वं

वृत्तिविरोधो व्याख्यातः ।

नन्वात्मनः परप्रकाश्यत्वेऽहमनहं वेति कदाचित्संशयः स्यात् । न । दुःखादिवदात्मन्यपि संशयाभावोपपत्तेः ।

स्यान्मतम् । ममेदमनुकूलमित्यादिविशिष्टप्रत्ययो विशेषण प्रत्ययाधीनसद्भावः । तस्य च विशेषणस्यात्मनोऽनन्यथासिद्धिरुक्ता मकरन्दादिषु । अतः सिद्धा आत्मनः स्वयंप्रकाशतेति । न । अनुकूलाद्यन्वयिनोऽहं प्रत्ययिनः स्वप्रकाशताया वेदान्तिनोऽप्यनिष्टत्वात् । तदन्यस्य चाशनायाद्यतीतस्यासङ्गस्य नानुकूनाद्यर्थान्वयः सम्भवी । न

---

वेद्येषु संशयस्य कदाचिद्दर्शनादात्मनो वेद्यत्वे तत्रापि तेन भवितव्यम् । न चाहमनहं वेति कश्चिदपि संशेते । तदेतदात्मनः सदा संशयशून्यत्वं, स्वतःसिद्धत्वमन्तरेणानुपपन्नमिति शङ्कते—नन्विति । स्वसत्तायां सन्देहहीनत्व-[1]मन्यत्राप्यास्थेयमिति समाधत्ते—न दुःखादिवदिति । अनुकूलविज्ञानान्मालादौ प्रवृत्तिः, प्रतिकूलविज्ञानाच्च कण्टकादौ निवृत्तिः दृष्टा, तथा च विशिष्टज्ञानं विशेषणज्ञानपूर्वकं विशिष्टज्ञानत्वात् दण्डिज्ञानवत् इति विशेषणात्मसिद्धिमुद्भावयति—स्यान्मतमिति । नन्वात्मनो ज्ञानं मनोवेद्यतया वा संविदाश्रयतया वा भविष्यतीति न स्वप्रकाशत्वं तत्राह—तस्य चेति । मानसवेदनीयत्वे वृत्तिविरोधात्, संवित्कर्मतामन्तरेणापरोक्षस्य संविदधीनप्रकाशत्वानुपपत्तेः संवेदनवत् स्वसंवेदनतेति वेदान्तिभिरुक्तमित्यर्थः । परिशेषानुमानफलमाह—अत इति । साभासाहङ्कारस्यानुकूलाद्यन्वयिनो वा स्वप्रकाशत्वं साध्यते तत्साक्षिणो वा? नाद्यः, अपसिद्धान्तापत्तेरित्याह—नानुकूलादीति । द्वितीयं दूषयति—तदन्यस्येति । अहङ्काराद्यारोपद्वारा प्रत्यगात्मन्यनुकूलाद्यन्वयादुपपन्नमहङ्कारसाक्षिणः स्वप्रकाशत्वप्रसाधनमिति चेत्तदापि विशिष्टप्रत्ययो विशेषणात्मस्वप्रकाशत्वे लिङ्गमर्थापत्तिर्वा । नाद्यः, अप्रसिद्धविशेषणत्वापत्तेः । न च विशिष्टप्रत्ययो विशेषणप्रत्ययमात्रे लिङ्गम् । [2]स्वप्रकाशत्वं तु परिशेषतः स्वतो भविष्यतीति वाच्यम् । परिशेषस्यानुमानत्वे

---

1. मन्यत्र...मि 2. सद्ध

चेयमनुमानादिमानोक्तिः सम्भवति। साध्याप्रसिध्यादिग्रस्तत्वात्। अतो यत्किंचिदेतत्। एवमात्मनः स्वयंज्योतिष्ट्वासिद्धेः प्रसिद्धत्वाच्च दृश्यत्वं इत्यास्थेयम्।

### आत्मनो दृश्यत्वे दोषकथनम्

प्रयोगस्तु—आत्मा दृश्यः, न्यायविषयत्वात् धर्मवत्। न तावदस्य न्यायविषयत्वमसिद्धम्। शारीरकानारम्भप्रसङ्गात्। अयमेव च विपक्षे बाधकस्तर्कः। नापि विरुद्धतादिदोषः शंक्यः। सपक्षवृत्त्यादेः स्फुटत्वादिति।

अत्रोच्यते—न तावत् "अत्रायं पुरुषः स्वय ज्योतिरि"त्याग-

---

तत्रोक्तदोषानुषङ्गात्। न द्वितीयः विशेषणस्फुरणमात्राद्विशिष्टस्फुरणोपपत्तेः। एतेन परिशेषस्यार्थापत्तिता प्रत्युक्ता। अत्यन्ताप्रसिद्धस्वप्रकाशत्वस्योपपाद्यत्वासंभवात्। प्रकारान्तरेणात्मसरणसंभवे च परिशेषासंभवादिति मत्वाह—न चेति। किं च स्वप्रकाशत्वप्रमाणस्यात्मा विषयो, न वा। आद्ये तस्य तत्त्वा*सिद्धिः, प्रमाणविषयत्वात्। द्वितीयेऽपि तदसिद्धिः, प्रमाणस्य तदविषयस्य तत्र स्वप्रकाश[2]त्वासाधकत्वादित्यभिप्रेत्याह—अत इति। तर्हि प्रकाश एवात्मनि मा भूदित्याशङ्क्याह—एवमिति। आत्मप्रकाशस्य जन्यत्वे प्रमाणमाह—प्रयोगस्त्विति। औपनिषदस्य कुतो न्यायविषयत्वं तत्राह—न तावदिति। श्रुतिप्रतिपन्नमात्मानं न्यायेन निर्णेतुं न्यायसन्दर्भरूपं शारीरकमारब्धम्। अतो हेतुसिद्धिरित्यर्थः। आत्मनो दृश्यत्वाभावे शारीरकानारम्भप्रसक्तिरिति अप्रयोजकत्वं परिहरति—अयमेवेति। प्रमाणोपपत्तिभ्यामात्मनो वेद्यत्वे प्राप्ते सिद्धान्तमारभते—अत्रेति। यत्तावदत्रेत्यादि स्वयंज्योतिष्ट्वश्रुतेरनुभवविरोधोद्भावनं, तन्निरस्यति—न तावदिति। अहङ्कारस्य वेद्यत्वमनुभूयते। तद्द्रष्टुः स्वप्रकाशत्वं श्रूयते। अतो नानुभवश्रुत्योर्विरोधः। भिन्नविषयत्वादित्यर्थः। अहङ्कारातिरिक्तो द्रष्टा मानदृष्टो नास्ति। अहङ्कार-

---

* स्वप्रकाशत्वासिद्धिः 2. प्रकाशत्वानेकत्वा

मस्याहमिति वेद्यतानुभवविरोधः। अहंकारद्रष्टुरेव स्वयंज्योतिष्ट्वबोधकत्वात्। अहमनुभवामीत्यहंकार एव द्रष्टा प्रत्यक्षसिद्ध इति चेन्न। देहस्येव अहंकारस्याप्यनात्मन आत्मसंभेदादेव द्रष्टृत्वप्रतीत्युपपत्तेः। अनात्मत्वं चाहंकारस्य छन्दोगोपनिषद्यात्माहंकारादेशयोः पृथक्पाठात्सिद्धम्। तत्र हि "अथात आत्मादेशः" इत्यात्मादेशात् पृथक् अहंकारादेशः पठ्यते "अथातोऽहंकारादेशः" इति। स्मृतौ च "अहङ्कार इतीयमि"त्यहंकारमुक्त्वा पृथगात्मोच्यते "अपरेयमितस्त्वन्यामि"ति। तदेवं स्वयं ज्योतिष्ट्वश्रुतेर्न विरोधगन्धोऽपि। विरोधाभावादेव च न यागादिवत् भाक्तमात्मनो ज्योतिष्ट्वं। एतेनानुमानेऽपि विरोधोऽपास्तः। प्रयोगस्तु—आत्मा आत्मव्यवहारकारणप्रकाशः

---

स्यैव द्रष्टृत्वे चानुभवविरोधतादवस्थ्यमिति शङ्कते—अहमिति। अहङ्कारद्रष्टुरशेषोपनिषत्प्रसिद्धत्वादहङ्कारस्य द्रष्टृत्वप्रती[1]तेश्च, तत्संभेदादेवोपपत्तेः, मैवमित्याह—न देहस्येति। अनात्मत्वस्यासिद्धिमाशङ्क्याह—अनात्मत्वं चेति। पृथक्पाठमेव पठति—तत्र हीति। मुमुक्षुत्वानन्तरमात्मज्ञानस्य मोक्षहेतुत्वादात्मोपदेशः, आत्मजिज्ञासानन्तरं अनात्मत्वेन हेयत्वादहङ्कारस्योपदेश इति विभागः। न केवलं श्रुतावेवाहङ्कारात्मानौ पृथगुच्येते, किं तु स्मृतावपीत्याह—स्मृतौ चेति। अहङ्कारस्य श्रुतिस्मृतिभ्यामनात्मत्वात्तद्द्रष्टुरेव स्वयंज्योतिष्ट्वाभिधानात् न स्वयंज्योतिष्ट्वश्रुतेरनुभवविरोधोऽस्ति इति निगमयति—तदेवमिति।

यत्तु यागादिकरणेष्विवात्मनि कर्तरि भाक्तं ज्योतिष्ट्वमिति। तत्राह—विरोधाभावादिति। यत्पुनरेतेनानुमानमपास्तमिति तत्राह—एतेनेति। स्वयंज्योतिष्ट्वश्रुतेर्वेद्यत्वानुभवविरोधनिराकरणेनेति यावत्। किं तदनुमानं, यस्मिन्विरोधो निरस्यते, तदाह—प्रयोगस्त्विति। विषयप्रकाशस्य तद्व्यवहारहेतुत्वादात्मनि चाभिवदनादितद्धेतुप्रकाशसिद्धेः तदात्मत्वमात्मनि साध्यं नाप्रसिद्धमिति नाप्रसिद्धविशेषणता इति भावः। नन्वहङ्कारस्तद्द्रष्टा वा धर्मी। नाद्यः। तस्य स्वप्रकाशत्वप्रसाधने सिद्धान्तविरोधात्। नेतरः

---

1. प्रतीतेश्चपपत्ते

द्रष्टृत्वात् कुम्भवदिति व्यतिरेकी। न तावदाश्रयासिद्धिः। उभयसिद्ध-स्यैवाहंकारद्रष्टुराश्रयत्वात्। न च प्रमाणसिद्ध एवधर्मी। प्रतिबिम्बादेरपि धर्मित्वात्। वक्ष्यते चैतन्मिथ्यात्वानुमाने।

अहंकारस्यांनात्मत्वनिरूपणम्

नन्वात्मनि ते व्यवहार एव नास्ति। अतस्तत्कारणप्रकाशता अप्रसिद्धा। अस्त्यात्मनि वैदिकशब्दव्यवहार इति चेन्न। अपौरुषेयस्य प्रकाशकारणतासम्भवात्। अतो भवत्पक्ष एवाप्रसिद्धविशेषणः पक्ष इति, उच्यते—लोकेऽपि लक्षणयात्मनि शब्दप्रवृत्तिर्दृश्यते। "गाढ-

---

तस्य ममासिद्धेराश्रयासिद्धेरित्यत आह—न तावदिति। श्रुतिस्मृतिप्रसाधिताहङ्कारद्रष्टुरुभयेष्टस्य धर्मित्वान्नाश्रयासिद्धिरित्यर्थः। नन्वसौ मानगम्यो न वा। आद्ये, धर्मिग्रहविरोधः। अन्त्ये त्वाश्रयासिद्धिः। मानसिद्धस्यैवाश्रयत्वादिति तत्राह—न चेति। प्रतिपन्नत्वस्यैव धर्मित्वसंभवे केवलव्यतिरेकिणि प्रमाण-विशेषणं[1] अनभिमतमिति भावः। प्रतिपन्नमात्रस्याश्रयत्वे गगनकुसुमादेरपि सुरभित्वादिसाधने धर्मित्वं स्यात्। प्रतिबिम्बादौ च प्रामाणिकज्ञानस्यैव धर्मित्वं, न तात्कालिकस्य विषयस्येत्याशङ्क्याह—वक्ष्यते चेति। सिद्धान्तमनुरुध्या-प्रसिद्धविशेषणत्वं प्रागुक्तमनुसारयति—नन्वात्मनीति। तत्र लौकिकव्यव-हाराभावेऽपि वैदिकव्यवहारसद्भावात्तद्धेतुप्रकाशात्मत्वप्रसाधनमविरुद्धमिति-[2]सिद्धान्ती ब्रूते—अस्तीति। वैदिकव्यवहारस्यात्मनि सत्वेऽपि तस्य नित्य-तया सिद्धस्य प्रकाशाभावान्न तदात्मत्वं शक्यसाधनमिति पूर्ववाद्याह—अपौरुषेयस्येति। फलितं दूषणं स्फुटयति—अत इति। लौकिकशाब्द-व्यवहारहेतुप्रकाशात्मत्वमात्मनि शक्यसाधनमिति समाधत्ते—उच्यत इति। असङ्गोदासीनाक्रियागुणे प्रतीचि शब्दप्रवृत्तिहेत्वभावान्न तत्प्रवृत्तिरित्याशङ्क्य-विशिनष्टि—लक्षणयेति। लाक्षणिकशाब्दव्यवहारहेतुप्रकाशत्वस्य वादिनः सिद्धावपि प्रतिवादिनोऽसिद्धेरप्रसिद्धविशेषणत्वं तदवस्थमिति शङ्कते—

---

1. अनक्षतं 2. मितिब्रूते

महमद्य सुप्त'' इति। तथापीत्थं परस्यात्मनि शब्दप्रयोगोऽप्रसिद्ध इति चेत्। नायं दोषः। विवक्षितस्यात्मनि शब्दप्रयोगमात्रस्योभयसिद्धत्वात्। तदेवं नाप्रसिद्धविशेषणः पक्षः। द्रष्टृत्वमप्यात्मनो "नान्योऽतोऽस्ति द्रष्टे"त्याद्यया श्रुत्यैवानुमोदितम्। आत्मनो दृश्यत्वे किं बाधकमिति चेत्, "सुखमहमस्वाप्सम्" इति परामर्शासम्भवप्रसङ्ग इति ब्रूमः। न हि सुषुप्तस्यात्मनि अनुभावः। प्रमाणाभावात्, सुषुप्तिव्याहतिप्रसङ्गात्। न चासंविन्नो जडः परामृष्टुं शक्यः। सुषुप्तोत्थितः स्वापकालीनमात्मनि दुःखाभावमनुमिमीते "सुखमहमस्वाप्स"मिति

---

**तथापीति।** नात्मनि शब्दव्यवहारविशेषहेतुप्रकाशता साध्या। किं तु तद्व्यवहारमात्रहेतुप्रकाशता [1]अतो नाप्रसिद्धविशेषणता इत्युत्तरमाह—**नायमिति।** किं हि द्रष्टृत्वं प्रमाश्रयत्वं वा भ्रान्त्याश्रयत्वं वा दर्शनरूपत्वं वा। आद्ययोर्वाद्यसिद्धिः। तृतीये प्रतिवाद्यसिद्धिः, इत्याशङ्क्य साधारणे हेतौ विशेषणविकल्पेन निरसनमतिप्रसङ्गीत्यभिप्रेत्याह—**द्रष्टृत्वमिति।** द्रष्टृत्वहेतोरप्रयोजकत्वमाशङ्कते—**आत्मन इति।** बाधकाभिधानेनाप्रयोजकत्वमुद्धरति—**सुखमिति।**

ननु सुप्तो मानेनात्मानं सुखितमनुभूयोत्थितः सुखमस्वाप्समिति परामृशति। अतो न दृश्यत्वे तदनुपपत्तिरित्याशङ्क्याह—**न हीति।** तत्र हेतुमाह—**सुषुप्तीति।** अशेषविशेषविज्ञानविरामरूपत्वात्सुषुप्तेरित्यर्थः। आत्मनः सुखिनः स्वापे प्रतीतिमन्तरेणोत्थितस्य परामर्शविषयत्वमिष्यतामित्याशङ्क्याह—**न चेति।** स्वमते मानाविषयत्वात्स्वपतः [2]स्वरूपसुखात्मनः सुषुप्तस्य परामर्शविषयता युक्तेति मत्वा विशिनष्टि—**जड इति।** न च [3]तस्मिन् सुषुप्तात्मनि संस्कारासिध्या परामर्शासिद्धिः। अवस्थाविशेषविशिष्टतया दृष्टस्य विशेषणनाशे विशिष्टनाशादेव संस्कारद्वारा परामर्शोपपत्तेरिति भावः। नेदं स्वापेऽनुभूतसुखविषयमनुसन्धानम्। किं तु तत्कालीनदुःखाभावस्य आत्मीयत्वेनानुमानमिति शङ्कते—**सुषुप्तेति।** व्याप्ति[4]पक्षधर्मतापराम-

---

1. शता....वाप्र 2. स्वपतस्सुरत 3. तस्मिन् त्मनि 4. पक्षपरार्शा

**चेन्न। व्याप्त्याद्यनुसन्धानाभावात्। न चाभ्यासपाटवात्तदभाव इति कल्प्यम्। अन्यथाप्युपपत्तेः, कल्पनाबीजाभावात्, स्वापकालीनधर्म्याद्यसिद्धेश्च नानुमानम्। अहं स्वप्नजागरान्तराले, न दुःखभाक्**

---

र्शाधीनत्वादनुमानस्यात्र तदभावान्नानुमानमित्याह—**न व्याप्त्यादीति**। [1]अन्नादाविष्टसाधनत्वानुमाने सदपि व्याप्त्यादि, अभ्यासातिशयान्न परामृश्यते तद्वदत्रापि इत्याशङ्क्याह—**न चेति**। अन्नादाविष्टसाधनत्वस्याप्रत्यक्षत्वान्मानान्तरागम्यत्वाच्चानुमानगम्यं तदिति युक्तम्। अतो विद्यमानस्यापि व्याप्त्यादेरभ्यासपाटवान्नानुसन्धानमिति, अनन्यथासिद्धकार्यदर्शनात् कल्प्यते। इह त्वनन्यथासिद्धकार्याभावात् विद्यमानव्याप्त्यादेरननुसन्धानं अशक्यं कल्पयितुमित्यर्थः। सुखमस्वाप्समिति प्रयोगप्रत्ययौ स्वापकालीनसुखानुभवमन्तरेणानुपपन्नाविति अनन्यथासिद्धकार्यवशात् विद्यमानव्याप्त्याद्यननुसन्धानमभ्यासातिशयाधीनमेष्टव्यमित्याशङ्क्य, स्वापे स्वप्रकाशतया स्वरूपसुखानुभवेऽपि समुत्थितस्योक्तप्रयोगाद्युपपत्तेस्तत्कल्पना निर्निमित्ता न युक्तेत्याह—**अन्यथेति**। अभ्यासपाटवाद्व्याप्त्यनुसन्धानशून्यानुमानकल्पनेऽपि धर्म्याद्यङ्गसिद्धिरङ्गीकरणीया। न च प्रकृते धर्म्यादि सिद्धमित्यङ्गिनोऽनुमानस्य असिद्धिरित्याह—**स्वापेति**। स्वापतद्गतात्मनोरसिद्धावपि स्वप्नजागरयोरात्मनश्च सिद्धत्वान्न धर्म्याद्यसिद्धिरिति स्वाभिसन्धिमादर्शयन्नाशङ्कते—**अहमिति**। सुषुप्तौ पुरुषान्तरे सदपि दुःखं सुषुप्तौ नानुभूत[2]मिति तस्मिन्नस्मर्यमाणतदातनदुःखत्वमस्तीति व्यभिचारः। तन्निरस्यति—**नियमेनेति**। आप्तवचनात्पुमन्तरदुःखे स्वस्वापकालीने कालान्तरावगतेऽस्मरणमपि कदाचिदुपपद्यते न तु नियमेनास्मरणमिति भावः। अथवा तत्काले दुःखवतोऽपि कस्यचिदस्मर्यमाणतत्कालीनदुःखत्वं, संस्कारोन्मेषाभावादुपपन्नमिति व्यभिचारः। तन्निरासार्थं **नियमेने**त्युक्तम्।

अन्तरालशब्देन सुषुप्तिर्वा कालान्तरं वोच्यते। उभयथापि तदसिद्धिः, सुषुप्तिसाधकमानाभावात् साक्षिणोऽनङ्गीकारादवस्थात्रयातिरिक्तकालाप्रसिद्धेश्च।

---

1. साधनत्वानुमाने सदपि 2. मित्युक्तिकेसति

नियमेनास्मर्यमाणतदातनदुःखत्वात् कुम्भवदित्यनुमेति चेत्। न। अन्तरालकालासिद्धेः साध्यहेत्वोरप्रसिद्धत्वात्। प्रकृतपरामर्शकालः पूर्वकालादपरः परामर्शकालत्वात्, संप्रतिपन्नवत् इति तत्सिद्धिरिति चेन्न। अन्योन्याश्रयत्वात्। अनुमानतः परामर्शसिद्धौ हि तत्कालात्पूर्वकालसिद्धिः, तत्सिद्धौ चानुमानतः परामर्शसिद्धिरिति। तस्माच्च न सम्भवी स्वापपरामर्शः। अपि चात्मनः स्ववेद्यत्वे स्वात्मनि वृत्तिविरोधो दुर्वारः।

न च गुरुत्ववत् ज्ञानस्य स्वाश्रयातिशयहेतुत्वादविरोधः। कर्मकारकरहितस्य ज्ञानस्यासम्भवात्। ज्ञानस्याश्रय एव तज्जन्यातिशयवत्त्वात् कर्मकारकमिति चेन्न। कर्मताव्यापकरहितत्वात्। परसम-

---

अतोऽन्तरालविशिष्टसाध्यहेत्वोरसिद्धेर्नानुमानमिति सिद्धान्ती स्वाभिप्रायं प्रकटयति—**नान्तरालेति**। दोषद्वयं परिहर्तुं अन्तरालकालमनुमिनोति-**प्रकृतेति**। उत्थितस्य स्वसम्बन्धित्वेनान्तरालगतदुःखाभावानुमानात्परामर्शसिद्धिः। तेन तत्कालं पक्षीकृत्य तेनैव हेतुना तत्पूर्वकालमन्तरालं साधयतो व्यक्तत्वात् इतरेतराश्रयस्य नैकमपि सिध्यतीति परिहरति—**नान्योन्याश्रयत्वादिति**। आत्मनो स्वप्रकाशत्वे परामर्शासम्भवं बाधकं साधितमुपसंहरति—**तस्मादिति**। आत्मनो वेद्यत्वे बाधकान्तरं समुच्चिनोति—**अपि चेति**। आत्मनः स्वाश्रयसंविद्विषयत्वं संविदन्तरविषयत्वं वा? नाद्य इत्याह—**आत्मन इति**। नेतरः, पुमन्तरासंनिधौ स्वाज्ञानप्रसङ्गादिति द्रष्टव्यम्। यत्तु गुरुत्वदृष्टान्तेन स्ववृत्तिविरोधसमाधानं तन्निराकरोति—**न चेति**। स्वाश्रयातिशयहेतोः ज्ञानस्य गुरुत्ववत् कर्मानपेक्षत्वं वा तदपेक्षत्वं वा? नाद्यः। जानातेः सकर्मकत्वनियमभङ्गप्रसङ्गादित्याह—**कर्मकारकेति**। ज्ञानस्य कर्मापेक्षत्वेऽपि स्वाश्रयातिशयकरत्वमविरुद्धम्। तस्यैव तज्जन्यफलाधारतया तत्कर्मत्वादिति द्वितीयमादाय शङ्कते—**ज्ञानस्येति**। आत्मनो ज्ञानकर्मत्वं दूषयति—**न कर्मतेति**। तदेव दर्शयितुं कर्मत्वव्यापकं[1] कथयति—**परसमवेतेति**। क्रियाफलशालित्वं गन्तुरपि नगरवदस्ति। प्राप्तेरुभयनिष्ठत्वात्। तन्निवृत्तये

---

1. व्यापकत्वव्यापकत्वं

वेतक्रियाफलशालित्वं हि कर्मत्वव्यापकं। तद्विरहश्च प्रकृते प्रसिद्धः।

**दृश्यत्वस्वप्रकाशत्वोभयमप्यात्मनो मास्त्विति प्राभाकरस्य पूर्वपक्षः**

नन्वात्मनो वेद्यतास्वप्रकाशत्वयोरभावे किमनुपपन्नम्। अपरोक्षतेति चेत्। न। अनुभवाश्रयतया तदुपपत्तेः।

यत्तु मानं संवेदिता न संविदधीनप्रकाशः संवित्कर्मतामन्तरेणापरोक्षत्वात् संविद्वदिति। तत्र यदि संविदधीनत्वं प्रकाशस्य संविज्जन्यत्वं, तदा तन्निषेधे सिद्धसाधनम्। कुम्भादिसंविद्रूपत्वनिषेधे साध्यविकलता दृष्टान्तस्य। अथात्मा न संविदाश्रयतयाऽपरोक्षः अपरोक्षत्वात् कुम्भवदित्यनुमानम्। न। विपक्षे बाधाभावात्। अद्रष्टृत्वोपाधिक-

---

प्रथमविशेषणम्। आत्मनि नोक्तं कर्मत्वमस्ति तस्य ज्ञानजन्यफलशालित्वेऽपि ज्ञानाश्रयत्वादिति व्यापकराहित्यं दर्शयति—**तद्विरहश्चेति**।

प्राभाकरः शङ्कते—**नन्विति**। उभयोरभावे घटवत्तज्ज्ञानवच्चापरोक्षताऽयोगादनुपपन्ना सा, कर्मत्वं स्वप्रभत्वं वा गमयति, तत्र कर्मत्वं निरस्तमिति स्वप्रभत्वं परिशिष्टमित्याशङ्कते—**अपरोक्षतेति**। अन्यथाप्युपपन्नं अपरोक्षत्वमिति परिहरति—**नानुभवेति**। आत्मनः संविदाश्रयत्वेनापरोक्षत्वमनुमानविरुद्धमित्याशङ्क्य[1] स्वप्रकाशत्वानुमानमनुवदति—**यत्त्विति**। घटादौ व्यभिचारं वारयितुं संवित्कर्मतामन्तरेणेत्युक्तम्। संवित्कर्मत्वानधिकरणत्वं नित्यानुमेयेषु व्यभिचरति तन्निरस्यति—**अपरोक्षत्वादिति**। आत्मनः संविज्जन्यप्रकाशवत्वं वा निषिध्यते तज्जन्यापरोक्षव्यवहारवत्वं वेति विकल्प्याद्यमनूद्य दूषयति—**तत्रेति**। संविदोऽन्यत्र तज्जन्यप्रकाशानभ्युपगमादिति भावः। विषयसंविज्जन्यापरोक्षव्यवहारवत्वनिषेधे दृष्टान्तस्य साध्यविकलता। संविदोऽपि तज्जन्यापरोक्षव्यवहारवत्त्वस्वीकारादित्याह—**कुम्भादीति**। अनुमानान्तरमाशङ्क्य परिहरति—**अथेत्यादिना**। न केवलं बाधकतर्कवैधुर्यादप्रयोजकत्वं, किं तु सोपाधिकत्वादपीत्याह—**अद्रष्टृत्वेति**। न च साध्योपाध्योरन्वये संवित्संवेद्ययोरिवोपाधिव्यतिरेकेण साध्यव्यतिरेकस्य व्याप्तौ नोदाहरणमिति वाच्यम्। आत्मा संविदाश्रयतया परोक्षः द्रष्टृत्वात् कुम्भवदिति व्यतिरेकिणा

---

1. आशंक्यानुमानं

त्वाच्च । तस्मात्संविदाश्रयतया आत्माऽपरोक्ष इति । न। उक्तविधया-त्मनोऽपरोक्षत्वे मानाभावात् । अथ "कुम्भमहमनुभवामी"त्यध्यक्षं मानम् । न । कुम्भवदात्मानुभवयोरपि प्रत्यक्षविषयताप्रसङ्गात् ।

### प्राभाकरशंकासमाधानम्

न [1]चोक्तविधयाऽपरोक्षत्वं स्वप्रकाशत्वेन वानुभवाश्रयत्वेन वा-परोक्षत्वम् । अननुभवत्वादनात्मत्वाच्च । अतोऽनुभवाश्रयतयात्मनो-ऽपरोक्षत्वं प्रत्यक्षविषयतयाऽऽस्थेयम् । तथा चात्मानुभवयोरपि प्रत्यक्ष-विषयत्वप्रसङ्गो दुर्वारः ।

प्रयोगस्त्वत्र दृष्टान्ताभावादपास्तः । केवलव्यतिरेकी तु प्रयोगो भवता नाद्रियते । तदादरणे चाप्रसिद्धविशेषणता । न चाहमिति

---

व्यतिरेक[2]व्याप्तिसिद्धेरित्यभिसन्धिः । प्राभाकरस्य मतं निगमयति—**तस्मादिति** । तदिदं प्राभाकरप्रस्थानं प्रत्याचष्टे—**नोक्तेति** । संविदाश्रयत्वेनात्मनोऽपरोक्षत्वे प्रत्यक्षमनुमानमर्थापत्तिर्वा मानमिति विकल्प्याद्यमुत्थापयति—**अथेति** । अत्र हि प्रत्यक्षे कुंभानुभवात्मानः तद्विषया वा तदाश्रया वा स्वप्रकाशा वा इति विक-ल्प्याद्यं दूषयति—**न कुम्भवदिति** । न द्वितीयः घटसंविदोरप्यात्मत्वा-पत्तेः । तस्यैव संविदाश्रयत्वनियमात् । न तृतीयः, घटात्मनोरपि संवित्वप्रसङ्गात् । सैव स्वप्रकाशेत्याश्रयणादित्याशङ्क्याह—**न चेति** । परिशेषादाद्यपक्षप्राप्तं दोषं स्मारयति—**अतोऽनुभव इति** । अनुमानमपि संविदाश्रयत्वेनात्मनोऽपरोक्षत्वे अन्वयी वा व्यतिरेकी वा इति वक्तव्यम् । नाद्य इत्याह—**प्रयोगस्त्विति** । आत्मातिरिक्तस्य संविदाश्रयतयाऽपरोक्षस्यानिष्टत्वादित्यर्थः । आत्मा संविदाश्रय-त्वेनापरोक्षः द्रष्टृत्वात् कुम्भवदिति द्वितीयमाशङ्क्य दूषयति—**केवलेति** । अस्याभावाभ्युपमादित्यर्थः । परमतेन व्यतिरेकिणः अनुसरणमाशङ्क्याह—**तदादरणे चेति** । संविदाश्रयत्वेनापरोक्षत्वमन्यत्र सिद्धं चेत्तत्र हेत्ववृत्ताव-साधारणता, तद्वृत्तौ व्यतिरेकित्वायोगः । तस्यान्यत्रासिद्धौ अप्रसिद्धविशेष-णता । न च व्यतिरेकिणि तददूषणम् । अतिप्रसङ्गादित्यभिप्रायः । तृतीयं निराकरोति—**न चेति** । अहङ्काराधिष्ठानात्मकचैतन्यस्य स्वप्रभत्वेऽपि

---

1. नह्युक्तविधेयतयापरोक्षत्वं 2. व्यतिरेकशुद्धि

संविदनुपपत्तिरमुमर्थं गमयेत्। मतान्तरानुसारेणापि तदुपपत्तेः। तदेवमात्मनोऽस्वयंप्रकाशत्वे बाधकसद्भावात् नाप्रयोजकत्वशङ्कापि। यदपि न्यायविषयत्वादित्यात्मनो दृश्यत्वे मानम्। तदपि "अविज्ञातं विजानतामि"त्यागमबाधितम्।

किंच किं वास्तवं दृश्यत्वं साध्यं, किं वा अवास्तवम्, आहोस्विद् दृश्यत्वमात्रम्। आद्ये साध्यशून्यो दृष्टान्तः। इतरयोस्तु सिद्धसाधनता। असत्साध्यं तु व्यवहारहेतुत्वोपलक्षितं प्रकाशात्मत्वम्। तच्च प्रकाशभेदाभावोपलक्षितं स्वरूपं सत्यं च। उपलक्षितमपि क्वचि-

---

अहमित्यपरोक्षानुभवसंभवादिति हेतुमाह—मतान्तरेति। संवित्कर्मतामन्तरेणापरोक्षत्वानुमाने उक्तदोषाभावमभिप्रेत्यात्मनो दृश्यत्वस्वप्रकाशत्वयोरभावे पूर्वोक्तामपरोक्षत्वानुपपत्तिमुपसंहरति—तदेवमिति। द्रष्टृत्वहेतोरप्रयोजकत्वाभावेऽपि न्यायविषयत्वानुमानविरोधोऽस्तीत्याशङ्क्य तदनुभाष्य कालात्ययापदिष्टतया निराचष्टे—यदपीत्यादिना। न्यायविषयत्वानुमाने दोषान्तरं समुच्चिनोति—किं चेति। तदेव दर्शयितुं साध्यं विकल्पयति—किं वास्तवमिति। वास्तवदृश्यत्वं साध्यमिति पक्षं प्रतिक्षिपति—आद्य इति। न हि धर्मस्यापि वास्तवदृश्यत्वमस्ति। क्वचिदपि तादृशदृश्यत्वासम्प्रतिपत्तेरित्यर्थः। अवास्तवदृश्यत्वस्य वा दृश्यत्वमात्रस्य वा साधने सिद्धसाधनता। आत्मनो वास्तवदृश्यत्वानभ्युपगमेऽपि समारोपितस्य तस्याश्रयणादित्याह—इतरयोस्त्विति। आत्मा आत्मव्यवहारहेतुप्रकाश इत्यत्र व्यवहारहेतुत्वं प्रकाशस्य विशेषणमुपलक्षणं वा? नाद्यः मोक्षे तदभावात्, अस्वप्रकाशत्वापत्तेः। नेतरः। तत्र प्रकाशात्मताया एव साध्यत्वात्, तस्याश्चान्य[1]त्र कुंभादौ सिद्धत्वात् व्यतिरेक्यनवकाशादित्याशङ्क्याह—असदिति। व्यवहारहेतुत्वोपलक्षितत्वस्य प्रकाशोपलक्षणत्वेन तद्व्यावृत्तप्रकाशात्मत्वस्यान्यत्रासिद्धस्य साध्यत्वान्न व्यतिरेकिविरोध इत्यर्थः। यस्मिन्प्रकाशे स्वव्यवहारहेतुत्वं साध्यते, कथमन्यस्यानात्मत्वम्? अत आह—तच्चेति।

---

1. भाविसिद्धे

त्साध्यम् । यथा नाशोपलक्षितसत्तायोगित्वमनित्यत्वमिति निरवद्यम् ।

अनात्मत्वं चात्रास्माकमुपाधिः, पक्षेतरत्वस्योपाधित्वे प्रसिद्धानुमानभङ्गः स्यादिति चेन्न । तत्रोपाधेरसम्भवात् । साधनाव्यापकः साध्यसमव्याप्तिर्ह्युपाधिः । तथा च कथय कथमग्निमत्त्वाद्यसमव्याप्ति,

---

अथ त्वदीयमपि साध्यं सत्यमसत्यं वा ? नाद्यः, तस्यात्मातिरेके द्वैतापातात् । अनतिरेके, पुनरुक्तिप्रसङ्गात् । न द्वितीयः, स्वप्रकाशत्वस्य मिथ्यात्वे दृश्यत्वस्यैव सत्यत्वप्राप्तेरिति, तत्राह—**सत्यं चेति** । उपदर्शितं हि साध्यं परमार्थभूतमात्मरूपाव्यतिरेकान्न द्वैतमावहति । न च पुनरुक्तिप्रसक्तिः, आत्मप्रकाशशब्दयोरेकार्थत्वेऽपि व्यावर्त्यभेदादिति भावः । विशिष्टस्यैवाग्निमत्त्वादेरनुमेयत्वदर्शनादुपलक्षितं नानुमेयमित्याशङ्क्याह—**उपलक्षितमपीति** । स्वकीयानुमाने साध्यस्य निर्दोषत्वं निगमयति–**इति निरवद्यमिति** । किं च धर्मस्य दृश्यत्वे न्यायविषयत्वमप्रयोजकम्, किं त्वनात्मत्वं प्रयोजकम् । मायावादे समव्याप्तेः सत्त्वादित्यन्यतरोपाधिमुद्भावयति—**अनात्मत्वं चेति** । पक्षमात्रव्यावर्तकस्य पक्षेतरत्वान्नोपाधित्वं अतिप्रसङ्गादिति शङ्कते—**पक्षेतरत्वस्येति** । उपाधिलक्ष[1]णान्वितस्य पक्षेतरत्वस्यापि अतेजस्त्वस्योपाधित्वमनुष्णतानुमाने स्वीक्रियते । प्रसिद्धानुमाने तु पक्षेतरत्वं नोपाधिः; तल्लक्षणाभावात् । अतो नातिप्रसक्तिरिति प्रतिविधत्ते—**न तत्रेति** । उपाध्यसंभवं प्रसिद्धानुमाने प्रसाधयितुं तल्लक्षणमनुवदति—**साधनेति** । साधनाव्यापक इत्युक्ते धूमानुमाने पर्वतान्यत्वमुपाधिः स्यात् । धूमवति पर्वते तदन्यत्वावृत्तेः । अत उक्तम्—**साध्येति** । न हि पर्वतान्यत्वस्य साध्यव्यापकत्वम् । यत्राग्निमत्त्वं तत्र पर्वतान्यत्वम् । यः पर्वतो नासावग्निमान् इत्यनिश्चयात्पर्वतेऽग्निमत्त्वसन्देहात् । साध्यव्यापक इत्येवोक्ते वह्न्यनुमाने वह्निसामग्रीमत्त्वमुपाधिः स्यात् । अत उक्तम्—**साधनेति** । समपदेनान्वयव्यतिरेकरूपा साध्योपाध्योर्व्याप्तिरिति व्याक्रियते । एवमुपाधिलक्षणेऽपि । कथं प्रसिद्धानुमाने पक्षेतरत्वं नोपाधिस्तत्राह—**तथा चेति** । तर्हि [2]वह्न्यनुष्णत्वामानेऽपि पक्षेतरत्वोपाधिं परीक्षका नाचक्षीरन्नित्या-

---

1. लक्षणान्त 2. वह्न्यनुमाने

**पक्षेतरत्वमुपाधिः स्यात् । अतः क्वचित्पक्षेतरत्वमपि साध्यसमव्याप्ति-त्वादुपाधिः स्यात् । को दोषः ? वक्ष्यते च समव्याप्तेरेवोपाधित्वम् । अतो नात्मनो वेद्यत्वमनुमेयम् । अदृश्यत्वे चात्मनस्तद्याथात्म्याकारान्तः-करणवृत्तिद्वारा संसारनिदानाज्ञाननिवृत्त्यर्था वेदान्ताः । ब्रह्ममीमांसापि तत्रैवोपकारजननीति न बाधः कश्चित् । किञ्च संविद्रूप एवात्मा "विज्ञानघन" इत्यादिश्रुतेः । संविच्च न संविदो विषयः, समत्वात् । समयोर्हि न विषयविषयिभावो दृश्यते, युज्यते वा दीपयोरिव ।**

---

शङ्क्याह—**अत इति** । साध्यसमव्याप्तित्वादित्यनेनातश्शब्दः सम्बध्यते । प्रसिद्धानुमाने समव्याप्त्यभावेऽपि पक्षेतरत्वमुपाधिरस्तु न समव्याप्तिरेवोपाधि-रिति नियामकमस्तीत्याशङ्क्याह—**वक्ष्यते चेति** । न्यायविषयत्वानुमान-[1]दूषणमुपसंहरति—**अतो नेति** । दृश्यत्वाभावे बाधकस्योक्तत्वात् द्रष्टृत्वानु-मानमपि शङ्किताप्रयोजकमित्याशङ्क्याह—**अदृश्यत्वे चेति** । न बाधः कश्चिदित्युत्तरेण सम्बन्धः । बाधकाभावमुपपादयति—**तद्याथात्म्येति** । तथापि शास्त्रारम्भवैयर्थ्यं, वेदान्तैरेव यथोक्तप्रयोजनसिद्धेरित्याशङ्क्याह—**ब्रह्मेति** । वेदान्तानामेव ब्रह्मप्रमितिकरणत्वेऽपि संशयादिप्रतिबन्धप्रध्वंसितया तदुपकरणत्वादस्त्येव मीमांसायां तत्प्रमितिशेषता । करणोपकरणयोरेकप्रयोजन-त्वादिति भावः । आत्मनो दृश्यत्वानुमाने दृश्यत्वस्य दृग्विषयत्व[2]रूपत्वान्न तस्य दृश्यतेति प्रतिपाद्याऽऽत्मस्व[3]भावप्रतिपादकश्रुतिपर्यालोचनयापि नास्ति तस्य दृश्यतेति स्वप्रकाशत्वानुमाने कुतस्सत्प्रतिपक्षतेति विवक्षन्नाह—**किं चेति** । यद्यपि श्रुतिरात्मानं संविद्रूपं निरूपयति, तथापि तस्य संविदन्तरविषयत्व-मिष्यतामित्याशङ्क्याह—**संविच्चेति** । समत्वेऽपि विषयविषयित्वं किं न स्यादित्याशङ्क्यानुपलब्धिविरोधं दर्शयति—**समयोरिति** । तत्रैव युक्तिविरोध-माह—**युज्यते चेति** । समयोरपि संविदोर्विषयविषयिभावे प्रदीपयोरपि मिथो विषयविषयित्वं स्यात् न चैतदस्तीति युक्तिविरोधमेव स्पष्टयति—**दीपयोरिवेति** । अदर्शनमसिद्धमित्याशङ्क्य परिहरति—**करयोरित्यादिना** ।

---

1. नुमानमुप 2. रूपत्वात् 3. स्वभावालोचनय

करयोरविशेषयोरपि ग्राह्यग्राहकता दृश्यत इति चेन्न। तयोर्विशेषवत्त्वात्। प्रयत्नावष्टब्धो हि करो ग्राहकः। स्वरूपेण चेतरो ग्राह्य इति न समत्वं तयोः। तस्मात्संविदगोचर एव संवित् स्वतः प्रकाशते।

प्रयोगस्तु—विवादपदं स्वव्यहारहेतुप्रकाशः, संवित्वात् कुम्भवदिति व्यतिरेकी। न तावदप्रसिद्धविशेषणता। संविद्व्यवहारहेतुप्रकाशो हि प्रसिद्धः। अतस्तत्स्वरूपत्वं साध्यं नाप्रसिद्धम्। संवित्प्रकाशभागे सिद्धसाधनमिति चेन्न। तस्याधर्मिभागत्वात्। संवित्प्रकाशो ह्यसंप्रतिपन्नो न प्रकृतविवादपदम्। अतो न धर्मीति न

---

उक्तव्याप्तेर्व्यभिचाराभावे फलितमाह—तस्मादिति। संविदः संविदगोचरत्वे सुषुप्तिः स्यादित्याशङ्क्याह—स्वत इति। कथं पुनः संविदः स्वप्रकाशत्वं प्रतिज्ञामात्रेण प्रसिध्यति तत्राह—प्रयोगस्त्विति। विवादपदमिति घटसंविदुच्यते। तस्या घटव्यवहारहेतुप्रकाशत्वं सिद्धमिति सिद्धसाध्यता तां स्वशब्देन निरस्यति—स्वव्यवहारेति। न च शब्दप्रयोगस्य स्वविषयज्ञानजन्यत्वाविनाभावात् संविदो विषयत्वस्यावश्यंभावाद्व्याघातः, प्रतिपन्नस्य वचनोपपत्तौ तद्विषयज्ञानस्याकिञ्चित्करत्वात् केवलव्यतिरेकिभावादिति भावः। साध्यस्यान्यत्र सिद्धौ व्यतिरेकित्वायोगः असिद्धौ चाप्रसिद्धविशेषणतेत्याशङ्क्याह—न तावदिति। ज्ञानग्राहकानुव्यवसायस्य परैरङ्गीकारादनुभूतिव्यवहारहेतुप्रकाशत्वं प्रसिद्धं घटानुभूतौ साध्यमिति नाप्रसिद्धविशेषणतेति विशदयति—संविदिति। अनुव्यवसायस्य [1]व्यवसायप्रकाशकतया तत्र साध्यसिद्धौ तस्य पक्षान्तर्भावे भागे सिद्धसाध्यता, तदनन्तर्भावे व्यतिरेक्यनुपपत्तिरिति मत्वा चोदयति—संवित्प्रकाशेति। अनुव्यवसायस्वरूपासम्प्रतिपत्तेस्तस्य पक्षान्तर्भावानन्तर्भावकथैवानुपपन्नेति परिहरति—न तस्येति। स्वस्यासिद्धतामात्रेण परसिद्धे साध्यवति धर्मिणि न सिद्धसाध्यता सिध्यति अन्यथाऽतिप्रसङ्गादित्याशङ्क्याह—संवित्प्रकाशो हीति। अनुव्यवसायस्तु प्रतिवादिमतेनाधर्मित्वेऽपि साध्यप्रसिद्धिस्थलत्वोपगमाद्धेतोर्व्यतिरेकित्वाभावः। तदस्वीकारे च न विशेषणप्रसिद्धिः। परं प्रति तस्य प्रसिद्धिस्थलत्वे तं प्रति

---

1. व्यवहार

**भागे सिद्धसाधनता। हन्तैवं विवादपदमिति विशेषणं व्यर्थम्। न। पराभिमतसिद्धसाधनतापरिहारार्थत्वात्।**

**ननु संवित् स्वव्यवहारस्य विषयतया हेतुः प्रकाशश्चेति कथं न सिद्धसाधनता ?। न। शब्दाभिलापव्यवहारस्य विषयाजन्यत्वात्। अन्यथा कथमतीतादौ तत्सम्भवः। व्यवहारान्तरस्य चात्रानभिमतत्वात्।**

---

व्यतिरेक्ययोगः। वादिनस्तु तस्यैवासिद्धत्वाद्विशेषणवैयर्थ्यमिति चोदयति—**हन्तेति**। स्वस्य विशेषणवैयर्थ्येऽपि परस्य तदर्थवत्त्वात्तं प्रति चान्वयव्यतिरेकि, अनुव्यवसायस्य दृष्टान्तत्वात्। न च तस्य व्यवसायग्राहकत्वे प्रतिज्ञादृष्टान्तयोर्विरोधः। तादृगनुव्यवसायाभावे च दृष्टान्तासिद्धिरिति वाच्यम्। तस्य स्वप्रतियोगिकभेदानधिकरणत्ववत्तद्व्यवसायस्यापि तत्साधने त्वदभिमतभेदस्यामानत्वादिति मत्वोत्तरमाह—**न परेति**। घटसंविदः स्वाभिज्ञायां कर्मत्वेन हेतुत्वात् प्रकाशत्वाच्च सिद्धसाध्यत्वमित्याशङ्कते—**नन्विति**। अभिवदनहेतुप्रकाशात्मत्वं साध्यम्। न च तस्य विषयजन्यत्वं, व्यभिचारादिति परिहरति—**न शब्देति**। नियतपूर्वसत्वाभावादतीताभिवदनाजनकत्वेऽपि प्रत्यक्षज्ञानवदभिवदनस्यापि विषयजन्यत्वम्। अतः संविदः प्रत्यक्षत्वात्तदभिवदनस्य तज्जन्यत्वमित्यशङ्क्याह—**व्यवहारान्तरस्येति**। प्रत्यक्षा संविद्यपि विषयेषु लौकिकाभिवदनहेतुः, [1]तथापि तस्याः न संविदन्तरनिबन्धनत्वम्। न हि संवेदनेऽभिवदनातिरिक्तव्यवहारान्तरं संवेदनाख्यं समस्ति, अनवस्थाप्रसङ्गात्। अतः संविदभिवदनस्य संविदन्तरनिबन्धनत्वाभावान्न सिद्धसाध्यतेत्यभिसन्धिः।

यद्वा मा भूदभिलापस्य विषयजन्यत्वनियमः। तथापि प्रत्यक्षस्थले तज्जन्यत्वमभिज्ञायां नियम्यते। अतः संविदि प्रत्यक्षायां अभिज्ञाव्यवहारस्य तज्जन्यत्वात्प्रकाशत्वाच्च सिद्धसाध्यत्वं तदवस्थं इत्याशङ्क्याह—**व्यवहारान्तरस्येति**। एवं प्रतिज्ञामाश्रित्याशङ्कितो दोषराशिरपाकृतः। सम्प्रति हेतुमाश्रित्याशङ्कते—**नन्विति**। संवित्त्वं जातिरौपाधिकं वेति विकल्प्याद्यं दूष-

---

1. तथापि न

ननु संवित्त्वं न ते जातिः। एकव्यक्तेर्जातेरसम्भवात्। नाप्यौपाधिकम्। उपाधेरनिरूपणात्। अतः संवित्त्वं ते न सिद्धम्, न। घटाकाशवदौपाधिकत्वात्। अन्तःकरणपरिणामश्च घटवदुपाधिः। परस्येत्थं संवित्वमसिद्धमिति चेन्न। संवित्वमात्रस्यैव हेतोरुभयसिद्धत्वात्। न चाप्रयोजकत्वम्। उपाधेरसम्भवात्। संवित्प्रकाशत्वमुपाधि-

---

यति—संवित्वमिति। द्वितीयं निरस्यति—नापीति। पक्षद्वयेऽपि फलितं दूषणमाह—अत इति। कूपकुम्भाद्युपाधिवशादाकाशत्वमिवान्तःकरणपरिणामभेदोपाधितः संवित्त्वमौपाधिकमिति नासिद्धिरिति उत्तरमाह—न घटेति। कल्पितव्यक्तिभेदनिष्ठायाश्चन्द्रत्वजातेरिव संवित्त्वजातेरभ्युपगमेऽपि सिद्धान्ताविरोध इति चकारार्थः। औपाधिकं, कल्पितं वा संवित्त्वं प्रति[वा]द्यसिद्धमिति शङ्कित्वा दूषयति—परस्येत्यादिना। अवधीरितविशेषसंवित्वमात्रस्योभयसिद्धस्य हेतुत्वसिद्धावपि कल्पितत्वाकल्पितत्ववैषम्यात्। अन्यत[1]रासिद्धिं शङ्कमानस्य धूमव*त्वादावपि शङ्काप्रसरादतिप्रसक्तिरित्यभिप्रायः। संविद्व्यवहारहेतुप्रकाशत्वे संवित्त्वं न प्रयोजकम्। किं तु संवित्प्रत्यक्षत्वम्। न च साधनव्याप्तिः, घटसंविदि संवित्वे सत्यपि तत्प्रत्यक्षत्वाभावात्। साध्यव्याप्तिस्तु संविद्व्यवहारहेतुप्रकाशे [2]प्रसिद्धेत्याशंक्याह—न चेति। व्यतिरेकिण्युपाध्यसंभवमभिधातुं शङ्कते—संविदिति। तत्रोपाधिरन्वये व्यतिरेके वा। अन्वये साध्येनोपाध्यन्वयः पक्षादन्यत्र वा पक्षे वा? नाद्यः, व्यतिरेकिताविरोधात्। नेतरः। पक्षे साध्यस्य सन्दिग्धत्वादन्यथोपाधेरकिंचित्करत्वात्। न द्वितीयः। तथा सति यत्रोपाधिः तत्र साध्यं नेति साध्याभावव्याप्यत्वेनोपाधिर्वक्तव्यः। तथा चोपाधिलक्षणाभावादनुपाधित्वप्रसङ्गः। अन्वयव्यतिरेकिधर्मस्यान्वये व्यतिरेकनियमादुपाधिसत्वे साध्याभावस्यान्वयत्वात् साध्ये सत्युपाध्यभाव इति व्यतिरेकत्वात् यत्र साध्यं तत्रोपाधिरिति न साध्यव्यापकत्वम्। पक्षे च साध्यसन्देहाद्व्यतिरेकिण्यन्यत्र तदसिद्धेः। यत्र साध्यं तत्रोपाध्यभाव इति व्यतिरेकानिश्चयाद[3]पि

---

* धूमवत्वं किं महानसनिष्ठं हेतुः उत पर्वतनिष्ठं। आद्येऽसिद्धिः। द्वितीये साधनविकलो दृष्टान्त इति दूषणसंभवादवधीरितविशेषं धूमवत्वमेव हेतुर्वक्तव्य इति भावः।

1. अन्यतरसिद्धिं 2. प्रसिद्धेतिरेकिणि 3. निश्चयादपिरि

**रिति चेन्न। साध्याव्यापकत्वात्। प्रकाशरूपत्वं हि साध्यम्। तच्च स्वस्याव्यापकम्। अथ मतं विशेषणभेदाद्विशिष्टसाध्योपाधिभेदः। व्यवहारहेतुत्वं हि साध्यविशेषणम्। संविद्विषयत्वं चोपाधेः। अतो न साध्याव्याप्तिरिति। न। अत्र विशिष्टद्वयाभावात्। विशेष्यस्याभिन्नत्वात्। न च ते विशिष्टं विशेष्यादिभ्यस्तत्वान्तरम्, तत्वान्तरत्वे तु विशिष्टद्वयाश्रययोस्साध्योपाध्योरव्याप्तिः। अस्माकं तु विशेषणारोपितं विशिष्टं न तत्वान्तरम्। अतो न धूमवत्वादेरव्याप्तिः। संविद्दृश्यताप्रयोगस्त्वात्मदृश्यताप्रयोगवदपास्यः। तर्हि संवित्पदमात्मपदं च स्वविषयगोचरज्ञानजन्यं लौकिकपदत्वात् पदत्वाद्वा कुम्भपदवदित्यनु-**

---

नोपाधिरित्यभिप्रेत्य दूषयति—**न साध्याव्यापकत्वादिति**। प्रकारान्तरेण साध्याव्यापकत्वं साधयति—**प्रकाशेति**। प्रकाशस्यैकत्वेऽपि व्यवहारहेतुत्व[1]-संविद्विषयत्वविशेषणभेदाद्विशिष्टसाध्योपाध्योर्भेदे यत्र संविद्व्यवहारहेतुप्रकाशत्वं तत्र संविद्विषयप्रकाशत्वमित्यनुव्यवसाये व्याप्तेर्न साध्याव्यापकत्वमिति शङ्कते—**अथेति**। एकस्यैवानेकविशेषणवतो विशिष्टस्य दृष्टत्वाद्विशेषणभेदात् विशेष्याभेदे विशिष्टभेदो न सिध्यतीति दूषयति—**नात्रेति**। किं च विशिष्टं विशेष्यादिभ्यो भिन्नमभिन्नं वा? नाद्य इत्याह—**न चेति**। स्वतन्त्रत्वेनानुपलम्भेऽपि विशिष्टं विशेष्यादितो भिन्नमिति मतं निरस्यति—**तत्वान्तरत्वे त्विति**। संविद्व्यवहारहेतुविशिष्टप्रकाशो हि केवलात्प्रकाशात् भिद्यते[2]। ततस्स्वव्यवहारहेतुप्रकाशत्व साध्यमस्ति केवले प्रकाशे। तद्[3]गतविशेषणविशिष्टत्वात्। नोपाधिः संविद्विषयत्वाभावात्। न च विषयवाचकं पदं विषयिज्ञानलक्षक[4]मिति तत्राप्युपाधिरस्ति। उभयसंमतयो[5]स्तयोर्विषयपदवाच्यत्वाविशेषा[6]दिति वाच्यम्। विषयविषयिणोर्वाच्यत्वलक्ष्यत्वविभागेऽपि नानुभूतिगोचरज्ञानविषयत्वमस्य सम्भवति। अनवस्थानात्। एतेना[7]नुभूतिलक्षकपदार्थस्यापि स्वलक्ष्य[8]ज्ञानविषयत्वं प्रत्युक्तम्। अनुभूतेरात्मनश्चाभेदादिति भावः।

---

1. सं...यत्व 2. ततो प्रकाश 3. तद्गतविशिष्ट 4. मित्युभय
5. तद्वाच्यत्व 6. विशेषविषयि 7. अनुलक्षक 8. ज्ञानजन्यत्वं

मीयताम् । न । दृष्टान्ते स्वशब्दार्थस्यानुगमाभावात् । तस्य साध्य-विकलत्वात् । विषयशब्देन अविवक्षितविशेषं विषयमात्रमिष्यते, किं वाच्योऽर्थः अथवा लक्ष्यः, तत्र न तावत्प्रथमद्वितीयौ, सिद्धसाधनतापत्तेः। अभ्युपेयते हि संविदात्मपदस्य वाच्यस्य ज्ञानगोचरता । तृतीये तु मुख्यार्थविवक्षया प्रयुक्तगङ्गापदेन व्यभिचारः । यदि किञ्चिदात्मनः संविदो वा प्रकाशभेदसाधनमुत्प्रेक्ष्येत, तदपि सत्यत्वादिना साध्यं विकल्प्यापास्यम् । अथाग्निमत्वादिवल्लौकिको भेदः साध्यः, तदा सिद्धसाधनता ।

नन्वु संविदो वेद्यत्वे को दोषः स्यात् । असंवित्त्वप्रसङ्ग इति ब्रूमः । नन्वु सर्वत्रैवं स्वप्रकाशत्वं साधयितुं शक्यम् । न । कुम्भादि-भावेऽपि ते तत्प्रकाशाभावात् ।

नन्वु ते प्रकाशो नित्यः, सत्यम्, तथापि प्रकाशे सति कुम्भा-देरभावान्न तदात्मनोपलम्भसम्भवः । मायामयस्यैव च वेद्यत्वाद्वेद्यत्वेऽ-

---

यत्त्वात्मनः संविदो वा मानगम्यत्वादस्वप्रकाशत्वस्य साधनं तद् दूषयति—**यदि किंचिदिति** । आत्मनः संविदो वाऽस्वप्रकाशत्वप्रसाधकं प्रमाणं ना-स्तीत्यभिप्रायः । आत्मादेस्तद्व्यवहारहेतुप्रकाशस्य च न वादिसिद्धो भेदः साध्यते, किं तु लोकसिद्धः । ततो न विकल्पदोषस्य सावकाशत्वमित्याशङ्कते—**अथेति** । तत्रापि न सिद्धसाध्यतापरिहारः, तस्य व्यवहाराङ्गत्वेनाङ्गीकारा-दित्याह—**तदेति**। दृश्यत्वे मानाभावादुक्तानुमानस्यासत्प्रतिपक्षत्वेऽपि, विपक्षे बाधकाभावादप्रयोजकत्वमिति शङ्कित्वा बाधकमभिदधाति—**नन्वित्यादिना** । घटः स्वव्यवहारहेतुप्रकाशः घटत्वात् घटवत् । विपक्षे घटत्वं न स्यादिति अति-प्रसङ्गं प्रदर्शयन् प्रत्यवतिष्ठते—**नन्विति** । प्रतिवादिमतेन वेदमनुमानं वादि-मतेन वा ? नाद्य इत्याह—**न कुम्भादीति** । द्वितीयमालम्बते—**नन्विति** । वादिमतेऽपि कालात्ययापदेशान्नेत्थमनुमानमित्याह—**सत्यमिति** । विपर्यया-पर्यवसानाच्च प्रसङ्गाभासोऽयमित्यभिप्रायः । किं च यन्मायामयं तदेव वेद्यं यथा रज्जुसर्पादि । अतः संविदोऽपि वेद्यत्वे मायामयत्वात्[1] कुंभवदसंवित्व-

---

1. संभूतवत

संवित्वं नियतमापद्येत। न हि मायया<ऽ>नध्यस्तस्य संवित्सम्बन्ध-स्सम्भवी। संयोगादेरत्रासम्भवात्। न चान्तरेण संवित्सम्बन्धं संवेद्यत्वं स्यात्। अनियमापत्तेः। विषयविषयिभावोऽपि सम्बन्धापेक्षः। अन्यथातिप्रसङ्गात्। प्रपञ्चितं चैतदिष्टसिद्धिविवरणे। यदप्यत्र मिश्रेण प्रलपितम्, "अनुभूतेरननुभाव्यत्वे शशविषाणवदननुभूतित्वप्रसङ्ग" इति तत्र व्याप्त्यभावात् प्रशिथिलमूलता। न हि पण्डितम्मन्यस्य शशविषाणेऽसिद्धे व्याप्तिः सिद्ध्येत्। अननुभाव्यत्वं चाप्रसिद्धम्।

नन्ु तवैवेयं व्याप्तिरस्तु। शशविषाणसिद्धेरननुभाव्यत्वसिद्धे-रात्मनि निश्चयाभ्युपगमात्। तर्हि, शशविषाणेऽननुभाव्यत्वाभा-

---

प्रसक्तिरवश्यम्भाविनीत्याह—**मायामयस्येति**। मायामयत्वमन्तरेण संवि-त्सम्बन्धादेव संविदोऽपि संवेद्यत्वं सम्भवतीत्याशङ्क्याह—**न हीति**। न ताव-दत्र संयोगः संविदोरद्रव्यत्वात्। नापि समवायः, आत्मैकगुणत्वाभिमतायाः संविदः संवेद्येन तदयोगात्। नापि तादात्म्यं, विरुद्धत्वात्। न च सम्ब-न्धान्तरं, मूलसम्बन्धाभावे सिध्यति। अतो मायामयत्वाभावेऽपि संवित्सम्ब-न्धादेव संवेद्यतेत्ययुक्तमित्यर्थः। मा तर्हि तयोः सम्बन्धो भूत्। संवेद्यत्वं तु स्वभावतो भविष्यति, नेत्याह—**न चेति**। घटसंविदा पटस्यापि संवेद्यता सम्बन्धाभावाविशेषादिति हेतुमाह—**अनियमेति**। न च घटेन विशेषितत्वं विशेषः, तस्यापि मूलसम्बन्धाभावेऽनुपपत्तेरिति भावः। अस्तु तर्हि विषयविष-यिभावः सम्बन्धः, नेत्याह—**विषयेति**। एकान्तःकरणसङ्क्रान्तिः संसर्गः संवि-त्संवेद्ययोरिति चेत्। न। अविक्रियायाः संविदः सङ्क्रान्तेरनिरूपणादित्याश-येनाह—**प्रपञ्चितमिति**। उक्ते विपक्षबाधकतर्के शिवादित्यमिश्रोक्तं प्रतितर्क-मनुभाषते—**यदपीति**। यत्राननुभाव्यत्वं तत्राननुभूतित्वमिति व्याप्तिः स्वमते वा परमते वा? नाद्य इत्याह—**तत्रेति**। तत्र हेतुमाह—**न हीति**। शश-विषाणासिद्धौ तत्र व्याप्यासिद्धेर्न व्याप्तिः सम्भवतीति भावः। आपादका-प्रसिद्धेरपि नेदमापादनमुचितमित्याह—**अननुभाव्यत्वमिति**। कल्पान्तरमादत्ते—**नन्विति**। मन्मतेऽपि प्रशिथिलमूलता स्यादित्याशङ्क्याह—**शशविषाणेति**। शशविषाणस्य मायाविलासस्य मायावादिमते सिद्धेः तस्य व्याप्तिभूमित्वेन प्रशि-थिलमूलताराहित्यमित्यर्थः। आपादकाप्रसिद्धिरपि त्वन्मते नास्तीत्याह—**अननु-**

वाद्व्याप्त्यसिद्धिः । विपर्ययप्रमाणाभावाचायमप्रसङ्गः । प्रपञ्चितश्च संविद्वेद्यत्वे प्रमाणाभावः। तस्मात्तत्वदर्शनाज्ञानजद्वेषान्मिश्रेण प्रलपितमित्युपेक्षणीयम् । एवं निरवद्यं संवित्स्वयंप्रकाशत्वम् । सति चैवं संविद्रूपात्मनि स्वप्रकाशत्वं सिद्धम् ।

नन्वेवं विज्ञानवादप्रवेशप्रसङ्गः । बौद्धोऽपि विज्ञानमात्रं तत्वमभ्युपगच्छति। इच्छति च भवानपि तावन्मात्रं तत्वमिति। न च नित्यत्वेन विशेषः । अत्यन्ताद्वैतवादिनो नित्यत्वधर्मस्याभावात् । स्वरूपत्वे च स एव विज्ञानवादप्रवेशप्रसङ्गः। धर्मसंभवे च द्वैताद्वैतमतप्रसङ्ग इति । न । वेदान्तवादिभिश्चैकस्यैकता न स्यात् । मनोभेदोत्पत्तिविनाशानां मायामयत्वाश्रयणात् । बौद्धास्तु विज्ञानानि स्वरसभङ्गुराण्यविरतोदयानि निजभेदभिन्नानि स्वविषयाण्यभ्युपगच्छन्तीति कथं तथागतम-

---

भाव्यत्वेति । मन्मतेन व्याप्तिश्चेत् दृष्टान्ताभावान्न व्याप्तिरित्याह—**तर्हीति** । संविदो वेद्यत्वे मानाभावात्तत्रास्यापर्यवसानादपि प्रसङ्गाभासोऽयमित्याह—**विपर्यय इति** । परोक्तप्रतितर्कस्य दोषद्वयवत्वात् अज्ञानहेतुकद्वेषो मूलमिति तस्य त्याज्यत्वमेवेत्याह—**तस्मादिति** । संवित्वादित्यनुमानमुपसंहरति—**एवमिति** । गुरुमते संवेदनस्य स्वसंवेदनत्वेऽपि नात्मनस्तदिष्टं तथा तवापि स्यादित्याशङ्क्याह—**सति चेति** । आत्मैव त्वन्मते तत्त्वम् । स यदि संविदेव तर्हि संविन्मात्रं तत्वमिति योगाचारमतानुमतिं शङ्कते—**नन्वेवमिति** सिद्धान्तसाङ्कर्यमेव साधयति—**बौद्धोऽपीति** । नित्यत्वं संविदो वेदान्तिभिरिष्यते, योगाचारेण त्वनित्यत्वमिति विशेषमाशङ्क्याह—**न चेति** । नित्यत्वं संविदो धर्मः स्वरूपं वा ? आद्येऽपि भिन्नोऽभिन्नो भिन्नाभिन्नो वा ?

तत्र प्रथमं प्रत्याह—**अत्यन्तेति** । स्वरूपपक्षेण सहाभेदपक्षं प्रतिक्षिपति—**स्वरूपत्वे चेति** । भिन्नाभिन्नधर्मसम्भवे चात्यन्ताद्वैमतविहतिरिति कल्पान्तरं निरस्यति—**धर्मेति** । किं [1]मायाविज्ञानवादिनोः सर्वात्मना साम्यमुत यत्किञ्चिदिति विकल्प्याद्यं दूषयति—**नेत्यादिना** । वैशेषिकादिपक्षप्रतिक्षेपार्थं विशिनष्टि—**स्वरसेति** । तेषु स्थायित्वप्रतीतेर्गतिमाह—**अविरतेति** । भेदादिप्रतिभानं विज्ञाने औपाधिकमिति मतमपवदति—**निजेति** ।

---

1. मायावादिनोः

तावाकाशो वेदान्तेषु। यदि किंचित्साम्यान्मतान्तरता, तदा सर्वमत-साङ्कर्यप्रसङ्गः। तस्मात्सिद्धं स्वतस्सिद्धस्याविषयत्वात् भेदो न मान-गम्य इति।

ननु सर्वज्ञानाविषयस्याविषयत्वसिद्धिरपि कथं स्यात्। सा चेत् कथंचिद्भवेत् भेदसिद्धिरपि तथैव भवेत्। स्यान्मतम्—अविषयस्य सिद्धावसिद्धौ चाविषयत्वसिद्धिर्न वारयितुं शक्येतेति। तर्हि भेदसिद्धि-रपि तथैव शक्या न वारयितुम्। अस्माकं स्वप्रकाशतया विषयसिद्धे-रविषयत्वं साधयितुं शक्यम्। भेदस्तु नैवं ते सिध्यति। [1]तस्य विषय-तासिद्धेः। तर्हि, तथैव ते भेदसिद्धिरप्युपपद्येत। किञ्च आत्मनः

---

बाह्यार्थवादिनं प्रत्याह—**स्वविषयाणीति**। द्वितीयं निरस्यति—**यदीति**। मानयुक्तिभ्यामात्मा स्वप्रकाशो यस्मात् तस्मादिति प्रकृतोपसंहारः। अविषय-त्वादित्युत्तरवादप्रस्तावार्थम्। आत्मनो यदविषयत्वं तत् किं मानसिद्धमुत न। नाद्यः, अविषयत्वसाधकमानविषयत्वे सर्वज्ञानाविषयत्वविरोधादिति चोदयति—**नन्विति**। सर्वमानाविषयस्याविषयत्वं मानं विनैव सिध्यतीति द्वितीयमाशङ्कते—**सा चेदिति**। तर्हि तस्य स्वतस्सिद्धावात्मानतिरेकान्नाविषयत्वविवादः स्यात्। भ्रान्त्यादेरमानात्तत्सिद्धौ तु न तद्वास्तवम्। मानमन्तरेण चाविषयत्वस्य वस्तुतः सिद्धौ सदादिभेदोऽपि तथैव सिध्येत्, अविशेषादित्याह—**भेदसि-द्धिरिति**। अविषयस्य सिद्धौ नाविषयत्वसिद्धिः शक्या वारयितुं तत्सिद्धेः स्वयमिष्टत्वात्। तदसिद्धावपि तत्सिद्धिः अशक्यवारणैव अविषयस्य सुषुप्तत्वात्। सिद्धे हि धर्मिणि धर्मविधिः तन्निषेधो वा इति शङ्कते—**स्यान्मतमिति**। सदादिभेदोऽपि सिद्धश्चेन्न तत्सिद्धिर्वारयितुं शक्या, अभ्युपेतविहतिप्रसङ्गात्। असिद्धश्चेत्तस्य सुषुप्तत्वात्तत्सिद्धिर्नास्ती[2]ति भेदसिद्धिरपि शक्या वक्तुमिति [3]दर्श-यति—**तर्हीति**। वैषम्यमाशङ्कते—**अस्माकमिति**। अविषयत्ववत् भेदोऽपि सेत्स्य-तीत्यत आह—**भेदस्त्विति**। तत्र हेतुमाह—**तस्येति**। आत्मनो विषयत्वा-भावात्तद्भेदो मानतो न सिध्यतीत्यर्थः। अविषयत्वसिद्धिवत् भेदसिद्धिरपि स्वप्रकाशत्वेनाविषये प्रतीचि संभवतीत्याह—**तर्हीति**। अविषयत्वसिद्धिमङ्गी-

---

1. अविषयासिद्धेः 2. याशंक्य 3. साध्यं इत्यधिकः पाठः

सतो भानेऽप्यविषयत्वज्ञानाविषयत्वान्न तस्याविषयत्वज्ञानं स्यात् । आत्मनः संविद्विषयता नेष्यते न तु वृत्तिज्ञानविषयतापीति चेत्, तथाप्यात्मनोऽविषयता न संविन्ना स्यात् । यदपि मतं स्वप्रकाशस्याप्यदृश्यत्वाद्यवच्छिन्नस्य स्यादेव दृश्यतेति, तत्सुहृदां कर्णेषु जप्तव्यम् । न तु सभ्यम् । इत्थंभावे मानाभावात् । तस्मान्नाविषयत्वं कस्यचित् । अतो भेदसिद्धिर्नानुपपन्नेति ।

उच्यते—आत्मनोऽदृश्यत्वेऽपि तदविषयत्वादिना भानं नानुपपन्नम् । तथाहि—आत्मनि स्वप्रकाशतया प्रकाशमाने लोकसिद्धा-

---

कृत्यावोचाम । सापि नास्तीत्याह—किं चेति । आत्मनः स्फुरणाव्याप्यत्वेऽपि वृत्तिव्याप्यत्वादविषयत्वाकारान्तःकरणवृत्तिव्याप्तेर्नानुपपत्तिरिति शङ्कते—आत्मन इति । तत्रापि नाविषयत्वं स्फुरेत्, आत्मनः स्फुरणव्याप्यत्वानङ्गीकरणात् । अतश्चात्मभेदस्य मानागम्यत्वे नाविषयत्वं हेतुरित्याह—तथापीति । आत्मनो निरुपाधिकं सोपाधिकं चेति द्विविधं रूपम् । तत्र निरुपाधिकस्य स्वप्रकाशत्वेऽपि सोपाधिकस्य दृश्यत्वमिथ्यात्वाद्यभावविशिष्टस्य स्यादेव मानदृश्यता । न च दृश्यत्वाभावविशिष्टस्य दृश्यत्वे व्याघातः सर्वमानादृश्यत्वसाधकस्य [1]स्वदृश्यत्वभानसाधनेऽपि सामर्थ्यात् । न च भाने स्वविषयत्वविरोधः "शब्दशब्दवदध्ययनविधिवच्चाविरोधादि"ति न्यायदीपावल्युमुक्तमनुभाष्य दूषयति—यदपीत्यादिना । परपक्षदूषणमुपसंहरति—तस्मादिति । कस्यचित् संवेदितुः [2]संवेदनस्य चेत्यर्थः ।

अविषयत्वहेत्वसिद्धौ फलितमाह—अत इति । अविषयत्वहेतुं साधयितुमारभते—उच्यत इति । आत्मनः स्फुरणतया तदव्याप्यत्वेऽपि वृत्तिव्याप्यत्वाभ्युपगमादविषयत्वाकारचित्तवृत्तावभिव्यक्तेर्नाविषत्वानुपपत्तिरित्याह —आत्मन इति । आदिपदेन सत्यत्वादि गृह्यते । आत्मनः स्फुरणाव्याप्यत्वे तद्गतमविषत्वमपि न स्फुरे[3]दित्युक्तं प्रत्याह—तथा हीति । आत्मा न विषयः आत्मत्वात्कुम्भवदिति व्यतिरेक्यनुमानस्य प्रकाश[4]माने आत्मनि[5]प्रवृत्ता-

---

1. स्वादृश्यत्वमान 2. संवेदनेत्यर्थः 3. स्फुरेत्युक्तं 4. मानस्य....माने 5. माने....प्रवृत्ता

विषयत्वव्यतिरेकव्याप्त्यादिबलादात्माविषयत्वाकारा मनोवृत्तिर्जायते। तस्यामभिव्यक्तो दृगात्मा। तस्मिन् स्वाध्यस्तस्याविषयत्वावच्छिन्न-रूपत्वस्य सिद्धिः प्रमाणफलमिति गीयते।

नन्वेवमात्मभेदोऽपि मानतः सिध्येत्। सिध्येद्यदि स आत्मन्य-विषयत्वादिवदध्यस्तः स्यात्। तदध्यासे च ते दर्शनहानिः।

नन्वविषयत्वादेरध्यस्तत्वे विषयत्वादि सत्यं स्यात्। न। स्वाप्नयोरिव उभयोरपि मिथ्यात्वोपपत्तेः। तथापि नैवं परार्थानुमानं सम्भवेत्। परो ह्यात्मानं तन्निर्देशात् विषयतयैवावगच्छति। स कथ-[1]मनुमानात्तमविषयत्वेनावगच्छेत्। विरोधात्। उच्यते। धर्मिनिर्दे-शादात्माकारा बुद्धिवृ[2]त्तिरुत्पद्यते। अनुमानाच्चात्मनः संविदविषयत्वं गम्यते। अतो न विरोधगन्धोऽपि।

ननु बुद्धिरेव संवित्। न। बुध्यभावेऽपि सुषुप्तौ संविद्भावात्। अन्यथा "न किञ्चिदवेदिषमि"ति सुषुप्तिपरामर्शः कथं स्यात्।

---

वात्माविषयत्वाकारमनोवृत्तिव्यक्तदृगात्मना स्वाध्यस्ताविषयत्वविशिष्ट[3]साध्यक-त्वम[4]नुमाय न फलत्वं[5] शिष्टैरिष्टमित्यर्थः। अविषयत्ववद् भेदोऽपि सिध्यती-त्युक्तं स्मारयति—**नन्विति**। आत्मन्यध्यस्ताविषयत्ववद् भेदोऽपि किं मानात्तथा सिध्यतीत्यापाद्यते उत साध्यते, नाद्यः, इष्टापत्तेरित्याह—**सिध्ये-दिति**। नान्त्यः विरोधादित्याह—**तदध्यासे चेति**। परस्परविरोधे हि न प्रकारान्तरमिति न्यायेन शङ्कते—**नन्विति**। विधाद्वयनियमाभावं मत्वा ब्रूते—**न स्वाप्नयोरिति**। अविषयत्वसाधकस्वार्थानुमानसंभवेऽपि न परा-र्थानुमानसम्भवः, बाधकसद्भावात्। तथा च अविषयत्वेनात्मभेदस्य मानागम्यत्वं न परं प्रति सिध्यतीत्याह—**तथापीति**। असम्भवमेव साधयति—**परो हीति**। **तन्निर्देशा**त्तस्यात्मनो धर्मित्वेनात्मेति कथनादित्यर्थः। **विरोधा**द्धर्मिनिर्देशस्य साध्यनिर्देशस्य च मिथो व्याघातादित्यर्थः। विरोधं समाधत्ते—**उच्यत इति**। बुद्धिसंविदोर्भेदासिद्धेर्न समाधानमिति शङ्कते—**नन्विति**। बुध्यभावेऽपि

---

1. असम्भवात् 2. उपपद्यते 3. साधकत्वं 4. मात्मनो न 5. चेत्यधिकः पाठः

न चायं परामर्शोऽन्यथा सम्भवीत्युक्तम्। अतो बुद्धेरन्या संविदवश्यमभ्युपेयेत्यनुमानमव्याहतम्। तस्मादात्मनो विषयत्वादिसिद्धिरवद्येति तस्य सच्चिदानन्दादेः भेदसिद्धिर्न मानतस्समस्तीति सिद्धम्।

आनन्दरूपश्चायमात्मा स्वापेऽवभासते। "सुखमहमस्वाप्सम्" इति परामर्शदर्शनात्। "एषोऽस्य परम आनन्द" इति भेदश्रुतेर्नैवमिति चेन्न। तदा भेदासम्भवात्। "न तु तद्द्वितीयमस्ती"ति तदा भेदो निषिध्यते। तस्मा"देषोऽस्ये"ति भाक्तो भेदनिर्देशः। यथा "आनन्दं ब्रह्मणो विद्वानि"ति [1][तत्रापि] भेदनिर्देश[2]ात् ब्रह्मणो गुण इति चेन्न, बह्वागमविरोधात्। तथाहि—"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" "आनन्दो ब्रह्मेति व्यजानात्" "विज्ञानमानन्दं ब्रह्म"-

---

संवि[3]द्भावात् भेदसिद्धिरित्याह—न बुद्धीति[4]। सुषुप्तौ संविद्भावे नास्ति प्रमाणमित्याशङ्क्य परामर्शानुपपत्तिं प्रमाणयति—अन्यथेति। उत्थितः स्वापकालीनमात्मनि ज्ञानाभावं अनुमिमीते "न किञ्चिदवेदिष"मिति। अतः सुषुप्तौ न संविदस्तीत्याशङ्क्याह—न चेति। न हि सुषुप्तः स्वात्मनि प्रमाणवानित्यादावित्यर्थः। अविरोधं साधितं निगमयति—अत इति। अनुमानस्याव्याहतत्वे फलितं दर्शयन् महाप्रमेयमुपसंहरति—तस्मादिति।

चिदात्मनोरेकत्वेऽपि नानन्दात्मनोस्तदस्ति, मानाभावादित्याशङ्क्याह—आनन्दरूपश्चेति। सुषुप्तावानन्दानुभवे विवदमानं प्रत्याह—सुखमिति। सुषुप्तौ प्रथमाषष्ठीभ्यामानन्दात्मानौ भेदेनेक्तौ तेन श्रुतिविरोधादुक्तानुभवस्य सु[5]खात्मता नोपपन्नेति शङ्कते—एषोऽस्येति। भेदश्रुतेरमुख्यार्थत्वं गृहीत्वा परिहरति—न तदिति। सुषुप्तौ भेदासम्भवं साधयति—नत्विति। का तर्हि भेदश्रुतेर्गतिः इत्याशङ्क्याह—तस्मादिति। श्रुत्यन्तरस्य गतिमभिधित्समानो दृष्टान्तमाह—यथेति। तस्य साध्यसमत्वमाशङ्कते—तत्रापीति। ब्रह्मानन्दयोर्मु[6]ख्यभेदं दूषयन् गुणगुणिभावं निराकरोति—न बह्विति। विरोधमेव साधयति—तथा हीति। ब्रह्मणो जगत्कारणत्वमशेषोपनिषदधिगतं, तच्चान-

---

1. इति भेद 2. निर्देशादौ 3. संविद्भाक्त 4. बुद्धिरिति
5. सुखात्मतोपपन्ना 6. मुख्यदूषयन्

त्यादिब्रह्मागमविरोधो ब्रह्मानन्दभेदनिर्देशे स्यात्। आनन्दशब्द एव भाक्तो दुःखाभावं ब्रूयादिति चेन्न, मुख्ये सम्भवत्यमुख्यस्यान्याय्यत्वात्।

स्यान्मतम्—दुःखाभाव एवानन्दशब्दस्य मुख्यार्थः। ज्वरभारभयादिदुःखनिवृत्तौ "अहो सुखमि"त्युपलम्भात्। न हि तत्र सुखस्य क्लृप्तौ हेतुरस्ति। यत्तु ज्वरादिनिवृत्तिर्विषयवत् सुखस्य व्यञ्जिकेति मतं तत् प्रक्रियामात्रम्। अभावस्य सुखव्यञ्जकत्वे मानाभावात्। यदपि [1]मानं सुखं न दुःखाभावः तदनिरूप्यत्वात् कुम्भवदिति, तदपि, वार्तम्। विपक्षे बाधाभावात्। प्रळयेन व्यभिचाराच्च। प्रळयो हि सर्वकार्याभावत्वाद्दुःखाभावोऽपि। न चासौ दुःखनिरूप्य

---

न्दस्य श्रुतमिति लिङ्गात्तयोरेकत्वमित्याह—आनन्दादीति। ब्रह्मानन्दशब्दयोः सामानाधिकरण्यश्रवणादपि तदर्थयोरेकत्वमित्याह—आनन्द इति।

[2]ननु ज्ञानं प्रमाणमितिवदौपचारिकं सामानाधिकरण्यमित्याशङ्क्य श्रुत्यन्तरं दर्शयति—विज्ञानमिति। आदिपदेन "यो वै भूमा तत्सुखमि"त्यादि गृह्यते। अभेदश्रुतिविरोधात् भेदश्रुतेरौपचारिकार्थत्वे वैपरीत्यं किं न स्यादिति शङ्कते—आनन्देति। आनन्दश्रुतेर्मुख्यार्थत्वे बाधकाभावान्नौपचारिकार्थतेति कुतो वैपरीत्यमित्याह—न मुख्य इति। चिरन्तनतार्किकपक्षमुपन्यस्यति—स्यान्मतमिति। ज्वरादिनिमित्तदुःखनिवृत्तावपि व्यतिरिक्तं सुखमस्तीति चेत् तत्किं वैषयिकं उत नित्यमिति विकल्प्य नाद्य इत्याह—न हीति। शुभकर्मोपस्थापितविषयानन्दाकारान्तःकरणपरिणामवत् ज्वरादिनिवृत्तिरपि नित्यात्मस्वभावसुखाभिव्यञ्जिकेति तस्यां सुखशब्दप्रवृत्तिरिति द्वितीयमाशङ्क्यानुवदति—यत्त्विति। निष्प्रामाणिकी परिभाषा न प्रामाणिकैः स्वीकार[3]योग्येत्याह—तत्प्रक्रियेति। एतेन[4]दुःखाभावस्य सुखव्यञ्जकत्वं प्रत्युक्तम्। सुखस्य दुःखाभावादर्थान्तरत्वमनुमानसिद्धम्। अतो न दुःखाभावे सुखशब्दप्रवृत्तिरित्याशङ्क्याह—यदपीति।

---

1. नेत्यधिकः पाठः 2. ननु प्रमाणमि 3. योग्यतेत्याह 4. मुख्यात्ताभावस्याभाव

**इति कथं न व्यभिचारः। प्रळयस्य सर्वाभावतया सर्वनिरूप्यत्वाद्-दुःखनिरूप्यत्वमिति चेत्, तर्हि सुखस्यापि दुःखाभावतया दुःखनिरूप्यत्वात्तदनिरूप्यत्वं ममासिद्धम्। अतो दुःखाभाव एवानन्द इति।**

**न। आनन्दस्य भावत्वानुभवविरोधात्। ब्रह्मरूपताश्रुतिविरोधाच्च। दर्शितानि हि तद्विषयाणि श्रुतिवाक्यानि। अतो लौकिकमपि सुखं न दुःखाभावः नित्यमेवात्मसुखं विषययोगजान्तःकरणवृत्तिव्यङ्ग्यं सत् विषयसुखमिति गीयते। ज्वराद्यभावोऽपि विषयवदात्मसुखस्य व्यञ्जको भवेत्। अभावस्य व्यञ्जकता च नादृष्टचरी। मूर्तद्रव्या-**

---

दुःखानिरूप्यस्यापि [1]तद्भावे कुम्भस्यापि तथात्वप्रसक्तिर्बाधिकेत्याशङ्क्य दोषान्तरमाह—**प्रलयेनेति**। व्यभिचारमेव स्फोरयति—**प्रलयो हीति**। प्रलयस्यापि वस्तुगत्या दुःखनिरूप्यत्वमस्तीति व्यभिचारपरिहारं शङ्कते—**प्रलयस्येति**। यद्वि प्रलयस्याप्रतीयमानमपि दुःखनिरूप्यत्वं तदभावतया कल्प्येत तर्हि हेतोरन्यतरासिद्धिरिति दूषयति—**तर्हीति**। अनुमाने दूषिते फलितं कथयति—**अत इति**। [2]धर्म्यादिनिरपेक्षप्रतीतित्वेन सुखस्य कुम्भवत् भावत्वानुभवविरोधान्न दुःखाभावत्वमिति समाधत्ते—**नानन्दस्येति**। तस्य दुःखाभावत्वाभावे हेत्वन्तरमाह—**ब्रह्मेति**। का पुनरानन्दस्य ब्रह्मरूपताश्रुतिरिति तत्राह—**दर्शितानीति**। ब्रह्मानन्दस्य भावत्वेऽपि [3]लौकिकं [4]सुखं दुःखाभावः ज्वरादिदुःखनिवृत्तौ सुखशब्दस्य दर्शनादित्याशङ्क्य सुखशब्दस्य सत्यां गतावनेकार्थतानुपपत्तेर्वैपरीत्यं [5]नेत्याह—**अत इति**। ब्रह्मानन्दस्य नित्यत्वादन्यस्यानित्यत्वात्तयोर्भेदः स्यादित्याशङ्क्याह—**नित्यमिति**[6]। यत्तु दुःखाभाव एवानन्दशब्दस्य मुख्योऽर्थः ज्वरादिदुःखनिवृत्तौ अहो सुखमित्युपलम्भादिति तत्राह—[7]**ज्वरादीति**। यच्च तत्प्रक्रिया[8]मात्रं मानाभावादिति तत्राह—**अभावस्येति**। न च मूर्ताभावस्यापि व्यञ्जकत्वमसम्प्रतिपन्नमिति साम्प्रतम्। तस्य कूपादावाकाशव्यञ्जकतायाः सर्वसम्प्रतिपन्नत्वादिति भावः। सुखं न दुःखाभावः

---

1. तदभावे 2. धर्म्यादिभिर 3. पीति 4. सुख 5. वैपरीत्याह 6. तच्छब्दाद्यच्छब्दोऽपि द्रष्टव्यः इत्यधिकः पाठः 7. ज्वरादिति 8. मात्रमनो

भावस्याकाशव्यञ्जकतादर्शनात् । अत आत्मैव सुखं, स्वापेऽपरोक्षं भातीति परामर्शात् गम्यते ।

ननु स्वप्नान्तेऽनुभूतं सुखं सामीप्यात् स्वापकालीनत्वेन भ्रान्त्या परामृश्यते । यथा "दुःखमस्वाप्समि"ति परामृश्यते । न । युक्तं हि दुःखं भ्रान्त्या तथा परामृश्यत इति । सुषुप्तौ दुःखस्याभावात् । सुखपरामर्शे तु बाधाभावान्न तस्य भ्रान्तित्वं युक्तम् । तस्मात्स्वापे सुखरूपेणात्मनः स्फुरणं नापलपनीयम् । एवमनुभवसिद्धं तावदात्मनः सुखरूपत्वम् । तदनुभवे च विप्रतिपन्नस्य परामर्शानुपपत्तिरुक्ता । तथाऽऽगमतोऽपि सुखरूपताऽऽत्मनः सिध्यति । तथाहि—"सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायामि"ति ब्रह्मप्रत्यगात्मनोरैक्यमुक्त्वा "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्ती"ति । आनन्दो

---

दुःखानिरूप्यत्वात् । कुम्भवदित्यनुमाने त्वन्यतरासिद्धिः अनुभवेन परा[1]स्यते इति मत्वोपसंहरति—अत इति । यतो ब्रह्मणि प्रयुक्तानन्दपदस्य दुःखाभावपरतयोपचरितार्थत्वासम्भवादनेकाभेदश्रुतिविरोधा'दानन्दं ब्रह्मणो विद्वानि'ति भेदनिर्देशस्योपचरितभेदविषयत्ववत् "एषोऽस्ये"ति श्रुतेरपि सिद्धमुपचरितभेदविषयत्वम् । परामर्शसिद्धात् आत्मनः सुखत्वं सिद्धमित्यर्थः । दर्शितपरामर्शः सौषु[2]प्तसुखानुभावकल्पको न भवति भ्रान्तित्वादिति शङ्कते—नन्विति । निदर्शनवैषम्यप्रदर्शनेन अतः सौषुप्तानुभवात् दूषयति—न युक्तमिति । ननु तत्र सुखमपि दुःखवन्नास्तीत्याशङ्क्य "एषोऽस्य [3]परम अनन्द" इति [4]श्रुतेर्नैवमित्याह—सुखपरामर्शे त्विति । सुखपरामर्शस्याभ्रान्तत्वे फलितमाह—तस्मादिति । आत्मनः सुखरूपत्वेमानान्तरं वक्तुमु[5]क्तमनुवदति—एवमिति । तत्रैव मानान्तरमाह—तथेति । ब्रह्मणः सुखरूपत्वमागमादवगम्यते नात्मन इत्याशङ्क्याह—तथा हीति । आगमगम्यमपि ब्रह्मात्मनः सुखत्वमादित्यादेर्यूपत्वादिवदविवक्षितमित्याशङ्क्याह—सतात्पर्यमिति । यस्त्वेवमपि नानुमानमन्तरेण तुष्यति तं

---

1. स्यति मत्वा 2. सौषुप्तः सु 3. परमानन्दं 4. श्रुतिर्नैवं 5. तरम

ब्रह्मेति सतात्पर्यं ब्रह्मात्मन आनन्दरूपतोच्यते। एवमनुमानतोऽप्यात्मनः सुखरूपता ज्ञायते। तदयं प्रयोगः—आत्मा सुखमनन्यार्थत्वे सति प्रियत्वात् दुःखवदिति व्यतिरेकी। न च वाच्यं सुखस्यात्मार्थत्वादनन्यार्थत्वविशिष्टो हेतुः सपक्षाप्रवेशादनध्यवसित इति। आत्मनः सुखतादात्म्यस्य साध्यत्वात् सपक्षासिद्धेः। तर्हि कालात्ययापदेश इति चेन्न। सुखादात्मनो भेदे प्रमाणस्यासंप्रतिपत्तेः।

न च "अहं सुखी"ति प्रत्ययबाधः। अहमोऽनात्मताया उक्तत्वात्। दर्शितं ह्यहंकारात्मनोर्भेदे मानम्।

ननु प्रीतिः सुखं, तत्साधनं च प्रियम् अतो हेतुप्रतिज्ञयोर्व्या-

---

प्रत्याह—एवमिति। सुखसाधने चन्दनादौ हेतोर्वृत्तिं वारयति—अनन्यार्थत्वे सतीति। दुःखे प्रसङ्गं प्रत्याचष्टे—प्रियत्वादिति। सुखरूपत्वे साध्ये सुखस्य सपक्षत्वात्तत्र विशिष्टहेत्वभावादसाधारणत्वं हेतोरापतेदित्याशङ्क्याह—न चेति। कुतो न वाच्यमित्यपेक्षायां सुखस्य पक्षनिक्षिप्तत्वेन सपक्षत्वाभावादिति हेतुमाह—आत्मन इति। सुखात्मशब्दौ हि भिन्नार्थावपर्यायानेकशब्दत्वात् घटपटशब्दवदिति शङ्कते—तर्हीति। एकस्यापि पिता भ्रातेति अपर्यायानेकशब्दवाच्यत्वदर्शनेन व्यभिचारान्नैतदित्याह—न सुखादीति। प्रत्यक्षस्य भेदग्राहिप्रमाणत्वमाशङ्क्य तस्य सुखपरिणाम्यन्तःकरणगोचर[1]तया [2]न साक्षिलक्षणात्मसुखभेदविषयत्वमित्याह—न चेति। अहम्प्रत्ययालम्बनस्यात्मत्वात्तस्य सुखसम्बन्धं गृह्णत् प्रत्यक्षं कथं सुखात्मनो[3]र्भेदं न गोचरयेत्, अत आह—अहमिति। हेतोः सुखसाधनविषयत्वात् प्रतिज्ञायाश्च सुखविषयत्वादात्मा सुखं सुखसाधनत्वादितिवत्। अतो [4]व्याहतिः। न चानन्यार्थत्वे सतीति विशेषणसम्भवः, सुखसाधने तदसंभवादिति मन्वानः शङ्कते—नन्विति। प्रियपदेन सुखसाधनं नोच्यते। तस्यान्यत्र रूढत्वात्। अतो न हेतुप्रतिज्ञयोर्व्याहतिः। न चानन्यार्थत्वविशेषणानुपपत्तिरिति उत्तरमाह—न प्रियस्येति। प्रियपदस्य प्रेमास्पदे प्रवृत्तिर्न तु सुखसाधने। यदि तु सुखसाधनाभिधायि प्रियपदमिष्येत तदा सुखं प्रियमिति निर्दोषापि प्रसिद्धिरसाध्वी

---

1. गोचर 2. साक्षिलक्षणस्य ना 3. भेदयन्न गोचरेत् 4. नेत्यधिकः पाठः

घात इति । न । प्रियस्येच्छाविशेषविषयस्य प्रसिद्धत्वात् । कथमन्यथा सुखं प्रियमिति प्रसिद्धिः साध्वी स्यात् । "भक्तिमान्मे प्रियो नरः" इति प्रयोगदर्शनाच्च । न हि भक्तेनेश्वरे सुखं जन्यते । यदि च प्रियपदेन सुखसाधनमेवोच्यते, तदा "आत्मनस्तु सर्वं प्रियम्भवती"ति वक्तव्यं स्यात् न पुनः "आत्मनस्तु कामाय सर्वं प्रियं भवती"ति । आत्मनः सुखसाधनमिति हि युज्यतेऽन्वयो न त्वात्मनः कामाय सुखसाधनमिति । अतः स्नेहविषय एव सर्वत्र प्रियपदेनोच्यते । अनानन्दोऽप्यात्मा प्रीतिविषयः स्यात्, को बाध? इति चेत्, प्रीतिविषयत्वभंगप्रसङ्ग इति ब्रूमः । यतो दुःखतत्साधनेभ्य उद्विजते लोकः, तृणादिषु चोदास्ते । सुखसाधने च न निरुपाधिप्रेमोपपद्यते । अतोऽत्र तादृशप्रेमविषयत्वान्यथानुपपत्तिप्रसूतार्थापत्तिरपि शक्यते प्रमाणयितुम् । सुखलक्षणलक्षितत्वादिति व्यतिरेकिप्रयोगादपि सुखस्वरूप आत्मा । सुखलक्षणं च यदर्थमन्यदुपादीयते । यच्च

---

[1]स्यादित्युक्तेऽर्थे युक्तिमाह—**कथमिति** । प्रियपदस्य प्रेमास्पदविषयत्वे भगवद्वाक्यं प्रमाणयति—**भक्तिमानिति** । तत्रापि प्रियपदं सुखसाधनमभिधत्ते । भक्तो हीश्वरे सुखं जनयेदित्याशङ्क्याह—**न हीति** । ईश्वरस्याप्तकामत्वान्न तदीयसुखसाधनत्वं भक्तस्य युक्तमित्यर्थः । श्रुतिपर्यालोचनायामपि प्रियपदं सुखसाधनवाचकं न भवतीत्याह—**यदि चेति** । तत्र हेतुमाह—**आत्मन इति** । प्रियपदस्य सुखसाधनविषयत्वासम्भवे फलमाह—**अत इति** । हेतुप्रतिज्ञयोर्व्याघाताभावेऽपि हेतोरप्रयोजकत्वमस्तीति शङ्कते—**अनानन्दोऽपीति** । परमा[2]नन्दात्वभावे परमप्रेमास्पदत्वानुपपत्तेर्नाप्रयोजको हेतुरित्याह—**प्रीतीति** । आत्मनि हि प्रेमा निरुपाधिः सर्वस्य दृश्यते । न चासौ [3]कस्यचित् दुःखत्वेन वा तदुपायत्वेन वोपेक्ष्यतया वा सुखसाधनत्वेन वा सम्भवति । अतः सुखरूपत्वाभावे तदनुपपत्तिर्बाधिकेत्यर्थः । बाधकतर्कप्रदर्शनप्रक्रियया प्रतीचि सुखतायामर्थापत्तिरपि शक्योपन्यासेति प्रमाणान्तरमाह—**अतोऽत्रेति** । आत्मा सुखं सुखलक्षणवत्वाद् दुःखवदिति प्रयोगान्तरमाह—**सुखलक्षणेति** । किमिदं सुखलक्षणं यद्विषयत्वादात्मा सुखं प्रतिज्ञायते तदाह—**सुखलक्षणं**

---

1. स्यात् । उक्ते 2. नन्दाभावे 3. कस्य दुःख

नान्यार्थमिति । तथारूपश्चात्मा ।

ननु सुखमात्मार्थम् । न । अकिंचित्करत्वात् । सुखं स्वज्ञानं जनयतीति चेत् न, तज्ज्ञानस्याजन्यत्वात् । तज्जन्यं चेत् सुषुप्तौ न स्यात् । दर्शितं च सुषुप्तौ तज्ज्ञानम् । विपक्षे चात्मन उक्तरूपता न स्यादिति बाधः । सुखमात्मैव चेत्तज्जन्यं कथं स्यात् ? । न कथञ्चित् । या त्वन्तःकरणवृत्तिरात्मसुखव्यञ्जिका सुखसम्भेदात् सुखाकारा सैव जायते नश्यति । भिन्ना आत्मार्था वेद्या चेत्येवमादिदशामाविशतीति न विरोधगन्धोऽपि । सुखमेव चेज्जन्यं तत् स्वापे न स्यात् । साधितं

---

चेति । सुखसाधने प्रसङ्गं वारयति—यच्चेति । दुःखे प्राप्तिं प्रत्याचष्टे—यदर्थमिति । आत्मार्थं सर्वमाद्रियते । आत्मा तु नान्यार्थ इति पक्षधर्मतामाह—तथेति । सुखस्यात्मार्थत्वादात्मनश्चातदर्थत्वादसम्भवि सुखलक्षणमिति शङ्कते—नन्विति । तस्यात्मार्थत्वमसिद्धं तस्मिन्नतिशयानाधायकत्वादित्याह—नेति । सुखस्य कर्मत्वेनात्मनि स्वज्ञानजनकत्वादकिञ्चित्करत्वमसिद्धमिति चोदयति—सुखमिति । सुखसाक्षात्कारस्यात्मनि नित्यत्वान्नैतदित्याह—न तज्ज्ञानस्येति । अनुभवेन शङ्कते—तदिति । अनुभवस्य सुखाकारान्तःकरणवृत्तिविषयत्वादजन्यमेव सुख[1]ज्ञानं स्वरूपभूतमेषितव्यं, अन्यथा सुप्तौ सुखज्ञानं न स्यात् । तदभावे परामर्शानु[2]पपत्तिरित्युत्तरमाह—सुषुप्ताविति । सुखात्मनोरभेदे साध्ये तयोर्भेदमादाय लक्षणस्यासंभवित्वमशक्यशङ्कमिति चकारार्थः । सुखलक्षणस्यासम्भवित्वात्तल्लक्षितत्वलक्षणविशिष्टहेतोरसिद्धिरिति [3]चोद्यस्या प्रयोजक[4]त्वमाह—विपक्षे चेति । आत्मनः सुखत्वाभावे तल्लक्षणत्वानुपपत्तिर्बाधिका । [5]अतो नासिद्धिरित्यर्थः । सुखात्मनोर्जन्यजनकत्वेनाभेदानुपपत्तिरिति पक्षबाधकमाशङ्कते—सुखमिति । सुखस्य जन्यत्वमसिद्धमित्याह—न कथंचिदिति । कथं तर्हि जन्मादिप्रतीतिस्तत्राह—यात्विति । जन्मादिप्रतीतेरुपाधिविषयत्वेनान्यथासिद्धेर्नानुमानस्य तद्विरोधाशङ्केति निगमयति—इति नेति । उपाधिमन्तरेण सुखस्यैव जन्माभ्युपगमे बाधाभावात्तत्प्रतीति-

---

1. ज्ञानस्व 2. पपति...न्तर 3. चोद्यप....प्र 4. प्रयोजकत्वं प्रत्या
5. अतो....तरि

च स्वापेऽपि सुखम् ।

नन्वात्मनः सुखत्वे कथं तद्भाने सुखाभानम् । कामोपप्लुतान्तः-करणावच्छिन्नत्वादिति ब्रूमः । अत एव कामोपशमे विदुषां सुप्तानां च सुखाभिव्यक्तिरुपपद्यते । कामाभावाच्चानन्दस्य शतगुणोत्कर्षः श्रूयते । "ते ये शतं मानुषा आनन्दास्सएक" इत्यादौ "श्रोत्रियस्य चाकामहतस्ये"ति श्रवणात् । यथा ह्यवच्छेदकदोषात् क्वचित्प्रतिबिम्बिते रूपे भात्यपि तदभिन्ना शुद्धिर्न भाति । एवमात्मस्वरूपमपि सुखं तद्भानेऽपि न भातीति किमनुपपन्नम् ।

ननु केयं रूपस्य शुद्धिः, यदि मलविरहः । यदि वा रूपसामा-

---

रनौपाधिकसुखविषया किं न [1]स्यादित्याशङ्क्याह—**सुखमेवेति** । तत्र सुखजनकविषयेन्द्रियसम्प्रयोगायोगादिति भावः । मा तर्हि सुखं भूत्, अत आह—**साधितमिति** । आनन्दरूपश्चायमित्यादावित्यर्थः । सुखं नात्मा, तस्मिन् भाति भानहीनत्वात् कुम्भवदिति प्रत्यनुमानं शङ्कते—**नन्वात्मन इति** । आत्मस्वरूपस्यापि सुखस्य तद्भाने[2]ऽप्यभानमवच्छेदकदोषादित्यन्यथा-सिद्धिमाह—**कामेति** । सुखाभिभावकत्वं कामस्य कुतोऽज्ञायीत्याशङ्क्य कामाभावे तदभिव्यक्तेरित्याह—**अत एवेति** । कामस्य सुखाभिभवहेतुत्वे श्रुतार्थापत्तिरपि प्रमाणमित्याह—**कामाभावादिति** ।

ननु मनुष्यत्वादारभ्य हिरण्यगर्भत्वान्तमुत्तरोत्तरमानन्दस्य शतगुणोत्कर्ष-स्तत्र श्रूयते, न तु कामभावाभावयोरानन्दानभिव्यक्त्यभिव्यक्ती तत्राह—**श्रोत्रियस्येति** । अध्ययनसम्पन्नस्य कामाद्युपद्रवविरहिणो [3]देवादिवदानन्दो-त्कर्षो भवतीति श्रवणात्कामोपहतस्यानन्दानभिव्यक्तिः, तदुपहतिरहितस्य तु तदभिव्यक्तिरिति श्रुतेरभिप्रेतमित्यर्थः । आत्मस्वरूप[4]स्यैव सुखस्यावच्छेदक-दोषात्तद्भानेऽपि अभानं श्रुत्योपपाद्य दृष्टान्तेनोपपादयति—**यथा हीत्यादिना** । दर्पणादौ प्रतिबिम्बिते रूपे भाति सति रूपाभिन्नापि शुद्धिर्न भातीति, अत्रावच्छेदकदोषादिति हेतुः । [5]रूपाभिन्ना शुद्धिरसिद्धेति शङ्कते—**नन्विति** ।

---

1. सेत्यधिकः पाठः 2. प्यनं 3. देहादि 4. स्वरूपस्येव 5. रूपाभिन्न-मिति शुद्धरसिद्धमिति ।

न्यविशेषः। अथ वा वैशेषिकतन्त्रमनादृत्य रूपस्यापि गुणोऽस्तीत्युच्यते। सर्वथापि न रूपाभिन्ना शुद्धिरिति। उच्यते—न तावद्रूपशुद्धिर्मलविरहः। प्रक्षालितमलेऽपि मृतकळेबरादौ स्वाच्छ्याद्दर्शनात्। न च रूपस्वरूपत्वमपि तस्यास्तद्रूपेण व्यभिचरतीति वाच्यम्। रूपविशेषस्य स्वच्छस्याभ्युपगमात्। नाप्यस्या द्वितीयपक्षे [1]सम्भवः। प्रसिद्धगौरत्वसामान्येन स्वाच्छ्यस्य परापरभावाभावात्। न हि गौरत्वं परम्, अगौरस्यापि स्वच्छस्य दर्शनात्। नापीतरस्य परत्वम्। गौरस्यापि क्वचिदस्वच्छत्वात्। अथैकव्यक्तिनिष्ठयोरप्यपरापरभावे न काचित् क्षतिरिति मतम्। तत्र न तावत्सामान्ययोस्तुल्यव्यक्तिता

---

न तावत्प्रथमे शुद्धिरूपयोरभेदसिद्धिः, भावाभावयोस्तदयोगात्। द्वितीयेऽपि न तयोरभेदः, जातिव्यक्तयोरत्यन्तभिन्नत्वात्। न तृतीयः। धर्मधर्मिणोर्भेदात्। तत्राप्यभेदानुपपत्तेरिति मत्वाह—**सर्वथेति** पक्षत्रयमप्यनङ्गीकारपरास्तमित्याह—**उच्यत इति**। तत्राद्यपक्षानङ्गीकारे कारणमाह—**न तावदिति**। मृतशरीरे श्वपचादौ च मलविगमेऽपि शुद्धत्वबुद्ध्यभावान्न मलाभावश्शु[2]द्धिः। तर्हि रूपे सत्यपि तत्र [3]स्वाच्छ्याद्दर्शनान्न शुद्धिः रूपस्वरूपा। तत्रैव व्यभिचारादित्याशङ्क्याह—**न चेति**। श्वैत्यादिवद्रूपव्यक्तिविशेषस्य परिशुद्धस्य स्वीकारादुक्तव्यभिचाराभावेऽपि शुद्धे रूपमात्रस्वरूपता विहतिरित्यशङ्क्याह—**रूपविशेषस्येति**। [[4]शुद्धे रुपमात्रस्वरूपतानंगीकारादिति भावः।] द्वितीयविकल्पानभ्युपगमे हेतुमाह—**नापीति**। यदि शुद्धत्वं सामान्यविशेषः तदा तुल्यव्यक्तिवृत्तिजातिद्वयस्य, परापरभावनियमादस्यापि स्वसमानाश्रयेण गौरत्वेन परापरत्वं वक्तव्यम्। न च तदस्ति। अतो न जातिविशेषः शुद्धत्वमित्याह—**प्रसिद्धेति**। तदेव साधयति—**न हीति**। शुद्धत्वगौरत्वयोरेकव्यक्तिगतयोरपि परापरभावाभावे [5]न किञ्चिद् दूषणमिति शङ्कते—**अथेति**। तुल्यव्यक्तित्वाद्वा परापरत्वाभावो जात्योरुच्यते मिथो व्यभिचाराद्वेति [6]विकल्प्य तत्राद्यं दूषयति—[7]**तत्र न तावदिति**। पर्यायशब्दवाच्यव्यक्तिवृत्तिजातिद्वयस्य परा-

---

1. शुद्धे रूपसामान्यविशेषत्वं नाभ्युगम्यत इति भावः। 2. चेदित्यधिकः पाठः 3. परातत्वादर्शनं 4. मातृकायामिदं नोपलभ्यते 5. नेत्यधिकःपाठः 6. कल्पयति- तत्रेति-आद्यं 7. न तावदिति

सम्भविनी। तथा क्वचिदप्यनुपलब्धेः। हस्तपाण्यादिशब्दानां च पर्यायत्वाभावप्रसङ्गात्। हस्तत्वादिशब्दप्रवृत्तिनिमित्तभेदप्राप्तेः। एकव्यक्तिगतसामान्ययोः परस्परव्यभिचारे च शिंशपात्वादिना वृक्षत्वानुमानं न स्यात्।

तत्रापि व्यभिचारशङ्कासंकोचासम्भवात्। एकव्यक्तिगतसामान्ययोः परस्परव्यभिचारे च न क्वचिदपि प्रमाणमस्ति। निर्बीजा च कल्पनाऽतिप्रसङ्गिनी। सुवर्णघटप्रतीतिस्तु घटसमानाकारविषयतयाऽन्यथासिद्धा न घटत्वव्यभिचारे मानम्। ज्वालाप्रत्यभिज्ञेव, स्थायित्वे। विमतं पृथिवीत्वाव्यभिचारि, तन्न्यूनवृत्तित्वे सति जातित्वात् गोत्ववदित्यनुमानविरोधाच्च। कथं चोत्कर्षादिमत् स्वाच्छयं सामान्यं स्यात्। न हि गोत्वादि क्वचिदुत्कर्षादिमत्।

नन्वेवं रूपस्वरूपमपि नोत्कर्षादिमत्। सत्यम्। अत एव

---

परत्वविरहिणो लोकवेदयोरदृ[1]ष्टेरिति हेतुमाचष्टे—तथेति। उक्तलक्षणजात्यो-[2]रुपलम्भकल्पने दोषमाह—[3]हस्तेति। कल्पान्तरं दूषयति—एकेति। वृक्षत्वस्य शिंशपात्वव्यभिचारेऽपि तस्येतराव्यभिचारादनुमानोपपतिरिति चेत् नेत्याह—तत्रापीति। प्रमाणमन्तरेणापि व्यभिचारकल्पने दोषमाह—निर्बीजेति। सुवर्णत्वघटत्वयो रुचकघटयोर्मिथो व्यभिचारेऽपि सुवर्णघटे सहभावदृष्टेरेकव्यक्तिगतजात्योर्मिथो व्यभिचारे प्रत्यक्षं प्रमाणमित्याशङ्क्य परिहरति—[4]स्वर्णघटेति। [अनुमानविरोधं चाह—विमतमिति।] [5]यत्र न पृथिवीत्वं तत्र न घटत्वमिति प्रतिज्ञार्थः, यावत्पृथिव्यवृत्तिजातित्वादिति हेत्वर्थः। जातिपदं पाकजत्वव्यावृत्त्यर्थः। किं च शुद्धत्वं न जातिविशेषः, उत्कर्षादिमत्त्वात् सुखादिवदिति युक्त्यन्तरमाह—कथं चेति। उत्कर्षादिमत्त्वेऽपि जातिविशेषत्वं किं न स्यादित्याशङ्क्य गोत्वादेरपि तत्प्रसङ्गान्मैवमित्याह—न हीति। उत्कर्षादिमत्त्वेन शुद्धेर्जातित्वं निरस्यते चेत्तेनैव हेतुना रूपस्वरूपत्वमपि तस्याः शक्यं निरसितुं शुद्धिः रूपस्वरूपं न भवति उत्कर्षादिमत्त्वात् सुखादिवदित्यनुमानादिति चोदयति—नन्वेवमिति। यदुक्त-

---

1. अदृष्टेति 2. उपलंभेविकल्पे 3. हन्तेति 4. मतमिति 5. इदं मातृकायां नोपलभ्यते

बहुधवळादिवद्रूपविशेषः स्वाच्छ्यमिष्यते । एतेन तृतीयपक्षोऽप्यपास्तः । न हि रूपस्य गुणोऽस्तीत्यस्ति प्रमाणम् । तथापि प्रतीतस्य तदैवा-प्रतीतिरस्ति भेदे प्रमेति चेन्न । प्रतीयमानदूरस्थवस्त्वभिन्नस्य भेद-प्रकर्षादेरप्रतीयमानत्वात् । अतो यथा, रूपाभिन्नापि शुद्धिः तद्भानेऽपि न भात्युपाधिदोषात् एवमात्मनि भात्यपि आनन्दो न भात्यभिन्नोऽपीति न किञ्चिदनुपपन्नम् । तस्मादात्मैवानन्द इति न्यायानुभवशरणैरा-दरणीयम् । तदेवं सच्चिदानन्दात्मैकरसं ब्रह्मागमगम्यमिति सिद्धम् ।

ननु सर्वत्र वाक्येषु पदान्तरस्पृष्ट एव पदान्तरार्थः प्रसिद्धः । अतः संसृष्टपदार्थो वाक्यार्थः । न त्वेकरसं वस्तु असंसृष्टम् । पदानि हि वाक्यम् । तेन संसृष्टपदार्थ एव वाक्यार्थो युक्तः । यद्यपि

---

र्षादिमत् स्वा[1]च्छ्यं तत् रूपस्वरूपमपि न भवति । एवं । सुखादिवदित्यक्ष-रार्थः । रूपस्वरूपस्योत्कर्षादिमत्त्वाभावमङ्गीकरोति[2]—सत्यमिति । कथं तर्हि शुद्धेरुत्कर्षादिमत्[3] रूपस्वरूपत्वम् । अत आह—अत एवेति । रूपस्य गुणः स्वाच्छ्यमिति पक्षस्यासंभवं साधयति—तृतीयेति । यद्यपि शुद्धिः रूपस्य[4] त्रिधापि न निरूप्यते, तथा प्रतीतस्य तदैवाप्रतीतत्वानुपपत्त्या [5]भेदसिद्धिरिति शङ्कते—तथापीति । धर्मधर्मिणोरभेदवादिनं प्रत्यन्यथोपपत्तिं कथयति—न प्रतीयमानेति । आपातजायां तु संविदि सामान्यविशेषौ भासमानावपि विवेकतो न भासेते ।

" निर्विकल्पकबोधे[6]ऽपि द्व्यात्मकस्यापि वस्तुनः ।
ग्रहणं लक्षणाख्येयं[7] ज्ञात्रा शुद्धं तु गृह्यते " ॥

इति[8] वचनात् । अतो नोक्तानुपपत्तिरित्यर्थः । साधितं सिद्धान्तमनूद्य दार्ष्टान्तिकं निगमयति—अत इति । वादार्थमुपसंहरति तस्मादिति ।

महाप्रमेयमुपसंहरन्वादान्तरं प्रस्तौति—तदेवमिति । आगमगम्य-स्यैकरस्यमसहमानः शङ्कते—ननु सर्वत्रेति । लौकिकवैदिकवाक्येषु पदार्था-नामन्वितानामेव पदस्मारितानामाकाङ्क्षादिवशान्मिथः संसृष्टानां वाक्यार्थत्वा-

---

1. स्वा....न्त 2. स्वा....मि 3. र्षादिम....रू 4. निधायि 5. वा.... इत्यधिकः पाठः 6. न 7. ज्ञात्वा 8. इति...याद

"प्रकृष्टप्रकाशश्चन्द्र" इति वाक्यं चन्द्रस्वरूपमात्रप्रश्नोत्तरम्। तथापि न तस्याखण्डार्थता। प्रकर्षगुणवतः प्रकाशस्य चन्द्रत्वप्रबोधनात्। कथं गुणविशिष्टार्थं वाक्यं चन्द्रस्वरूपप्रश्नोत्तरं भवेत्। गुणस्य चन्द्राभेदादिति ब्रूमः। अभिन्नस्यापि गुणता विशेषणता चाविरुद्धा।

---

देकरसवस्तुनो न वाक्यीयत्वमित्यर्थः। एतदेव स्पष्टयति—**संसृष्टेति**। चन्द्रप्रातिपदिकार्थमात्रप्रश्नोत्तरस्य प्रकृष्टादिवाक्यस्य प्रश्नसमानविषयस्याखण्डार्थत्वात्कथं सर्वमेव वाक्यं संसृष्टार्थं प्रतिज्ञायत इत्याशङ्क्याह—**यद्यपीति**। गुणविशिष्टचन्द्रोक्तौ प्रकृष्टादिवाक्यं, चन्द्रप्रातिपदिकार्थमात्रप्रश्नोत्तरमित्ययुक्तम्। तथा च प्रश्नोत्तरयोर्व्याहतिरिति शङ्कते—**कथमिति**। भेदाभेदवादी परिहरति—**गुणस्येति**। धर्मिस्वरूपवदभिन्नस्य गुणत्वानुपपत्तिरित्याशङ्क्याह—**अभिन्नस्यापीति**। [दृष्टान्तं निरस्य महावाक्यानामखण्डार्थत्वे तन्निरस्यति—*यच्चेति। सोऽयमिति पदयोर्मुख्यार्थग्रहे विरोधाद्वाक्यार्थासम्भवात् अखण्डार्थता लक्षणिकीति शङ्कते—**अथेति**। विशिष्टवैशिष्ट्यस्यावाक्यार्थत्वेऽपि तद्देशाद्युपलक्षितस्यैतद्देशादिवैशिष्ट्यं वाक्यार्थः। अतो नोभयपदलक्षणा, अन्यथा गौरवादित्याह—**नायमित्यस्येति**। लोके लक्षण[1]या विशिष्टानामखण्डार्थत्वेऽपि ब्रह्मणि तदभावमभिधत्ते—**न चेति**। लक्षणासंभवमभिधातुं तद्व्यापकमाह—तथा हीति। तीरादिवदत्रापि लक्षणा, [2]भूमादिवाच्यत्वान्नावाच्यत्वमित्याह—**एवमिति**। लक्ष्यत्वे वाच्यत्वादेरप्रयोजकत्वे दोषमाह—**अन्यथेति**। लक्षणान्तरेण तन्निर्देशे त्वनवस्थेति भावः। अस्तु तर्हि ब्रह्मण्यपि वाच्यत्वादि नेत्याह—**न चेति**। व्यापकाभावे व्याप्याभावं दर्शयति—**अत इति**। ब्रह्मस्वरूपनिरूपणया तत्र लक्षणासंभवमभिधाय लक्षणास्वभावालो[3]चनयापि तदसम्भवमाह—**किं चेति**। विज्ञानादिपदानां ब्रह्मणि [4]जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा वेति विकल्प्याद्यं दूषयति—**आनन्दादीति**। द्वितीयं निरस्यति—**अजहदिति**। न तृतीय इत्याह—**न चेति**। सोऽयं

---

* [एतच्चिह्नांकितस्थले मूलग्रन्थमातृकायां ग्रन्थपातो दृश्यते। अतः तद्व्याख्याभाग एव केवलं आपाततःशोधितः।

1. शिष्टानां 2. भूमौ वाच्यत्वादिवा 3. वालोचनापि 4. लक्षणाजहल्लक्षणा

चैत्र इत्यत्र जहदजहद्रूपं लक्षणान्तरं प्रसिद्धमित्याशङ्क्य प्रसिद्धिमङ्गीकृत्य विज्ञानादिवाक्ये तदनुपपत्तिरित्याह—**स्वप्रक्रियेति**। निर्भागत्वमुपपादति—**न हीति**। प्रमेयदूषमुपसंहति—**तस्मान्नेति**।

सम्प्रति प्रमाणं दूषयति—**न चेति**। विमतमखण्डार्थः लक्षणवाक्यत्वात् संमतवदित्याशङ्क्याह—**यदीति**। किमिह साध्यं सत्यमसत्यं साधारणं वेति विकल्पयति—**तत्रेति**। नाद्य इत्याह—**न तावदिति**। यद्यपि सत्यादि-वाक्ये सत्यमखण्डार्थत्वं सम्भवति भेदाभावोपलक्षितात्मस्वरूपस्य सत्यत्वात्। तथापि न प्रकृष्टादिवाक्ये [1]तदुपपत्तिरित्याह—**स्वप्रक्रियेति**। निर्भागत्व-मुपपादयति—**न हीति**। प्रमाण [2]प्रमेयदूषणमुपसंहरति—**तस्मान्नेति**।

सम्प्रति[प्रकारान्तरेण]प्रमाणं दूषयति—**न चेति**। विमतमखण्डार्थं लक्षणवाक्यत्वात् सम्मतवदित्याशङ्क्याह—**यदीति**। अनात्मनस्सर्वस्यासत्यत्व-स्वीकारादित्यर्थः द्वितीयतृतीयौ दूषयति—**नापीति**। लक्षणवाक्येष्वखण्डार्थ-मात्रस्वीकाराद्वास्तवस्यैवानुपगमाद् भवति सिद्धसाध्यतेत्यर्थः। व्यतिरेकिणा सत्याखण्डार्थत्वसाधनात् दृष्टान्ते साध्यविरहदोषाभावात्। दृष्टान्तस्यैवाभावा-दिति चेत्, नेत्याह—**न चेति**। लौकिकस्य वा वैदिकस्य वा सर्वस्य वा विमतस्य वाक्यस्य वा धर्मित्वमिति विकल्प्य [आद्यं] दूषयति—**लौकिक-स्येति**। भवत्पक्षे सत्यादिवाक्यस्याखण्डार्थत्वेन सपक्षत्वाद्व्यतिरेक्यसिद्धिरित्यर्थः। न द्वितीय इत्याह—**इतरत्रेति**। लक्षणवाक्यत्वहेतोर्विपक्षाद्व्यावृत्तिः। गन्धवती पृथिवीत्यादिलक्षणवाक्यानां संसृष्टार्थत्वाभ्युपगमात्। अतो वैदिकवाक्यपक्षी-कारेणापि व्यतिरेकि न सम्भवतीत्यर्थः। तृतीयमनूद्य दूषयति—**अथेत्या-दिना**। अनुगतं साधनमाशङ्क्य परिहरति—**स्वरूपेति**। संसृष्टार्थत्वे बाधका-भावाच्च वाक्यमात्रस्याखण्डार्थत्वासिद्धेरप्रयोजको हेतुरित्याशङ्क्याह—**न चेति**। उक्तन्यायेनाखण्डार्थत्वे मानान्तरं निराकरोति—**एतेनेति**। एतत्पदपरामृष्ट-मेव न्यायमाचष्टे—**अनुपपत्तेरिति**। सिद्धान्ते मानाभावात्तदसिद्धिमुक्त्वा पूर्वपक्षी स्वपक्षं कथयति—**कस्मादिति**। प्रमाणाभावात्तत्पक्षोऽपि न सिध्य-तीत्याशङ्क्याह—**तदयमिति**। गवानयनादिवाक्यस्य संसृष्टार्थत्वात् भागे

---

1. तदनुपपत्तिः 2. प्रमेय....

सिद्धसाध्यतामुद्धर्तुं विवादपदमिति । पदवाक्यत्वहेतोरप्रयोजकत्वं प्रत्याह— **विपक्षे चेति** । अनुमानफलमभिदधाति— **तस्मादिति** ।

सत्यादिपदानामखण्डार्थत्वे पर्यायतया सहप्रयोगानुपपत्तिरिति मत्वाह— **इत्येषेति** । वाक्यार्थस्य संसृष्टत्वनियमाद्वा सर्वत्राखण्डार्थत्वं निषिध्यते, तत्र मानाभावाद्वेति विकल्पयति— **उच्यत इति** । आद्यं दूषयन् लौकिकवाक्यस्याखण्डार्थत्वं समर्थयते— **न तावदित्यादिना** । प्रकृष्टादिवाक्यार्थस्यापि प्रकर्षादिविशिष्टतया संसृष्टार्थत्वमेवेत्याशङ्क्याह— **न चेति** । चन्द्रप्रातिपदिकार्थमात्रविषयप्रश्नान्तरस्य तदेकार्थतया तन्मात्रविषयत्वात् पदद्वयेन जहदजहल्लक्षणया प्रकाशव्यक्तिरूपं चन्द्रमात्रं बोध्यमित्यर्थः । मुख्यार्थसम्भवे कुतो लक्षणेत्याशङ्क्याह ?— अबुभुत्सिताभिधानेनानवधेयवचनत्वापत्तेर्बुभुत्सितं चन्द्रप्रातिपदिकार्थमात्रं बोधयितुमभ्युपेया लक्षणेत्याह— **इत इति** । प्रकाशपदं हि प्रकृष्टपदसमानाधिकृतं प्रकाशार्थसामान्यं परित्यज्य प्रकृष्टां प्रकाशव्यक्तिं लक्षयति । प्रकृष्टपदमपि इतरसमभिव्याहृतप्रकृष्टत्वसामान्यं विहाय तामेव प्रकृष्टां लक्षयतीति युक्तं पदद्वयस्याखण्डार्थत्वमित्यर्थः । एकेनैव पदेन तत्सिद्धेर्व्यर्थं पदान्तरमापतेदित्याशङ्क्याह— **न चेति** । प्रकृष्टपदेनाप्रकृष्टखद्योतादेरितराप्रकाशप्रकृष्टसंतमसादेश्च व्युदासेन प्रतिपित्सितचन्द्रप्रातिपदिकार्थमात्रं प्रतिपाद्यते । अन्यथा वक्तुरबुभुत्सितं प्रतिपादयतो [ऽनवधेयवचनत्व] प्रसङ्गात् । न च व्यावृत्तितद्वत्परत्वे संसृष्टार्थत्वं, स्वरूपमात्रपरत्वे पदान्तरवैयर्थ्यमिति वाच्यम् । पदानां स्वरूपमात्रपर्यवसानाद्व्यावर्त्यभेदाच्चावैयर्थ्यादिति भावः । प्रकृष्टादिवाक्यस्याखण्डार्थत्वमुपसंहरति— **एवमिति** ।

मानाभावादखण्डार्थत्वं प्रकृष्टादिवाक्यस्य निरस्यते— **प्रयोगस्त्विति** । चन्द्रप्रातिपदिकार्थत्वे साध्ये सिद्धसाध्यता, संसृष्टपदार्थानां वाक्यार्थत्वात् प्रकृतिप्रत्ययात्मकचन्द्रपदार्थस्यापि संसृष्टार्थत्वात् । अत उक्तम्— **मात्रेति** । ननु साध्यस्यान्यत्र सिद्धौ तत्र हेतोर्वृत्तौ व्यतिरेकित्वव्याघातः, अवृत्तौ असाधारणता, अन्यत्र साध्यासिद्धौ अप्रसिद्धविशेषणतेत्याशङ्क्याह— **असिध्यादीति** । पृथिवीत्वाभिसम्बन्धात्पृथिवीत्यादौ प्रसिद्धे व्यतिरेकिणि या गतिः सैवात्रापीत्यभिप्रायः । प्रकृष्टादिवाक्यं संसृष्टार्थं वाक्यत्वाद् गवानयनवाक्यदिति प्रत्यनुमानमशङ्क्याह— **प्रतिप्रयोगे चेति** । प्रकृष्टादिवाक्यार्थस्य

चन्द्रप्रातिपदिकमात्रार्थत्वाभावे तन्मात्रप्रतिपित्साप्रयुक्तप्रश्नोत्तरार्थत्वमस्य न स्यात्। तयोरेकविषयत्वादित्यप्रयोजकत्वं प्रत्याचष्टे—**त्रिपक्षे चेति**। भवतु प्रकृष्टादिवाक्यमखण्डार्थं, तथापि वेदान्तवाक्यस्य नाखण्डार्थतेति चेत्तत्र नावान्तरवाक्यस्य तन्निराकर्तुं शक्यमित्याह—**एवमिति**। परमपुरुषार्थसाधनज्ञानविशेषणत्वेन ब्रह्मणि सूत्रिते तस्य लक्षणापेक्षायां सत्यमित्यादि श्रूयते। तत्र सत्यादिपदान्यनृतादिभ्रमव्यवृत्तिद्वारा लक्ष्ये ब्रह्मणि पर्यवस्यन्ति। न चैवं पदानामनेकाकारज्ञानजनकतया लक्ष्यस्यापि ब्रह्मणो नानाकारतापातः। *लक्षणासमये भिन्नाकारज्ञानजनकानामपि तेषां तत्तद्भ्रान्तिनिवृत्तिमात्रप्रयोजनतया लक्ष्ये ब्रह्ममात्रे पर्यवसानात्। एवं च तत्तत्पदजन्यज्ञानानां तत्तद्भिन्नाकारसमर्पणनान्तरीयकतया तत्तद्विरोध्याकारनिवर्तकत्वाद्वाक्यस्याप्यखण्डार्थतेति भावः। यदि पुनर्मानाभावादस्याखण्डार्थत्वं निराचिकीर्ष्यते तत्राह—**तदयमिति**। प्रकृष्टादिवाक्ये स्वर्गकामादिवाक्ये च सिद्धसाध्यताबाधयोर्निरासार्थमाह—**विवादपदमिति**। गवानयनादिवाक्ये व्यभिचारं वारयति—**अविशेषणेति**। विशेषणविशेष्यभावरहितवस्तुमात्रपरत्वादिति हेत्वर्थः। न च खण्डता ? न तावता वा ? प्रकृष्टादिवाक्ये तदभावात् दृष्टान्तवाक्यस्य साध्यविकलतापत्तेर्नाप्येकप्रातिपदिकमात्रार्थता। एकेनैव तत्सिद्धेर्न पदान्त? नापि संसर्गागोचरप्रमितिजनकता, दृष्टान्तस्य साध्यविकलतातादवस्थ्यात्। प्रकृष्टादिवाक्येन लक्ष्यस्य सजातीयविजातीयव्यावृत्तत्वेन व्यवहर्तव्यत्वेन वा प्रतिपादनात्तस्यापि संसर्गगोचरप्रमितिजनकत्वादित्याक्षिपति—**काल....तेति**। उत्तरमाह—**पदार्थेति**। उपलक्ष्यमाणस्य स्वेतरव्यावृत्तत्वेन प्रतीतौ नाखण्डार्थता व्यावृत्तिमत्वात् तदप्रतीतावपि लक्षणावैयर्थ्यान्नाखण्डतेति चेन्मैवम्। न हि सत्यादिवाक्यं साक्षादन्यव्यावृत्तिं प्रतिपादयति। तद्वाचकपदाभावात्, स्वरूपप्रतिपादनेनार्थात्तत्प्रतिपादने तु न शब्दार्थता। [यश्चार्था]दर्थो न स चोदनार्थः [इति]न्यायात्। न त्वारोपितनिवृत्तिवाची शब्दः श्रुतः। तत्रापि तद्द्वारा स्वरूपमात्रे पर्यवसानान्नाखण्डार्थताविहतिः। एतेन साध्यविकलतापि प्रत्युक्ता। प्रकृष्टादिवाक्येऽपि बुभुत्सितचन्द्रस्वरूपमात्रस्य प्रतिपाद्यत्वादन्यव्यावृत्तेरार्थिकत्वादित्यभिप्रायः।

---

* लक्षणासमय इति सामिप्यात् लक्षणाप्राक्समयो बोध्याः

सम्प्रति वादी स्वाभिप्रायं प्रकाशयति—**तर्हीति**। साध्यसाधनयोरभेदे सति साध्यासिद्धौ हेत्वसिद्धिः। हेतुसिद्धौ। साध्यसिद्धेः सिद्धसाध्यतेति शङ्कार्थः। पदार्थभेदाभावोपलक्षितस्वरूपे लक्षणया सत्यादिपदं वर्तत इति पदवृत्त्यनुरोधेन साध्यमुपदिश्यते। उक्तस्वरूपे वाक्यस्य तात्पर्यवत्वं हेतूक्रियते। तथा च पदवाक्याधीनयोः साध्यहेत्वोर्भिन्नार्थत्वान्न साध्याविशिष्टतेति दूषयति—**न पदेति**। एकदेशी हेत्वसिद्धिमुद्भावयति—**ज्ञानादीति**। ब्रह्मविदिति प्रकृतलिलक्षयिषितब्रह्मस्वरूपमात्रपरं सत्यादिवाक्यम्। तथा च ततो हेत्वसिद्धिरिति परिहरति—**नास्येति**। लक्षणवाक्यस्य प्रकृतब्रह्मस्वरूपपरत्वेऽपि प्रकृतं ब्रह्मस्वरूपं ज्ञानादिगुणकमेवेति हेत्वसिद्धिस्तदवस्थेत्याशङ्क्याह—**न चेति**। प्रकृतं ब्रह्मस्वरूपं न ज्ञानादिगुणकं, किं तु ततो निर्लुठितमेव तदित्यक्षरार्थः।? पातयति—**ब्रह्म हीति**। यद्धि ब्रह्म ज्ञानाद्यनपेक्षं सिद्धं तत्पुनर्ज्ञानादिविशिष्टं तवेष्टम्। न तु सिध्यदेव तत् ज्ञाना ? विशेषशौक्ल्यस्य पटानन्तर्भाववत् ब्रह्मविशेषणत्वेनाभिमतज्ञानादेस्तत्रानन्तर्भाव इत्यभिप्रायः। ब्रह्मशब्दार्थाभ्युपगमे दोषमाह—**अन्यथेति**। अन्तर्भावि न ज्ञानादिके ब्रह्मणि गुणत्वेन पुनर्ज्ञानादिप्रवेशे सत्यं शतस्वाश्रय ? न ज्ञानादेर्ब्रह्मणश्च गुणगुणिभावः संभवतीति भावः। इतश्च ज्ञानादेर्ब्रह्मणश्च गुणगुणिभावो नास्तीत्याह—**वाक्यं चेति**। सामानाधिकरण्यं स्वरूपनिष्ठं खं छिद्रमितिवदिति भावः। मानं विनैव ब्रह्मणो ज्ञानादिमत्त्वकल्पने सामानाधिकरण्येन श्रुताभेदस्य त्यागः सम्बन्धस्याश्रुतस्य कल्पनेति दोषद्वयं दर्शयति—**अन्यथेति**। ब्रह्मणो ज्ञानादिगुणकत्वाभावे फलितमाह—**अतो नेति**। यत्तु साध्यस्य सत्यत्वादिविकल्पे दृष्टान्तस्य साध्यविकलत्वाद्युद्दिष्टं तत्राह—**साध्यं त्विति**। अविशेषणपदार्थपरत्वहेतोर्दोषान्तरमुद्धरति—**नापीति**। प्रतिप्रयोगस्यासिद्धिमाशङ्क्य पूर्वोक्तं प्रयोगमर्थतोऽनुवदति—**यत्त्विति**। किमन्वयमात्रविषयत्वं साध्यं किं वा गुणाद्यन्वयविषयत्वमिति विकल्प्याद्यं दूषयति—**तत्रेति**। सत्यादिवाक्यस्य पदार्थतादात्म्यरूपान्वयविषयत्वाभ्युपगमादित्यर्थः। द्वितीयं निरस्यति—**यदपीति**। आकाङ्क्षादिमन्ति पदानि वाक्यमित्यङ्गीकारात् गुणाद्यन्वयाविषयत्वेऽपि वाक्यत्वोपपत्तेः सन्दिग्धव्यतिरेक-

भेदस्यापि भावात्। [1]यच्च "सोऽयं चैत्र" इति वाक्यं तच्चैत्रमात्रस्य बुभुत्सितत्वात् चैत्रस्वरूपमात्रं बोधयति। तदेतद्देशविशिष्टयोः तादात्म्यायोगाच्च। अतः कालादिसम्बन्धत्यागेन चैत्रस्वरूपमात्रं

---

तेत्यर्थः। वाक्यद्वयहेतोर्दोषान्तरं समुच्चिनोति—**खमिति**। प्रत्यनुमानप्रत्याख्यानं निगमयति—**नात इति**।

अविशेषणपदार्थपरत्वहेतोरप्रयोजकत्वं प्रत्याह—**विपक्षे चेति**। सत्यादिवाक्यस्य संसृष्टार्थत्वे श्रुतीनामेकरसत्वप्रतिपादनपराणामप्रामाण्यप्रसङ्गः। अबुभुत्सिते ब्रह्मणि प्रामाण्यानङ्गीकरणादित्यर्थः। अवान्तरवाक्स्याखण्डार्थत्वमुपपादितमुपसंहरति—**अत इति**।

सम्प्रति महावाक्यस्याखण्डार्थत्वं साधयति **एवमिति**। दृष्टान्ते लक्षणानुपपत्तिमुक्तामनुस्मारयति—**नन्विति**। सोऽयमिति पदद्वयस्य लक्षणाङ्गीकारे बाधकासिद्धेरित्याह—**मैवमिति**। लक्षणाया मुख्यार्थत्वसम्भवो बाधकः स्यादिति चेत्। तत्र पदयोर्वा मुख्यार्थत्वमन्यतरस्य वा? नाद्य इत्याह—**न तावदिति**। परोक्षापरोक्षदेशकालविशिष्टयोर्मिथो विरुद्धतया दहनतुहिनवदभेदानुपपत्तेरिति हेतुमाह—**विरुद्धेति**। ननु नेदं वाक्यमैक्यबोधकं, किन्त्वेकस्य कालद्वयसम्बन्धं बोधयतीत्याशङ्क्याह—**न चेति**। कालवाचकपदाभावेऽपि तत्सम्बन्धो देवदत्तस्य वाक्यतात्पर्यावसेयो भविष्यतीत्याशङ्क्याह—**कालसम्बन्धस्येति**। यदा त्वन्यतरस्य पदस्य मुख्यार्थत्वं तदापि वक्तव्यमयमिति पदस्य वा, स इति पदस्य वा, मुख्यार्थत्वमिति। नाद्य इत्याह—**नापीति**। न द्वितीय इत्याह—**चैत्र इति**। पदद्वयस्यान्यतरस्य वा पदस्य मुख्यार्थत्वासम्भवे फलितमाह—**अत इति**। न च पदद्वयस्य लक्षणाङ्गीकारे गौरवप्रसङ्गः। गरलमभ्यवहरे"तिवन्मुख्यार्थासम्भवे पदद्वयस्यापि लक्षणास्वीकाराविरोधादिति भावः।

लोके लक्षणायाः सम्भवेऽपि न ब्रह्मणि सा संभवति, तस्यावाच्यमेयस्य लक्ष्यत्वायोगादित्युक्तमनुवदति—**यच्चेति**। वाच्यस्यैव लक्ष्यत्वनियमं भिनत्ति—**तदसदिति**। वाच्यत्वस्य व्यापकत्वात्तदभावे व्याप्यं लक्ष्यत्वमपि न स्यादिति

---

1. अत्र ग्रन्थपातो दृश्यते।

बुभुत्सितं लक्ष्यते । यच्च मतम्—पदान्तरवाच्यं मेयं च लक्ष्यम् । अतो न ब्रह्म लक्ष्यमिति, तदसत् । अनियमात् । तथाहि इक्षुक्षीरादिमाधुर्यविशेषः अवाच्योऽपि लक्ष्यते । नात्र लक्षणापीति चेत् । न । अत्रेत्यनुवादाभावप्रसङ्गात् । एवं लक्ष्यस्य न मेयत्वनियमोऽपि । स्वापे ह्यमेयमेव सुखं लक्ष्यम् । न च तन्मेयमित्युक्तम् । नापि तद्वाच्यम्, अजन्यस्य तस्यालौकिकत्वाद्व्युत्पत्त्यसम्भवात् । तर्हि—लक्ष्यमिति निर्देशः कथम् ? इत्थम् उपाधिरहितं लक्ष्यमिति निर्देशे उपाधिराहि-

---

शङ्कते—नात्रेति । अनुवादो हि प्रतिपन्ने भवति । न च मानान्तरेणेक्षुक्षीरादिमाधुर्यमवधार्यते । वचनवैयर्थ्यात् । न च परार्थं वचनम् । तस्यावाच्यत्वात् ।

> "इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।
> तथापि न तदाख्यातुं सरस्वत्यापि शक्यते" ॥

इति न्यायाल्लक्षणया तदधिगमे, नात्रेत्यादिवचनं व्याहतम् । अतोऽनुवादायोगान्नैतच्चोद्यमित्याह—नात्रेति । वाच्यत्वं लक्षणाव्यापकमिति नियममभाङ्क्षीत् । इदानीं मेयत्वस्य तद्व्यापकत्वाभावमभिदधाति—एवमिति । सुखमस्वाप्समिति सुखशब्दः सौषुप्तसुखे प्रयुज्यते । न च तस्य तेन वाच्यता, सुषुप्ते प्रसिद्धसुखाभावात् । आत्मस्वभावसुखस्य च षष्ठ्याद्यभावेनावाच्यत्वात् । एतेन पदान्तरवाच्यतापि तस्य निरस्ता । अतो वाच्यत्वमेयत्वयोरभावेऽपि लक्षणादर्शनान्नोभयं तत्प्रयोजकमिति प्रतिपादयति—स्वापे हीति ।

अथात्मस्वभावस्यापि स्वापकालीनस्य सुखस्यागमादिगम्यस्य कथममेयत्वमित्याशङ्क्यागमादेर्विप्रतिपत्तिनिरासित्वात्तस्य स्वतःस्फुरणान्न मेयत्वमित्याह—न चेति । तस्यावाच्यत्वं स्फुटयति—नापीति । वाच्यत्वाभावे लक्ष्यनिर्देशानुपपत्तिः, लक्षणया तन्निर्देशेऽनवस्थेत्यनुपपत्त्या वाच्यत्वं लक्षणाव्यापकमिति शङ्कते—तर्हीति । निरुपाधिकं लक्ष्यमिति तन्निर्देशः । न चोपाध्यभावो लक्ष्यस्य विशेषणम् । निरुपाधित्वायोगात् । तदुपलक्षितत्वस्य च विशेषणत्वे स एव दोषः । तेनोपाध्यभावोपलक्षितत्वेनापि यदुपलक्षितं तदेकरसं लक्ष्यमिति नियमसम्भवान्न किञ्चिदवद्यमित्युत्तरमाह—इत्थमिति । ब्रह्मणो मेयत्ववाच्यत्वयोरभावेऽपि प्रकाशमानत्वेनैव लक्ष्यत्वं सम्भवतीति प्रतिपाद्य ब्रह्मणि लक्षणा-

त्योपलक्षितं लक्ष्यमिति श्रोतुर्निश्चयोपपत्तेः। लक्षणाविशेषोऽपि भागत्यागरूपस्तावदुच्यते। सभागत्वं च लौकिकानन्दस्योपपादकान्तःकरणवृत्त्यवच्छिन्नत्वेन सिद्धम्।

अन्यथा कथं ब्रह्मस्वरूपानन्दस्य मात्राश्रुतिः "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"त्युपपद्येत। एवं लौकिक[1]सच्चिदादेरपि सभागत्वमूहनीयम्।

न च भागत्यागलक्षणाऽप्रसिद्धा। सोऽयमित्यत्रास्यावश्याभ्युपेयत्वात्। तत्र गत्यन्तराभावस्योक्तत्वात्। तदेवं 'तत्त्वमस्या'दिवाक्यमप्यखण्डार्थं प्रसिद्धम्। प्रयोगस्तु—विवादपदम् अखण्डार्थम्। अकार्यकारणद्रव्यमात्रविषयत्वे सति समानाधिकरणत्वात्। सोऽयमिति वाक्यवदिति। मृत्कुम्भ इति संसर्गविषयं समानाधिकरणं वाक्यम्।

---

विशेषस्य दूषितत्वान्न तस्य लक्ष्यत्वमित्याशङ्क्य परिहरति—लक्षणाविशेषोऽपीति। यत्पुनरानन्दादेर्निर्भागत्वान्न तत्र दर्शितलक्षणावतरतीति। तत्राह—सभागत्वमिति। 'या त्वन्तःकरणवृत्तिरात्मसुखस्य व्यञ्जिके'त्यादावुपपादितत्वमस्यावधेयम्। लौकिकानन्दस्य सभागत्वे श्रुतिरपि प्रमाणमित्याह—अन्यथेति।

अथ कथञ्चिदानन्दस्य सभागत्वेऽपि कथं ज्ञानादेः सभागत्वमित्याशङ्क्यावच्छेदकवृत्तिवशादित्याह—एवमिति। यत्तु स्वप्रक्रियासिद्धा भागत्यागलक्षणेति तत्राह—न चेति। विशिष्टवैशिष्ट्यस्योपलक्षितवैशिष्ट्यस्य वा वाक्यार्थत्वान्न तत्र लक्षणेत्याशङ्क्याह—तत्रेति। महावाक्यस्याखण्डार्थत्वमुपसंहरति—तदेवमिति। उक्तमर्थमनुमानारूढं करोति—प्रयोगस्त्विति। "सोऽयमि"त्यादिवाक्यभागे सिद्धसाध्यत्वं निरसितुं विवादपदविशेषणम्। अकार्यकारणविशेषणस्य कृत्यं दर्शयति—मृदिति। तत्र व्यभिचारं वारयितुमाद्यं, विशेषणमिति भावः। द्रव्यमात्रविषयत्वविशेषणस्य कृत्यं कथयति—क्वचिच्चेति। तत्र व्यभिचारं निरसितुं द्वितीयं, विशेषणमिति भावः। पीठे देवदत्त इत्यादौ व्यभिचारं पराकर्तुं समानाधिकरणत्वादिति पदम्। विशेषणानामर्थवत्वं निगमयति—अत इति। ब्रह्मणो निर्गुणत्वाद् गुणवत्वलक्षणद्रव्य-

---

1. आत्मानन्दादेरपि।

क्वचिच्च नीलमुत्पलमिति प्रसिद्धम्। अतो न विशेषणद्वयं व्यर्थम् ब्रह्मणो जगदुपादानत्वेन द्रव्यत्वोपपत्तेश्च न हेत्वसिद्धिः। विपक्षे चोक्तसामानाधिकरण्यभङ्गो बाधः। दूषणान्तरविरहस्त्वतिरोहित एव। तस्माच्छ्रुतिस्मृतिन्यायबलान्मायाशक्ति, जगदुपादानं स्वरूपतः सच्चिदानन्दात्मैकरसं ब्रह्म, वस्तु नान्यत्किञ्चिदिति सिद्धम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रीमन्नारायणज्योतिः पूज्यचरणशिष्यस्य
भगवत आनन्दानुभवस्य कृतौ
न्यायरत्नदीपावल्यां
प्रथमोऽध्यायः समाप्तः

---

त्वासिद्धेर्विशिष्टहेत्वसिद्धिरित्याशङ्कयाह—ब्रह्मण इति। तत्त्वमस्यादिवाक्यस्याखण्डार्थत्वाभावे बाधकमभिदधानो हेतोरप्रयोजकत्वं परिहरति—विपक्षे चेति।

सम्प्रति समन्वयाध्यायार्थमुपसंहरति—तस्मादिति। "मायां तु प्रकृतिमि"त्यादिश्रुतिः। "प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायये"त्यादिस्मृतिः। असङ्गाद्वितीयकूटस्थप्रत्यक्चैतन्यस्य विना मायां न कारणतेत्यादिन्यायः। ब्रह्मणो मायाशक्तिमत्त्वे शक्यस्यापि जगतः सदा भावान्मोक्षानुपपत्तिरित्याशङ्कयाह—स्वरूपत इति।

इति श्रीमत्परमहंसपरिव्राजकश्रीशुद्धानन्द-
पूज्यपादशिष्यभगवदानन्दज्ञानविरचित-
न्यायरत्नदीपावलीटीकायां
प्रथमोऽध्यायः समाप्तः

॥ श्रीः ॥

# ॥ न्यायरत्नदीपावलिः ॥

## ॥ द्वितीयोऽध्यायः ॥

दर्शि वेदान्वयः सिद्धो विरोधोऽपास्यतेऽधुना ।
विषये दर्शिते हि स्याद्विरोधावसरः स्फुटः ॥

### उपोद्घातः

ननु निरपेक्षं वेदप्रामाण्यम् । सिद्धे च शब्दसामर्थ्यं समर्थितम् । अद्वितीयैकरसे वस्तुनि वेदान्तानां तात्पर्यञ्च विपश्चितम् । तत्र कथं विरोधावसरः । सत्यम्, तथापि सर्वजनप्रसिद्धेन द्वैतविषयेण वादिभिश्चोपपादितप्रामाण्येन प्रत्यक्षादिनाभिभूयमानो वेदान्तसमन्वयो यावद् द्वैतप्रपञ्चोऽसन्निति न प्रतिपाद्यते, तावन्न स्थैर्यमालम्बत इत्यविरोधश्चिन्त्यते ।

---

॥ श्रीः ॥

# ॥ न्यायरत्नदीपावलिटीकायां ॥

## ॥ द्वितीयोऽध्यायः ॥

वृत्तवर्तिष्यमाणयोः सम्बन्धमभिधित्समानो वृत्तमनुद्रवति—**दर्शीति** । वर्तिष्यमाणाध्यायार्थं सङ्गृह्णाति—**विरोध इति** । पूर्वोत्तराध्याययोः पूर्वापरीभावप्रयोजकं हेतुहेतुमद्भावं सम्बन्धमभिधत्ते—**विषय इति** । विरोधस्यानवसरनिरस्तत्वादविरोधचिन्ता नार्थवतीत्यध्यायारम्भमाक्षिपति—**ननु निरपेक्षमिति** । साधितसमन्वय[1]दृढीकरणार्थमविरोधचि[2]न्तेत्यध्यायारम्भं समाधत्ते—**सत्यमिति** । प्रत्यक्षादेर्बलवत्त्वे हेतुमाह—**सर्वजनेति** । तस्याद्वैतागमविरोधित्वं विषयद्वारा दर्शयति—**द्वैतेति** । बलवत्त्वे हेत्वन्तरमाह—**वादिभिश्चेति** । द्वैतप्रपञ्चोऽसन्नित्यत्रासच्छब्देन तस्य शून्यत्वं वा मिथ्यात्व वा

---

1. समन्वयदृ....क  2. चिन्तयेति

### मिथ्यात्वाक्षेपः

ननु यद्यनात्मप्रपञ्चो नास्ति, तदा कथं ते प्रत्यक्षादि मानम्। यदि तदमानं कथं ते यथोक्तवस्तु सिध्येत्। अथ मिथ्याऽगं प्रपञ्चो न त्वसन्। मिथ्याभूतमपि प्रतिबिम्बादि गमकमिति मतम्। न। मिथ्याभूतमपि सत् असद्वा स्यात्, उभयथापि न यथोक्तं वस्तु सिध्येत्। सदसत्त्वाभ्यामनिर्वचनीयं मिथ्येति चेन्न। इत्थंभूतस्याप्रसिद्धत्वात्। शुक्तिरूप्यादि, तथेति चेन्न। तस्य तथात्वे मानाभावात्। न च भ्रान्तिबाधान्यथानुपपत्तिर्मानम्। भ्रान्त्यादेरन्यथैवोपपत्तेः।

### अख्यातिवादोपस्थापनम्

तथाहि—रूप्यज्ञानं दोषादविविक्ता स्मृतिः संस्कारजत्वात्॥ प्रयोगस्तु—इदं ज्ञानं स्मृतिः विशेषहेतुहीनसंस्कारजत्वात् प्रमाणेतरत्वे

---

कथ्यते?। तत्र प्रथममादाय चोदयति—**ननु यदीति**। निर्विषयत्वप्रसङ्गा-दित्याक्षेपे हेतुः। प्रत्यक्षादेरमानत्वमिष्टमेवेत्याशङ्क्य तन्मूलागमस्यापि तर्हि न मानतेति सच्चिदानन्दात्मकवस्त्वसिद्धिरित्याह—**यदीत्यादिना**। विकल्पान्त-रमुत्थापयति—**अथेति**। तर्हि तस्य धूमाभासवदगमकत्वापत्तिरित्यत आह—**मिथ्याभूतमपीति**। तदेव विकल्प्य दूषयति—**नेति**। सत्त्वे बोध्याद्वितीय-वस्त्वसिद्धिः। असत्त्वे बोधकमानाभावः। अतो नाद्वितीयं वस्तु सेद्धुमर्ह-तीत्यर्थः।

विधान्तरमाशङ्क्य निषेधति—**सदसत्त्वाभ्यामित्यादिना**। अप्रसिद्ध-त्वममृष्यन्नाशङ्कते—**शुक्तीति**। शुक्तिरूप्यादेरनिर्वचनीयत्वं मानहीनमङ्गी-कारानर्हमिति परिहरति—**न तस्येति**। असत्त्वे, न भ्रान्तिबाधौ। सत्त्वे, न ख्यातिबाधावित्युभयानुपपत्तिः शुक्तिरूप्यादेरुभयविलक्षणत्वे मानमित्यर्थापत्तिमा-शङ्क्याह—**न चेति**। भ्रान्तेरन्यथैवोपपत्तिमाख्यातिमतेन प्रपञ्चयति—**तथा हीति**। रूप्यज्ञानं स्मृतिरिति सम्बन्धः। स्मृतिश्चेद्विविच्य स्वविषयं गृह्यमाणाद् भासयेदित्याशङ्क्याह—**दोषादिति**। स्मृतित्वे हेतुमाह—**संस्कारजत्वा-दिति**। उक्तमर्थमनुमानेन द्रढयति—**प्रयोगस्त्विति**। रजतार्थिनो रजत-ज्ञानं धर्मित्वेनादत्ते—**इदं ज्ञानमिति**। प्रत्यभिज्ञायां व्यभिचारं वारयितुं

सति संस्कारजत्वाद्वा, संप्रतिपन्नवदिति । न च संशयेन व्यभिचारः । तत्रापि हि दोषात्तदंशमोषात् परस्परमभिभवात् स्मृतिद्वयमिष्यते । यतो ज्ञानस्य द्वैराश्यमेव । तथा चोक्तं मीमांसागुरुभिः—"प्रमाणं स्मृतिश्च प्रत्यय" इति ।

न च दोषो भ्रमे विशेषकारणम् । दोषो हि प्राप्तविवेकप्रतिबन्धकृदविवेकहेतुः, न तु रूप्यधियो, मानाभावात् । यदाह शालिकः—"दोषो ह्यग्रहणे हेतुरि"ति । तस्माद्रूप्यज्ञानं स्मृतिः । सैव यथार्थाप्यविविक्ता भ्रान्तिः । अयथार्थव्यवहारहेतुत्वात् । अतो भ्रान्तिज्ञानमपि

---

विशेषहेतुहीनेति विशेषणम् । नित्येषु व्यभिचारं निवारयति—संस्कारजत्वादिति । द्वितीयहेतावपि पूर्ववद्विशेषणार्थवत्त्वम् । हेतुद्वयस्य व्यभिचारमाशङ्क्य परिहरति—न चेति । तत्रापि हि स्मृतिद्वयं इष्यत इति सम्बन्धः । संशयेऽपि कोटिद्वयविषयस्मृतिद्वयोपगमे, तदंशोल्लेखः स्यात् । सर्वत्र स्मृतौ तन्नियमात् [1]न चात्र तदंशोल्लेखः । अतो न स्मृतिरित्यत आह—दोषादिति । तदंशोल्लेखाभावेऽपि स्मरामीत्यभिमानः स्यादेवेत्याशङ्क्याह—परस्परमिति । स्मृतिद्वयस्य मिथो विवेकाग्रहान्न स्मरणाभिमानोपपत्तिरित्यर्थः । संशयादेर्ज्ञानान्तरत्वप्रसिद्धेर्न प्रसिद्धस्मृतित्वमित्याशङ्क्याह—यत इति । ज्ञानद्वैराश्ये प्रमाणमाह—तथा चेति । अन्वयव्यतिरेकाभ्यां दोषस्य भ्रमहेतुत्वावगमाद्विशेषहेतुहीनत्वविशेषणमसिद्धमित्याशङ्क्याह—न चेति । तत्र हेतुमाह—दोषो हीति । ज्ञानस्य स्वार्थविवेचकत्वं स्वरूपम् । तच्च सति दोषे न भवति । असति तु भवतीत्यन्वयव्यतिरेकाभ्यां दोषस्य विवेकप्रतिबन्धकत्वेनाविवेकहेतुत्वान्न भ्रान्तिहेतुत्वमिति कुतो विशेषणासिद्धिरित्यर्थः । अन्वयव्यतिरेकयोर्विवेकप्रतिबन्धकविषयत्वेनान्यथासिद्धिमभिसन्धायोक्तम्—मानाभावादिति । दोषो हि प्राप्तकार्यप्रतिबन्धकः न विपर्यासहेतुः इत्यत्र शालिकनाथवचनमुदाहरति—यदाहेति । अनुमानयोरदुष्टत्वे फलितमाह—तस्मादिति । रूप्यधीः स्मृतिश्चेत् सम्प्रतिपन्नप्रतीतिवत् यथार्थैव स्यान्न भ्रान्तिरित्याशङ्क्याह—सैवेति । भ्रान्तेः स्मृतित्वे फलितमाह—अत इति । तत्र प्रमाण-

---

1. तत्र हि तच्च ज्ञानं

**यथार्थम् । तथा च प्रयोगः—विवादपदं यथार्थं, ज्ञानत्वात् संप्रतिपन्नवदिति ।**

**ननु पराभिमतभ्रान्त्यभ्युपगमेऽपसिद्धान्तः । तदनभ्युपगमे चाश्रयासिद्धिः ।. स्मृत्यादेश्च धर्मित्वे सिद्धसाधनमिति । न। अयथार्थव्यवहारहेतोर्ज्ञानस्य धर्मित्वेऽविरोधात् । भ्रान्तेर्ज्ञानत्वमसिद्धमिति चेन्न, प्रसिद्धिविरोधात् तद्धेतुकव्यवहारविरहापत्तेश्च। विपक्षे च संविद्विरोधानाश्वासासत्ख्यातिप्रसङ्गो बाधः ।**

**नन्वयथार्थः प्रत्ययोऽस्तीति प्रत्ययो यथार्थोऽयथार्थो वा;**

---

माह—**तथा चेति** । भागे सिद्धसाध्यत्वं परिहर्तुं विवादपदमिति विशेषणम् । पराभिमता भ्रान्तिर्धर्मित्वेनोपादीयते न वेति विकल्प्य प्रमाणस्मृतिर्द्वैराश्यमेवेति सिद्धान्तविरोधान्नाद्य इत्याह[*]—**नन्विति** । न द्वितीय इत्याह—**तदनभ्युपगमे चेति** । रजतमिति स्मृतेरिदमिति ग्रहणस्य वा धर्मित्वमित्याशङ्क्य [†]परिहरति—**स्मृत्यादेरिति** । पक्षत्रयोक्तदोषराहित्यं [‡]दर्शयति—**नायथार्थेति** । न च तस्यापि ग्रहणत्वे स्मरणत्वे च सिद्धसाध्यता । अविविक्तानेकज्ञानस्य तस्य यथार्थताया[††]स्त्वासिद्धेरित्यभिसन्धिः । ज्ञानत्वं यथार्थमात्रवृत्ति, ज्ञानमात्रवृत्तित्वात् प्रमात्ववदिति मन्वानो हेत्वसिद्धिं चोदयति—[1]**भ्रान्तेरिति** । ज्ञानत्वमनुभवमात्रवृत्ति ज्ञानमात्रवृत्तित्वात् प्रमात्ववदित्याभाससमानत्वं मत्वा दूषयति—**न प्रसिद्धीति** । किञ्च व्यवहारस्य तद्विषयज्ञानाधीनत्वाद् भ्रान्तेर्ज्ञानत्वाभावे तन्निबन्धनाभिवदनादिव्यवहारासिद्धिः । उपलभ्यते च भ्रान्तस्य ज्ञाननिबन्धनो व्यवहारः । अतो भ्रान्तेर्ज्ञानत्वमेष्टव्यमित्याह—**तद्धेतुकेति** । ज्ञानत्वेऽपि यथार्थत्वाभावे किं बाधकमित्याशङ्क्याह—**विपक्षे चेति** । रजताकारज्ञानस्य शुक्तिकालम्बनत्वे सत्यनुभवविरोधात्, संविदो विषयव्यभिचारे सर्वत्रानाश्वासात्, असतः [2]संसर्गादेः ख्यातेश्चासत्ख्यातेः सौगतमतप्रसङ्गात् ज्ञानत्वं यथार्थत्वव्याप्तमित्यर्थः । विकल्पपूर्वकं ज्ञानत्वहेतोरनैकान्तिकत्वमाशङ्कते—**नन्विति** । अयथार्थः प्रत्ययोऽस्तीति प्रत्ययस्य याथार्थ्ये तत्सालम्बलन-

---

* वेदान्ती † वेदान्ती ‡ अख्यातिवादी †† वेदान्तिनः 1. श्रुतेरिति
2. सर्गादे...च

उभयथापि हेतोर्व्यभिचार इति, न । इदं रूप्यमितिवदत्राप्यविविक्ता-
नेकज्ञानाभ्युपगमात् । यत्त्वयथार्थप्रत्ययोऽस्तीति व्यवहारो व्यवह्रियमा-
णपदार्थपरस्परसंसर्गज्ञानपूर्वकः संसृष्टव्यवहारत्वात् संप्रतिपन्नवदिति
मानम् । तद्विपक्षे बाधकविरहाचुम्बितमप्रयोजकम् । उक्तव्यवहारो हि
विवेकाग्रहादप्युपपद्यते ।

नन्वेवं ते मध्यमवृद्धप्रवृत्तिरपि ततो न स्यात् । ततो व्युत्पत्ति-

---

त्वायायथार्थोऽपि कश्चित्प्रत्ययोऽभ्युपेयः । ततश्च तत्रैव ज्ञानत्वहेतोर्व्यभिचारः । तस्यायथार्थत्वे तत्रानैकान्तिकत्वं व्यक्तमित्याह—**उभयथापीति** । अयथार्थः प्रत्ययोऽस्तीत्येतादृशः प्रत्ययो नास्ति । किं तु इदं रजतमिति मितिवद्व्यवहार-मात्रं पदार्थानामसंसर्गाग्रहमूलम् । तथा चेदं विकल्पदूषणमभित्तिचित्रमिति अख्यातिवाद्याह—**नेदमिति** । सर्वत्र संसर्गव्यवहारस्य व्यवह्रियमाणपदार्थ-संसर्गज्ञानपूर्वकत्वनियमादभ्युपेयं संसर्गव्यवहारमूलत्वेन संसर्गज्ञानमिति मतमनुवदति—**यत्त्विति** । तदेतदपनुदति—**तद्विपक्ष इति** । संसर्ग-ज्ञानानङ्गीकारे संसर्गव्यवहारानुपपत्तिरेव बाधिकेत्याशङ्क्याह—**उक्तेति** । संसर्गव्यवहारस्याविवेकपूर्वकतायामतिप्रसक्तिरिति प्रत्यवतिष्ठते—**नन्विति** । मध्यमवृद्धप्रवृत्तेरविवेकनिबन्धनत्वे व्युत्पित्सोः संसर्गज्ञानानुमानाभावात् व्युत्पत्ति-विरहे शब्दप्रामाण्यप्रहतिरित्याह—**तत इति** । अतिप्रसङ्गं परिहरति—**न दोषेति** । *संसर्गज्ञानानुमानेन व्युत्पत्त्युपपत्तेः शब्दप्रामाण्यसिद्धिरिति भावः । यदि-पुनरन्यथाख्यातिवादी दोषाभावव्यावृत्तिमविवेकाशङ्कया न मृष्यते तत्राह—**अन्यथेति** । ततश्च शब्दप्रामाण्यहा†निरिति भावः । भासमानयोरभासमानयोर्वा विवेकाग्रहो[1]ऽयथार्थव्यवहारहेतुः । नाद्यः, भासमानयोस्तद्रूपभेदाख्यविवेक-स्याग्रहायोगात् । नेतरः, अतिप्रसक्तेरिति शङ्कते—**नन्विति** । वस्तुग्रहेऽपि विवेकाग्रहः सम्भवति । विवेकस्य वस्तुमात्रत्वाभावादिति समाधत्ते—**न**

---

* मध्यमवृद्धप्रवृत्तिः, संसर्गज्ञानपूर्विका प्रवृत्तित्वात् संप्रतिपन्नप्रवृत्तिवदित्यनुमान-मत्र विवक्षितम् । अयथार्थव्यवहारहेतुज्ञानस्थले विवेकाग्रहस्य हेतुत्वाभ्युपगतावपि, सर्वत्र तदनभ्युपगमान्न शब्दप्रामाण्यविहतिरिति पूर्वपक्षिणो भावः ।

† अख्यातिमनभ्युपगच्छतः परस्येति भावः । [1] यथाव्यवहार

विरहापत्तिः । न, दोषाभावेऽविवेकशङ्काभावात् । अन्यथा यथार्थधीशङ्कया तवापि व्युत्पत्तिविरहो दुर्वारः ।

ननु स्वरूपग्रहे तावन्मात्रविवेकाग्रहोऽयुक्तः । न । तस्य तावन्मात्रत्वाभावात् । विवेको ह्यौपाधिकं वस्तुस्वरूपम् । अभेदेऽपि चात्मानन्दाग्रहवद्दोषाद्विवेकाग्रहोपपत्तिः । तस्मादुक्तव्यवहारो विवेकाग्रहादास्थेयः । अतो न व्यभिचारशङ्का । एतेनैतदप्यपास्तम् ।

यदाहुः—विमता प्रवृत्तिः पुरोवर्तिरजतज्ञानपूर्विका रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वात् संप्रतिपन्नवदिति । अतो न सत्प्रतिपक्षतापि । विमतं ज्ञानमयथार्थं बाध्यत्वात् व्यवहारवदिति चेन्न, विपक्षे बाधाभावात्

---

तस्येति । कथं तर्हि "भेदश्च [1]भावो भावाना" मित्यभ्युपगम्यते तत्राह—**विवेको हीति** । उपाधिश्च प्रतीयोगी विवक्षितः । कथं पुनरौपाधिकस्य स्वरूपत्वं, स्वरूपस्य वा कथं तद्ग्रहे ग्रहाभावोऽभिलप्यते तत्राह—**अभेदेऽपि** । संसृष्टव्यवहारत्वहेतोः शङ्कितामप्रयोजकत्वमुपसंहरति—**तस्मादिति** । अयथार्थप्रत्ययोऽस्तीति व्यवहारस्योक्तसंसर्गज्ञानपूर्वकत्वाभावेनाविवेकपूर्वकत्वे ज्ञानत्वहेतोर्व्यभिचाराभावं फलमुपदर्शयति—**अत इति** । प्रकृतव्यवहारस्याविवेकपूर्वकत्वप्रसाधनेन प्रत्ययत्वानुमानस्य प्रत्यनुमानमपि प्रत्युक्तमित्याह—**एतेनेति** । प्रवृत्तेर्यत्किञ्चिज्ज्ञानपूर्वकत्वसिद्ध्या सिद्धसाध्यतां व्युदस्यति—**रजतेति** । अख्यातिमते प्रवृत्ते रजतस्मृतिपूर्वकतया सिद्धसाध्यत्वं निरस्यति—**पुरोवर्तीति** । इदमिति ग्रहणपूर्वकत्वेन सिद्धसाध्यत्वप्राप्तौ रजतेत्युक्तम् । समीचीनरजतप्रवृत्तिभागे सिद्धसाध्यत्वमुद्धरति—**विमतेति** । घटादिप्रवृत्तौ व्यभिचारं वारयति—**रजतेच्छाधीनेति** । कृष्यादौ व्यभिचारं परिहरति—**पुरोवर्तीति** । उक्तप्रवृत्तेरविवेकतः सम्भवादप्रयोजकत्वं हेतोरित्यभिप्रायः । [2]भ्रान्तिर्न यथार्था बाध्यविषयत्वात् तत्पूर्वकप्रवृत्तिवदिति प्रत्यनुमानं आशङ्क्याह—**अतो नेति** । आश्रयासिद्धिस्वरूपासिद्धी चेत्यभिसन्धिः ।

प्रत्यनुमानान्तरमनूद्य व्याप्यत्वासिध्या दूषयति—**विमतमिति** । भागे बाधं निरसितुं विमतमिति विशेषणम् । दूषणान्तरमाह—**ज्ञानस्येति** ।

---

1. स्वरूपं 2. विवादपदं ज्ञानमित्यर्थः

ज्ञानस्याबाध्यत्वाद्वैत्वसिद्धेश्च। बाधो ह्यविवेकं नुदन् तत्कृतं व्यवहारं बाधते। अतो भ्रान्तेर्यथार्थत्वसाधनं निर्विघ्नम्। एवं भ्रान्तिबाधयोरन्यथासिद्धेर्न तदनुपपत्त्या रूप्यतज्ज्ञानयोरनिर्वचनीयतेति सिद्धम्।

### अख्यातिवादनिराकरणम्

उच्यते—स्मृतिश्चेदियं भ्रान्तिर्न स्यात्। अन्यथाति*प्रसङ्गात्। विवेकाग्रहात् सा भ्रान्तिरिति चेन्न, तदसम्भवात्। विवेको हि ज्ञानयोरर्थयोर्वा स्वरूपं त्वयेष्यते। अतस्त†द्ग्रहे, कथं तदग्रहः। आत्मस्फुरणेऽप्यनन्दास्फुरणं तु मम मायामयकामादिविपर्ययाभिभवादुपपद्यते। विचित्रशक्तिर्हि माया लोकेऽपि प्रसिद्धा। न तथा[1]कारणदोषात् विवेकाग्राहः। अतिरेके त्वपसिद्धान्तोऽनवस्था च। न च अग्रहो ग्रहा-

---

ज्ञानज्ञेययोरबाध्यत्वे बाधबोधस्य निर्विषयत्वमित्याशङ्क्याह—बाधो हीति। ज्ञानत्वहेतोर्दोषराहित्यमुपसंहरति—अत इति। अख्यातिपक्षं निगमयति—एवमिति।

सिद्धान्तमुपक्रमते—उच्यत इति। यत्तावद्विशेषहेतुहीनसंस्कारजत्वादित्यादिप्रयोगद्वयं तत्र पक्षबाधकमभिदधाति—स्मृतिश्चेदिति। अविविक्तस्मृतेर्भ्रान्तित्वादविवेकमूलविकलायाः "सा माते"त्यादिस्मृतेर्न भ्रान्तित्वप्रसक्तिरिति शङ्कते—विवेकेति। अख्यातिमते विवेकाग्रहस्यासंभवान्नैवमिति दूषयति—न तदिति। अख्यातिपक्षे विवेकाग्रहासम्भवं साधयितुं तन्मतमनुवदति—विवेको हीति। भेदापरपर्यायस्य विवेकस्य ज्ञानज्ञेयात्मकस्य स्वप्रभत्वेन ज्ञाने, तद्विषयतया च ज्ञेये, भासमाने सत्यग्रहो न सम्भवतीत्याह—अत इति। यत्त्वात्मस्फुरणेऽपि तत्स्वरूपसुखास्फुरणवत् वस्तुभानेऽपि तदभिन्नविवेकाभानं उपपन्नमिति तत्राह—आत्मेति। कथं पुनर्मायापि स्फुरत्यात्मनि अस्फुरणं सम्भावयति तत्राह—विचित्रेति। कुतो मायाया विचित्रशक्तित्वम्? अत आह—लोकेऽपीति। अपिना शास्त्रीयप्रसिद्धिं दर्शयति। तर्हि मायावत्कारणदोषस्यापि विचित्रशक्तित्वात् भात्यपि वस्तुनि तत्स्वरूप-

---

* सा मातेत्यादिस्मृतेरपि भ्रान्तित्वापत्तिरतिप्रसंगः † तयोर्ज्ञानज्ञेययोर्ग्रहे

1. कारणदोषो विवेकः

**भावः। अभावस्यानिष्टत्वात्। ग्रहप्रतियोग्यात्मत्वमात्रमिच्छामीति चेत् न। अत्र हि मात्रचोऽर्थः आत्मनोऽभिन्नो भिन्नो वा, आद्ये प्रतियोग्यपेक्षा न स्यात्। आत्मनस्तदपेक्षाभावात्। द्वितीये तु संज्ञाविवादः स्यात्। अनवस्था च। भिन्नत्वे ह्यन्योन्याभावस्यावश्यंभावित्वात्। अतो न ग्रहाभावोऽग्रहः। नापि ग्रहादन्यस्तद्विरोधी वा अतिप्रसङ्गात्।**

---

विवेकाभानहेतुत्वोपपत्तिरित्याशङ्क्याह—**न तथेति**। तस्य विचित्रशक्तित्वे मानाभावादिति भावः। अस्तु तर्हि विवेकस्य वस्तुनो भेदात्तद्ग्रहेऽप्यग्रहस्तत्राह—**अतिरेके इति**। किं च विवेको हि भेदः *तस्य वस्तुनो भेदान्तरे प्रथम[भेद]कार्यस्य द्वितीयभेदेनैव सिद्धेराद्यवैयर्थ्यात्। किंभेदविशिष्टे किंभेदस्थितिरिति अविनिगमनादनन्तभेदभावे मानाभावाच्च दोषत्रयवती प्रसरत्यनवस्थेत्याह—**अनवस्था चेति**। किं च विवेकाग्रह इत्याग्रहो ग्रहाभावो वा तदन्यो वा तद्विरुद्धो वा ? नाद्य इत्याह—**न चेति**। अनिष्टत्वमसिद्धमिति शङ्कते—**ग्रहेति**। प्रतियोगिशब्देनाश्रयो विवक्ष्यते। यथा घटाधिकरणं भूतलं केवलं घटाभावस्तथात्मा ग्रहाश्रयः केवलस्तदभाव इत्यर्थः। ग्रहाभावस्य प्रतियोगिद्वारेणात्मना सहासाधारण्यसिध्यर्थं ग्रहप्रतियोगीति विशेषणम्। तदेतद्विकल्प्य दूषयति—**नात्रेत्यादिना**। अभावो मात्रचोऽर्थः। तन्मात्रं तमिच्छामीत्युक्तत्वात्। तस्य चात्माभेदे तस्य प्रतियोग्यनपेक्षत्वात्तदभिन्नस्याभावस्यापि तदपेक्षा न स्यात्। भेदे त्वभाव इत्यात्ममात्रमिति नाममात्रे विप्रतिपत्तिः, आत्मातिरिक्तग्रहाभावस्योभयसम्प्रतिपन्नत्वादित्यर्थः। द्वितीये दोषान्तरमाह—**अनवस्थेति**। तामेव साधयति—**भिन्नत्वे हीति**। ग्रहपदेन समस्तस्य[1]नञ्पदस्याभावोऽर्थ इति पक्षं निरस्य निगमयति—**अतो नेति**। अवशिष्टौ विकल्पौ निराचष्टे—**नापीति**। अतिप्रसङ्गं प्रकटयति—**तया हीति**। अन्यद्वेति ग्राह्यादि गृह्यते। एवमग्रहस्य दुर्ग्रहत्वादविविक्त-

---

* भेदात्मकविवेकस्य वस्तुनो भेदस्वीकारे तत्साधकस्तदतिरिक्तः कश्चन भेदः स्वीकार्यः। तस्यैव तत्साधकत्वे आत्माश्रयात्। तत्साधकस्यापि भेदस्य वस्तुनोऽभेदे तत्साधकत्वायोगाद्भेदः स्वीकार्यः। स च भेदः प्रथमेन सिध्यतीत्युक्तौ अन्योन्याश्रयः। अतो भेदान्तरेण सिद्ध्यतीति वाच्यम्। तत्राप्येवं विकल्पेऽनवस्थेत्यत्र समुदितार्थः।

1. स्यानन्दपदस्य

**तथाहि—संस्कारो ग्रहान्तरमन्यद्वाऽग्रहः। ततोऽयथार्थव्यवहारस्वीकारः स्यादतिप्रसङ्गी। अतो दोषो विपर्ययबीजमिति स्मृतित्वसाधने विशेषहेतुहीनत्वमसिद्धम्। द्वितीयसाधने च विपक्षे बाधाभावात् भ्रान्तिभङ्गप्रसङ्गाच्च शङ्किताप्रयोजकता। तथा ज्ञानयथार्थत्वसाधने ज्ञानत्वमसिद्धम्। भ्रान्तिर्हि मया मायाविलास इष्यते।**

**यथाहुराचार्याः—*"अविद्या वेद्यैस्सह भ्रम" इति। ज्ञानत्वप्रसिद्धिश्च भ्रान्तेर्ज्ञानाभासत्वेऽप्युपपद्यते, खकार्ष्ण्यप्रसिद्धिवत् आभासस्वरूपमपि विज्ञानं तेऽस्तीति चेत्, तर्ह्यर्थोऽपि तादृशो मेऽस्तीति**

---

स्मृतेर्भ्रान्तित्वमित्यस्यायोगात् तस्याभ्रान्तित्वे स्यादतिप्रसक्तिरिति स्थितम्। यत्तु दोषो विवेकप्रतिबन्धस्सन्नविवेकहेतुर्न, विपर्ययस्य, मानाभावादिति तदप्यविवेकनिरासेन निरस्तमिति मत्वाह—**अतो दोष इति**। अनन्यथासिद्धान्वयव्यतिरेकाभ्यां दोषस्य विपर्यासहेतुत्वाधिगमादाद्यहेतोरसिद्धतेत्यर्थः। प्रमाणेतरत्वे सति संस्कारजत्वादिति हेत्वन्तरं दूषयति—**द्वितीयेति**। बाधाभावाच्छङ्किताप्रयोजकतेति सम्बन्धः। भ्रान्तित्वादप्युक्तहेत्वसिद्धिरित्यभिसन्धिः। पक्षबाधकमभिहितं स्मारयति—**भ्रान्तीति**। रजतज्ञानस्य स्मृतित्वसाधने दूषयित्वा यथार्थत्वसाधनं दूषयति—**तथेति**। असिद्धिं साधयति—**भ्रान्तिर्हीति**। भ्रान्तेर्मायाविलासत्वे सिद्धान्तश्लोकं प्रमाणयति—**यथाहुरिति**। भ्रान्तेर्ज्ञानत्वाभावे प्रसिद्धिविरोधः स्यादित्याशङ्क्याह—**ज्ञानत्वेति**। आभासविषयत्वेन प्रसिद्धेरुपपत्तौ दृष्टान्तमाह—**ख-कार्ष्ण्येति**। आभासत्वानाभासत्वविवेकविधुरं ज्ञानत्वमात्रं हेतुः, अन्यथान्यतरासिद्धेः भ्रान्तेर्ज्ञानाभासत्वं ब्रुवतापि ज्ञानत्वमभ्युपगतम्। अतो नासिद्धिरिति शङ्कते—**आभासस्वरूपमिति**। ज्ञानत्ववत् भ्रान्तेस्तदनुसार्यर्थस्यापि सिद्धेः सिद्धसाध्यतेति

---

*सत्वे न भ्रान्तिबाधौ स्तां नासत्वे ख्यातिबाधकौ।
सदसद्भ्यामनिर्वाच्याऽविद्या वेद्यैस्सह भ्रमः॥

इति। सत्वे शुक्तिरूप्यस्य तद्धीर्न भ्रान्तिस्स्यात्। तथैव बाधोऽपि नास्याः स्यात्। असत्वे तु नृश्रृंगवद्भ्रान्तिबाधौ न स्याताम्। नापि सदसत्वे, विरोधात्। अतो रूप्यतज्ज्ञानयोस्सदसत्वाभ्यामनिर्वचनीयाविद्यात्मकत्वमभ्युपगन्तव्यमिति भावः।

**सिद्धसाधनता। किञ्च अबाध्यविषयत्वमत्रास्माकमुपाधिः। न च भ्रान्तावुपाधेः साधनव्याप्तिः बाधविरोधात्। ज्ञानत्वं चानैकान्तम्। "अस्त्ययथार्थं ज्ञान"मिति ज्ञानेन तद्विषयेण वा व्यभिचारात् बाधविरोधाच्च कालात्ययापदिष्टम्। बाधो हि भ्रमसिद्धं प्रविलापयन्नेवोदेति। अत एव साध्वी इयं प्रसिद्धिः "नेदं रूप्यं मिथ्यैवेदमभासिष्टे"ति॥**

**यत्तु विपक्षे संविद्विरोधाद्युक्तम्, तत्र तावत्प्रतीतिविरोधं वदन् अख्यातिवाद्युष्ट्रलकुटवृत्तान्तं नातिवर्तते। अस्यैव हीदं रूप्यमिति संसर्गप्रतीतिविरोधः स्पष्टः। तत्प्रतीतिमपलपंस्तु पश्यतोहरः स्यात्।**

---

परिहरति—**तर्हीति**। भासमानार्थवत्वं साध्यमबाध्यार्थत्वं वा? नाद्यः। सिद्धसाध्यत्वतादवस्थ्यात् इति मत्वा दोषान्तरमाह—**किं चेति**। अख्यातिमते साधनव्याप्तेरन्यतरोपाधित्वं सूचयति—**अस्माकमिति**। नन्वबाध्यार्थवत्वं साध्यम्। न च तस्यैवोपाधिता साधनव्याप्तेरिति द्वितीयमाशङ्क्य निराकरोति—**न चेति**। ज्ञानत्वहेतोर्दूषणान्तरमाह—**ज्ञानत्वं चेति**। अयथार्थं ज्ञानमस्तीति ज्ञानस्यायथार्थत्वे तेन व्यभिचारः, यथार्थत्वे तद्विषयेणेति हेत्वर्थः। संसर्गप्रवृत्तेरविवेककृतत्वप्रत्युक्तेः संसृष्टव्यहारत्वादित्यनुमानमपि समाहितमवधेयम्। अबाध्यार्थवत्वे साध्ये दोषान्तरमाह—**बाधेति**। तस्याविवेकनिवर्तनेनायथार्थव्यवहारनिरासित्वान्न तद्विरोधो यथार्थानुमानस्येत्याशङ्क्याह—**बाधो हीति**। अन्यथा विरक्तानामनुत्पन्नप्रवृत्तीनां बाधो निर्विषयः स्यादित्यभिप्रायः। बाधस्य भ्रान्तरजतविषयत्वे प्रसिद्धिं प्रमाणयति—**अत एवेति**। सम्प्रति ज्ञानत्वहेतोरप्रयोजकत्वं वक्तुमुक्तमनुवदति—**यत्त्विति**। रजताकारप्रतीतेः शुक्त्यालम्बनत्वे वा प्रतीतिविरोधः, इदमाकारपुरोवर्तिमात्रालम्बनत्वे वा। नाद्यः। अनभ्युपगमात्। न हि रजतं शुक्तिरिति परैरपि प्रतीतिरुपेयते। नेतरः। इदमाकारपुरोवर्तिद्रव्यमात्रस्य रजतज्ञानालम्बनत्वानभ्युपगमे तवैव प्रतीतिविरोधादित्याह—**तत्रेति**। उष्ट्रस्याग्रे प्रक्षिप्तलकुटेन प्रक्षेप्तृपुरुषप्रहरणं उष्ट्रलकुटवृत्तान्तः। परस्य प्रतीतिविरोधं स्पष्टयति—**अस्यैवेति**। अविवेकवादिनः संसर्गज्ञानमेवासिद्धं, तद्विरोधस्तु कथमुद्भाव्यते। तत्राह—**तत्प्रतीतिमिति**। इदानीमनाश्वासप्रसङ्गं परिहरति—**न चेति**।

न चानाश्वासः। दोषाभावे तज्जन्यविपर्ययाभावनिश्चयात्। दोषाभावेऽप्यग्रहाशङ्का तु स्यादेव। अग्रहस्यादोषजत्वात्। असत्ख्यातिप्रसङ्गप्रलापस्तु मायावादेऽतिमन्दो, मन्दानां भ्रान्तौ भातस्य सर्वस्यासद्विलक्षणताङ्गीकारात्। तदेवं विपक्षे बाधाभावात्, भ्रान्त्यभावप्रसङ्गाच्च, शङ्किताप्रयोजकतापि। अतो भ्रान्तिर्न यथार्था। प्रयोगस्तु—भ्रान्तिर्न यथार्था बाध्यविषयत्वात् तत्पूर्वप्रवृत्तिवदिति। न चास्या बाध्यविषयत्वमसिद्धम्। नेदं रूप्यमित्यपि हि बाधः पुरोवर्तिरूप्यनिषेधतः प्रसिद्धः। अन्यथातिप्रसङ्गाच्च। यद्वा विमता प्रवृत्तिः पुरोवर्तिरूप्यज्ञानपूर्विका,

---

यथा ज्ञानानां कथंचिद्विसंवादिव्यवहारजनकत्वेऽपि न सर्वत्रानाश्वासः, तथा कचिद्विषयव्यभिचारेऽपि न विश्वसंवित्सु विश्वासविरहोऽस्तीत्याशयः। तत्र हेतुमाह—**दोषाभाव** इति। यत्र न दोषस्तत्र न विपर्ययः। हेत्वभावे कार्याभावप्रसिद्धेः। यत्र तु दोषः तत्र विपर्ययः। अतो दोषाभावभावाभ्यां विपर्ययाभावभावनिश्चयसम्भवान्नानाश्वास इत्यर्थः। स्वपक्षेऽनाश्वासं परिहृत्य परपक्षे तं प्रसञ्जयति—**दोषाभावेऽपीति**। तत्र हेतुमाह—**अग्रहस्येति**। हेत्वभावे हि कार्याभावो निर्धार्यते। न चाग्रहस्य दोषजत्वम्। दोषाभावेऽपि नाग्रहाशङ्काव्यावृत्तिरित्यर्थः। दोषान्तरं परिहरति—**असत्ख्यातीति**। भ्रान्तेर्यथार्थत्वसाधनस्याप्रयोजकत्वं सहेतुकमुपसंहरति—**तदेवमिति**। परोदीरितानुमाननिरसनफलमाह—**अत इति**। विपक्षबाधकमनुमानमारचयति—**प्रयोगस्त्विति**। बाधस्याविवेकनिवर्तकत्वादर्थनिवर्तकत्वाभावाद्धेत्वसिद्धिरित्याशङ्क्याह—**न चेति**। तत्र हेतुमाह—**नेदमिति**। असत्पक्षे बाधो नाम सविलासाज्ञाननिवृत्तिरिति वक्ष्यते। भवत्पक्षेऽपि पुरोवर्तिरूप्यविषयत्वप्रसिद्धेरविवेकविषयत्वाप्रसिद्धेश्च भवति बाध्यार्था भ्रान्तिरिति कुतो हेत्वसिद्धिरित्यर्थः। भ्रान्तेर्यथार्थत्वे भ्रान्तित्वमेव न स्यात्। अन्यथा भ्रमाभ्रमविभागाभावप्रसङ्गादिति व्याप्यत्वासिद्धिं धुनीते—**अन्यथेति**। स्वरूपासिद्धिपरिहारेण व्याप्यत्वासिद्धिपरिहारस्य समुच्चयार्थश्चकारः। विपक्षबाधकमनुमानान्तरमाह—**यद्वेति**। अत्र विशेषणानि पूर्वपक्षे व्याख्यातप्रयोजनानि। पुरोवर्तिरूप्यमुद्दिश्य तदिच्छया पुरोवर्तिनि जायमानप्रवृत्तित्वादिति हेत्वर्थः। रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वादित्येव हेतुः। प्रवृत्तेरविवेक-

तदुद्देशपूर्वप्रवृत्तित्वात् संप्रतिपन्नवदिति । तस्मादसत्यविषया भ्रान्ति-रिति सिद्धम् ।

## आत्मख्यातिवादोपस्थापनम्

अत्राहापरः—सत्यमसत्यविषया भ्रान्तिः, तथापि न रूप्य-मसत्यम् । धीरूपं हि रूप्यं वासनाप्राप्तं दोषात् बहिरिवेत्यवभाति । अतः सत्यरूप्यविषयमपि ज्ञानं मिथ्याबहिष्ट्वगोचरमसत्यविषयं भ्रान्ति-श्चेत्युपपद्यते । तर्हि रूप्यबाधः कथम्? न कथञ्चित् । बाधो हि बहिष्ट्व-मेव निषेधति न रूप्यमपि । नेदमिति हि निषेधः । उभयनिषेधे च

---

मूलत्वस्य निरस्तत्वान्नाप्रयोजको हेतुरिति भावः । अनुमानफलमुपसंहरति—**तस्मादिति** । प्रमात्वं अनुभवाव्यावृत्तं अनुभवातिरिक्तत्वे सति ज्ञानत्वा-वान्तरजातित्वात् स्मृतित्ववत् । प्रमात्वानुभवत्वयोश्च लक्ष्यलक्षणभावात् भेदः । "अनुभूतिः प्रमे"ति शालिकोक्तेरिति भावः । समारोपे तद्विषयस्य सद्विलक्षणत्वे चोक्ते लब्धावसरो विज्ञानवादी चोदयति—**अत्राहेति** । का तर्हि विप्रतिपत्तिः तत्राह—**तथापीति** । रूप्यस्यासत्य-त्वाभावे हेतुमाह—**धीरूपमिति** । कथं पुना रूप्यस्य भ्रान्तिज्ञाने प्राप्तिरत आह—**वासनेति** । समानसन्ततिपतितपूर्वज्ञानरूपवासनया भ्रान्ते रूप्या-कारतेत्यर्थः । अहं रजतमिति तर्हि भ्रान्तिर्भवेत्, न पुना रजतमिति, तत्राह—**दोषादिति** । बहिष्ट्वस्याविद्यमानत्वद्योतनार्थमिवेत्युक्तम् । सत्यरूप्यविषयत्वे ज्ञानस्याभ्रान्तित्वं यथार्थावभासित्वादित्याशङ्क्याह—**अत इति** । यतो मिथ्या-बहिष्ट्वगोचरं ज्ञानमतस्सत्यरूप्यविषयमप्यसत्यविषयं भ्रान्तिश्चेत्युपपन्नमिति योजना । रूप्यस्य सत्यत्वमित्ययुक्तम् । नेदं रूप्यमिति बाधविरोधादिति शङ्कते—**तर्हीति** । बाधस्य विषयान्तरप्रदर्शनेन तद्विरोधं समाधत्ते—**न कथंचिदिति** । तर्हि किं तद्विषयान्तरं, तदाह—बाधो हीति । यद्रूप्यं तदिदं नेति बहिष्ट्वबाधेन विषयीक्रियते नान्यदित्यर्थः । नेदं न रजतमिति नकारस्योभयत्र सम्बन्धादु-भयबाधको विरोध इत्याशङ्क्याह—**उभयेति** । धर्मनिषेधेनैवोपपत्तौ धर्मि-णोऽपि तत्कल्पनमयुक्तम् । गौरवस्याप्रामाणिकस्यानर्हत्वात् नेदं न रजतमिति चादर्शनादित्याह—**तच्चेति** । बहिष्ट्वस्यैव बाध्यता । रूप्यस्याबाध्यत्वात् । तस्य

कल्पनागौरवम् । तच्चायुक्तं सति गत्यन्तरे । अतो धीरूपं रूप्यम् । प्रयोगस्तु—यद्बहिष्ट्वेतरत् संप्रयोगमन्तरेणापरोक्षं, तद्धीरूपम् यथा संप्रतिपन्ना धीः तथा चेदं रूप्यमिति । विपक्षे चोक्तविधयाऽऽपरोक्ष्यं रूप्यस्य न स्यात् ।

### आत्मख्यातिनिराकरणम्

उच्यते—यदि धीरूपं रूप्यं तदा भ्रान्तिं विनापि दृश्येत । न तु दृश्यते । अतो न तदबाध्यम् । नापि धीरूपम् । तस्य धीरूपतासाधनं तु बहिष्ट्वप्रतीतिबाधितम् । बहिष्ट्वस्यासतः ख्यातिप्रसङ्गात् । विपक्षे बाधाभावाच्छङ्कितााप्रयोजकं च । उक्तापरोक्षत्वं च रूप्यस्याविद्यामयत्वे-

---

चान्यत्र सत्वे प्रमाणाभावादान्तरमेव परिशेषात्तदेषितव्यमित्युपसंहरति—**अत इति** । तत्र प्रमाणमाह—**प्रयोगस्त्विति** । बहिष्ट्वे व्यभिचारं वारयितुं विशिनष्टि बहिष्ट्वेतरदिति । घटादौ व्यभिचारपरिहारार्थं सम्प्रयोगमन्तरेणेत्युक्तम् । नित्यानुमेये[[1]परमाण्वादौ]व्यभिचारं निवारयति—**अपरोक्षमिति** । हेतोरप्रयोजकत्वं प्रत्याचष्टे—**विपक्षे चेति** । उक्तस्य हेतोर्धीरूपत्वेन व्याप्तेर्व्यापकाभावे व्याप्याभावः सुलभ इत्यर्थः ।

सिद्धान्तयति—**उच्यत इति** । भ्रान्तिमन्तरेणापि दृश्यमानत्वं सत्यत्वव्यापकम् । तदभावान्न रूप्यस्य सत्यत्वमित्याह—**यदीति** । एतेन धियोऽन्यत्वेऽपि घटादिवत् भ्रान्तिं विना दृष्टिप्रसक्तिस्तुल्येति निरस्तम् । व्यापकाभावेन व्याप्याभावाभिधानादिति । शुक्तिरूप्यस्य भ्रान्तिदृश्यमानत्वे फलितमाह—**अत इति** । अबाध्यत्वाभावे सिद्धमर्थं कथयति—**नापीति** । यत्तु रूप्यस्य धीरूपत्वानुमानं तद्दूषयति—**तस्येति** । रूप्यस्य बुध्याकारत्वे बाधकसद्भावात् अतद्रूपत्वे तदभावादुपाधिशङ्काकलङ्कितमनुमानमप्रमाणमिति दूषणान्तरमाह—**बहिष्ट्वस्येति** । बहिष्ट्वेतरत्वे सति सम्प्रयोगमन्तरेणापरोक्षत्वमेव अबुध्याकारत्वे रूप्यस्य बाधकम्, इत्युक्तमित्याशङ्क्याह—**उक्तेति** । शुक्त्य-

---

1. परमात्मादौ

ऽप्युपपद्यते। बहिष्ट्वं बाध्यम्। अतस्तत्प्रतीतिरमानं न बाधिकेति चेत्। न। धर्मिगोचरत्वेनोपजीव्यतया बाधोपपत्तेः।

किञ्च बहिष्ट्वमपि वेद्यं चेदबाध्यं धीरूपं च ते स्यात्। अवेद्यं च ते न निषिध्येत। अप्राप्तेः। भ्रान्तिप्राप्तं तदिति चेन्न। भ्रान्तिरपि ज्ञानं न वा। उभयथाप्युक्तो दोषः। किञ्च संप्रयोगमन्तरेणेत्यत्र संप्रयोगः किमिन्द्रियसंप्रयोगादिविशेषः कश्चित्, किं वा सम्बन्धमात्रम्। आद्ये रूपादिनानैकान्तम्। तध्यसंयुक्तमपरोक्षमबुद्धिरूपं च। वेद्यं सर्वमस्माकं धीरूपमिति चेन्न। संप्रयोगमन्तरेणेत्यस्य वैयर्थ्यापत्तेः।

---

वच्छिन्नचिदविद्याविवर्तो हि रूप्यम्। अतस्तस्यासम्प्रयोगेऽपि साक्षिवशादपरोक्षता सम्भवतीत्यर्थः। रूप्यस्य बुद्धिरूपत्वसाधनं हि बहिष्ट्वप्रतीतिबाधितमित्ययुक्तमुक्तं, बहिष्ट्वदृष्टेरमानत्वेनाबाधकत्वादिति शङ्कते—**बहिष्ट्वमिति**। बहिरवभासमानं रूप्यं वा पक्षीकृत्य प्रयुज्यते, रूप्यान्तरं वा? न द्वितीयः। आश्रयासिद्धेरित्यभिप्रेत्य प्रथमं प्रत्याह—**न धर्मीति**। त्वदनुमानं हि धर्मिविषयं बहिष्ट्वप्रतीत्युपजीवित्वादुपजीव्यविरोधेन बाध्यते। प्रमाणेन बाधनियमे तेनैव धर्मित्वनियमादाश्रयासिद्धितादवस्थ्यमित्यर्थः। बहिष्ट्वस्य बाध्यत्वमभ्युपेत्योक्तम्। इदानीं तस्यैव बाध्यत्वमपि दुर्निरूपमित्याह—**किं चेति**। किं तद्वेद्यं, उतावेद्यम्?। नाद्य इत्याह—**बहिष्ट्वमपीति**। विषयविषयिणोरभेदोपगमात् बहिष्ट्वस्य वेद्यस्य धीत्वे तद्दृष्टेर्यथार्थत्वेन मानत्वादुक्तानुमानस्य तद्बाधः स्यादिति भावः। द्वितीये त्वाश्रयासिद्धिः। इदन्तावच्छिन्नस्यैवाश्रयत्वादित्याशयेनाह—**अवेद्यमिति**। प्रमाणतो बहिष्ट्वस्याप्राप्तावपि भ्रान्त्या प्राप्तिरस्तीति शङ्कते—**भ्रान्तीति**। भ्रान्तेर्ज्ञानत्वे तत्प्राप्तं बहिष्ट्वं वेद्यमिति तत्प्रतीत्या दर्शितो बाधः समापतेत्। अज्ञानत्वे तत्प्राप्तस्यावेद्यत्वादाश्रयासिद्धिरुक्ता दुष्परिहरेति परिहरति—**न भ्रान्तिरिति**। परकीयानुमाने दोषान्तरं वक्तुं हेतुविशेषणं विशेषसामान्याभ्यां विकल्पयति—**किं चेत्यादिना**। इन्द्रियसंयोगादिविशेषमन्तरेणापरोक्षत्वं हेतुरिति पक्षं प्रत्याह—**आद्य इति**। संयोगमन्तरेण संयुक्तसमवायादपरोक्षरूपादेरसंवित्वात् समवायमन्तरेण च संयोगादेवापरोक्षघटादेः संवित्वाभावाच्चेति व्यक्तमनैकान्तिकत्वमित्युपपादयति—

**द्वितीये तु विशेषणासिद्धिः। दृष्टान्ते साधनविकलता च। न ह्यध्यासासम्बन्धं विनास्माकं रूपं तद्धीश्चापरोक्षा। तदेवं न रूप्यं धीरूपं बाध्यं चेत्यभ्युपेयम्।**

**प्रयोगस्तु—विमतं न धीरूपं बाध्यं च, भ्रान्ति विनाऽसिद्धत्वात्। दोषप्रयुक्तभानवत्त्वाच्च तत्पुरोवर्तित्ववत्। न तावद्धेत्वसिद्धिः।**

---

**तद्धीति**। यदि पुनः संयोगसमवायमन्तरेणापरोक्षत्वं हेतुस्तदा समवायाभावयोर्व्यभिचारः। सम्बन्धान्तरोत्प्रेक्षायामपि दर्शितो व्यभिचारस्तुल्य इति द्रष्टव्यम्। रूपादेः सपक्षत्वान्नानैकान्त्यमिति शङ्कते—**वेद्यमिति**। तर्हि व्यर्थविशेषणासिद्धो हेतुरित्याह—**न सम्प्रयोगमिति**। सम्प्रयोगः सम्बन्धमात्रमिति पक्षं प्रतिक्षिपति-—**द्वितीये त्विति**। मायावादे विशेषणासिद्धिं, दृष्टान्तस्य साधनवैकल्यं च स्पष्टयति-—**न हीति**। अथेन्द्रियसन्निकर्षानधीनापरोक्षत्वस्य विवक्षितत्वादाध्यासिकसम्बन्धसत्त्वेऽपि रूप्यापरोक्ष्यस्येन्द्रियसन्निकर्षानधीनत्वाद्रूपादौ च संयुक्तसमवायादिसंनिकर्षान्न विशेषणासिद्धिव्यभिचारौ। नापि साधनविकलता इत्याशंक्य संवेदनस्येन्द्रियसम्बन्धमन्तरेण स्वतः, साक्षिणा वा सिद्धेर्न तदात्मता रुप्यादेरित्याह—**तदेवमिति**। इन्द्रियसंनिकर्षानधीनेत्यत्र सन्निकर्षः संयोगादिविशेषः सम्बन्धमात्रं वा? नाद्यः। रूपादिना व्यभिचारात् [1]साक्षिवेद्ये सुखादौ व्यभिचाराच्च। विशेषणासिद्धिश्च। अन्यथाख्यातौ रूप्यस्य दोषादिन्द्रियसंनिकर्षाङ्गीकारात्। अनिर्वाच्यख्यातौ तु साक्षादिन्द्रियासंनिकर्षेऽपि रूप्यस्याधिष्ठानतादात्म्यात्तद्द्वारा तदुपगतिः। अन्यथा रूप्यभ्रमोऽचाक्षुषः स्यादित्यभिसन्धिः। यत्तु नेदं रजतमितीदन्तामात्रं बाध्यते लाघवादिति तत्राह—**बाध्यं चेति**। इदं रजतमिति प्रतिपन्नविशिष्टरजतस्य नेदं रजतमिति बाधस्यानुभवसिद्धेः कल्पनीयत्वे, लाघवन्यायानवतारादिति भावः। अस्तु तर्हि समस्तदोषपरिहारार्थं बुध्याकारो रजतम्, अपरोक्षत्वात्, बुद्धिवदिति प्रयोगः। मैवम्। सत्प्रतिपक्षत्वादित्याह—**प्रयोगस्त्विति**। भागे सिद्धसाध्यत्वं परिहर्तुं विमतमिति पदम्। ननु भ्रान्त्यैव सिद्धत्वादिति हि प्रथमो हेतुः। स चासिद्धः, [2]दोषादिनापि रजतादेः सिद्धत्वाभ्युपगमात्। दोषगम्यत्वे सति

---

1. तेनेत्यधिकः पाठः  2. सुदक्षिणापि

अन्वयव्यतिरेकनियमात्तत्सिद्धेः। विपक्षे च भ्रान्तिं विनापि रूप्यभान-प्रसङ्गो बाधः। दोषान्तरविरहे त्वविवाद एव। तस्माद्युक्तमुक्तं न रूप्यं धीरूपं बाह्यं चेति ॥

अन्यथाख्यातिवादोपस्थापनम्

ननु न, धीरूपं रूप्यमितीष्यत एव। तद्बाध्यमिति तु न क्षम्यते। न ह्यसदनिर्वचनीयं वा रूप्यं भ्रान्तौ भाति। सत्वेन भानात्। अन्यथाऽदृष्टरूप्यस्यापि तद्भ्रमप्रसङ्गाच्च। भ्रान्तेः संस्कारजत्वान्नायं प्रसङ्ग इति चेन्न। अदृष्टविषयत्वे भ्रान्तेः संस्कारजत्वमपि न स्यात्।

---

प्रमाणागम्यत्वं द्वितीयो हेतुः। सोऽप्यसिद्धः। एतावन्तं कालमिदमेव शुक्तिशकलं रजतमित्यभादिति बाधोत्तरकालभाविना प्रत्यभिज्ञाप्रमाणेन रूप्यादेर्निरूप्यमाणत्वात्। अतो हेतुद्वयमप्यसिद्धमित्याशङ्क्य परिहरति—**न तावदिति**। भ्रान्तिप्रतिपन्नत्वे सत्येव प्रतिपन्नत्वादिति प्रथमहेत्वर्थः। स च रजतादावस्ति। भ्रान्तिसिद्धमेव हि रूप्यादि साक्षिणो गोचरः। दोषवत्वे सत्येव दृश्यत्वं द्वितीयो हेतुः। सोऽपि रजतादौ वर्तते। दोषे सत्येव शुक्तौ रूप्यं भाति। नान्यदेत्यन्वयव्यतिरेकाभ्यां रूप्यादेर्दोषगम्यत्वनियमात्। अतस्तयोर्हेत्वो रूप्यादौ सिद्धेर्न हेतुद्वयमसिद्धमित्यर्थः। न च तयोर्व्याप्यत्वासिद्धिरित्याह—**विपक्षे चेति**। भ्रान्तिं विना दृश्यत्वलक्षणव्यापकाभावाद्व्याप्यसत्यत्वस्याभावेऽपि बुद्धित्वं रूप्यस्य किं न स्यादित्याशङ्क्य सत्यासत्ययोरभेदो विरोधान्न युक्तिमानित्याह—**दोषान्तरेति**। हेतुद्वयफलमुपसंहरति—**तस्मादिति**।

रूप्यस्य बाध्यत्वानुमानं असत्ख्यातिप्रसङ्गप्रहतमिति मन्वानोऽन्यथाख्यातिवादी प्रत्यवतिष्ठते—**ननु नेति**। तस्याबाध्यत्वसिध्यर्थं बाध्यत्वव्यापकाभावमभिधत्ते—**न हीति**। कथं असदनिर्वचनीयख्यात्योरभावः? तद्विरुद्धसत्वावगमादित्याह—**सत्वेनेति**। तथापि तादात्म्यवद्रूप्यस्यासत्वमित्याशङ्क्याह—**अन्यथेति**। तादात्म्यस्य बाधादसत्वसिद्धिर्न रूप्यस्येति भावः। यत् पूर्वं रजतं दृष्टं तदेवेदमिति कदाचित्प्रत्यभिज्ञास्ति। सापि न स्यादिति चकारार्थः। अदृष्टरजतस्य न रजतभ्रमस्तद्धेतुसंस्काराभावादिति शङ्कते—**भ्रान्तेरिति**।

अतः क्वचिद् दृष्टमेव रूप्यं दोषात् पुरोवर्तित्वेन भ्रान्तौ भाति। बाधोऽपि शुक्तिरूप्ययोरन्योन्याभावविषयः। तयोरन्योन्यात्मत्वं भ्रान्तिप्राप्तं निषेधति "नेदं रूप्य"मिति। एवं भ्रान्तिबाधान्यथानुपपत्या शुक्तिः रूप्यात्मना भ्रान्तौ भातीत्यास्थेयम्।

ननु ख्यातेर्नासत्। बाधाच्च न सत्, इत्यनिर्वचनीयतैव भ्रान्तौ भातस्य युक्तेति। न। तस्य सदसत्त्वाभ्यां भानात्। रूप्यं हि इदमिति सत्वे[1]न इदं रूप्यमिति च शुक्त्यन्योन्यात्मत्वेन भाति। अतो नानिर्वचनीयं तत्। मतान्तरन्तु भवतैव निरस्तम्। तस्माद्भ्रान्त्यादेर्नान्यथोपपत्तिः। तथा—प्रयोगोऽपि—इयं प्रवृत्तिः पुरोवर्तिनि रूप्यज्ञानपूर्विका रूप्येच्छाधीनपुरोवर्तिप्रवृत्तित्वात् सम्प्रतिपन्न-

---

भ्रान्तेरसदनिर्वाच्ययोरन्यतरविषयत्वे तद्धेतुत्वमपि संस्कारस्य न स्यात्। तथा चादृष्टरूप्यस्यापि भ्रान्तिर्भवेदेवेति दूषयति—**नादृष्टेति**। रूप्यस्यासत्वमनिर्वाच्यत्वं च निरस्योपसंहरति—**अत इति**। बाध्यत्वव्यापकास[2]त्वानिर्वचनीयत्वाभावे तद्व्याप्यं बाध्यत्वमपि न सिध्येदित्याशयः। इदंरूप्ययोरपि सत्वे बाधो निरालम्बनः स्यादित्याशङ्क्याह—**बाधोऽपीति**। असत्वानिर्वाच्यत्वपक्षयोर्विभ्रमासम्भवात् सत्वपक्षे च तदुपपत्तेर्भ्रान्तिबाधान्यथानुपपत्तिलक्षणार्थपत्तिरन्यथाख्यातौ प्रमाणमित्याह—**एवमिति**। अर्थापत्तेरन्यथैवोपपत्तिमाशङ्कते—**नन्विति**। यद्यपि नियमेन सत्वेऽसत्वे च भ्रमाद्यसम्भवः, तथापि रूप्यस्य सदसत्वे नानुपपत्तिरिति समाधत्ते—**न तस्येति**। कथं मिथो विरुद्धं सदसत्वमेकस्य स्यादित्याशङ्क्यानुभवावष्टम्भेन विरोधं निराचष्टे—**रूप्यं हीति**। अनिर्वचनीयत्वाभावेऽपि रूप्यस्य बुद्धावेव सत्वं, न तु देशान्तरे तत्सत्वमित्याशङ्क्याह—**मतान्तरमिति**। यद्वा मा भूदनिर्वचनीयता तथापि सत्वेन प्रतीतस्यासत्वेनापि प्रतीतेरसत्वमेव रूप्यस्य स्वाभाविकमित्याशङ्क्याह—**मतान्तरमिति**। ख्यातेर्नासदित्यत्रेत्यर्थः। पक्षान्तराणामसम्भवादर्थापत्तेरन्यथाख्यातिः सिद्धेति निगमयति—**तस्मादिति**। अन्यथाख्यातावर्थापत्तिवत्प्रमाणान्तरं समुच्चिनोति—**तथेति**। समीचीनरजतप्रवृत्तिभागे सिद्धसाध्य-

---

1. इदमिति च शुक्तिः 2. व्यापकासत्वा

**प्रवृत्तिवदिति। पुरोवर्तिनि रूप्यं मायामयमिष्यते। अतः सिद्धसाधनमिति चेन्न। बाधविरोधात्। तस्यापुरोवर्तितानुमानाच्च। तथा हि इदं रूप्यं न पुरोवर्ति तथाविधनिषेधविषयत्वात् संप्रतिपन्नवदिति। विमता प्रवृत्तिः पुरोवर्तिरूप्यज्ञानपूर्विका तदुद्देशप्रवृत्तित्वात् संप्रतिपन्नवदिति**

---

तानिरासार्थं विशिनष्टि---[1]**इयमिति**। एतेन घटादिप्रवृत्तिमाश्रित्य शङ्क्यमानो बाधोऽपि निरसनीयः। तटस्थरूप्यस्मृतिपूर्वकत्वेन *सिद्धसाध्यत्वमाशङ्क्यापास्यति—**पुरोवर्तिनीति**। घटादिप्रवृत्तौ व्यभिचारं परिहर्तुं रूप्येच्छाधीनेत्युक्तम्। रजतोपायप्रवृत्तौ व्यभिचारं वारयति—**पुरोवर्तीति**। न च रजतोपाये पुरोवर्तिनि रजतेच्छाधीनापि प्रवृत्तिर्न पुरोवर्तिरजतज्ञानाधीनेत्यनैकान्तिकतेति वाच्यम्। रजतोपाये प्रवृत्तेस्तदिच्छानिबन्धनत्वात्। अन्यथान्यदिच्छन्नन्यत्र व्यवहरतीति व्याघातात्। न चैवं रजतेच्छाधीनप्रवृत्तित्वादित्येवास्तु, कृतं पुरोवर्तिविशेषणेनेति युक्तम्। तटस्थे रजते तदिच्छानिमित्तापि प्रवृत्तिर्न पुरोवर्तिरजतज्ञानपूर्विकेति व्यभिचारे तन्निरासार्थं पुरोवर्तिविशेषणमिति भावः। पुरोवर्तिन्यधिष्ठाने रूप्यतज्ज्ञानयोर्मायामयत्वाभ्युपगतेस्सिद्धसाध्यतेति शङ्कते—**पुरोवर्तिनीति**। पुरोदेशे बाधितघटादिवद्रूप्यस्यापि तत्र बाधान्न तत्र सिद्धिरिति कुतः सिद्धसाध्यतेत्याह—**न बाधेति**। इतश्च नास्ति सिद्धसाध्यत्वमित्याह---**तस्येति**। अनुमानमेवारचयति—**तथा हीति**। भागे बाधं परिहर्तुं इदमित्युक्तम्। देशान्तरे निषिद्धस्यापि पुरोदेशे सत्वं घटादेरिष्टम्। अतो व्यभिचारः तन्निषेधति---**तथाविधेति**। पुरोवर्तिप्रतियोगिकेत्यर्थः। रूप्यस्यापुरोवर्तित्वप्रसाधनं †प्राचीनप्रयोगप्रहतत्वादप्रमाणमिति प्रत्यवतिष्ठते---[2]**विमतेति**। पूर्वोक्तबाधानुरोधात्त्वदनुमानासम्भवान्न तद्विरुद्धतानुमानस्य। प्राचीनं पुनर्मदनुमानं शुक्ते रूप्यात्मना भानसाधकं, न रूप्यस्य पुरोवर्तित्वावेदकमित्यविरोध इति परिहरति---[3]**न नेदमिति**। रूप्यापुरोवर्ति·

---

1. यदिति  2. इयमिति  3. नेदमिति

* अख्यातिमतेनेयं सिद्धसाध्यत्वशंका। तन्मत एव रूप्यस्मृतेः पुरोवर्तिप्रवृत्तिहेतुत्वाभ्युपगमात्।

† इयं प्रवृत्तिः पुरोवर्तिनि रूप्यज्ञानपूर्विका रूप्येच्छाधीनपुरोवर्तिप्रवृत्तित्वात् संप्रतिपन्नप्रवृत्तिवदित्यन्यथाख्यातिवाद्युक्तानुमानमित्यर्थः।

सत्प्रतिपक्षतेति चेन्न। नेदं रूप्यमिति प्रमाणबाधात्। अतो न सिद्ध-साधनता। विपक्षे चोक्तप्रवृत्तिर्न स्यादिति बाधः। तस्माद्युक्तमुक्तं शुक्ती रूप्यात्मना भ्रान्तौ भातीति।

### अन्यथाख्यातिनिराकरणम्

मैवम्—असतः शुक्तिरूप्यतादात्म्यस्य भानासम्भवात्, अन्यथाऽसत्ख्यातिप्रसङ्गाच्च। शुक्तिरूप्ययोश्च तादात्म्यमसत् ख्यातीति ते मतम्। अतोऽन्यत्र दृष्टस्यैव भ्रान्तौ भातीति, न नियन्तुं शक्यमिति रूप्यस्यान्यत्रासतः सत्त्वेन भ्रान्तौ भानं न विरुध्यते। तादात्म्यस्या-

---

त्वानुमानस्य निर्दोषत्वे फलितमाह—[1]अत इति। भ्रान्तरजतार्थिप्रवृत्तौ पुरोवर्तिनि रजतज्ञानपूर्वकत्वं मा भूत्। भवतु च रजतेच्छाधीनपुरोवर्ति-प्रवृत्तित्वं, तथा च बाधकाभावादप्रयोजको हेतुरित्याशङ्क्याह—विपक्षे चेति। अनुमानार्थापत्तिभ्यां सिद्धमर्थमुपसंहरति—तस्मादिति।

प्राप्तामन्यथाख्यातिं प्रत्याख्यातुं प्रक्रमते—मैवमिति। यत्तु पुरोवर्तिनि रूप्यज्ञानानुमानं [2]तस्य विपक्षबाधकसद्भावान्न साधकत्वमित्याह—असत इति। तादात्म्यस्यासतोऽपि भानाङ्गीकारे दोषमाह—अन्यथेति। असतस्तादात्म्यस्य भाने रूप्यस्यापि असतो भानसंभवादसत्ख्यातिप्रसङ्गः। ततश्च परमतपरिग्रहः स्वमतत्यागश्चेत्यर्थः। यत्तु भ्रान्तेरदृष्टरजतविषयत्वे संस्कारजन्यत्वानुपपत्तिरिति तत्र व्यभिचारं वारयितुं तन्मतमनुवदति—शुक्तीति। "[3]अस्येदृशी चासत्ख्यातिरभ्युपेयत" इति वचनादिति चकारार्थः। भवतु मदीयमीदृङ्मतं, किमेतावतेत्याशङ्क्य त्वदिष्टनियमासिद्धिरित्याह—अतोऽन्यत्रेति। नियमासिद्धौ फलितमाह—इति रूप्यस्येति। तादात्म्यस्य भानापलपासम्भवान्नेदं रूप्यमिति बाधाच्चासत्त्वावगमादत्यन्तासतोऽपि तस्य भानमग*म्यं स्वीक्रियते। रूप्यं त्वबाध्यमिति न तस्यात्यन्तासतो भानमिति विशेषमाशङ्कते—[4]तादात्म्यस्येति। भ्रान्तिप्रतिपन्नरूप्यस्याधिष्ठानेतरस्य

---

1. अ....ति 2. पक्षबाधक 3. तादात्म्यस्यासतोऽपि भानाङ्गीकारे दोषमाह—अन्यथेति इति अधिकः पाठः। * अगस्येत्यर्थः 4. तादात्म्येति

सत्वं बाधो बोधयति, न रूप्यस्येति चेन्न। रूप्यत्यागे मानाभावात्। सत्वज्ञप्तिविरोधान्न रूप्यं बाध्यमिति चेन्न। तस्य तादात्म्यबाधेऽपि तुल्यत्वात्। दोषात् ज्ञातस्यैव बाध्यतेत्यपि तुल्यम्। दोषोऽपि ज्ञापकश्चेच्चक्षुरादिवन्न दोषः स्यात्। कथं वा निस्स्वभावो दोषो ज्ञानं जनयेत्। ज्ञानं च तत्कथं स्यात्। ज्ञायतेऽर्थोऽनेनेति हि ज्ञानम्। तदेवं त्वत्पक्ष एव भ्रान्तेरसम्भवात्। बाधस्याप्यनुपपत्तेर्नान्यथाख्यातिर्युज्यते। न च भ्रान्तिभातस्यान्यत्र सत्वे किंचिन्मानमस्ति। अथ मानम्—विमतं क्वचित् सत् संसर्गान्यत्वे सति ख्यातत्वात् संप्रतिपन्न-

---

बाधविषयत्वपरित्यागे प्रमाणाभावात्तस्य तद्विषयत्वमेषितव्यम्। तादात्म्यमात्रबाधे तु बाधानन्तरं तरुद्वयवद्विविक्ततया पुरोवर्तिरूप्ययोस्तत्रैव प्रतिभानप्रसक्तिरित्यभिप्रेत्याह—**न रूप्येति**। अनुभववशेनाशङ्कते—**सत्वेति**। अनुभवबलेनैव परिहरति—**न तस्येति**। दोषगम्यत्वात्तादात्म्यं बाध्यमित्याशङ्क्य रूप्यमपि तर्हि बाध्यं, तस्य पुरोवर्तिनि दोषगम्यत्वाविशेषादित्याह—**दोषादिति**। भ्रान्तेर्ज्ञानत्वमङ्गीकृत्य तद्धेतोर्दोषस्य ज्ञापकत्वमनुमतमधस्तात्। सम्प्रति तस्याज्ञानस्वाभाव्यात्तद्धेतुर्दोषो न ज्ञापको भवितुमर्हतीति म[1]त्वा ज्ञापकत्वपक्षे दोषान्तरमाह—**दोषोऽपीति**। शुक्तिरूप्यतादात्म्यज्ञापकत्वं दोषस्यान्वयव्यतिरे[2]कसिद्धमपनेतुमशक्यमित्याशङ्क्याह—**कथं वेति**। तादात्म्यस्वभावालोचनया तत्र दोषस्य ज्ञापकत्वासंभवमभिधाय ज्ञानस्वभावालोचनयापि तदसंभवमभिदधाति—**ज्ञानं चेति**। तादात्म्यस्य भानासंभवमुपसंहरन्नुक्तानुमानस्य भ्रान्तिबाधासम्भवलक्षणं पक्षबाधकतर्कं निगमयति—**तदेवमिति**। तादात्म्यबाधासम्भवेन रूप्यस्यैव बाधोक्त्या तस्य देशान्तरे सत्वासंभवमभिधाय, तत्रैव युक्त्यन्तरमाह—**न चेति**। तत्र[3] प्रतिपन्नस्यान्यत्र सत्वे प्रमाणमाशङ्कते—**अथेति**। भागे सिद्धसाध्यत्वनिरासार्थं विमतविशेषणम्। पुरोवर्तिदेशे बाधादेव सत्वायोगाद् देशान्तरे सत्वमेष्टव्यमित्याह—**क्वचिदिति**। शुक्तिरूप्यतादात्म्ये व्यभिचारं वारयति—**संसर्गान्यत्वे सतीति**। नभोनलिनादावनैकान्तिकत्वं प्रतिषेधति—**ख्यातत्वादिति**।

---

1. इति मत्वाह 2. व्यतिरेक....मप 3. तानि

वदिति। न। धर्मिहेत्वोराभाससिद्धत्वात् , तत्राश्रयाद्यसिद्धिः।

न चात्रान्यन्मानमस्ति। यदपि पुरोवर्तिनि रूप्यज्ञानानुमानं* तत्सिद्धसाधनम्। अज्ञानजं हि रूप्यं पुरोवर्तिताज्ञानं चेष्यत एवास्माभिः।

नन्वज्ञानमपुरोवर्ति तज्जं रूप्यं कथं पुरोवर्ति स्यात्। रूप्यवत्त-

---

प्रतीतिमात्रसिद्धस्यानुमानाङ्गत्वानङ्गीकाराद्धर्मिणो भ्रान्तिसिद्धत्वादाश्रयासिद्धिः। भ्रान्तिसिद्धस्य वस्तुवृत्त्या ख्यातत्वाभावा[1]च्च हेतोः स्वरूपासिद्धिरिति दूषयति—**न धर्मीति**। ननु रूप्यस्यान्यत्र सत्वमनुभवादर्थापत्तेर्वा भविष्यतीति। नेत्याह—**न चेति**।

अयमभिसन्धिः—न तावद्भ्रमानुभवस्तत्र मानम्। तस्य पुरोवर्त्ति-रूप्यसत्तामात्रविषयत्वात्। नापि बाधानुभवः तत्र प्रमाणं, तस्यापि पुरोवर्ति-न्यारोपाभावविषयत्वात्। अर्थापत्तिरपि, न भ्रमानुपपत्तिः। भ्रमो हि रजतसत्ता-मन्तरेणानुपपन्नः प्रतीत्यनुसारात्पुरोवर्तिन्येव †तां कल्पयेत्। नापि बाधानु-पपत्तिः। स हि प्राप्तिपूर्वकः। सा‡ चासत्वे चेन्न भवेत्पुरोवर्तिन्येव तत्सत्तामा-क्षिपेत्। तत्र बाधान्नेति चेन्नतरामन्यत्र। तत्सत्ताप्रतीत्यभावात्। साधकान्तरा-भावाच्च। न चासत्ख्यात्यनुपपत्तिः। तादात्म्यवत्तत्सम्भवादिति। अर्थापत्तिरनुमानं चेत्यन्यथाख्यातिवादिना प्रमाणद्वयमुपन्यस्तम्। तत्र अर्थापत्तिर्मुखतो निरस्ता सम्प्रत्यनुमानमनूद्य मुखतो निरस्यति—**यदपीत्यादिना**। सिद्धसाधनत्वमेव साधयति—[2]**अज्ञानजं हीति**। कार्यस्य कारणाभेदात्तस्याज्ञानस्य पुरोवर्ति-त्वाभावात्तत्कार्यस्य रूप्यस्यापि न पुरोवर्तितेति कुतः सिद्धसाध्यतेति शङ्कते—**नन्विति**। अज्ञानजनितरजतगतपुरोवर्तित्वस्यापि रजतवदपरमार्थत्वेनाज्ञान-जन्यत्वात्तदवस्थं सिद्धसाध्यत्वमिति परिहरति—**रूप्यवदिति**। अपुरोवर्तिका-र्यरूप्यस्य पुरोवर्तित्वमज्ञानजन्यमित्युक्तमर्थं दृष्टान्तावष्टम्भेन निगमयति—**अत**

---

* इयं प्रवृत्तिःपुरोवर्तिनि, रूप्यज्ञानपूर्विका रूप्येच्छाधीनपुरोवर्तिप्रवृत्तित्वात् संप्रतिपन्नप्रवृत्तिवदिति 1. भावाच्च स्वरूपा † रजतसत्तामित्यर्थः ‡ प्राप्तिरित्यर्थः 2. अज्ञानं तर्हीति

त्पुरोवर्तित्वस्यापि बाध्यस्य[1] अज्ञानजन्यत्वादिति ब्रूमः। अतोऽपुरोवर्तिनोऽपि पुरोवर्ति कार्यं न विरुध्यते अरूप्यस्येव रूप्यम्। साक्षिवेद्ये च तस्मिन् ज्ञानमविरुद्धम्। अतस्सिद्धं सिद्धसाधनत्वम्। नेदं रूप्यमिति बाधविरोधान्नैवमिति चेन्न। तत्र बाधासम्भवस्योक्तत्वात्। असतः संसर्गस्य योग्यानुपलम्भासम्भवाच्च न ते निषेधसम्भवः। यच्चेदं रूप्यं न पुरोवर्तीत्यनुमानं तदपि तत्राश्रयासिद्धम्। तस्याभाससिद्धत्वात्।

अथ मानान्तरम्—विमतं ज्ञानं सद्विषयम्, अनुपलब्ध्यजन्यज्ञानत्वात् कुम्भज्ञानवदिति। न। सिद्धसाधनत्वाद्धेत्वसिद्धेश्च। शुक्तीदमंशविषयो हि ज्ञानाभासो मयेष्यते। अतः स्पष्टा उक्तदोषता। इदं

---

इति। पुरोवर्तिरूप्यस्याज्ञानजन्यस्य सिद्धिं प्रसाध्य तज्ज्ञानस्य सिद्धिप्रकारं दर्शयति—साक्षीति। पुरोवर्तिरूप्यतज्ज्ञानसिद्धिप्रयोजनमाह—अत इति। यत् यत्र निषिध्यते तत्तत्र नास्ति। निषिध्यते च पुरोदेशे रूप्यम्। अतस्तस्यापुरोवर्तित्वान्न सिद्धसाध्यत्वमित्युक्तं स्मारयति—नेदमिति। सत्वज्ञप्तिविरोधाद्रूप्ये तादात्म्ये वा बाधानुपपत्तेरुक्तत्वादज्ञानजन्यरूप्यस्य पुरोवर्तित्वात्तस्योक्तबाधाविषयत्वादस्ति सिद्धसाध्यतेति उत्तरमाह—न तत्रेति। किं च योग्यस्यानुपलब्धौ निषेधः। न चासतस्तादात्म्यस्य योग्यत्वम्। अतो न तन्निषेधो बाध इत्याह—असत इति। पुरोवर्ति मायामायं रूप्यमुपादाय रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वादित्यनुमाने सिद्धसाध्यत्वं साधितम्। सम्प्रति रूप्यस्यापुरोवर्तित्वानुमानमनूद्य दूषयति—यच्चेति। पुरोवर्तिरूप्यज्ञानपूर्वकत्वं विमतप्रवृत्तेरनुमीयते चेदनिर्वाच्यं रूप्यं पुरोवर्ति सिद्धमिति सिद्धसाध्यता। रूप्यज्ञानस्य सद्विषयत्वे तु साध्ये न सिद्धसाध्यत्वं, त्वया तस्य सत्वानङ्गीकारादिति मन्वानः शङ्कते—अथेति। समीचीनरजतज्ञानस्य सद्विषयत्वसिद्धेर्भागे सिद्धसाध्यत्वं, अत उक्तं—विमतमिति। षष्ठप्रमाणवादे कुम्भाद्यभावज्ञाने व्यभिचारः, तं निवारयति—अनुपलब्ध्यजन्येति। कुम्भादौ व्यभिचारं निरसितुं—ज्ञानत्वादित्युक्तम्। दोषद्वयमुद्भावयन्नुत्तरमाह—नेति। तदेव दोषद्वयं विशदयति—शुक्तीति। तत्र शुक्तीदमंशविषयमिति

---

1. बाध्यस्य ज्ञानजन्यत्वात्

**नासद्विषयमिति प्रतिज्ञा, व्यवहारसिद्धं च ज्ञानत्वं हेतुरस्तीति चेन्न। ते सिद्धान्तविरोधात् । हेतुविशेषणवैयर्थ्यप्रसङ्गाच्च । शुक्तिरूप्ययोस्तादात्म्यं ह्यसत्ते भ्रान्तौ भातीति स्थितिः। नापि हेतुविशेषणस्य कृत्यमस्ति । तस्मात् भ्रान्तिभातस्य रूप्यस्य तत्संसर्गवन्न सत्वमिति सिद्धम् ।**

## असत्ख्यातिवादखण्डनम्

**तस्यासत्वे तु ख्यात्यसम्भवात् भ्रान्तिबाधासम्भवः स्पष्ट एव । यथा च परोत्प्रेक्षितस्यासतो मायाव्यपाश्रयेण निषेध उपपद्यते तथा प्रपञ्चितमिष्टसिद्धिविवरणे ।**

---

सिद्धसाध्यत्वं समर्थयते, **ज्ञानाभास** इति हेत्वसिद्धिमिति विभागः । शुक्तीदमंशविषयत्वेन भ्रान्तेः सद्विषयत्वेऽपि, रूप्यस्य सद्विलक्षणत्वाङ्गीकारादसद्विलक्षणत्वाङ्गीकारासिद्धेस्तद्विषयत्वे साध्ये नास्ति सिद्धसाध्येति आशङ्कते —**इदमिति**। ज्ञानत्वास्यासिद्धिं परिहरति—**व्यवहारेति**। एवमपि सिद्धसाध्यता [1]अस्य रूप्यस्य सद्वैलक्षण्यवदसद्वैलक्षण्यस्यापि स्वीकारादित्यभिप्रेत्य दोषान्तरमाह—**नेत्यादिना**। अन्यथाख्यातिवादिनः सिद्धान्तविरोधं साधयति—**शुक्तीति**। हेतुविशेषणवैयर्थ्यं समर्थयते—**नापीति**। न हि तदसिद्धिमुद्धर्तुमिष्यते, व्यभिचारनिवृत्त्यर्थत्वादिति भावः। अन्यथाख्यातिदूषणमुपसंहरति—**तस्मादिति**।

[2]सत्वाभावेऽपि रूप्यस्यासत्वान्नानिर्वाच्यतेति शून्यवादी मन्यते। तं प्रत्याह—**तस्येति**। ननु[अ]सच्चेन्न ख्याति न तत्ख्यातिर्निषिध्येत। सा चेन्न निषिध्यते नानिर्वचनीयख्यातिः सिध्येत्। तदु[3]क्तं "*नासत्ख्यातीति वा णीयं नाज्ञातेऽसति युज्यत" इति। तत्राह—**यथा चेति**। यद्यविद्यामाश्रित्य तुच्छतत्ख्याती तद्गताश्च बन्धमोक्षादयो निषिध्यन्ते तर्हि तुच्छाविद्ययैव तत्ख्यातिसिद्धेर्नानिर्वचनीयतेति चोदयति—**अस्तु तर्हीति**। तुच्छस्याविद्यां प्रत्याश्रयत्वविषयत्वयोरनुपपत्तेर्नैतच्चोद्यमित्युत्तरमाह—**न तदिति**।

---

1. अस्याभि 2. सत्वाभेदे 3. नासत्ख्यातीति। वा...यन्नाज्ञातेसति युज्यते। * इदमीदृगितिह्युक्तिर्ज्ञातयोर्धर्मधर्मिणोः। इत्युत्तरार्धम्।

अस्तु तर्हि तुच्छाविद्ययैव तुच्छेत्यादिव्यवहारः । न । तदविद्यासम्भवात् । नहि निस्वभावस्याविद्याश्रयता तद्विषयता वा सम्भवेत् । नैस्वाभाव्यभङ्गप्रसङ्गात् । तदलं सर्वजनप्रसिद्धिविरुद्धस्य सर्वप्रमाणयुक्त्यननुगतस्य मतस्य विचारेण । तस्माद्भ्रान्तिसिद्धस्य रूप्यादेर्नासत्वमपीति भ्रान्तिबाधान्यथानुपपत्त्या तस्यानिर्वचनीयत्वमेवेति स्थितम् ।

### भ्रमभातस्यानिर्वचनीयत्वे पक्षद्वयप्रदर्शनम्

ननु भ्रमभातस्यानिर्वचनीयत्वेऽप्यनुपपत्तिस्तुल्या । तथा हि—सद्विलक्षणं खपुष्पवन्न ख्यायात् । असद्विलक्षणं शुक्तिवन्न बाध्येत ।

अत्राहुः केचित्—सद्वैलक्षण्यादख्यानमिति मते गौरवम् । न तु तुच्छत्वादख्यानमिति मते । एवमसद्विलक्षणं न बाध्यमिति मते

---

असम्भवमेवाभिनयति—**न हीति** । कुम्भादिसद्वस्तुविषयलोकप्रसिद्धिविरोधात्तद्विषयप्रत्यक्षादिव्याकोपात्तुच्छस्यास्फुरणे तदसिद्धेः, स्फुरणे च निःस्वभावे तस्मिन्नन्यासम्बन्धादपराधीनस्फुरणाङ्गीकारे च तुच्छत्वव्याहतिरित्यादियुक्तिविरोधाच्च माध्यमिकमतमुपेक्षणीयमित्याह—**तदलमिति** । असत्पक्षप्रतिक्षेपमुपसंहरति—**तस्मादिति** ।

सत्वासत्वपक्षयोर्भ्रान्तिबाधानुपपत्तेरर्थापत्तिसिद्धं रूप्यादेरनिर्वाच्यत्वमिति स्वमतमवतारयति—**इति भ्रान्तीति** । अर्थापत्तेरन्यथैवोपपत्तिमाशङ्कते—**नन्विति** । अनुपपत्तिसाम्यमेव साधयति—**तथा हीति** । अबाधाभानयोः सत्वासत्वे प्रयोजके लाघवात् । न तु तद्वैलक्षण्ये । गौरवादिति मतमुत्थापयति—**अत्राहुरिति** । ख्यातत्वे सति बाध्यत्वादनिर्वाच्यत्वं रूप्यादेरुपपन्नमिति फलितमाह—**अत इति** । यदि गुरुलघुप्रयोजकनिरूपणेनाबाधाभानयोः सत्वासत्वे प्रयोजके कथ्येते, तर्हि तवापि मते बाधख्यात्योः सदसद्वैलक्षण्ययोः प्रयोजकत्वेन गौरवात्तत्रासत्वं सत्वं च प्रयोजकमिति लाघवानुसारेण वक्तव्ये, पक्षान्तरे परं ख्यातिबाधयोरुपपत्तिरिति दूषयति—**अत्राहेति** । अर्थापत्तेर-

गौरवम् । न तु सद्‌बाध्यमिति मते । अतो नानुपपन्नाऽनिर्वचनीयतेति ।

अत्राहापरः—हन्तैवमस्मत्पक्ष एव ख्यातिबाधयोरुपपत्तिर्लाघवात् । सत् ख्यातीति हि लाघवम् । असद्विलक्षणं ख्यातीति गौरवम् । एवमसद्बाध्यमिति लाघवम् । सद्विलक्षणं बाध्यमिति गौरवम् । अतो भ्रान्तिबाधावुपपन्नावनिर्वचनीयत्व इति ।

### भ्रमभातस्यानिर्वचनीयत्वे स्वपक्षप्रदर्शनम्

उच्यते—न तावत्सद्विलक्षणं न भातीति नियन्तुं शक्यम् । तद्विधरूप्यसंसर्गे भानस्येष्टत्वात् । बाधोऽप्यसद्विलक्षणस्य रूप्यादेरज्ञानमयस्य ज्ञाननाश्यत्वेनोपपद्यते । अतो नानिर्वचनीयत्वेऽनुपपन्नौ ख्यातिबाधाविति सिद्धम् ।

### सदसद्विलक्षणत्वरूपानिर्वचनीयत्वाक्षेपः

ननु सदसत्वसमुच्चयवत्तदुभयनिषेधसमुच्चयोऽप्यसम्भवी । पर-

---

न्यथोपपत्तिमुपसंहरति—अत इति । सत्वासत्व[1]योरबाधाभानप्रयोजकत्वे सद्विलक्षणं बाध्यं, असद्विलक्षणं ख्यातीति व्यतिरेके गौरवं प्रसरेत् । सत्वासत्वयोस्तु ख्यातिबाधप्रयोजकत्वे लाघवमित्ययुक्तम् । अख्यानाबाधयोः सदसद्वैलक्षण्यस्य प्रयोजकत्वाङ्गीकाराद्व्यतिरेके तवापि गौरवात् । सत्वे भ्रान्तिबाधयोरनुपपत्तेरसत्वे चापरोक्षभानासम्भवान्नियामका[2]भावस्यानाशङ्कनीयत्वादित्याशयेनाह — उच्यत इति । यत्तु सद्विलक्षणं खपुष्पवन्न ख्यातीति तत्राह—न तावदिति । यत्पुनरसद्विलक्षणं शुक्तिवन्न बाध्येतेति तत्राह—बाधोऽपीति । [3]ज्ञाननाश्यत्वे हेतुः—अज्ञानमयस्येति । अर्थापत्तिमुपसंहरति—अतो नेति । परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्यायेन प्रत्यवतिष्ठते—नन्विति । तत्र हेतुमाह—परस्परेति । यथोक्तम्—

परस्परविरुद्धानां निषेधेऽपि विधाविव ।
समुच्चयविरोधस्य गीर्वाणैरप्यवारणात् ॥ इति ॥

---

1. सत्वासत्वयोध 2. नियामकाभस्य 3. ज्ञान... दृश्यत्वे

स्परविरुद्धयोर्विधाविव विधिनिषेधेऽपि समुच्चयविरोधस्य दुष्परिहरत्वात् । एतेन भेदाभेदसांशत्वनिरंशत्वादिनिषेधसमुच्चयो व्याख्यातः ।

मैवम्—[1]भावाभावयोरन्योन्याभावभावनिषेधसमुच्चयस्यावश्यं त्वयाभ्युपेयत्वात् । व्यक्तो हि भावाभावयोर्निरपेक्षसापेक्षयोस्तादात्म्यासम्भवः । अतादात्म्ये तु स्पष्टैवानवस्था । एतेन न सत् नाप्यसदित्यपि सद्विधिनिषेधविरोधोऽप्यपास्तः । उक्तान्योन्याभावविधिनिषेधवदविरोधात् । एवं भेदभेदिनोर्भेदाभेदनिषेधसमुच्चयसम्भव उदाहरणीयः ।

किञ्च वस्तुन्येवायं विरोधः । मायामये तु, जयडिण्डिम एव ।

---

सत्वासत्वनिषेधसमुच्चयनिरासन्यायमन्यत्राप्यतिदिशति—**एतेनेति** । परस्परविरुद्धयोर्विधिसमुच्चयाभावेऽपि निषेधसमुच्चयो भवताभ्युपेयः, भावाभावयोस्तदभ्युपगमादिति समाधत्ते—**मैवमिति** । तयोरन्योन्याभावेऽनवस्थानादन्योन्यभावे च विरोधादुभयवैलक्षण्यादभीष्टनियमासिद्धिरित्यर्थः । एतदेव व्यक्तीकरोति—**व्यक्तो हीति** । अस्तु तर्हि तयोरतादात्म्यमेव, तत्कथं निषेधसमुच्चयः, तत्राह–**अतादात्म्ये त्विति** । अभावान्तरस्याभावे स्वीकारादित्यर्थः । *भावाभावयोरन्योन्याभावभावनिषेधसमुच्चयसमर्थनेन रूप्यं न सदित्युक्ते तदसदिति विधानस्यार्थिकत्वात्तदसन्नेति वदतो व्याहतिरिति चोद्यमपि निराकृतमित्याह—**एतेनेति** । भावान्योन्याभावयोर्न तादात्म्यमित्युक्तेऽन्योन्याभावविधिस्तयोरन्योन्याभावो नेति तन्निषेधः । तयोरविरोधस्य दर्शितत्वात् । तद्वत् प्रकृतेऽपि विरोधसमाधिरित्येतत्पदपरामृष्टमेवार्थमाह–**उक्तेति** । भेदभेदिनोस्सापेक्षनिरपेक्षत्वेनाभेदाभावात् भेदे चानवस्थानात्तयोर्भेदाभेदनिषेधसमुच्चयवत् सदसत्वनिषेधसमुच्चयोऽपीत्युदाहरणान्तरमाह–**एवमिति** । दृष्टान्तावष्टम्भेन विरोधं परिहृत्यानिर्वाच्यस्य प्रतिभासमात्रसिद्धत्वादनुपपत्तेरलङ्कारत्वान्न विरोधाशङ्केत्याह—**किं चेति** । जयडिण्डिमो जयगमको वाद्यभेदः । मायामये

---

1. न्योन्यादाव इत्यधिकः पाठः

* भावाभावयोः परस्परभेदाभेदनिषेधसमुच्चयसमर्थनेनेति भावः ।

अघटमानविधानपटीयस्त्वान्मायायाः । तथात्वं च तस्याः पुराणादिषु प्रसिद्धम् । दृश्यते च विरुद्धानेकधर्मता मायामयस्य स्वप्नमाहेन्द्र-जालादौ । तस्मान्नानुपपन्नाऽर्थापत्तिलभ्याऽनिर्वचनीयता । ये त्वर्थापत्तिं द्विषन्ति, ते तामनुमानयिष्यन्ति । मैवम् । अत्रानुमानासम्भवात् । विमतमनिर्वचनीयं भ्रमविषयत्वात् बाध्यत्वाद्वा कुम्भवदिति व्यतिरेकी प्रयोगोऽत्र सम्भवतीति चेन्न, परस्याप्रसिद्धविशेषणत्वात् । सदसतोः परस्परवैलक्षण्यं प्रसिद्धम् । तदुभयमेकत्र साध्यमिति चेन्न, सदादिसपक्षाप्रवेशाद्धेतोरसाधारणताप्रसङ्गात् । किञ्च आद्यो हेतुर्विरुद्धः । सती-

---

विरोधस्यानुकूलत्वे हेतुमाह––अघटमानेति । कथं पुनरघटमानविधानसमर्थत्वं मायायाः सिद्धमिति तत्राह–तथात्वं चेति । न केवलमनुपपन्नार्थसम्पादनसामर्थ्यं मायायाः "माया ह्येषा मया सृष्टे"त्यादिवचनसिद्धम् । किं तु लोकसिद्धं चेत्याह––दृश्यते चेति । मिथो विरुद्धयोर्विधाविव निषेधसमुच्चयाविरोधात् अर्थापत्तिप्रमितं रूप्यादेरनिर्वाच्यत्वमुपपन्नमित्युपसंहरति–– तस्मान्नेति ।

अर्थापत्तिवादिनो मीमांसकादीन्प्रत्यर्थापत्या रूप्यादेरनिर्वाच्यत्वं समर्थितम् । सम्प्रति वैशेषिकादीन्प्रत्याह––ये त्विति । नन्वनिर्वाच्यत्वे नानुमानसम्भवः । सपक्षाभावात् । व्यतिरेकिणि च विशेषणाप्रसिद्धेः । अतो [1]न प्रतीयमानत्वे सति बाध्यत्वानुपपत्तिरनुमानीकर्तुं शक्येति शङ्कते–मैवमिति । अन्वयिनोऽसम्भवेऽपि व्यतिरेकिणोऽस्ति सम्भवः । विशेषणप्रसिद्धिश्चेच्छादीनामष्टद्रव्यातिरिक्तद्रव्याश्रितत्वानुमानवत्सामान्यप्रसिद्धिपरिशेषाभ्यामिति सिद्धान्ती चोदयति–विमतमिति । इच्छादीनां गुणत्वलिङ्गेन क्वचिदाश्रितत्वसाधनवदनिर्वाच्यत्वसाधने [2]प्रसिद्धिस्थलाभावादप्रसिद्धविशेषणताया दुर्वारत्वान्मैवमिति पूर्ववाद्याह–न परस्येति । सद्विलक्षणत्वमसति, असद्विलक्षणत्वं च सति प्रसिद्धम् । तथा चोभयविलक्षणत्वमेकत्रासिद्धमपि सिद्धमुभयोरिति तल्लक्षणानिर्वाच्यत्वे साध्ये कुतोऽप्रसिद्धविशेषणतेति सिद्धान्ती आह––सदसतोरिति । तर्हि तयोस्सपक्षत्वात्तत्र हेतोर्वृत्तौ व्यतिरेकित्वायोगादवृत्तावनध्य-

---

1. व्या ... त्वे 2. प्रवृत्तिसिद्धि

दमंशे गतत्वात् । तदन्यत्वे सतीति विशेष्यत इति चेन्न, असिद्धत्वात् । अन्यत्वानन्यत्वाभ्यां हि रूप्यमनिर्वचनीयमिष्यते । भ्रममात्रविषयत्वं च तस्यास्माकमविरुद्धम् । एवं बाध्यत्वमप्यसिद्धमेव । संसर्गमात्रस्य बाध्यत्वात् । एतेन ज्ञानापनोद्यत्वमनिर्वचनीयत्वं भ्रमविषयत्वहेतुसाध्यमित्यपास्तम् ।

एवं भ्रमानुपपत्तिरप्यपास्ता । सतोऽपीदमंशस्य भ्रमविषयताश्रयणात् । मानान्तरं त्वनाशङ्कनीयम् । तदेवमनिर्वचनीयत्वं रूप्यादेर्न मानगोचरः । अतस्तद्धेतुरनिर्वाच्याविद्येत्याशामात्रम् । योऽपि विमतं

---

वसितत्वान्नेदं समाधानमिति पूर्ववाद्याह—न सदादीति । भ्रमविषयत्वहेतोर्दोषान्तरमाह—किं चेति । इदमंशादन्यत्वे सति भ्रमविषयत्वं हेतुरिति शङ्कित्वा निरस्यति—तदन्यत्वे सतीत्यादिना । विशेषणासिद्धिं साधयति—अन्यत्वेति । भ्रममात्रविषयत्वं हेतुः । तस्य बाधे हि भानादित्याशङ्क्याह—भ्रमेति । भ्रान्तिप्रतिपन्न[1]रूप्यादेरेव परमार्थस्थले प्रामाणिकत्वस्यामायावादिभिरभ्युपगमादित्यर्थः । अन्यतरासिद्धिर्बाध्यत्वहेतावपि तुल्येत्याह—एवमिति । रूप्यादेरबाध्यत्वे बाधस्य निरालम्बनत्वं स्यादित्याशङ्क्याह—संसर्गमात्रस्येति । सदसद्वै[2]लक्षण्यलक्षणानिर्वाच्यत्वे साध्ये भ्रमविषयत्वहेतोर्विरुद्धत्वप्रदर्शनेन प्रयोगान्तरमपि पराकरोति—एतेनेति । अनुमानादुक्तलक्षणानिर्वाच्यत्वासिद्धावपि भ्रमविषयत्वानुपपत्त्या रूप्यादेरनिर्वाच्यत्वसिद्धिरित्याशङ्क्याह—एवमिति । न च बाध्यत्वानुपपत्त्या तत्सिद्धिः । बाध्यत्वाभावस्योक्तत्वात् । संसर्गस्य च सद्विलक्षणत्वमात्रेण तदुपपत्तेरित्यपेरर्थः । रूप्यादेरनिर्वाच्यत्वमनुमानार्थापत्तिव्यतिरिक्तप्रमाणप्रमेयमित्याशङ्क्याह—मानान्तरमिति । न हि प्रत्यक्षादि रूप्यादेरनिर्वाच्यत्वं गोचरयदस्तीति भावः । नन्वनाद्यनिर्वाच्यमज्ञानं रूप्यादेरुपादानम् । तथा च कथं रूप्यदेरनिर्वाच्यत्वराहि[3]त्यमित्यत आह—अतस्तद्धेतुरिति । कार्यानुसारित्वात्कारणस्य तदनिर्वाच्यत्वे मानाभावादित्यतश्शब्दार्थः । ननु नेदमाशामात्रं प्रामाणिकत्वादित्याशङ्क्याह—योऽपीति । भ्रान्तिसिद्धं रूप्यादि धर्मित्वेनोपादत्ते—विमतमिति । आत्मादे-

---

1. रूप्यादेव 2. सदसद्वैलक्षण्यस्य लक्षण 3. राहित्यमित्याह

अनाद्यनिर्वाच्योपादानं, विपक्षे बाधकोपपत्तौ सत्यां कार्यत्वादिति व्यतिरेकी प्रयोगः, तत्रापि साध्याप्रसिद्धिर्हेतुविशेषणस्यापक्षधर्मता। कथंचित्पक्षधर्मत्वेऽपि, व्यर्थविशेषणता। विपक्षे बाधोपपत्तिरप्यसिद्धा। तस्मान्न किंचिदप्यनिर्वचनीयमिति सिद्धम्।

### सदसद्विलक्षणत्वरूपानिर्वचनीयत्वव्यवस्थापनम्

उच्यते—विमतं सदसद्विलक्षणं दोषप्रयुक्तभानत्वात् भ्रान्तिसिद्ध-

---

रुपादानताप्रसङ्गप्रतिषेधार्थं अनिर्वाच्येत्युक्तम्। उपादानस्य सादित्वे कारणपरम्परायामनवस्था गौरवं च। तन्निरासार्थमाह—**अनादीति। विपक्षे बाधकोपपत्ताविति।** अनुपपद्यमानसदसदुपादानत्वे सतीत्यर्थः। तच्च घटादौ व्यभिचारं परिहर्तुं विशेषणम्। आत्मन्यव्यभिचारार्थं कार्यत्वादित्युक्तम्। तस्मिन्नपि प्रयोगे साध्यस्यान्यत्र प्रसिद्धौ व्यतिरेकित्वायोगः, अप्रसिद्धौ चाप्रसिद्धविशेषणतेति दूषयति—**तत्रापीति।** इच्छादीनामष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसाधनवदिहापि *विशेषणप्रसिद्धिमाशङ्क्य दोषान्तरमाह—**हेत्विति।** सदसतोरन्यतरस्य [1]रूप्यानुपादानत्वे बाधकोपपत्तिः, साक्षान्न पक्षनिष्ठा[2]ज्ञानाविषयत्वादित्यर्थः। अनुपपद्यमानसदसदुपादानत्वं हि हेतु-[3]विशेषणम्। तच्च भवत्ये†व पक्षवृत्तीत्याशङ्क्याह—**कथञ्चिदिति।** घाटदौ व्यभिचारनिवारकतया विशेषणस्यार्थवत्त्वमुक्तमित्याशङ्क्याह—**विपक्ष इति।** न हि रूप्यस्य सदुपादानत्वे बाधकमस्ति। सत्त्वप्रसक्तिस्तु तस्येष्टैव। बाधः पुनः संसर्गमात्रगोचरो दर्शित इत्याशयः। रूप्यादेस्तत्कारणस्य चानिर्वाच्यत्वासम्भवमुपसंहरति—**तस्मादिति।**

सिद्धे कार्यस्यानिर्वाच्यत्वे कारणस्यापि तद्द्वारा तत्सिद्धिरित्यभिसन्धाय कार्यस्य तावदनिर्वाच्यत्वं साधयति—**उच्यत इति।** प्रमाणविषयत्वे सति ज्ञानविषयत्वादिति हेत्वर्थः। सदपि रूप्यं सदन्तरादसतस्सदसदात्मकचित्ररूपाच्च विलक्षणं सिद्धमिति सिद्धसाध्यत्वमिति शङ्कते—**सदसदिति।**

---

*. साध्यप्रसिद्धिमिति भावः। 1. रूप्योपादानत्वे 2 ज्ञानविशेषत्वादित्यर्थः 3. हि विशेषणम् † ज्ञानाविषयत्वेऽपि वस्तुतस्तत्र विद्यमानत्वान्नापक्षधर्मतेति भावः।

**तादात्म्यवत्। सदसदुभयतोपाधिविलक्षणं भवतीति सिद्धसाधनतेति चेन्न। छलप्रसङ्गात्। सदसतोर्हि प्रत्येकं प्रतियोगित्वमत्र वैलक्षण्ये विवक्षितम्। तत्र प्रतियोग्यन्तराभिप्रायेण दोषप्रलापे छलमलमापाद्येत। हन्तैवमप्रसिद्धविशेषणता। दृष्टान्तश्च साध्यविकलः। न। उक्तवैलक्षण्यस्य रूप्यसंसर्गेऽवश्याभ्युपेयत्वात्। रूप्यसंसर्गोऽपरोक्षः भावरूपश्च**

---

साधारणप्रयोगे विवक्षितं विहायाविवक्षिता[1]र्थाभिप्रायेण दोषभाषया नानुमानं दूषितं स्यादिति दूषयति—**न च्छलेति**। किं तर्हि विवक्षितमिति तद्दर्शयति—**सदसतोरिति**। सत्वानधिकरणत्वे सति सदसत्वानधिकरणत्वं रूप्यादौ साध्यते।

"प्रत्येकं सदसत्वाभ्यां विचारपदवीं न यद्।
गाहते तदनिर्वा[2]च्यमाहुर्वेदान्तवेदिनः॥ इति न्यायादित्यर्थः॥

एवं च सति सदन्तरस्यासतः सदसदात्मकचित्ररूपस्य च वैलक्षण्यं प्रति प्रतियोगित्वमङ्गीकृत्य सिद्धसाध्यतामभिदधानस्यातिशयेन च्छलमापतेदित्याह—**तत्रेति**। उक्तलक्षणं विलक्षणत्वं क्वापि न प्रसिद्धमित्यप्रसिद्धविशेषणतेति शङ्कते—**हन्तेति**। रूप्यसंसर्गे साध्यप्रसिद्धिं आशङ्क्य परिहरति—**दृष्टान्तश्चेति**। न हि तस्योक्तलक्षणं वैलक्षण्यं परीक्षकैरि*ष्यते, येन तस्योभयसिद्धतया दृष्टान्ततेत्यर्थः। दोषद्वयं समाधत्ते—**नोक्तेति**। रूप्यसंसर्गस्य बाध्यत्वेन सद्वैलक्षण्येऽपि कथमसद्वैलक्षण्यमित्याशङ्क्याह—**रूप्येति**। अपरोक्षत्वेऽपि नासद्वैलक्षण्यं, अभावस्यापि कैश्चिदपरोक्षत्वाभ्युपगमादित्याशङ्क्याह—**भावरूपश्चेति**। न चोक्तयुक्तिबलादेव रूप्यस्याप्युभयवैलक्षण्यसिद्धेरनुमानवैयर्थ्यमिति वाच्यम्। युक्तिसिद्धैकदेशदृष्टान्ते तथाविधैकदेशस्य धर्मित्वमादाय प्रयोगप्रवृत्तेरप्रत्यूहत्वात्। न खलु युक्तिः स्वातन्त्र्येण रूप्यस्योभयविलक्षणत्वं प्रमापयितुमलम्। न च प्रमितमुदाहरणमिति नियमः। प्रसिद्धस्यापि तथाभावात् इति भावः। रूप्यसंसर्गस्तुच्छोऽपि दोषादपरोक्षो भावरूपश्च भातीति

---

1. अविवक्षितत्वा *. इदमापाततः। तेनापि रूप्यसंसर्गस्यापि सत्वानधिकरणत्वे सति सदसत्वानधिकरणत्वस्य निराकर्तुमशक्यत्वात्। अन्यथा रूप्यवत्तत्संसर्गस्यापि बाधस्तस्य दुरुपपादस्स्यात्।

भाति। स कथं तुच्छः स्यात्?। स तुच्छोऽपि दोषात्तथा भातीति चेत् तर्हि रूप्यमपि तथैवेति विजितं माध्यमिकेन। न च दोषादपि नृशृङ्गं गोशृङ्गवद्भाति। रूप्यसंसर्गोऽप्यन्त्रास्तीति चेत्। कथं तर्ह्यन्यथाख्यातिः?। तस्य पुरोवर्तित्वभानादिति चेन्न। तस्याप्यसत्वे सत्वे चोक्तदोषप्रसङ्गात्। अतो रूप्यसंसर्गस्य सद्विलक्षणतयाभ्युपेतस्यासद्वैलक्षण्यं न्यायोपष्टब्धानुभवसिद्धम्।

नन्वस्यासद्वैलक्षण्यं सत्वमेवोतान्यत्। आद्ये सद्वैलक्षण्या-

---

शङ्कते—स तुच्छोऽपीति। संसर्गस्यासतो दोषात् भाने रूप्यस्यापि तुच्छस्यैव दोषादपरोक्षत्वेन सत्वेन च भानसम्भवादसत्ख्यातिः स्यादिति दूषयति—तर्हीति। किञ्च दोषस्य भानहेतुत्वे चक्षुरादिवददोष[1]तापातः* न चापरोक्ष[2]प्रतीतिहेतुर्दोषः। न हि नरविषाणस्य गोविषाणवदपरोक्षता दृष्टेत्याह—न चेति। रूप्यवत्तत्संसर्गस्यापि देशान्तरे सत्वान्न नरविषाणसाम्यमिति शङ्कते—रूप्येति। रूप्यतत्संसर्गयोः सत्वं चेदन्यथाख्यातिर्न सिध्येत्। न हि विद्यमानख्यातिरन्यथाख्यातिः। अति†प्रसङ्गादित्याह—कथमिति। नन्व[3]न्यस्यान्यात्मना ख्यातिरन्यथाख्यातिः। तथा च रूप्यसंसर्गस्यापुरोवर्तिनः पुरोवर्तित्वेनेह भानमन्यथाख्यातिरेवेति शङ्कते—तस्येति। भ्रान्तिप्रतिपन्नस्य संसर्गपुरोवर्तित्वस्य सत्वमसत्वं वा?। आद्ये भ्रान्तिबाधयोरयोगात्। द्वितीये च ख्यातिबाधयोरनुपपत्तेः नैवमित्युत्तरमाह—न तस्येति। दोषद्वयनिराकरणं निगमयति—अत इति। अन्यथाख्यातिसिद्धये रूप्यसंसर्गस्य सद्वैलक्षण्यमभ्युपेयम्। असद्वैलक्षण्यं तु तस्यापरोक्षानुभवसिद्धम्। अतो न दृष्टान्तस्य साध्यविकलता। नाप्यप्रसिद्धविशेषणतेत्यर्थः। असतोऽपरोक्षप्रतीत्याद्यनुपपत्तिर्न्यायः। अप्रसिद्धविशेषणत्वादिदूषणे समाहितेऽपि सदसद्वैलक्षण्यं रूप्यादेरशक्यसमर्थनमिति चोदयति—नन्विति। रूप्यस्य तत्संसर्गस्य च असद्विलक्षणत्वं सत्वमेव चेद्रूप्याद्यसद्विलक्षणमिति वदता [4]सदेव तदित्युक्तं भवति। अतो बाधः, दृष्टान्तस्य साध्यवैकल्यं च। रूप्यादेः सत्वेऽनिर्वाच्यत्वाप्राप्तेरित्याह—

---

1. दोषषोता * विमतो न दोषः भानहेतुत्वात् चक्षुर्वदिति भावः। 2. प्रतीतिदोषः हेतुदोषः † घटादिज्ञानानामप्यन्यथाख्यातित्वप्रसंगः अतिप्रसंगः। 3. अन्यस्यात्मना 4. सदेवं तदित्यादिकं

**सिद्धिः। द्वितीयेऽपि नानुभवतोऽपि तत्सिद्धिः। सद्वैलक्षण्यमप्यसत्त्वं चेन्नानिर्वाच्यतासिद्धिः। अतोऽन्यच्चेदप्रसिद्धम्। न। सतोऽबाध्याद-सतश्च तद्वादिप्रसिद्धतुच्छाद्वैलक्षण्यस्य प्रसिद्धत्वात्। रजतसंसर्गो हि भ्रान्तिसिद्धोऽतो बाध्योऽतुच्छः प्रसिद्धः। तुच्छमप्रमाणम्। अतः कथं तद्वैलक्षण्यसिद्धिः?। तद्वादिप्रसिद्धिबलादिति ब्रूमः। अन्यथा न ते प्रतिपक्षोपालम्भः सम्भवेत्। विपक्षे च रूप्यस्य दोषप्रयुक्तभानत्व-**

---

**आद्य इति।** रूप्यादेरसद्विलक्षणत्वमसदेव चेदसद्विलक्षणं रूप्यादीति ब्रुवता तदसदित्येवोक्तं भवति। तथा च तस्यापरोक्षानुभवतः सिद्धिरपि न स्यात्। संवेदनत्वहेतुराश्रयासि*द्धः। निदर्शनं चाश्रयशू†न्यमित्याह—**द्वितीये त्विति।** यच्च सद्वैलक्षण्यं रूप्यादेरुत्प्रेक्ष्यते तदप्यसत्त्वं वा सत्त्वं वा? आद्ये प्रतिज्ञाया बाधः, दृष्टान्तस्य साध्यवैकल्यं चेत्याह—**सद्वैलक्षण्यमपीति।** द्वितीये तु सत्त्वं तवासिद्धमिति बाधादिदोषतादवस्थ्यमित्यभिप्रेत्याह—**अत इति।** सद्वैलक्षण्यं बाध्यत्वं, असद्वैलक्षण्यं पुनरस्तीति प्रत्ययविषयत्वमात्रं, तदिदं सद-सद्वैलक्षण्यं रूप्यादौ साध्यते। न चैवं साधने बाधादिसम्भवः। रूप्यादेर-स्तिधीविषयस्यैव बाद्ध्यत्वाभ्युपगमात्, तत्संसर्गे चोक्तसाध्यस्य प्रसिद्धत्वादि-त्यभिसन्धाय सिद्धान्तयति—**न सत इति।** प्रतियोगिसिध्यर्थं विशिनष्टि—**तद्वदिति।** यद्यपि रूप्यसंसर्गस्य रूप्यवद्बाध्यत्वादबध्यात्सतो वैलक्षण्यं सिद्धम्। तथापि तुच्छत्वेनाभ्युपगतस्य तस्य नासद्वैलक्षण्यसम्भवः। तथा च कथं दृष्टान्तस्य साध्यविकलत्वसमाधिरित्याशङ्क्याह—**रजतेति।** अप्रामाणिकस्य न प्रतियोगित्व-मिति प्रत्यवतिष्ठते—**तुच्छमिति।** प्रतिपन्नस्य प्रतियोगित्वं न प्रामाणिकस्य, केवलव्यतिरेकाभावादिति परिहरति—**तद्वादिप्रसिद्धीति।** प्रामाणिकस्यैव प्रतिषेधप्रतियोगित्वाभिनिवेशे प्रतिपक्षस्यापि स्वपक्षवत् प्रामाणिकत्वादप्रतिषेध्य-त्वप्रसक्तिरित्याह—**अन्यथेति।** एवं बाधादि समाधाय दोषप्रयुक्तभानत्व-हेतोरप्रयोजकत्वं समाधत्ते—**विपक्षे चेति।** रूप्यादेर्निर्वाच्यत्वे प्रमाणा-

---

* असद्रूपस्यासद्विलक्षणस्य रूप्यस्य संवेदनविषयत्वायोगादित्याश्रयासिद्धिरिति भावः। † भ्रान्तिसिद्धतादात्म्यरूपनिदर्शनं प्रत्यसतो रूप्यस्याश्रयत्वायोगादिति यावत्।

भङ्गप्रसङ्गो बाधः। मिथ्यावस्तुनि सदसद्वैलक्षण्यवत् सदसत्त्वमप्यविरुद्धमित्यनिर्वचनीयताविरह इति चेन्न। उपजीव्यसदसद्वैलक्षण्येन विरोधात्। नापि सत्प्रतिपक्षता। प्रतिप्रयोगासम्भवात्।

अथोच्येत विमतं सत्, विधिप्रत्ययवेद्यत्वात् कुम्भवदिति। तत्र किं सदबाध्यं किं वा भावरूपम्। आद्ये विपक्षे बाधाभावः। विधिप्रत्ययवेद्यत्वं चासद्विलक्षणत्वेनाप्युपपद्यते। रूप्यसंसर्गेण च व्यभिचारः। तदन्यत्वे सतीति विशेष्यत इति चेन्न। निःस्वभावादन्यत्वायोगात्।

---

विषयत्वे सति ज्ञानविषयत्वानुपपत्तिर्बाधिकेत्यर्थः। लोके सत्त्वासत्त्वराहित्यमेकस्य विरुद्धमपि मायामये रूप्यादौ भवताभ्युपेयते। तत्रानुपपत्तेरलङ्कारत्वात्तथैव तत्र सत्त्वासत्त्वस्याविरुद्धत्वात्पुरोदेशे रूप्यमस्ति नास्ति चेति बाधकतर्कपराहतमनुमानमिति शङ्कते—**मिथ्येति**। दृष्टान्तत्वेनानिर्वाच्यत्वमुपजीव्य रूप्यादेः सदसत्त्वमापाद्यते। उपजीव्यविरोधे चोपजीवकं दुर्बलमिति प्रामाणिकैरभ्युपगमादुपजीव्यानिर्वाच्यत्वविरुद्धं सदसत्त्वं रूप्यादेरनुपपन्नमिति न पक्षबाधकतर्कपराहतिरिति परिहरति—**नोपजीव्येति**।

ननु रूप्यादि सत् भवितुमर्हति असद्विलक्षणत्वात् सम्प्रतिपन्नवदित्यनुमानापबा[1]धितं त्वदनुमानमिति। तत्राह—**नापीति**। वक्ष्यमाणरीत्या साध्यस्य दुर्वचत्वाद्रूप्यादिसंसर्गे च व्यभिचारादिति भावः। प्रतिप्रयोगान्तरमाशङ्कते—**अथेति**। कुम्भादिभागे सिद्धसाध्यत्वं निरसितुं विमतविशेषणम्। साध्यं विकल्प्य दूषयति—**तत्रेत्यादिना**। रूप्यस्य बाध्यत्वे बाधकाभावात्तस्याबाध्यत्वरूपसत्त्वासिद्धिरित्ययुक्तं, उक्तलक्षणसत्त्वाभावे विधिप्रत्ययानुपपत्तेरेव बाधकत्वादित्याशङ्क्याह—**विधिप्रत्ययेति**। विधिप्रत्ययवेद्यत्वहेतोर्दोषान्तरमाह—**रूप्यसंसर्गेणेति**। रूप्यसंसर्गान्यत्वविशिष्टविधिप्रत्ययविषयत्वहेतोर्न व्यभिचारोऽस्तीति शङ्कते—**तदन्यत्व इति**। प्रामाणिकस्यैव त्वन्मते व्यवहाराङ्गत्वाद्रूप्यसंसर्गस्य तदभावात्प्रतियोगित्वानुपपत्तेर्विशिष्टहेत्वसिद्धिरिति परिहरति—**न निःस्वभावादिति**। भावत्वं सत्त्वमिति पक्षं प्रत्याह—**द्वितीये**

---

1. बाधित्वानुमानं

**द्वितीये तु सिद्धसाधनम् । इष्यते ह्यविद्यातत्कार्ययोरसद्विलक्षणत्वरूपं भावत्वम् । तमोबुद्धिवेद्येनालोकाभावेन चानैकान्त्यम् । तदन्यत्वविशेषणं वेदान्तिनो व्यर्थम् ।**

**अस्तु तर्ह्यसद्विलक्षणत्वादिति हेतुः । न । अबाध्यत्वे साध्ये विपक्षे बाधाभावात् । अदोषप्रयुक्तभानत्वोपाधेः सद्भावाच्च । भावरूपत्वे तु साध्ये सिद्धसाधनत्वात् साध्याविशिष्टत्वाच्च । तस्मान्निष्प्रत्यूहं**

---

**त्विति** । सिद्धसाधनत्वमेव साधयति—**इष्यते हीति** । *आस्तिकमतमश्रित्य दोषान्तरं दर्शयति—**तमोबुद्धीति** । तमसोऽन्यत्वे सति विधिप्रत्ययविषयत्वं हेतुरित्याशङ्क्याह—**तदन्यत्वं चेति** । तेन तमसोऽपि भावत्वाभ्युपगमादिति भावः । रूप्यादेः सत्वे [1]साध्येऽसद्विलक्षणत्वं हेतूक्रियते । तस्य रूप्यसंसर्गे तमसि वा न व्यभिचारः । तयोरस्माभिरसत्वाङ्गीकारादिति शङ्कते—**अस्तु तर्हीति** । तथापि साध्यं सत्वमबाध्यत्वं वा भावरूपत्वं वेति विकल्प्य प्रथमं प्रत्याह—**नाबाध्यत्व इति** । असद्विलक्षणत्वमनिर्वाच्यत्वेनापि सम्भवतीति भावः । किं च कुम्भादौ हेतुसाध्यसम्बन्धो न स्वाभाविकः । *प्रामाणिकत्वस्य [2]तत्प्रयोजकत्वात् । न च साधनव्याप्तिः । रूप्यादेरप्रामाणिकत्वाभ्युपगमात् । नापि साध्याव्याप्तिः । यदबाध्यं तत् प्रामाणिकमित्यन्वयस्यात्मनि, यदप्रामाणिकं तद्बाध्यमिति व्यतिरेकस्य च रूप्यादिसंसर्गे सिद्धत्वात् । नापि व्यतिरेकासिद्धिः । विमतं नाबाध्यं अप्रामाणिकत्वात् रूप्यादिसंसर्गवदित्यनुमानादित्यभिप्रेत्य प्रकारान्तरेणाप्रयोजकत्वमाह—**अदोषेति** । विकल्पान्तरं निरस्यति—**भावेति** । विकल्पद्वयेऽपि साधारण दूषणमाह—**साध्येति** । असद्विलक्षणत्वं हि सत्वमेव, तृतीयप्रकारानभ्युपगमात् । ततो हेतोः साध्याभेदे सन्दिग्धासिद्धिः । साध्यस्य हेत्वभेदे सन्दिग्धसाध्यपक्षाभावादाश्रयासिद्धिरित्यभिसन्धिः । दोषप्रयुक्तभानत्वहेतुमुपसंहरति—**तस्मादिति** । यद्यपि [3]सदसद्वैलक्षण्यमनिर्वाच्यत्वमिति पक्षे रूप्यादौ तदुपपद्यते । तथापि ज्ञानापनोद्य-

---

*. तार्किकमतमाश्रित्येत्यर्थः । 1. यदसद्विलक्षणत्वं हेतूक्तं * अनेन प्रामाणिकत्वमुक्तानुमाने उपाधिरित्युक्तं भवति । 2. तस्य प्रयोजकत्वात् 3. सदसदित्यधिकः पाठः

रूप्यस्य सदादिवैलक्षण्यसाधनम् ॥

### ज्ञाननिवर्त्यत्वरूपमप्यनिर्वचनीयत्वं सम्भवीति कथनम्

ज्ञानापनोद्यत्वलक्षणानिर्वचनीयत्वसाधनेऽप्येषैव रीतिः। अतो भ्रमसिद्धं रूप्याद्यनिर्वचनीयमभ्युपेयमिति सिद्धम्। तच्चानिर्वचनीयोपादानजन्यमिति न्याय्यम्। उपादानसमानरूपं ह्यभावेतरत्सर्वं कार्यं प्रसिद्धम्।

### अनिर्वचनीयमज्ञानमेवोपादानमिति कथनम्

तदुपादानमज्ञानमेवेति चान्वयव्यतिरेकाभ्यां निश्चीयते। शुक्त्याद्यज्ञाने सत्येव रूप्यादिभ्रमभावः। तदभावे चाभावो नियतो

---

त्वानिर्वाच्यत्वपक्षे रूप्यादौ तदसिद्धिः। संसर्गस्यैव तदपनोद्यत्वाङ्गीकारादित्याशङ्क्य विमतं ज्ञानापनोद्यं अप्रामाणिकत्वात्सम्प्रतिपन्नवदित्याह---**ज्ञानेति**। *कार्यस्यानिर्वाच्यत्वमुपसंहरति---**अत इति**।

सम्प्रति †कारणस्यानिर्वाच्यत्वं प्रतिपादयितुं प्रक्रमते---**तच्चेति**। कार्यस्यानिर्वाच्यत्वेऽपि कारणस्य निर्वाच्यत्वमिति विभागमाशङ्क्य परिहृति---**उपादानेति**। प्रध्वंसस्योपादेयत्वात्तदुपादानस्य मृदादेर्भावत्वात्तत्र वैरूप्यमस्तीत्याशङ्क्याह---**अभावेतरदिति**। तथापि कथं रूप्याद्युपादानमज्ञानमिति सिद्धान्तसिद्धिरत आह---**तदुपादानमिति**। किं तत्र प्रमाणं तदाह---**अन्वयेति**। अन्वयव्यतिरेकावेव विशदयति---**शुक्त्यादीति**। अन्वयमात्रस्याकार्यकारणयोरपि दर्शनान्नियमार्थमेवेत्यवधारणम्। [1]काकतालीयव्यतिरेकस्याकिञ्चित्कर[2]त्वादभावं विशिनष्टि---**नियत इति**। उक्तयोरन्वयव्यतिरेकयोरनुभवं प्रमाणयति---**दृश्यत इति**। ननु त्रिविधे दोषे सत्येव रूप्यादिभ्रमो नान्यथेत्यन्वयादिनियमादस्तु तस्यैव रूप्याद्युपादानत्वम्? अत आह---**दोषस्येति**। दोषान्वयव्यतिरेकयोस्तर्हि का गतिरित्याशङ्क्य निमित्तविषयत्व-

---

* अविद्याकार्यस्य रूप्यादेरित्यर्थः † रूप्यादिकारणस्याज्ञानस्येत्यर्थः 1. कुककालीय 2. अकिञ्चित्करत्वा.... विशि

दृश्यते। दोषस्यान्वयादिनियमेऽपि नोपादानता। किन्तु निमित्ततैव। अन्यथा सत्योपादानं रूप्यं बाध्यं न स्यात्। एतेनात्मान्तःकरणोपादानता व्याख्याता। तच्चाज्ञानमनाद्यभ्युपेयम्। न हि कार्यं कार्यान्तरस्योपादानं न्याय्यम्। अनन्वयात्पिण्ड इव घटस्य। कारणानन्वये च कार्यं स्वतन्त्रं स्यात्। तदभावेऽपि चिरं तिष्ठेत्।

---

मित्याह—**किं त्विति**। ननु निमित्तादुपादानमभ्यर्हितं, कार्यस्य तदव्यतिरेकादित्यन्वयादेरुपादानविषयतैव युक्तेत्याशङ्क्याह—**अन्यथेति**। [1]तथात्वे च बाधधीविरोध इति [2]भावः। बाधावबोधाधिगताऽसत्यत्वस्य रूप्यादेः सत्योपादानत्वे सत्यत्वप्रसञ्जनेन स्वयूथ्यादिमतमपि निरस्तमित्याह—**एतेनेति**। रूप्याद्युपादानस्यानिर्वाच्यत्वमज्ञानत्वं च प्रसाध्यानादित्वं प्रसाधयति—**तच्चेति**। कार्यस्यैव मृदादेर्घटादिकार्योपादानत्वोपलम्भान्नानादित्वमुपादानस्य। उपादानविषयतैव युक्तेत्याशङ्क्याह—**न हीति**। तत्रापि मृदाद्यवच्छिन्नात्मगतानाद्यविद्यैव घटाद्यात्मना विवर्तते।

"*कथ्यते मृदवस्थात्मजातो मृज्जो यथा घटः।

इति इष्टसिद्धिकारैरुक्तत्वादित्यर्थः। कार्यं कार्यान्तरस्य नोपादानमित्यत्र हेतुमाह—**अनन्वयादिति**। यथा पिण्डो घटे अनुगतिरहितो न तस्योपादानं, एवं कार्यमपि कार्यान्तरस्य नोपादानं, अनुगमविगमादित्यर्थः। ननूपादानमप्युपादेये, नान्वेष्यति, का हानिरिति चेत्तत्राह—**कारणेति**। तथा च, कार्यकारणभावभङ्गप्रसङ्ग [3]इति भावः। उपादानस्याधिष्ठानत्वेनोपादेयेष्वन्वयाभावे दोषान्तरमाह—**तदभावेऽपीति**। उपादेयनाशे क्वचिदुपादाननाशस्य हेतुत्वात्तन्नाशदशायामुपादेयं विनश्यदवस्थं तिष्ठत्येवेत्याशङ्क्याह—**चिरमिति**। कार्यस्य कारणे समवायान्न स्वातन्त्र्यं, नापि कारणनाशे निराश्रयस्य [4]चिरमवस्थितिः। कुम्भकुलालयोस्तु समवायाभावा-

---

1. न तथा च 2. शेषः *शुक्त्यवस्थात्ममोहोत्था रूप्यधीश्शुक्तिमोहजा।" इति पूर्वार्धम्। शुक्त्यवच्छिन्नचैतन्याश्रितमोहजन्या रूप्यादिभ्रमाः शक्तिमोहजन्या उच्यन्ते। यथा मृदवच्छिन्नचैतन्याश्रितमोहपरिणतो घटो मृज उच्यत इत्यर्थः। 3. शेषः। 4. चिमे....वस्थितिः

कुलालाभाव इव कुम्भः । समवायसम्बन्धान्नैवमिति चेत् । तर्हि कारभावे क्षणमात्रमपि न तिष्ठेदविशेषात् । मैवम् । कारणनाशनाश्यत्वादिति चेन्न । कारणाद्भेदे हि तन्नाशः कुलालनाशवत् कार्यस्य नाशको न स्यात् । किञ्च समवायः स्वतन्त्रो न कार्यं गमयेत् । अतिप्रसङ्गात् । न परतन्त्रः अनवस्थानात् । न च तस्य स्वपरनिर्वाहकता । तदसम्भवस्य

---

दुपपन्नं कुम्भस्य स्वातन्त्र्यमिति शङ्कते—**समवायेति** । यदि कार्यं कारणे समवेतं तर्हि कारणाभावे कार्यस्य क्षणमात्रमपि नावस्थानं सिध्येत् । तथा च तवाभ्युपगमहानिरित्याह—**तर्हीति** । कारणतन्त्रं कार्यं तदभावे निराश्रयं क्षणमात्रं तिष्ठति न चिरमित्यत्र विशेषादर्शनादिति हेतुमाह—**अविशेषादिति** । विशेषं शङ्कते—**मैवमिति** । तथा च हेतुकार्यनाशयोः पूर्वोत्तरत्वाद्धेतुनाशकाले कार्यं विनश्यदवस्थं तिष्ठतीत्यर्थः । कार्यकारणयोरभेदो भेदो वा ? आद्ये कारणनाशादन्यः कार्यनाशो न सिध्येदिति मन्वानो द्वितीयं दूषयति—**न कारणादिति** । कुलालादौ घटाद्यसमवायान्न तन्नाशो घटादिनाशहेतुः । मृदादौ तु घटादेः समवायान्मृदादिनाशो घटादिनाशस्य भवति हेतुरित्याशङ्क्य समवायिनाशेऽपि समवेतनाशोऽनियतः । सामान्ये व्यभिचारादित्याशयेनाह—**किं चेति** । कार्येषु नियमश्चेत्तथापि समवायस्स्वतन्त्रः परतन्त्रो वा ? नाद्य इत्याह—**समवाय इति** । कारणे कार्यस्य सम्बन्धत्वप्रत्ययासिद्धेस्तत्समवायस्योभयानधीनत्वादित्यर्थः । तद्व्यतिरेकिणापि नियमश्चेदनियमकथोच्छित्तिरित्याह—**अतिप्रसङ्गादिति** । समवायस्य समवायिभ्यामसम्बन्धे घटकत्वाभावः, पदार्थान्तरवत् । अन्यथा तस्यापि तदापत्तिरित्यर्थः । द्वितीयं निरस्यति—**न परतन्त्र इति** ।

ननु समवायः सम्बन्धिभ्यां सम्बन्धे सम्बन्धान्तरं नापेक्षते [स्वयमेव] सम्बन्धिसम्बन्धन[1] समर्थत्वात् । न हि तस्मिन्सति सम्बन्धिनावसम्बन्धिनौ भवतः । अतो नानवस्थेति । नेत्याह—**न चेति** । समवायमभ्युपेत्य तस्य नियामकत्वं निराकृतम् । सम्प्रति तस्य सत्वमेव नास्तीत्याह—**समवाये चेति** । "इह तन्तुषु पट" इति प्रत्यक्षमस्तीति चेन्न । समवायादाधारबुद्धेराधेयबुद्धे-

---

1. परमार्थत्वात्

वक्ष्यमाणत्वात् । समवाये च न मानम् । किञ्च इहेति प्रत्ययस्तु मतान्तरानुसारेणापि युज्यते । यदपि मतम्—अनन्वितमेव कारणम् । स्वतन्त्रमेव च कार्यम् । क्षणिकयोरेव कार्यकारणताभ्युपगमादिति तदतिमन्दम् । लोकप्रसिद्धिविरोधात् । स्थिरस्यैव हि कारणता प्रसिद्धा न क्षणिकस्य ।

## क्षणिकस्यैव कारणतेति वादोपस्थापनम्

नन्तु तथापि क्षणिकस्यैव कारणता न्याय्या । तथाहि—न तावत्स्थिरस्य क्रमकारिता । समर्थस्य क्षेपायोगात् । अथ समर्थस्यापि सह-

---

रुभयबुद्धे[1]र्वाऽसिद्धेः, तन्तुपटयो[*]रविशेषेण तत्[2]प्रतीतेराध्यासिकतादात्म्यविषयत्वाच्चेत्याह—**इहेति** । समवायसाधनानुमानमप्युक्तयुक्त्या निरस्यमित्यपिशब्दार्थः ।

कार्यं कार्यान्तरस्य नोपादानं, अन्नवयादित्यावेदितं, तत्र सुगतमतमुत्थापयति—**यदपीति** । कार्ये चेदधिष्ठानत्वेन कारणं नान्वेति कार्यं तर्हि स्वतन्त्रं स्यादित्याशङ्क्येष्टापत्तिमाह—**स्वतन्त्रमिति** । तर्हि कारणाभावेऽपि कार्यं चिरं तिष्ठेदिति, ने[†]त्याह—**क्षणिकयोरिति** । लोकप्रसिद्धिमाश्रित्य दूषयति—**तदतिमन्दमिति** । कारणतेत्युपलक्षणं, कार्यतेत्यपि द्रष्टव्यम् । प्रसिद्धिरपि न्यायविरोधे देहात्मप्रसिद्धिवत् बाध्येतेति बौद्धः शङ्कते—**नन्विति** । क्षणिकस्य कारणत्वे न्यायं दर्शयितुं [3]स्थिरे तदभावमभिदधाति—**तथा हीति** । स्थिरं कारणमेकमेव कार्यं जनयति बहूनि वा ? प्रथमे तस्यैकस्मिन्नेव क्षणे समुत्पत्तेरुत्तरक्षणे तदसम्भवे अर्थक्रियाकारित्वलक्षणसत्वाभावात् । द्वितीयेऽपि तस्य क्रमकारित्वमक्रमकारित्वं वा ? नाद्य इत्याह—**न तावदिति** । अयमर्थः—यदि स्थिरं कारणं क्रमेण बहूनि कार्याणि करोति, तदा तदाद्यकार्यजननकाले कार्यान्तरे शक्तमशक्तं वा? आद्ये युगपत्सर्वकार्यप्रसवप्रसक्तेरुत्तरक्षणे क्रियाभावादसत्वप्रसक्तिरिति । युगपदशेषकार्यजननशक्तमपि स्थिरं कारणं क्रमभावितत्तत्सहकारिसम्बन्धमपेक्ष्य क्रमेण तत्तत्कार्यं जनयतीति शङ्कते—**अथेति** । सहका-

---

1. बुद्धे या सिद्धौ * अविशेषेण, अभेदेन, 2. तत्प्राप्तेः † सर्वक्षणिकत्ववादिनं प्रति कार्यस्य चिरावस्थानापत्तिर्न शक्यते कर्तुमिति भावः । 3. युक्त्यन्तरे

कारिलाभानां क्रमभावित्वात् क्रमकारित्वोपपत्तिरिति मतम्। न। सह-कारिणामपि स्थायित्वे तल्लाभानां क्रमभावित्वायोगात्।

किञ्च नैकस्य क्रमकारिता युक्ता। अकरणेऽसत्वप्राप्तेः। अर्थ-क्रियाकारित्वमेव हि सत्वम्। युगपच्च सर्वकार्यकरत्वेऽनन्तरमर्थक्रिया-कारित्वलक्षणसत्वाभावात् क्षणिकात्वप्राप्तिः। तस्मात् क्षणिकमेव कारणमभ्युपेयम्। तदयं प्रयोगः—"यत्सत्तत्क्षणिकं, यथा जलधरः सन्तश्च भावा" इति।

**क्षणिककारणतावादस्य सप्रपञ्चं प्रतिक्षेपः**

न। क्षणिकस्यैव कारणत्वायोगात्। तथाहि—न क्षणिकं कार्योपजनहेतुः कार्यकालेऽभावात्। भावे क्षणिकत्वहानिः। तद-

---

रितत्सम्बन्धानामसिद्धेर्न कार्यान्तरं सिध्येत्। न हि तत्रापि सहकारिभेदः। अनवस्थानात्। द्वितीयेऽपि सर्वदाऽभावान्न क्रमस्तेषामिति दूषयति—**न सहकारिणामिति**। यद्याद्यकार्योत्पादनकाले कारणं न कार्यान्तरे शक्तं, तदा कालान्तरेऽपि कार्यान्तरानुत्पत्तेरसत्वप्रसङ्गः। पूर्वं तच्छक्त्यभावे भूयस्तद्भावे हेत्वभावादिति मत्वाह—**किं चेति**। विकल्पान्तरं निरस्यति—**युगपच्चेति**। स्थिरस्य क्रमाक्रमाभ्यां कारणत्वाभावे फलितमाह—**तस्मादिति**। उक्ताया युक्तेरनुग्राह्यं प्रमाणमाह—**तदयमिति**।

सिद्धान्ती क्षणिकस्य कारणत्वं प्रतिक्षिपति—**न क्षणिकस्येति**। अयो[1]गमेव साधयति—**तथा हीति**। कारण कार्यकालेऽस्ति न वा? नान्त्य इत्याह—**न क्षणिकमिति**। क्षणिकत्वरक्षणाय कार्यक्षणे कारणमसच्चेन्नर-विषाणवन्न कार्यजनकता। कार्यदशायामसत्वाविशेषादित्यर्थः। कार्यजनक-त्वाय तत्काले कारणं सच्चेत्तस्य क्षणद्वयावस्थानात्पक्षक्षतिरित्याद्यं पक्षं प्रति-क्षिपति—**भाव इति**। अव्यवहितपूर्वक्षणवर्तिनो जनकत्वप्रयोजकत्वात्कार्यकाले कारणसत्वमप्रयोजकमित्याशङ्क्याह—**तदभावेऽपीति**। उक्तं तु जनकत्व-प्रयोजकमनुपादेयम्। पूर्वक्षणे व्यभिचारादिति भावः। कारणस्य प्रागभावे कार्यं

---

1. प्रयोगमेव

भावेऽपि चेत्कार्यं स्यात् प्रागूर्ध्वं च सदा स्यादविशेषात् । प्रध्वंसक्षण एव विशेष इति चेत् किं तस्मिन् क्षणे विशेषः, किं वाऽसौ क्षणो विशेषः । उभयत्रापि कारणाभावात् तस्य न स्याद्विशेषः । द्वितीये तु कालस्यापि कारणतापत्तिरतिरिच्यते । क्षणलक्षणविशेषणस्य कार्यनियामकताश्रयणाम् । पौर्वापर्यमात्रेण च कार्यकारणत्वे सर्वः पूर्वः सर्वस्योत्तरस्य यत्किञ्चिद्वा यस्य कस्यचित्कारणं स्यात् । विशेषहेत्वसम्भवात् ।

देशनियमान्न दोष इति चेन्न । देशनियमस्याप्यसम्भवात् । तथाहि--किमेकदेशता कार्यकारणयोः, किं वा पूर्वापरदेशता ? । आद्ये देशस्य स्थायित्वं स्यात् । द्वितीये तु देशयोर्देशान्तराभावात् ।

---

न जायते । तत्प्रध्वंसे तु तन्निष्पद्यते । तथा च कथं सदा कार्यप्रसक्तिरित्याशङ्क्याह—**अविशेषादिति** । उक्ते विशेषे नियामकाभावात्कार्यस्य सदातनत्वे क्षणिकत्वक्षतिरित्यर्थः । कार्यस्य नैव सदातनत्वं, अयोग्यत्वादिति मन्वानः शङ्कते —**प्रध्वंसेति** । प्रध्वंसक्षणपदं सप्तम्यन्तं प्रथमान्तं च गृहीत्वा विकल्पयति—**किं तस्मिन्निति** । पक्षद्वयेऽपि कारणस्य कार्यस्य वा नासौ विशेषः स्यात् । कारणस्य नष्टत्वात्कार्यस्यानुत्पन्नत्वात् । असतश्च निस्स्वभावस्य विशेषवत्वानुपपत्तेरित्याह—**उभयत्रेति** । यस्मिन्क्षणे कारणप्रध्वंसस्य कारणस्य वा कार्यस्य वा विशेषस्तदैव कार्यमिति नियमादिति पक्षे दोषान्तरमाह—**द्वितीये त्विति** । ननु कालो वा तत्प्रयुक्तनियमो वा नेष्यते । पूर्वं कारणमुत्तरं कार्यमिति नियमात् । अतो न कार्यस्य सदातनत्वमित्याशङ्क्यातिप्रसङ्गान्तरमाह---**पौर्वापर्येति** । कालमनङ्गीकुर्वता पूर्वोत्तरत्वमेव वक्तुमशक्यम् । तद्भावस्य तन्निमित्तत्वात् । कथञ्चित् पूर्वोत्तरत्वेऽपि न कार्यकारणत्वनियमः । तद्धेत्वसिद्धेरित्यभिसन्धिः ।

ननु कालतो नियमाभावेऽपि हिमालयमलयाचलनियततालतमालादितरुनिकरवत् पूर्वदेशं कारणं उत्तरदेशं कार्यमिति देशतो नियमान्नातिप्रसक्तिरिति शङ्कते—**देशेति** । देशकृतनियमस्याप्यसम्भवान्नातिप्रसङ्गसमाधिरिति समाधत्ते—**न देशेति** । असम्भवमेव साधयति—**तथा हीति** । कार्यकारणयोरेकदेशत्वपक्षं प्रत्याह—**आद्य इति** । पूर्वोत्तरक्षणयोः कारणतदिराश्रयत्वेन

**भावे चानवस्थापत्तेः कालतः पौर्वापर्यं वाच्यम्। तथा च सति देशयोरपि पौर्वापर्यानियमात्तत्सम्बन्धिनोः कार्यकारणयोरनियमस्तदवस्थः। अतो न क्षणिकस्य कारणता न्याय्या। यदुक्तं स्थिरस्य क्रमकारिता न न्याय्या, समर्थस्य क्षेपायोगादिति। तदसत्। स्वतः पूर्वापरीभूतस्य कालस्य क्रमभाविकार्यसहकारित्वात् स्थिरस्य क्रमकारित्वोपपत्तेः। न च कालं तत्पौर्वापर्यं च नेच्छामीति वाच्यम्। क्षणिकयोः पौर्वापर्यं कार्यकारणतेत्याश्रयणात्। यदपि नैकस्य क्रमकारिता युक्ता। अकरणेऽसत्त्वप्राप्तेरित्युक्तम्। तदप्यसत्। तथाहि— अर्थक्रियाकारित्वं सत्त्वं किं वस्तुस्वरूपं किं वा तद्धर्मः?। आद्ये न**

---

देशस्यावस्थानात्क्षणिकत्वहानिरित्यर्थः। कार्यकारणयोः पूर्वापरदेशत्वपक्षं दूषयति—**द्वितीये त्विति**। पूर्वापरदेशता चेत् कार्यकारणयोरिष्टा तदा पौर्वापर्यं देशयोः देशतो वा कालतो वा। नाद्य इत्याह—**देशयोरिति**। विपक्षे दण्डमाह—**भावे चेति**। द्वितीयं परिशिनष्टि—**कालत इति**। भवत्वेवमित्याशङ्क्य कालस्य त्वयानभ्युपगमान्नैवमित्याह—**तथा सतीति**। क्षणिकस्य कारणत्वायोगमुपसंहरति—**अतो नेति**। स्थिरस्यापि कारणत्वं निरस्तमित्याशङ्क्याह— **यदुक्तमिति**। न तावत्कालस्य पौर्वापर्यं कालतो युक्तं, तस्य कालाभावात्। नापि तद्देशतो विभुत्वात्तस्येत्याशङ्क्याह— **स्वत इति**। स्वभावेन पूर्वापरीभूतकालस्य क्रमभावि कार्यं प्रति स्थिरे कारणे सहकारितेत्ययुक्तं, कालतत्पौर्वापर्ययोः सुगतेनानङ्गीकारादित्याशङ्क्याह—**न चेति**। तत्र हेतुमाह-**क्षणिकयोरिति**। क्षणिकयोः पौर्वापर्यं कार्यकारणतेति वदता क्षणिकयोरिति कालस्य तयोः पौर्वापर्यमिति तत्पौर्वापर्यस्य चाश्रयणादिति योजना। क्षणमात्रावच्छिन्नं हि क्षणिकम्। तथा च विशेषणत्वेन क्षणशब्दवाच्यस्य कालस्य तत्पौर्वापर्यस्य चाभ्युपगतिरवश्यंभाविनीति भावः। युक्त्यन्तरं सुगतसङ्गीतमनूद्य निराकरोति—**यदपीति**। अर्थक्रियाकारित्वं सत्वमित्यस्य दुर्निरूपत्वादिति हेतुमाह—**तथा हीति**। सत्वस्य वस्तुस्वरूपत्वे स्वात्मनि वृत्तेरनुपपत्तेस्तस्य वस्तुनि व्याप्यवर्तनायोगा[1]दुक्तानुमाने हेत्वसिद्धिरापतेदित्याह—**आद्य इति**। किं च घटादि-

---

1. उत्तराङ्गमाने

तत् क्षणिकत्वसाधनं भवेत्। अपक्षधर्मत्वात्। दृष्टान्तेऽननुगमाच्च। द्वितीये सत एव तद्धर्मो नासतः। अतिप्रसङ्गात्। अतस्तदभावेऽपि नासत्वमिति क्रमकारित्वोपपत्तिः।

ननूक्तं क्षणिकत्वे मानम्। न। तस्य बहुदोषदुष्टत्वात्। तथाहि– न तावद्भवदभिमता क्षणिकता क्वचित्प्रसिद्धा। अतोऽप्रसिद्धविशेषणता। अत एव च व्याप्तिविरहः। दृष्टान्तश्च साध्यविकलः। किञ्च तत्सत्वं

---

स्वरूपसत्वस्य जलधरादौ नानुगतिः। प्रतिवस्तु स्वरूपव्यावृत्तेः। अतो दृष्टान्तस्य साधनविकलत्वान्न क्षणिकत्वानुमानमित्याह—**दृष्टान्त इति**। अर्थक्रियाकारित्वं वस्तुधर्मश्चेत्तदा वस्तुनोऽर्थक्रियासम्बन्धात्प्राग[1]सत्वं सत्वं वा? नाद्यः। तस्य निस्स्वभावस्य धर्मित्वे धर्मस्य स्वातन्त्र्यप्रसङ्गादित्याह—**द्वितीये त्विति**। द्वितीये तु वस्तुनोऽर्थक्रियाकारित्वाभावेऽपि नासत्वं, तद्धर्मित्वसिद्धये प्रागपि तदुत्पत्तेर्वस्तुनः सत्वाभ्युपगमादित्याह—**अत इति**। अकरणे सत्यसत्वप्राप्त्यभावे फलितमाह—**इति क्रमेति**। स्थिरं कारणमाद्यकार्यजन्मकाले कार्यान्तरे शक्तं चेत् तदैव तदपि जनयेत्। अशक्तं चेन्न कालान्तरेऽपि तज्जनयेदिति कथं क्रमकारितेति चेन्न। क्रमभावितत्सहकारिसहितस्यैव तत्तत्कार्ये शक्तत्वाभ्युपमात्। न च सहकारितत्सम्बन्धानां कार्यत्वादिविकल्पदोषौ। कार्याणामेव तेषामाद्यकार्यजन्मकाले जन्मनियमाभावात्तत्तत्कार्यहेतूनां तेषां क्रमभावस्य स्वतः पूर्वापरीभूतकालबलादेव लाभादिति भावः। स्थिरस्य क्रमकारित्वमुक्तानुमानविरुद्धमिति शङ्कित्वा दोषान्तरमाह— **नन्वित्यादिना**। तानेव बहून्दोषानुदाहरति—**तथा हीति**। पूर्वापरविभागविकलकालकलावस्थितिलक्षणा हि क्षणिकता क्षणभङ्गवादिनो विवक्षिता। सा च न क्वचिदपि प्रसिद्धेत्यप्रसिद्धविशेषणतेत्याह—**न तावदिति**। सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गस्य धर्मिभेदेन व्याप्तिमुपजीव्य प्रकृतव्याप्तिसिद्धेस्तद्वशाद्विशेषणप्रसिद्धिरित्याशङ्क्याह–**अत एवेति**। कुसूलनिहितसहकारिसमवहितबीजयोर्नाद्वैतवादे भेदः। जनकत्वाजनकत्वभेदस्य चासिद्धेः। तथा चोक्तव्याप्त्यसिद्धेर्न ततो विशेषण-

---

1. प्रागसत्वं वा

यद्यर्थक्रियाकारित्वं तच्च वस्तुस्वरूपं चेत् तदाऽपक्षधर्मता। दृष्टान्ते चाननुगम इत्युक्तम्। धर्मश्चेद्विपक्षे बाधाभावः। अथ सत्वमसद्व्यावृत्तिः, सापि स्वरूपं चेदुक्तो दोषः। न चासद्रूपैवासद्व्यावृत्तिः। अनिर्वचनीया चेन्नेष्यते। अतो नोक्तसाध्यसाधने ते सम्भवतः। बाधकतर्कबलात् साध्यसिद्धिरिति चेन्न। तदसम्भवस्य दर्शितत्वात्। न

---

सिद्धिरित्यभिसन्धिः। जलधरादौ विशेषणप्रसिद्धिमाशङ्क्य तस्यापि भवदभिमतक्षणिकत्वं नास्माकं सम्मतमित्याह—**दृष्टान्तश्चेति**। हेतूक्तं सत्वमर्थक्रियाकारित्वं वा असद्व्यावृत्तिर्वेति विकल्पयति—**किं चेति**। तत्र प्रथममनुवदति—**यदीति**। तद् वस्तुनः स्वरूपं धर्मो वेति विकल्प्याद्ये पूर्वोक्तौ दोषौ स्मारयति—**तच्चेति**। कल्पान्तरमनूद्य हेतोरप्रयोजकत्वमाह—**धर्मश्चेदिति**। स्थायित्वेऽपि सत्वं संभवति। तस्य क्षणिकत्वेन व्याप्तिराहित्यस्योक्तत्वादिति भावः। विकल्पान्तरमुत्थापयति—**अथेति**। असद्व्यावृत्तिरपि वस्तुनः स्वरूपं धर्मो वेति विकल्प्याद्ये हेतोरपक्षधर्मता, दृष्टान्ते चाननुगतिरित्याह—**सापीति**। द्वितीये तु सा सति वा, असति वा सदसति वा, उभयविलक्षणे वा? नाद्यः। सा सद्रूपा वस्तुधर्मश्चेति पक्षे, विपक्षे बाधाभावस्योक्तत्वात्। सत्वव्यावृत्तिलक्षणासत्वसिद्धौ तद्व्यावृत्तिस्वरूपसत्वसिद्धिः, तत्सिद्धौ च तद्व्यावृत्यात्मकासत्वसिद्धिरित्यन्योन्याश्रयत्वाच्च। न द्वितीयः। प्रतियोगितन्निवृत्योरैक्यायोगादिति मत्वाह—**न चेति**। न तृतीयः, विरोधात्। नापि[1] चतुर्थः अपसिद्धान्तादित्याह—**अनिर्वचनीया चेदिति**। सुगताभिमतसत्वक्षणिकत्वयोः व्याप्तिराहित्यस्योक्तत्वा[2]त्तदीयमनुमानमनुपपन्नमिति निगमयति—**अतो नेति**। स्थिरस्य क्रमाक्रमाभ्यां कारणत्वानुपपत्तौ विवक्षितं क्षणिकं कारणत्वेन सिध्यतीति मतमनुसृत्य शङ्कते—**बाधकेति**। मैवम्। स्थिरस्य कारणत्वे बाधकतर्कस्यासंभवात्तस्य क्रमकारित्वोपपत्तेरुक्तत्वादित्याह—**न तदसंभवस्येति**। स्यादेतत्, स्थिरस्य सहकारिसमवधानात्क्रमकारित्वमिष्टम्। सहकारिसमवधानं च स्थिरस्योपकरोति न वा। न चेन्नापेक्ष्येत। उपकरोति चेदुप-

---

1. नापि च ध्वान्तादित्याह
2. दिति भावः इत्यधिकः पाठः

**च तर्कस्य स्वातन्त्र्येण साध्यसाधकता। तर्को हि व्यभिचारशङ्कामुपाधिशङ्कां वा शमयन् व्याप्तिसिद्धिद्वारेणानुमानाङ्गं, न तु साध्यं साधयन्। तर्हि यद्यदा यज्जननसमर्थं तत्तदा तज्जनयति यथा सामग्री। समर्थाश्चामी भावा इति क्षणिकत्वे मानमस्ति इति चेन्न। यत्तच्छब्दनिर्दिष्टस्य दृष्टान्तेऽननुगमात्। कालादिकारणसमग्रभूतोपाधेश्चात्रास्माकं भावात्।**

---

कारो वस्तुनो भिन्नोऽभिन्नो वा? भिन्नश्चेत्तस्यैव प्राप्ताप्राप्तविवेकेन कारणत्वमिति वस्तुनस्त*थात्वाभावः। अभिन्न[1]श्चेत् पूर्वभाविनो वस्तुनः सम्प्रतितनोपकाराभिन्न[2]तायोगाद्वस्त्वन्तरोत्पत्तेः क्षणिकस्यैव कारणत्वप्रसङ्गात्। न चोपकारस्य वस्तुतावन्मात्रत्वम्। सहकारिसमवधानात्पूर्वमपि तद्भावात्तदापि कार्यजन्मप्रसङ्गात्। न चोपकारोऽनिर्वचनीयः, तस्यैव करणत्वापत्तेः, वस्तुनः केवलव्यतिरेकाभावात्। तदेवं स्थिरस्य सहकारिसमवधा[3]नात्क्रमकारित्वानुपपत्तौ क्षणिकस्यैव कारणत्वमिति। तत्राह—**न चेति। स्वातन्त्र्येणेति।** अनुग्राह्यमानं विनेत्यर्थः। तर्हि तर्कस्यानादरः। नेत्याह—**तर्को हीति।** अयं भावः–सहकारिकृतोपकारस्य भेदोऽभेदो वेति विकल्पानुपपत्तिः। तस्यानिर्वाच्यस्य लोकसिद्धकारणतानिराकरणकारणाभावात्। न च केवलव्यतिरेकाभावाद्वस्तुनोऽकारणता, वस्तूपकारयोर्भेदानभ्युपगमात्। उपकारकारणतैव वस्तुकारणतेत्यङ्गीकारात्। तत्कारणत्वस्य चानिर्वाच्यत्वाभ्युपगमादिति। तर्कतो विवक्षितसाध्यासिद्धिश्चेत्तर्हि विधान्तरेणानुमानात्तत्सेत्स्यतीति शङ्कते—**तर्हीति।** सति सहकारिसमवधाने समर्थो भावो नान्यदेति विरुद्धधर्मसंसर्गाद् दहनतुहिनवत् भेदसिद्धौ उक्तव्याप्तिसिद्धेस्तदेवानुमानं क्षणिकत्वसाधकमिति भावः। विमताः समर्थक्षणे कार्यं जनयन्ति समर्थत्वात्सामग्रीवदिति वा स्वतन्त्रमनुमानमत्रोक्तम्। अद्वैतवादे नेयमाशङ्केत्याशयेनाह—**नेति।** व्याप्तिनिर्देशस्थयत्तत्पदाभ्यां कार्यकारणविशेषो निर्दिश्यते तन्मात्रं वा?। आद्ये निदर्शनमुभयशून्यमित्याह—**यत्तदिति।** द्वितीये दोषमाह—**कालादीति।** कालदेशादीनां सम्पूर्णत्वं, तदेव सामग्र्या जनकत्वे प्रयोजकम्। न च साधनव्याप्तिः पक्षेतरत्वं वा, त्वन्मते

---

* कारणत्वाभावः 1. नैवमित्यधिकः पाठः 2. अभिन्नतयोत्पत्त्ययोगात् 3. पूर्वमपितद्भावात् तदापि

**कालकारणे तत्रोपाधेरभावात् साध्याव्याप्तिरिति चेन्न। तत्रोपाधिवत्सा-ध्यस्याप्यभावात्। कालविशेषे जनयतीति साध्यम्। तदेति निर्देशात्। न च कालकारणं कालविशेषे तज्जनयति। न चायं व्याप्तिनिर्देशः। कथम्?। यदि समर्थं जनयतीति साध्यं विशेष्यते। तदा भागे सिद्ध-साधनता। अथ शक्तिसमकालं जनयतीति साध्यम्। न। अप्रसिद्ध-विशेषणत्वादेरत्रापि तुल्यत्वात्।**

**यत्तु–करणाकरणयोर्विरुद्धयोराश्रयभेदः साध्यते, तदेकविषययो-**

---

कालाभावात्। तर्हि नोपाधेरुभयसम्प्रतिपन्नता। सत्यम्। अन्यतरोपाधिरयमि-त्याह—**अस्माकमिति**। यत्र साध्यं तत्रोपाधिरित्यन्वयभङ्गमाशङ्क्य परि-हरति—**कालेत्यादिना**। काले साध्यभावं वक्तुं साध्यस्वरूपं निर्दिशति—**कालविशेष इति**। कथं पुनरिदं साध्यं काले नास्ति? तस्य सामर्थ्यमपेक्ष्य जनकत्वादिति, तत्राह—**न चेति**। कालस्य कालान्तराभावादित्यर्थः। यद्यदा यज्जननसमर्थं तत्तदा तज्जनयतीति व्याप्तिनिर्देशः। अतो न कालविशेषस्य साध्यान्तर्भाव इत्याशङ्क्याह—**न चायमिति**। तस्य साध्यानन्तर्भावे सम-र्थस्य जनकत्वं साध्यं भवेत्। ततश्च तस्य जनकत्वमात्रं वा साध्यं शक्तिसम-कालं वा जनकत्वं, नाद्यः। भागे सिद्धसाधनत्वात्। कासाञ्चिद् भावव्यक्तीनां जनकत्वं विना विनाशेऽपि कासाञ्चित्तद्भावादित्याह—**तदेति**। द्वितीयमनूद्य दूषयति—**अथेत्यादिना**। इदमपि साध्यं काले न सिध्यति। कालस्य कालान्तराभावात्। शक्तिसमकालं तत्र जनयतीति वक्तुं अशक्यत्वाच्छक्तेश्च स्थिरत्वे पूर्वोक्ता भागे सिद्धसाधनता तदवस्थैव। सर्वदा तत्काले तज्जनकत्वं तु स्वमतहतमनुभवविरुद्धं च। न च क्षणभङ्गवादिनः शक्तिः स्थिराऽस्ति। स्वरसभङ्गुरत्वे च शक्तेरप्रसिद्धविशेषणत्वादि पूर्वोक्तं सर्वमापतेदित्यर्थः। करणाकरणे भिन्नाधिकरणे मिथो विरुद्धत्वाच्छीतोष्णवत्। तथा च कुसूलस्थं बीजं सहकारिमध्यमध्यासीनात् भिद्यते विरुद्धधर्मसंसृष्टत्वात् दहनतुहिनवदिति मतमनुभाषते—**यत्त्विति**।[1] किं करणाकरणयोरेकविषययोर्भिन्नाश्रयत्वं, किं

---

1. करणयोः

श्चेत् सिद्धसाधनमसिद्धिश्च । भिन्नाश्रययोरविरोधाश्रयणात् । भिन्नविषयत्वेऽपि सिद्धसाधनमसिद्धिर्व्यभिचारश्च एकक्षणाश्रयाभ्याम् । अविशेषितत्वेऽप्येष एव दोषः । अस्तु तर्ह्यप्रसिद्धविशेषणत्वादिपरिहाराय ज्वालोहरणम् । न । तस्याः स्वरसभङ्गुरतानभ्युपगमात् । आशुतरविनाशिता हि तस्याः क्षणिकता[1] मता । तथैव साध्यमप्यस्त्विति चेन्न । आशुतरविनाशकारणत्वोपाधिहतत्वात् । न चायमुपाधिः साधनव्या-

---

वा भिन्नविषयोः आहोस्विदविशेषितयोरिति विकल्प्याद्यं प्रत्याह—**तदेकेति** । अङ्कुरादिविषयकरणाकरणयोर्बीजादौ गगनादौ च व्यवस्थितत्वादित्यर्थः । एकविषयानेकाश्रयकरणाकरणयोर्मिथो विरोधासिद्धेस्स्वरूपासिद्धिरिति दोषान्तरमाह—**असिद्धिश्चेति** । द्वितीये दोषमाह—**भिन्नविषयत्व इति** । कुम्भादिकरणस्य मृदादौ[2]स्तम्भाद्यकरणस्य रासभादौच भावादित्यर्थः । दोषान्तरमाह—**असिद्धिरिति** । नानाविषयानेकाश्रयकरणाकरणयोरविरोधादित्यर्थः । दूषणान्तरमाह—**व्यभिचारश्चेति** । एकाश्रितानेकविषयकरणाकरणयोर्भावाभावत्वेन मिथो विरोधेऽपि भिन्नाश्रयत्वाभावादित्यर्थः । [3]**एकक्षणाश्रयाभ्या**मेकभावाश्रितभिन्नविषयकरणाकरणाभ्यामिति यावत् । तृतीयेऽपि सिद्धसाध्यतादि तुल्यमित्याह—**अविशेषितत्वेपीति** । एतेन जनकाजनकबीजभेदानुमानमपि प्रत्यादिष्टम् । जनकत्वाजनकत्वभेदविरोधयोरसिद्धेरिति । क्षणिकत्वानुमाने चेदप्रसिद्धविशेषणत्वादिदूषणं प्रसरति तर्हि तन्निरासाय दृष्टान्तान्तरमेष्टव्यमिति शङ्कते—**अस्तु तर्हीति** । किं क्षणिकता स्वरसभङ्गुरता किं वाशुतरविनाशिता आहो क्षणमात्रवृत्तित्वम् । नाद्यः अप्रसिद्धविशेषणत्वादेरुद्धारासिद्धेरित्याह—**न तस्या इति** । कथं तर्हि ज्वाला क्षणिकेति परीक्षकस्वीकारस्तत्राह—**आशुतरेति** । द्वितीयमादत्ते—**तथैवेति** । व्याप्यत्वासिध्या परिहरति—**नाशुतरेति** । तैलस्नेहादिज्वालाकारणस्य प्रतिक्षणं सूक्ष्मापक्षयनिरीक्षणात् ज्वालायामाशुतरविनाशित्वं, तत्कारणवत्वात् न तु सत्वादित्यर्थः । साधनव्याप्तिं निरस्यति—**न चेति** । विमतं आशुतरविनाशकारणशालि सत्वात्

---

1. हि इत्यधिकः पाठः 2. कुंभाद्यकरणस्य 3. एकक्षणाभ्या

पक्षः। कुम्भादौ साधनसत्वेऽप्युपाधिविरहात्। कुम्भादावपि सत्वेनोपाधिसाधने च ते दर्शनहानिः। निर्हेतुर्हि विनाशो वैनाशिकैराश्रीयते। अथ मतम्—क्षणमात्रवृत्तित्वं क्षणिकत्वं साध्यम्। न च तदप्रसिद्धम्। क्षणकुम्भसम्बन्धे प्रसिद्धत्वात्। कुम्भवृत्तेरपि सम्बन्धस्य क्षणमात्रवृत्तित्वं क्षणान्तरावृत्तित्वादिति। किमत्र क्षणमात्राश्रयत्वं विवक्षितं, किं वा क्षणमात्रावच्छिन्नसत्वम्? नाद्यः। अपसिद्धान्तापत्तेः। न हि निरालम्बनवादिनः कालालम्बनं विश्वमिति रहस्यम्। नापि द्वितीयः। दृष्टान्ते साध्यविरहात्। क्षणसम्बन्धस्यापि क्षणमात्रसत्वानभ्युपगामात्। सम्बन्धिनाशादुत्तरकालीनोऽपि न सम्बन्धनाश इष्यते। यत्वन्ते क्षय-

---

ज्वालावदित्याशङ्क्याह—**कुम्भादावपीति**। दर्शनहानिमेव विशदयति—**निर्हेतुरिति**। न च दर्शितोपाधेः साध्याव्याप्तिः। साध्ये सत्युपाधेर्ज्वालायामुपाध्यभावे च साध्याभावस्य सन्ताने सिद्धेः। विमतं नाशुतरविनाशि तत्कारणरहितत्वात् सन्तानवदिति व्यतिरेकसिद्धिरित्यभिसन्धिः। तृतीयमुत्थापयति—**अथेति**। तथापि कथमप्रसिद्धविशेषणत्वादिसमाधिस्तत्राह—**न चेति**।

ननु सम्बन्धस्य द्विनिष्ठत्वात् तस्य कुम्भेऽपि वृत्तेरसिद्धं क्षणमात्रवृत्तित्वमत आह—**कुम्भवृत्तेरिति**। उक्तसाध्यवत्यनुमाने साध्यं विकल्पयति—**किमत्रेति**। क्षणमात्राश्रयत्वं [[1]कुंभादेस्साध्यमिति पक्षं प्रत्याह—**नाद्य इति**। अपसिद्धान्ततामेव विशदयति—**नहीति**। क्षणमात्रावच्छिन्नसत्वं] कुम्भादेः साध्यमिति पक्षं प्रत्याह—**नापीति**। दृष्टान्तस्य साध्यविरहित्वं प्रकटयति—**क्षणेति**। अनभ्युपगममेवाभिनयति—**सम्बन्धीति**। युगपदेव नाशे भेदाश्रयाश्रयिभावौ तयोरसंभावितौ स्यातामिति भावः। विमता घटक्षणा नाशव्याप्ताः घटक्षणत्वात् अन्त्यघटक्षणवत्। तथा च सर्वेषां घटक्षणानां नाशव्याप्तेर्घटस्य न स्थायितेति चोद्यमनुद्रवति—**यत्त्विति**। किं घटसत्ताक्षणे तन्नाशः साध्यते तदव्यवहितोत्तरक्षणे वेति विकल्पयति—**तत्रेति**। आद्यमनूद्य

---

1. अयं ग्रन्थभागो मातृकायां नोपलभ्यते।

दर्शनादादौ क्षयानुमानम्, तत्र यदि कुम्भसत्ताक्षणे कुम्भक्षयो विवक्षितः, तदैकस्यैकदैव भावाभावौ इति व्याघातः। अव्याघाते च कालान्तरेऽपि तद्भावाविरोधात् क्षणिकत्वासिद्धिः।

अथ यः सत्ताक्षणस्स भङ्गक्षणात् पूर्वक्षणः यथा संप्रति*पन्नक्षणः। संश्रायमादिक्षण इत्यनुमानम्। न। विपक्षे बाधाभावात्। साध्यस्य च सिद्धत्वात्। कस्यचिद्भङ्गक्षणात् पूर्वक्षणात्वस्य सिद्धेः। भङ्गकारणसामग्रीक्षणत्वोपाधिसद्भावाच्च उक्तनीत्या च न साधनव्याप्तिः। किञ्च

---

दूषयति—यदीति। एकस्य युगपद् भावाभावयोरविरोधे यदा घटक्षयस्तदापि तत्सत्वसम्भवात्तस्य स्थायित्वमापतेदित्याह—अव्याघाते चेति। द्वितीयमवलम्बते—अथेति। घटस्येत्यध्याहारः। घटस्यानन्तरक्षणे नाशो नामानुपलम्भो वा स्यात् असत्वं वा? आद्ये क्षणिकत्वासिद्धिः, विद्यमानस्यैवानुपलम्भसम्भवात्। द्वितीये दृष्टान्तस्य साध्यशून्यता, कदाचिदपि घटस्यासत्वानङ्गीकारादव्यक्तस्य कारणात्मनावस्थानादित्यभिप्रेत्याह—नेति। भवतु विमतस्य घटसत्ताक्षणत्वं घटभङ्गक्षणात्पूर्वक्षणत्वं तु मा भूत्। तथा च बाधकाभावादप्रयोजको हेतुरित्याह—विपक्ष इति। किं च विमतानां घटसत्ताक्षणानां यस्य कस्यचित् भङ्गक्षणात्पूर्वक्षणत्वं वा विवक्ष्यते घटभङ्गक्षणाद्वेति विकल्प्याद्ये सिद्धसाध्यत्वमाह—साध्यस्येति। न द्वितीयः। घटभङ्गहेतुसामग्रीसहितक्षणत्वाद् दृष्टान्तस्योक्तसाध्यवत्वं नोक्तहेतोरित्यप्रयोजकत्वादित्याह—भङ्गेति। चकारो द्वितीयविकल्पस्य प्रथमविकल्पेन सह निराससमुच्चयार्थः। विमतघटसत्ताक्षणेषु घटभङ्गकारणसामग्रीसहितक्षणत्वं घटसत्ताक्षणत्वेन साध्यमित्याशङ्क्याह—उक्तेति। निर्हेतुर्हीत्यादौ दर्शितराद्धान्तविरोधप्रकारेणेत्यर्थः। चशब्देन साध्योपाध्योरन्वयव्यतिरेकव्याप्तिं सूचयति। विमता घटसत्ताक्षणा नाव्यवहितानन्तरक्षणे घटनाशव्याप्ताः घटभङ्गहेतुसामग्रीरहितक्षणत्वात् घटोत्पत्त्यव्यवहितपूर्वक्षणवदिति व्यतिरेकसिद्धिरिति द्रष्टव्यम्। क्षणिकत्वसाधकानुमानानां प्रत्येकं दूषणमुक्त्वा साधारणं दूषणमाह—किं चेति। प्रत्यभिज्ञा बाधिका न भवति। अप्रमाणत्वात् भ्रान्तिज्ञानवदिति मन्वानस्तदप्रामाण्यमा-

---

* अन्त्यक्षणः

न किञ्चिदप्यनुमानं क्षणभङ्गे अंगं धारयति। प्रत्यभिज्ञाविरोधात्। अथ यत्संस्कारजं तदप्रमाणं, यथा स्मरणमथवा प्रत्यभिज्ञा ज्वलाप्रत्यभिज्ञावदित्यनुमीयते । न । विपक्षे बाधाभावात्, सप्रतिपक्षत्वाच्च । तथाहि—विमता प्रत्यभिज्ञा प्रमाणम्। अबाधितानवगतापरोक्षबुद्धित्वात्। यथाभिज्ञेति प्रयोगः।

अथास्या अबाधितत्वमसिद्धम्। न। अनुमानेनाप्यस्या बा-

---

शङ्कते—**अथेति**। अनुभूतमात्रविषयत्वं संस्कारमात्रजन्यत्वं वा स्मृतेरप्रामाण्ये प्रयोजकमित्याशङ्क्य सामग्रीभेदाद्विरुद्धधर्मसंसर्गाच्च प्रत्यभिज्ञा न [1]प्रमाणं सम्प्रतिपन्नवदित्याह—**अथवेति**। प्रत्यभिज्ञाप्रामाण्ये बाधकाभावादुक्तहेतोरप्रयोजकत्वात् भवति क्षणिकत्वप्रसाधकं प्रयोगजातं प्रत्यभिज्ञाप्रहतमित्याह—**न विपक्ष इति**। न च सामग्रीभेदाद्विरुद्धधर्मसंसर्गाच्च प्रत्यभिज्ञाज्ञानमेकमसिद्धमिति साम्प्रतम्। सम्प्रयोगसंस्कारयोः सम्भूय सामग्रीत्वात्। मिलिताभ्यां च नेत्रलिङ्गाभ्यामयं पर्वतो नाग्निमानित्येकं [2]ज्ञानं जायते। [3]तत्रैव वह्निमानयमिति च [*]पारोक्ष्यापरोक्ष्ये लक्ष्येते। तथा च घटादिप्रत्यभिज्ञाज्ञानस्यैकत्वेन प्रामाण्यात्तद्विरुद्धं प्रकृतमनुमानमशेषमपीत्याशयः। दूषणान्तरमाह—**सत्प्रतिपक्षत्वाच्चेति**। [दूषणान्तरमेव विशदयति—**तथा हीति**।] ज्वालाप्रत्यभिज्ञाभागे बाधपरिहारार्थं विमतेति विशेषणम्। भ्रमानुवादस्मृतिविषयविशेषेषु च व्यभिचारनिरासार्थं हेतुविशेषणानि। अपरोक्षविशेषणमव्यावर्तकं, प्रत्यभिज्ञाप्रत्यक्षत्वप्रकटनार्थम्। विशेषणासिद्धिमाशङ्कते—**अथेति**। किमनुमानेनास्य बाध्यत्वं किं वा मानान्तरेण। न तावत्क्षणिकत्वसाधकमनुमानमस्या बाधकम्। [†]अन्योन्याश्रयत्वापातात्। न च विपर्ययेऽपि तत्प्रसक्तिः, प्रत्यभिज्ञाप्रामाण्यस्या-

---

1. प्रत्यभिज्ञात्वात् इत्यधिकः पाठः    2. अनुमानमित्यधिकः पाठः
3. एकत्रेत्यधिकः पाठः

* एकत्रैव पर्वतविशेष्यकज्ञाने वह्न्यभावांशे आपरोक्ष्यस्य, वह्न्यंशे पारोक्ष्यस्य चेति विरुद्धधर्मद्वयवत्वं लक्ष्यत इति भावः।

† सिद्धे क्षणिकत्वानुमानप्रामाण्ये, प्रत्यभिज्ञाया बाध्यत्वं, सिद्धे च प्रत्यभिज्ञाया बाध्यत्वे क्षणिकत्वानुमानस्य प्रामाण्यमित्यन्योन्याश्रय इति भावः।

ध्यत्वानुपलब्धेः । इयमितरप्रत्यभिज्ञावत् बाध्येति साध्येतेति चेन्न, दोषजन्यत्वोपाधिसद्भावात् । न च साधनव्याप्तिः । कुम्भादिप्रत्यभिज्ञाया दोष जत्वासम्प्रतिपत्तेः । न ह्यत्र कश्चिदपि दोष उपपद्यते । निर्बीजा च दोषकल्पनाऽतिप्रसङ्गिनी । न च ज्वालानामिव कुम्भादेर्निरन्तरोत्पत्तिः । सादृश्यं च दो[1]षो नानुमातुं शक्यः । चक्रकापत्तेः । तथाहि—कुम्भादेः क्षणिकत्वे सिद्धे प्रत्यभिज्ञाया दोषजत्वबाध्यत्वप्रणाडिकया अप्रामाण्यसाधनमसत्प्रतिपक्षं सिद्ध्येत् । ततः क्षणिकत्वानुमानाबाधः ततः क्षणिकत्वसिद्धिरिति ।

अपि चाप्रमाणमपि कुम्भादिप्रत्यभिज्ञा स्मृतिवन्न यथार्था

---

स्माभिः स्वतस्त्वाभ्युपगमात् । न द्वितीयः । मानान्तरेणापि प्रत्यभिज्ञाया बाध्यत्वानुपलम्भादित्यभिप्रेत्य परिहरति—**नानुमानेनेति** । कुम्भादिप्रत्यभिज्ञा, बाध्या, प्रत्यभिज्ञात्वात् ज्वालाप्रत्यभिज्ञावदिति शङ्कते—**इयमिति** । अप्रयोजकत्वेन दूषयति—**न दोषेति** । दोषजन्यत्वस्य प्रत्यभिज्ञाव्यापकत्वमाशङ्क्य व्यासेधति—**न चेति** । कुम्भादिप्रत्यभिज्ञा दोषजन्या प्रत्यभिज्ञात्वात् सम्मतवदित्यनुमानमाशङ्क्याह—**न हीति** । प्रकृतप्रत्यभिज्ञाया हेतुदोषानुपलम्भपराहतो हेतुरित्यर्थः । अदृष्टस्यापि दोषस्य कल्पनामाशङ्क्य कल्पकाभावान्मैवमित्याह—**निर्बीजा चेति** ।

ननु कुम्भादयः सादृश्यादिदोषवन्तः प्रत्यभिज्ञाविषयत्वात् ज्वालावदित्यनुमानादस्ति दोषजन्यत्वोपाधेः साधनव्याप्तिरित्याशङ्क्याह—**न चेति** । चक्रकापत्तिमेव प्रकटयति—**तथा हीति** । न च दोषजन्यत्वोपाधेः साध्याव्याप्तिः । अन्वयस्य ज्वालाप्रत्यभिज्ञायां व्यतिरेकस्य च प्रमाणे सिद्धत्वात् । न चाविद्यायां व्यतिरेकस्य व्यभिचारः । तन्मते तदनादित्वाभावेन तस्या दोषजन्यत्वसम्भवादुपाधेरपि साध्यवद्*व्यतिरेकात्तदुपाधेरनवद्यत्वात् । कुम्भादिप्रत्यभिज्ञा न बाध्यार्था, दोषाजन्यत्वात्सम्प्रतिपन्नवदिति व्यतिरेकसिद्धिरिति द्रष्टव्यम् । इतश्च कुम्भादिप्रत्यभिज्ञा प्रमाणमित्याह—**अपि चेति** । अप्रमाणतया तवाभिप्रेतापि सा यथार्था स्यादयथार्था वेति विकल्प्याद्यं दूषयति—

---

1. दोषोऽनुमातुं शक्यः * अव्यतिरेकात्—तत्र सत्वादित्यर्थः ।

भवतेष्यते । कुम्भादेः क्षणिकत्वाभ्युपगमात् । अयथार्थत्वे च तस्या यथार्थत्वप्रसिद्धिबाधः । प्रसिद्धिः अप्रमाणं न बाधिकेति चेन्न । उक्तोत्तरत्वात् । उक्तं ह्यप्रमाणमप्युपजीव्यं विरोधिबाधकमिति । किञ्च अप्रमाणमपि सामर्थ्यात्साधकं चेद्विरोधिबाधकं किं न स्यात् । प्रसिद्धेरसाधकत्वे चाश्रयासिद्धिः । न हि भवतः प्रत्यभिज्ञास्वरूपं मानतः सिध्यति । मानाच्च तत्सिद्धौ स्थिरत्वमपि तद्विषयो मानात्सिध्येत् । न हि विषयमपास्य ज्ञानं ज्ञातुं शक्यम् ।

"सति चैवं प्रत्यभिज्ञा न यथार्थेति याऽनुमा ।
साधर्मिणोऽग्रहग्रस्ताऽप्रमाणं सुतरां भवेत् ॥"

तदेवं प्रत्यभिज्ञा प्रमाणमबाधितप्रसिद्धिबलादेवेति सिद्धम् ।

---

**अप्रमाणमपीति** । विमता न यथार्था प्रत्यभिज्ञात्वात् संमतवदिति द्वितीयमाशङ्क्याह—**अयथार्थत्वे चेति** । प्रत्यभिज्ञाया यथार्थत्वप्रसिद्धिरबाधिका अप्रमाणत्वान्नभोनीलिमप्रसिद्धिवदिति शङ्कते—**प्रसिद्धिरिति** । तथापि त्वदीयमनुमानं तामुपजीवति न वा । न चेदाश्रयासिद्धिः । उपजीवति चेत्तदुपजीविनस्तदनुमानस्य ततो दुर्बलत्वात्तथा बाध्यत्वं सिध्यतीत्याह—**नोक्तेति** । विज्ञानवादपरीक्षायां उक्तमेव स्मारयति—**उक्तं हीति** । प्रसिद्धेर्बाधकत्वे हेत्वन्तरमाह—**किं चेति** । अप्रमाणत्वेनाभिप्रेतापि प्रसिद्धिर्विषयसाधिका न वा इति विकल्प्याद्यं प्रत्याह—**अप्रमाणमपीति** । **सामर्थ्यादिति** । निर्विषयप्रसिध्यानुपपत्तेरित्यर्थः । द्वितीयं दूषयति—**प्रसिद्धेरिति** ।

नन्वाश्रयस्य प्रमाणप्रसिद्धत्वान्नाश्रयासिद्धिरिति चेन्नेत्याह—**न हीति** । तस्य मानतः सिद्धौ कानुपपत्तिरिति तामाह—**मानादिति** । तत्र हेतुमाह—**न हीति** । 'अर्थेनैव विशेषो हि निराकारतया धिया'मिति न्यायादित्यर्थः । प्रत्यभिज्ञानाख्यधर्मिणो मानसिद्धत्वे दोषान्तरं श्लोकेन दर्शयति—**सति चेति** । प्रत्यभिज्ञाया मानसिद्धत्वे तद्विषयस्थिरत्वस्यापि तेन सिद्धेरुक्तानुमानं धर्मिग्राहकमानविरोधादुक्तयथार्थत्वप्रसिद्धिविरोधाच्च सुतराममानमित्यर्थः । प्रत्यभिज्ञाया मानत्वमुपसंहरति—**तदेवमिति** । परोदीरितानुमाननिराकरणं

क्षणभङ्गानुमानञ्च बहुदोषदुष्टमुपेक्षणीयम् । यदपि—क्षणभङ्गे प्रत्यक्षं प्रमाणमिति प्रलपितम्, तदतिमन्दम् । बौद्धानां हि निर्विकल्पकमेव प्रत्यक्षं प्रमाणम् । तच्च निर्विकल्पाविनाभूतम् । यथाहुः—"नाध्यक्षं नि"श्चयं विने"ति । न च क्षणभङ्गाकारो विकल्पस्य कस्यापि गोचरः । तद्विपरीतमेव स्थायित्वं सर्वजनानाम् । क्षणिकाकारा एव विकल्पाः कुम्भाद्युत्पत्तिनाशनैरन्तर्यास्कन्दितास्तथा नावभासन्त इति चेत् । अहो विचित्रमस्य पाण्डित्यम् । यदयमनुभवाविषयमपि कल्पनया साधयति । किञ्च ज्ञानस्य क्षणमात्रसत्त्वं न तद्गोचरः । क्षणा-

---

निगमयति—**क्षणभङ्गेति** । ननु मा भूदनुमानं क्षाणिकत्वसाधकं, प्रत्यक्षं तु भविष्यति । अवर्तमानताया वर्तमानग्राहिणा तेन व्यावर्तितत्वादिति । तदेतदनुवदति—**यदपीति** । किं प्रत्यक्षं वर्तमानक्षणे क्षणान्तरासम्बन्धमस्य बोधयति किं वा क्षणान्तरेष्विति वक्तव्यम् । आद्ये वस्तुनो न क्षणिकता । स्थिरस्यापि युगपत्क्षणद्वयसम्बन्धाभावात्, क्षणद्वयस्य युगपदसत्वात् । न द्वितीयः । वर्तमानमात्रग्राहिणोऽध्यक्षस्यावर्तमानक्षणान्तरसम्बन्धिसत्वासत्वयोरुदासीनत्वात् । अतो न, प्रत्यक्षं क्षणिकत्वे प्रमाणमित्याह—**तदतिमन्दमिति** । प्रकारान्तरेण प्रतिवदितुं तदीयपरिभाषामनुभाषते—**बौद्धानामिति** । भवतु निर्विकल्पकमेव प्रमाणं, किं तावतेत्यत आह—**तच्चेति** । निर्विकल्पकं सविकल्पकाविनाभूतमित्यत्र प्रमाणमाह—**यथाहुरिति** । अध्यक्षं निर्विकल्पकनिश्चयः सविकल्पकं विना नास्तीत्यर्थः । अस्तु तर्हि क्षणभङ्गाकारनिर्विकल्पकस्य सविकल्पकाविनाभूतत्वं, नेत्याह—**न चेति** । न केवलं प्रत्यक्षं क्षणभङ्गं न गृह्णाति, किं तु क्षणिकत्वविपरीतं स्थिरत्वमेव गोचरयतीत्याह—**तद्विपरीतमिति** । सर्वजनानां विकल्पस्य गोचर इति सम्बन्धः । क्षणभङ्गवादी शङ्कते—**क्षणिकेति** । कुम्भोऽयमित्यादिसविकल्पानां क्षणभङ्गाकारत्वे तथैव प्राप्तिरित्याशङ्क्य विषयोत्पत्तिनाशनैरन्तर्यदोषसंसर्गान्नैवमित्याह—**कुम्भादीति** । सोपहासमनुभवविरोधमादर्शयन्नुत्तरमाह—**अहो विचित्रमिति** । तिष्ठतु तावत् ज्ञेयस्य क्षणिकत्वमक्षणिकत्वं वा ? ज्ञानस्य न क्षणिकत्वमित्याह—**किंचेति** । ज्ञानस्य क्षणान्तरासत्वं तस्यैव वा गोचरः ज्ञानान्तरस्य वा ? नाद्य

न्तरभाविनो नाशस्य तद्गोचरत्वाभावात् । नाप्यन्यस्य । प्रतियोगिन-स्तत्रास्फुरणात् । तस्यापरोक्षस्फुरणाच्च नाशासिद्धेः । तदेवं न क्षणभंगे प्रत्यक्षमपि मानं सम्भवेत् । तस्मात् क्षणभङ्गुरं कारणं कार्यञ्चेत्यादि निष्प्रमाणकमुपेक्षणीयम् । अतो न कार्यमुपादानमनन्वयादिति युक्त-मुक्तम् । तस्मादनाद्यनिर्वाच्याज्ञानमेवोपादानं सविषयस्य भ्रमस्येति सिद्धम् ।

### अज्ञानमभावात्मकमिति वादोपस्थापनम्

ननु ज्ञानाभाव एवाज्ञानं प्रसिद्धम् । न त्वनिर्वाच्यम् । अभा-

---

इत्याह—**ज्ञानस्येति**। नाशक्षणे ग्राहकाभावात् । तद्भावे तन्नाशासिद्धेरिति हेतुमाह—**क्षणान्तरेति**। न द्वितीय इत्याह—**नापीति**। ज्ञानस्य ज्ञानान्तरा-विषयत्वाद्विशिष्टनाशस्यापि तद्विषयत्वायोगादिति हेतुमाह—**प्रतियोगिन इति**। तत्रेति मानान्तरपरामर्शः। किं च नीलपीतादिविषयव्यभिचारेऽपि स्वरूपेण ज्ञानस्याव्यभिचारेणापरोक्षतया स्फुरणान्न तस्य नाशः सिध्यति। अतोज्ञाननाशे न प्रमाणमन्वेषणीयमित्याह—**तस्येति**। विमतं नाशशून्यं उपाधिपरामर्श-मन्तरेणाविभाव्यमाननाशत्वादाकाशवदित्याशयः। यद्वा तस्य [1]ज्ञानस्यापरोक्षत्वेन स्फुरणान्नाशासिद्धिः। न हि तस्य नाशस्तेनैव गृह्यते, भिन्नकालत्वात्। नापि ज्ञानान्तरेण अनवस्थानात्। अतो न कस्यचिदपि ज्ञानस्य नाशः सम्भवती-त्याह—**तस्येति**। क्षणभङ्गे प्रमाणनिराकरणमुपसंहरति—**तदेवमिति**। प्रमाणनिरसनफलं प्रमेयनिरसनं निगमयति—**तस्मादिति**। आदिशब्देन कारणस्याप्यनन्वितत्वं कार्यस्य स्वतन्त्रत्वमित्यादि गृह्यते। क्षणभङ्गभङ्गे फलितमाह—**अतो नेति**। परमप्रकृतमुपसंहरन्वादान्तरप्रसङ्गं प्रकुरुते—**तस्मादिति**।

अज्ञानस्यानिर्वाच्यत्वमसहमानः शङ्कते—**नन्विति**। ज्ञानप्रागभाव-प्रध्वंसयोर्न जानामीत्यज्ञानत्वेन लोके व्यवहारदर्शनादित्याह—**प्रसिद्धमिति**। किं चाज्ञानमिति ज्ञानपदेन समस्यमानस्य नञस्तदभावस्तदन्यस्तद्विरोधी वार्थः।

---

1. ज्ञानान्तरस्य

वश्च नोपादानं, तदाश्रयकार्यासम्भवात् । यदापि ज्ञानादन्यदज्ञानं तदापि ज्ञेयं ज्ञाता ज्ञानफलं वा स्यात् । न तदप्यनिर्वाच्यम् । अथ ज्ञानविरोध्यज्ञानं तत्संशयादि स्यात् । तच्च नानिर्वाच्यम् । नापि रूप्योपादानम् । न चान्यदज्ञानं प्रसिद्धम् । प्रमाणस्य वा गोचरः । तस्मात्प्रसिद्धमज्ञानं ज्ञानभाव एवेत्यभ्युपेयम् । तदिमौ प्रयोगौ—विमतमभावः भावविलक्षणत्वात् । ज्ञानप्रतियोगित्वे सति नञर्थत्वाच्च कुम्भाभाववत्, [1]ज्ञानप्रध्वंसवच्चेति ।

## अज्ञानस्याभावात्मताखण्डनम्

उच्यते । न तावदज्ञानं ज्ञानाभावः अभावमानागम्यत्वात् ।

---

आद्ये ज्ञानाभावस्यापि ज्ञेयाभाववन्नानिर्वाच्यतेत्याह—न त्विति । रूपाद्युपादानत्वादज्ञानस्याभाववैलक्षण्यमित्याशङ्क्य नञ्पदमेवानुसरन्नाह—अभावश्चेति । द्वितीयं प्रत्याह—यदापीति । तृतीयमनूद्य दूषयति—अथेत्यादिना । संशयादेरपि मदिष्टान्तर्भावान्नेदमनिष्टमित्याशङ्क्य निराचष्टे—तच्चेति । प्रसिद्धभावस्वभावत्वव्याकोपादित्यर्थः । संशयादेरनिर्वाच्यरूप्योपादानत्वादनिर्वाच्यत्वमित्याशङ्क्याद्रव्यत्वान्नैवमित्याह—नापीति । अज्ञानशब्दार्थनिरूपणया तस्यानिर्वाच्यत्वं दूषयित्वा मानाभावेनापि दूषयति—न चेति । अनिर्वाच्यमित्यर्थः । अज्ञानप्रसिद्धेस्तर्हि को विषयस्तत्राह—तस्मादिति । तत्रैवानुमानद्वयमुपन्यस्यति—तदिमाविति । साध्याविशिष्टत्वमाशङ्क्य हेत्वन्तरमाह—ज्ञानेति। अधर्माब्राह्मणादौ व्यभिचारं निरसितुमाद्य विशेषणम् । [2]संशयादौ व्यभिचारं परिहर्तुं—संशयादिव्यतिरिक्तत्वे सति ज्ञानविरोधित्वादिति हेत्वर्थः । प्रथमानुमाने दृष्टान्तः कुम्भाभाववदिति । [[*]द्वितीयानुमाने दृष्टान्तः ज्ञानप्रध्वंसवदिति । सिद्धान्तमुपक्रमते—उच्यत इति । अज्ञानस्य ज्ञानाभावानात्मत्वे मानमाह—नतावदिति ।] भावमानागम्यज्ञानप्रागभावे व्यभिचारं निवारयितुं

---

1. अज्ञानप्रध्वंसवच्च 2. संशयस्य निश्चयज्ञानविरोधित्वेन निश्चयज्ञानप्रतियोगित्वस्य, विरोधात्मकनञर्थत्वस्य च सत्वादभावत्वस्य चाभावात्तत्र व्यभिचार उपपाद्य इति भाति । * अयं भागो मातृकायां नोपलभ्यते ।

संप्रतिपन्नवत् । अभावो ह्यभावस्य प्रत्यक्षस्य वा विषयः परैरिष्यते । अज्ञानं च न मानगम्यम् । माननिवर्त्यत्वात् । निवर्तकादन्यगम्यं स्यादिति चेन्न । निवर्त्यनिवर्तकजातीययोरपि विषयविषयिभावादृष्टेः । न हि भ्रमोत्थरूप्यं परमतं वा मानान्तरस्यापि गम्यम् । तथात्वेऽनिषेध्यत्वप्रसङ्गात् । प्रयोगस्तु—विमतमज्ञानं न मानगम्यं माननिवर्त्यत्वात् संप्रतिपन्नवदिति । मानतो धर्मिसिद्धौ बाधः । तदसिद्धावाश्रयासिद्धिरिति चेन्न । प्रतीतिमात्रसिद्धस्य प्रतिबिम्बादेरिव धर्मित्वोपपत्तेः वक्ष्यमाणत्वात् । न च प्रागभावेन व्यभिचारः । तस्य मान-

---

अभावपदम् । हेतुं साधयितुं पराङ्गीकारं दर्शयति—**अभावो हीति** । तथापि कथमज्ञानस्यागम्यत्वमित्याशङ्क्य मानागम्यत्वेन तद्विशेषागम्यत्वं कथयति—**अज्ञानं चेति** । पूर्वानुभवजनितवासनाया स्वनिवर्तकप्रत्यभिज्ञाव्यतिरिक्तप्रमाणगम्यत्ववदत्रापि स्यादिति शङ्कते—**निवर्तकादिति** । प्रत्यभि[1]ज्ञानिवर्त्यवासनाया न मानगम्यत्वं, साक्षिवेद्यत्वात् । नित्यपरोक्षत्वं तु नियमेनानैन्द्रियकलक्षणं साक्षिवेद्यत्वेऽपि सम्भवतीति मत्वा ब्रूते—**न निवर्त्येति** । अदृष्टिमेव स्पष्टयति—**न हीति** । रूप्यादेर्मानान्तराविषयत्वमसिद्धमित्याशङ्क्याह—**तथात्व इति** । मानगम्यत्वे गमकविरोधान्माननिषेध्यत्वानुपपत्तेस्तन्निषेध्यं रूप्यादि न कस्यचिदपि मानस्य गोचर इत्यर्थः । उक्तमर्थमनुमानीकरोति—**प्रयोगस्त्विति** । भ्रान्तरूप्यादिरूपाज्ञानभागे सिद्धसाध्यतां निराकरोति—**विमतमिति** । धर्मिणोऽज्ञानस्य प्रामाणिकत्वमप्रामाणिकत्वं वेति विकल्प्य दूषयन्नाशङ्कते—**मानत इति** । अज्ञोऽहमिति प्रमाणाप्रमाणसाधारणप्रतीतिसिद्धस्य धर्मित्वान्न बाधो नाप्याश्रयासिद्धिरिति परिहरति—**न प्रतीतिमात्रेति** । प्रामाणिकस्यैवाश्रयत्वं न ततोऽर्थान्तरस्येत्याशङ्क्याह—**प्रतिबिम्बादेरिति** । तत्रापि प्रामाणिकांशस्यैवाश्रयत्वमित्याशंक्याह—**वक्ष्यमाणत्वादिति** । न चैतदनुमानगम्यत्वे सैव व्याहतिस्तदगम्यत्वे तत्साधनाय प्रयोगायोगः । अध्ययनविधिवत् सर्वमानागम्यत्वसाधकानुमानस्य स्वागम्यत्वसाधनेऽपि सामर्थ्यादिति भावः । मानप्रागभावस्य माननिवर्त्यस्यापि मानगम्य-

---

1. प्रत्यभिज्ञाकारं

गम्यताऽसंप्रतिपत्तेः ।

यत्वन्यतरासिद्धिवदन्यतरव्यभिचारोऽपि दूषणमिति मतम् । तदत्र तावदशोभनम् । उक्तहेतुनैवात्रा*पि साध्यसम्पत्तेः सुकरत्वात् । प्रामाणिकाज्ञानपक्षेऽपि च सुषुप्तावज्ञानभानभावे सुषुप्तिभङ्गप्रसङ्गः । तदभावे "न किञ्चिदवेदिषमि"ति स्वापानन्तरमज्ञानपरामर्शो न स्यात् । अज्ञातत्वात् ।

किञ्च नाज्ञानं षष्ठमानगम्यम् अपरोक्षत्वात् संप्रतिपन्नवत् । विपक्षे बाधकमुक्तम् । नन्वसिद्धेः कः प्रतीकारः । विमतमपरोक्षं परो-

---

त्वादनैकान्तिकत्वमित्याशङ्कयाह—न चेति । तस्य साक्षिवेद्यत्वेन मानगम्यत्वे, सम्प्रतिपत्त्यभावादिति हेतुमाह—असम्प्रतिपत्तेरिति । साक्षिणमनङ्गीकुर्वतो नैव व्यभिचारपरिहारोपपत्तिरित्याशङ्कयाह—यत्त्विति । प्रकृतेऽनुमाने हेतोरन्यतरव्यभिचारो न युक्तिमानित्यत्र हेतुमाह—उक्तेति । मानप्रागभावो मानगम्यो न भवति माननिवर्त्यत्वात्सम्प्रतिपन्नवदित्यनुमानान्नान्यतरव्यभिचारावकाशः । न चानुव्यवसायनिवर्त्ये तद्गम्ये व्यवसाये व्यभिचारः । तस्यैवास्माकमसिद्धत्वात् । अन्यतरव्यभिचारे तु प्रदर्शितैव प्रक्रियेति भावः । किं च मानगम्यमज्ञानमिति मते सुप्तौ तन्मानमस्ति न वा ? तत्राद्ये दोषमाह—प्रामाणिकेति । समस्तबुद्धिनिवृत्तिरूपा सुषुप्तिरेकस्या बुद्धिवृत्तेर्भा[1]वित्वे न सम्भवतीत्यर्थः । द्वितीये दोषमाह—तदभाव इति । स्वरूपज्ञानावगते तस्मिन्परामर्शसम्भवेऽपि प्रमाणागम्यत्वमज्ञानस्याव्याहतमिति भावः । मानागम्यत्वसाधनेनाज्ञानस्य प्रतिवादिनो भावमानागम्यत्वं प्रसाध्य तत्रैव युक्त्यन्तरमाह—किं चेति । अज्ञानस्याभावमानगम्यत्वे प्रामाणिकाज्ञानपक्षे चेत्यादौ उक्तं दोषं स्मारयन्नपरोक्षत्वहेतोरप्रयोजकत्वं परिहरति—विपक्ष इति । न तावदज्ञानमैन्द्रियकप्रतीतिविषयम् । नापि साक्षिगोचरः । प्रतिवादिनोऽसिद्धेरित्याशयेनाशङ्कते—नन्विति । सर्वसाधके साक्षिणि विवादायोगात्तद्गम्यत्वमङ्गीकृत्य हेतुं साधयति—विमतमिति । अत्रासद्विशेषणं †द्रष्टव्यम् ।

---

* मानप्रागभावेऽपीत्यर्थः  1. भाविनस्संभवति  † साध्ये द्रष्टव्यमित्यर्थः

ज्ञानहेतुसामग्रीरहितावसेयत्वात् संप्रतिपन्नवदिति ब्रूमः। न चानु-मेया अज्ञाने हेत्वसिद्धिः। "न किञ्चिदवेदिष"मिति स्वापानन्तरं कृत्स्नाज्ञानानुसन्धानदर्शनात्। तत्कालीनस्यानुसन्धानं च नान्यथोपपद्यत इति प्रपञ्चितम्। तस्मादभिव्यक्तनित्यचैतन्येऽध्यासादज्ञानं स्वापेऽपरोक्षम्। एवं तर्हि तव रूपादयोऽप्यपरोक्षाः प्राप्ताः। अतो व्यर्थाश्चक्षुरादयः। न। अज्ञानाभिभूतानुभवादिव्यञ्जकमानार्थत्वात्ते-

---

अन्यथेश्वरादेरज्ञानविषयापरोक्ष्यस्य सिद्धतया सिद्धसाध्यत्वप्रसङ्गात्। व्याहतिपरिहारार्थं हेतौ परोक्षविशेषणम्। तद्धेतुसामग्री लिङ्गादिका। अहमवस्थाविशेषे न ज्ञानवांस्तदा तदीयसामग्रीहीनत्वात् घटवदित्यज्ञानं क्वचिदनुमीयते। अथवा पुरुषान्तरे चेष्टाविशेषं दृष्ट्वा तस्मिन्नज्ञानमनुमेयम्। न च तत्रोक्तोहेतुरिति भागासिद्धिरित्याशङ्क्याह—**न चेति**। न तावत्पुरुषभेदो ज्ञानभेदो वेति वक्ष्यते। न चैकमज्ञानमेकस्मिन्पुरुषेऽवस्थितं तेनैवानुमीयते। तस्य सुप्तोत्थितस्य तद्विषयपरामर्शदर्शनात्तस्य चानुभवमन्तरेणासम्भवात्। अतस्सुषुप्तिकालीनमज्ञानमपरोक्षानुभवसिद्धमिति न प्रकृतहेतोरसिध्याशङ्केत्यर्थः। सौषुप्तस्याज्ञानस्य परामर्शेऽपि कथमपरोक्षानुभवसिद्धतेत्याशङ्क्याह—**तत्कालीनस्येति**। न चेदुत्थितस्य तत्कालीनाज्ञानानुमानं, लिङ्गाभावात्। न च सामग्र्यभावो लिङ्गं, तस्याप्यसिद्धेः। ज्ञानाभावेन तदनुमानेऽन्योन्याश्रयतेत्याह—**इति प्रपञ्चितमिति**। कथं तर्हि परामर्शोपपत्तिः। न हि स्वरूपज्ञानसिद्धं परामृश्यते। तस्य नित्यसिद्धस्य संस्काराभावादिति तत्राह—**तस्मादिति**। नित्यसिद्धमपि ज्ञानमवस्थाविशेषाकाराज्ञानविलासावच्छिन्नमवच्छेदकनाश[1]ात् संस्कारमादधाति। ततश्च परामर्शोपपत्तिः। विमतं नास्मदपरोक्षम् अपरोक्षज्ञानसामग्रीरहितावसेयत्वात् चक्षुर्वदिति चेत्। न। साक्षिणोऽपि तत्सामग्र्यन्तर्भावाद्धेत्वसिद्धेरित्यभिसन्धिः। स्वतोऽभिव्यक्तनित्यचैतन्यादज्ञानापरोक्ष्ये रूपादीनामपि तथैवापरोक्ष्याच्चक्षुरादिवैयर्थ्यमिति चोदयति—**एवमिति**। चक्षुरादिवैयर्थ्यं परिहरति—**नाज्ञानेति**। अज्ञानेनाभिभूतं रूपादिस्फुरणं तदभिव्यञ्जकं

---

1. नाशादन्यत्संस्कारं

षाम्। नन्वज्ञानाभिभवोऽनुभवस्य स्वापेऽपि तुल्यः। न। आवरणेन स्वावभासस्यानभिभवात्। न हि कुड्याद्यावरणं स्वावभासमावृणोति। तस्मात्स्वापेऽज्ञानापरोक्ष्ये नानुपपन्नं किञ्चित्।

यदपि मतम्—अभावो ह्यपरोक्ष इतीष्यते। अतोऽज्ञानस्याभावत्वेऽपि नानुपपन्नं किञ्चिदिति। तदसत्। अभावस्येन्द्रियसम्बन्धाभावात्। संयुक्तविशेषणतादिसम्बन्धस्य च ज्ञानहेतुत्वे मानाभावात्। नापि तत्कल्पयितुं शक्यं, सम्प्रतिपन्नेऽनुपलम्भे तद्धेतौ सति। अतो

---

यदन्तःकरणपरिणामरूपं प्रमाणं तत्करणत्वाच्चक्षुरादीनां न वैयर्थ्यमिति परिहारार्थः। स्वापेऽपि चैतन्यस्याज्ञानेनाभिभूतत्वात्तदभिव्यञ्जकं मानमुपास्यमिति रूपादिवदज्ञानस्यापि मानगम्यत्वापत्तिरित्याशङ्कते—नन्विति। अनवच्छिन्नं चैतन्यमज्ञानसाधकत्वान्न तेनाभिभूयते। विमतं न स्वावभासमावृणोति आवरणत्वात् कुड्यवदिति दूषयति—नावरणेनेति। अतिप्रङ्गाभावमभिधायापरोक्षत्वहेतुप्रसाधनमविरुद्धमिति फलितमाह—तस्मादिति। अज्ञानमपरो[1]क्ष मानगम्यमिति न षष्ठप्रमाणगम्यम्। अतो बाधकाभावाद[*]प्रयोजकमपरोक्षत्वमित्येतदनुवदति—यदपीति। अज्ञानस्याभा[†]वमानगम्यत्वं चेन्नापरोक्षत्वमित्यभावस्यापरोक्षत्वं निराकुर्वन्नप्रयोजकत्वं प्रत्याचष्टे—तदसदिति। ननु संयुक्तविशेषणतादिभावादभावग्रहणाङ्गीकरणादभावस्येन्द्रियसम्बन्धाभावासिद्धिस्तत्राह—संयुक्तेति। भूभागे कुम्भाभावोपलम्भस्यान्वयव्यतिरेकाभ्यामैन्द्रियकत्वाधिगमाद्विशेषणविशेष्यभावस्याभावज्ञानहेतुत्वं कल्पनीयमित्याशङ्क्याह—नापीति। धर्मिविषयत्वेनान्वयव्यतिरेकयोरन्यथासिद्धत्वादभावोपलम्भस्य च कारणान्तरात्सिद्धेः कल्पकाभावान्नोक्तकल्पनेत्यर्थः। अज्ञानस्य षष्ठप्रमाणागम्यत्वे स्थिते फलितमाह—अत इति। अज्ञानं न मानगम्यं

---

1. मितिमपि षष्ठ

* षष्ठमानागम्यत्वलभ्याभाववैलक्षण्याप्रयोजकत्वमपरोक्षत्वहेतोरिति भावः।

† अभावमानम् अत्रेन्द्रियं विवक्षितम्। परैरिन्द्रियस्यापि अभावग्राहकत्वाभ्युपगमात्।

नाज्ञानं ज्ञानाभावः ।

अज्ञानस्याभावात्मतायामपि न दोष इति स्वयूथ्यपक्षोपस्थापनम्

अत्राह स्वयूथ्यः—अभावरूपमेवाज्ञानं साक्षिवेद्यं मयेष्यते । तेन तस्य मानागम्यत्वसाधनम् सिद्धसाधनम् । यदप्यज्ञानस्य ज्ञानाभावस्य तु निरासायोक्तं अभावमानागम्यत्वादिति तत्तु ज्ञानाभावेनानै*कान्तम् । विपक्षे बाधरहितं च । अभावत्वेऽज्ञानस्य भ्रमोपादनता कथम् ? । न कथञ्चित् ? । न चात्र किंचिन्मानमिति । आत्मैव हि भ्रमोपादानम् अन्तःकरणं वा । अथवा भ्रमतत्संस्काराणामेवोपादानोपादेयभावस्तूपे-

मानानिवर्त्यत्वादिति सैद्धान्तिकेऽनुमाने दोषं चोदयति—**अत्राहेत्यादिना** । किमेतावता दूषणमनुमाने दर्शितं भवति तदाह—**तेनेति** । अज्ञानं ज्ञानाभावो न भवति अभावमानागम्यत्वात्सम्प्रतिपन्नवदित्युक्तमनुमानान्तरमनूद्य दूषयति—**यदपीति** । ज्ञानाभावस्य साक्षिवेद्यत्वादभावमानागम्यत्वाङ्गीकारादित्यर्थः । किं चाज्ञानस्य ज्ञानाभावत्वे बाधकाभावादप्रयोजकमभावमानागम्यत्वं । उक्तस्तु हेतुः साक्षिमात्रगम्यत्वेऽपि सम्भवतीति मत्वाह—**विपक्ष इति** । अज्ञानस्य ज्ञानाभावत्वे भ्रान्तेर्निरुपादानत्वेनाकस्मिकत्वप्रसक्तिर्बाधिकेति शङ्कते—**अभावत्व इति** । प्रश्नं मत्वोत्तरमाह—**न कथञ्चिदिति** । अन्वयव्यतिरेकसिद्धमज्ञानस्य भ्रमोपादानत्वं तदशक्यापह्नवमित्याशङ्क्य तयोर्भ्रमनिमित्तकारणाग्रहणविषयत्वान्न तदुपादानाभाव[वि†लक्षणाज्ञानविषयत्वसिद्धिरित्याह—**न चेति** । भावोपादानाभावे भाव]रूपभ्रमस्याकस्मिकत्वापत्तिरित्याशङ्क्याह—**आत्मैवेति** । कूटस्थस्यात्मनो नोपादानत्वं, कूटस्थत्वविरोधादित्यत आह—**अन्तःकरणमिति** । सत्योपादानकस्यासत्यत्वमनुपपन्नमित्यपरितोषात्पक्षान्तरमाह—**अथवेति** । तेषामुपादानत्वमन्यत्रासिद्ध-

*ज्ञानाभावे साक्षिवेद्यत्वाभ्युपगमेन उक्तसाध्याभाववत्त्वस्य, उक्तहेतोश्च सत्त्वादित्यर्थः ।

† अयं भागः मातृकायां नास्ति ।

यते । अतोऽज्ञानस्य भावत्वे, न किंचिन्मानमस्ति ।

### स्वयूथ्यपक्षप्रतिक्षेपपूर्वकमज्ञानस्याभावेतरत्वव्यवस्थापनम्

उच्यते—अवश्यमेषा त्वयापि मायाशक्तिरसद्विलक्षणा आत्मनोऽभ्युपेया । अन्यथा ज्ञानाभावादेरसङ्गेन चिदात्मना सम्बन्धाभावात् साक्षिवेद्यता न स्यात् । निरुपादानतया भ्रमाभावप्रसङ्गाच्च । नात्मा अन्तःकरणं वा उपादानं बाधाभावप्रसङ्गादित्युक्तम्* । कथं चात्मा कूटस्थो विना मायां हेतुत्वं यायात् । न च संस्कारादि क्वचिदुपादानं दृश्यते, इष्यते वा । न च कल्पयितुं शक्यम् । अद्रव्यत्वात् । तदेवं

---

मित्याशङ्क्य कार्यानुपपत्त्या कल्प्यत इत्याह—**उपेयत इति** । अनुमानद्वयनिराकरणफलमुपसंहरति—**अत इति** । ज्ञानाभावादेः साक्षिवेद्यत्वेऽपि भावरूपमज्ञानं मानागम्यमेष्टव्यमिति साधयति—**उच्यत इति** । अवश्यमिति सूचितामर्थापत्तिमेव विशदयति—**अन्यथेति** । न खल्वात्मना ज्ञानाभावादेः स्वतस्सम्बन्धः, आत्मनोऽसङ्गत्वात् । अतो भावरूपाज्ञानस्य सम्बन्धघटकस्याभावे ज्ञानाभावादेः साक्षीवेद्यत्वानुपपत्त्या भावरूपाज्ञानसिद्धिरित्यर्थः । दृश्यमानभ्रमस्याकस्मिकत्वानुपपत्तिरपि तदुपादानतया भावरूपमज्ञानं कल्पयतीत्यर्थापत्त्यन्तरमाह—**निरुपादानतयेति** । आत्मैव भ्रमोपादानमन्तःकरणं वेत्युक्तत्वादर्थापत्तेरन्यथोपपत्तिरित्याशङ्क्याह—**नात्मेति** । सत्योपादानस्य घटवत्सत्यत्वादित्यर्थः । कूटस्थस्यात्मनो मायामन्तरेण भ्रमकारणत्वानुपपत्तिरपि तन्निर्वाहकत्वेनासद्विलक्षणां मायां कल्पयतीत्यर्थापत्त्यन्तरं कथयति—**कथं चेति** । यदुक्तं भ्रमतत्संस्काराणामेवोपादानोपादेयभावोऽभ्युपेयत इति तद् दूषयति—**न चेति** । नन्वदृष्टमनिष्टमपि संस्कारादेरुपादानत्वं कार्यवशादाश्रयणीयमित्यत आह—**न च कल्पयितुमिति** । भावरूपाज्ञानादपि कार्यसम्भवादिति भावः । अर्थापत्तित्रयमुपसंहरति—**तदेवमिति** ।

---

* दोषस्य भ्रमोपादानतानिराकरणावसरे "अन्यथा सत्योपादानं रूप्यं बाध्यं न स्या"दित्यादिना

न मायां विना साक्षिवेद्यताद्युपपत्तिः। मायामयज्ञानाभावाभ्युपगमे च न सिद्धसाधनतादोषः। नापि व्यभिचारसम्भवः। तस्य पक्षत्वात् तस्मादभावमानागम्यमज्ञानं नाभाव इति सिद्धम्।

ननु ज्ञानप्रागभावो भवतोऽपि संमतः। न च सोऽज्ञानादन्यः। अप्रसिद्धेः। अतो ज्ञानाभावेतरत्वानुमानं परिशेषबाधितमिति। न। ज्ञानप्रागभावस्याप्यज्ञानत्वासम्भवात्। प्रयोगस्तु—ज्ञानप्रागभावो नाज्ञानं अभावत्वात्, तत्प्रध्वंसवदिति ज्ञानप्रध्वंसोऽप्यज्ञानमिति चेन्न। नित्यानित्ययोरैक्यायोगात्।

ननु ज्ञानप्रागभावो नाज्ञानमिति किं ज्ञानाभावत्वं निषिध्यते, किं ज्ञानादन्यत्वं आहो ज्ञानविरोधित्वम्। त्रिधापि स्फुटो व्याघातः। उच्यते। नेत्थंभावोऽत्र निषिध्यते। किन्तु ज्ञानप्रागभावस्य पार्थक्यं,

---

यत्तु मानागम्यत्वसाधने सिद्धसानत्वं, अभावमानागम्यत्वसाधने चानैकान्तिकत्वमुक्तं, तत्र किं ज्ञानाभावस्य वास्तवत्वं मायामयत्वं वेति विकल्प्याद्ये साक्षिवत्तस्यन तद्वेद्यतेति मन्वानो द्वितीये दोषमाह—**मायामयेति**। ज्ञानाभावस्य मायामयत्वेपक्षेऽन्तर्भावात्तत्र साध्यसिद्धौ नावयोर्विप्रतिपत्तिरिति न त्वां प्रति प्रयोगः। असिद्धौ न सिद्धसाध्यता पक्षान्तर्भूते व्यभिचारश्चासम्भवीत्यर्थः। दोषद्वयनिरसनफलमाह—**तस्मादिति**। परिशेषप्रदर्शनपूर्वकं तद्बाधितत्वमाशङ्कते—**नन्विति**। परिशेषासिध्या परिहरति—**न ज्ञानेति**। असम्भवमेव साधयति—**प्रयोगस्त्विति**। दृष्टान्तस्य साध्यवैकल्यमाशङ्क्य परिहरति—**ज्ञानप्रध्वंसोऽपीत्यादिना**। ज्ञानप्रागभावो नाज्ञानमित्यत्र नञर्थं विकल्प्य व्याहतिं दर्शयन्नाशङ्कते—**नन्विति**। व्याघातं परिहरति—**उच्यत इति**। ज्ञानप्रागभावो नाज्ञानमित्यत्र ज्ञानप्रागभावस्य ज्ञानाभाव[1]त्वं निषेध्यं न भवति, येन व्याघातः। अपि तु स्वापमूर्छादौप्रतिपन्नादज्ञानदन्यत्वं तस्य साध्यते। तथा च न व्याहतिरित्यर्थः। न

---

1. ज्ञानाभावत्वादिति निषेध्यत्वं

स्वापादौ सिद्धादज्ञानात् साध्यते। धर्मप्रागभावस्येवाधर्मात्। तस्माद-ज्ञानस्य ज्ञानाभावेतरत्वानुमानं न परिशेषबाधितम्। नापि सत्प्रति-पक्षं, प्रतिप्रयोगायोगात्।

यत्तु विमतम् अभावो भावविलक्षणत्वात् कुम्भाभाववदित्यनुमा-नम्। तत्र तव भावविलक्षणत्वमभावत्वमेवेति साध्याविशिष्टता। यतस्ते भावाभावाभ्यां वस्तुद्वैविध्यमेव। यदपि ज्ञानप्रतियोगित्वे सति नञर्थत्वादिति प्रयोगान्तरम्। तत् ज्ञानविरोधिना संशयादिनानै-कान्तम्। तस्मादज्ञानस्याभावेतरत्वानुमानं निष्प्रत्यूहम्।

नन्वज्ञानस्याज्ञा*नप्रागभावत्वे ज्ञानाभावभावित्वमनुपपन्नम्। न। तमोवत् तदुपपत्तेः। यथाहि—तमो भावरूपमप्यालोकविरोधित्वा-त्तद्भावाभावि। एवमज्ञानमप्य†ज्ञानप्रागभावोऽपि ज्ञानविरोधित्वात्तद्भा-वाभावि स्यात् किमनुपपन्नम्?। तस्मादज्ञानं अभावविलक्षणमिति सिद्धम्॥

तमसो भावात्मताव्यवस्थापनम्

नन्वालोकभावाभावित्वात्तमोऽप्यालोकाभाव एव। तमसो

---

चेदमपूर्वं कल्प्यते, अन्यत्रापि दृष्टत्वादित्याह—**धर्मप्रागभावस्येति**। ज्ञानप्रागभावो नाज्ञानमभावत्वादित्यनुमानस्य निर्दोषत्वे फलितमाह—**तस्मादज्ञानस्येति**। अभावमानागम्यत्वहेतोर्दोषान्तरं निरस्यति—**नापीति**। प्रतिप्रयोगं प्रागुक्तमनुभाष्य दूषयति—**यत्त्वित्यादिना**। अनुमानान्तरमनूद्य निराकरोति—**यदपीत्यादिना**। अभावमानागम्यत्वहेतुमुपसंहरति—**तस्मादिति**।

अज्ञानस्य प्रागभावत्वं ज्ञाननिवर्त्यत्वादेष्टव्यमिति शङ्कते—**नन्विति**। दृष्टान्तावष्टम्भेन निराचष्टे—**न तमोवदिति**। दृष्टान्तं प्रपञ्चयति—**यथा हीति**। दार्ष्टान्तिकमुदाहरति—**एवमिति**। अज्ञानस्य भावत्वे कथमनिर्वा-च्यत्वमित्याशङ्क्योपसंहरति—**तस्मादज्ञानमिति**। अज्ञानं तमोवदभाववि-लक्षणमित्यत्र दृष्टान्तासम्प्रतिपत्तिं चोदयति—**नन्विति**। आलोकाभावः

---

* ज्ञानप्रागभावत्वाभावे † ज्ञानप्रागभावविलक्षणोऽपि

दीपादिविशेषाभावत्वे तदन्येनानिवृत्तिः। सर्वाभावत्वे च सर्वभाव एव निवृत्तिः स्यादिति चेन्न। प्रत्येकं सर्वाभावत्वोपपत्तेः। तर्हि सत्ये-वादित्ये रूपानुपलम्भः तमउपलम्भश्च स्यात्। इतरालोका*भावानां तमसां भावादिति चेन्न। सामग्रीसद्भावादेव रूपोपलम्भसम्भवात्। तथापि तमःप्रतिबन्धादनुपलम्भ इति चेन्न। विरोधिविरहिण एव तस्य

---

तमश्शब्दविषयः आलोकानाधारत्वे सत्यालोकाभावाभावित्वादालोकवदिति व्यतिरेक्यनु[1]मानावतारादित्यर्थः। किमालोकविशेषाभावो धर्मी किं वा सर्वालोकाभावः? आद्ये दीपेसत्यपि तत्रैव तमोधीः स्यात्। प्रतियोगिप्रकाशविशेषासन्निकर्षे तदभावानिवृत्तेरित्याह—**तमस इति**। द्वितीये तमसो नित्यत्वं, सर्वालोकप्रतियोगिकाभावस्य तमसो निवर्तकसकलालोकयौगपद्यायोगादित्याह—**सर्वाभावत्वे चेति**। प्रक्षद्वयेऽपि पक्षबाधकतर्कपराहतं व्यतिरेक्यनुमानमिति भावः। एकैकस्यैव तमसः सर्वालोकाभावत्वादेकालोकभावेऽपि सर्वालोकाभावाभावादन्तरेणापि सर्वालोकसन्निधानं तदभावतमोनिवृत्तिः संभवतीति समाधत्ते—**न प्रत्येकमिति**। सर्वालोकाभावानां तमस्त्वे दोषान्तरमाशङ्कते—**तर्हीति**। उपलब्धिसामग्र्यां सत्यामनुपलब्धिर्विरुद्धेत्याशङ्क्य प्रतिबन्धसद्भावान्नैवमित्याह—**तम उपलम्भश्चेति**। आदित्ये सति तदभावरूपस्य तमसो निवृत्तेरुपलम्भस्तस्य कथमित्याशङ्क्याह—**इतरेति**। सवितृसहकृतचक्षूरूपसन्निकर्षो रूपमुपलम्भयति, सत्यां सामग्र्यां कार्योत्पादनियमादिति दूषयति—**न सामग्रीति**। सति पुष्कलकारणे कार्योत्पादविरोधिप्रतिबन्धकमित्यङ्गीकारादितरालोकाभावतमसः तथात्वात् न सामग्री कार्यमुत्पादयतीतिशङ्कते—**तथापीति**। आदित्यप्रकाशस्य †विरोधित्वादितरालोकाभावस्य प्रतिबन्धकत्वशून्यत्वान्नैवमित्याह—**न विरोधीति**। तथापि रूपदर्शनवदादित्ये सत्येव ‡तमोदर्शनमपि

---

* अभावरूपाणां [1]. अनुमानमवतरति † इतरालोकाभावं प्रति आदित्यप्रकाशस्य विरोधित्वादित्यर्थः ‡ आदित्येतरालोकाभावरूपतमोदर्शनमित्यर्थः

प्रतिबन्धकत्वात् । तथाभूतस्यैव चालोकाभावस्य तमोबुद्धिवेद्यतेति न किञ्चिदनुपपन्नमिति ।

उच्यते । आलोकालोकान्तराभावयोर्विरोधासम्भवाद्विरोधिविरहिण एवेत्याद्युक्तमसमञ्जसम् । न तावत्तयोर्वध्यघातकभावः । सहानवस्थानं च विरोधः सम्भवेत् । स्तम्भस्य कुम्भाभावस्य च तथा भावानुपलम्भात् । किञ्च विरोधिविरहोऽपि प्रागभावादिविशेषश्चेत् तत्प्रध्वंसादौ तमोबुद्धिर्न स्यात् ।

अभावमात्रं चेत् तदाऽऽलोके सत्यपि तमोबुद्धिः स्यात् । तदन्योन्याभावस्य तदापि भावात् । कश्चालोकाभावस्तमः ? । प्राग-

---

स्यादित्याशङ्क्याह—**तथाभूतस्येति** । अनुमानं निगमयति—**इति नेति** । परिहारमवतारयति—**उच्यत इति** । यत्तु सत्यादित्ये तस्य विरोधित्वाद्विरोधिविरहविशेषणाभावादालोकान्तराभावानामप्रतिबन्धकत्वाविरुद्धा [1]तेषांभावेऽपि रूपोपलब्धिरिति दूषयति—**आलोकेति** । आलोकस्यालोकान्तराभावस्य च भावाभावत्वेन विरोधोऽस्तीत्याशङ्क्य बाध्यबाधकभावो वा सहानवस्थानं वा भावाभावत्वमेव वा विरोधस्तयोरिति विकल्प्याद्यौ निरस्यति—**न तावदिति** । घटपटाभावयोर्विरोधादृष्टेस्तृतीयोऽपि न युक्तिमानिति मत्वाह—**किं चेति** । तथाविधविरोधाभ्युपगमेऽपि विरोधिविरहो विवेचनीयः । स किं तत्प्रागभावादिविशेषः किं वाऽभावमात्रमिति । तत्राद्यमनूद्यापनुदति—**विरोधीति** । अपिशब्देनोक्तविरोधाभ्युपगमः सूच्यते । विरोधिध्वंसादौ सति तद्वत्यालोकान्तराभावे तमोधीर्न सम्भवेत् तत्प्रागभावादिमतस्तस्य तमोबुद्धिविषयत्वाभ्युपगमादित्यर्थः । द्वितीयमपाकरोति—**अभावमात्रमिति** । तत्र हेतुमाह—**तदन्योन्याभावस्येति** । विरोध्यालोकान्योन्या[2]भावस्यालोकान्तरान्योन्याभाववद्विरोध्यालोकालोकान्तरयोर्भावेऽपि भावादिति हेत्वर्थः । विरोधिविरहं विकल्पपुरस्सरंनिरस्य तमस्त्वेनाभिमतमालोकाभावं विकल्पयति—[3]**कश्चेति** । किमालोकप्रागभावादिविशेषस्तमः तत्संसर्गाभावो वेति विक-

---

1. तेषामभावेऽपि 2. अन्योन्याभाववदालोकान्तराभावस्य 3. तच्चेति ।

भावादिविशेषश्चेत् प्रध्वंसादौ तमोबुद्धिर्न स्यात्। तदाप्यन्यः प्रागभावादिर्विद्यत इति चेत्। तर्हि दीपे सत्यपि तमोबुद्धिः स्यात्। तदापि तद्विशेषस्य सुलभत्वात्। अथ सर्वो विशेषः प्रत्येकं तमः तदाऽऽलोकप्रध्वंसोऽपि तमः स्यत्। भवत्विति चेन्न। तपसोऽपि नित्यत्वप्रसङ्गात्। प्रध्वंसस्य नित्यत्वात्। कथं च सत्येवादित्यादौ तत्प्रागभावादिस्तमः स्यात्। तदापि दीपप्रागभावादिस्तम इति चेत्। तर्ह्यादित्यादिना तमो न निवर्त्येत।

किञ्च प्रदीपाभावश्चेत्तमः तदा तस्येन्द्रियसंयोगायोगादपरोक्षता नस्यात्। संयुक्तविशेषणत्वात्तस्यापरोक्षतेति चेन्न। उक्तोत्तरत्वात् उक्तोद्यज्ञाननिरूपणे तत्राभावस्यापरोक्षताऽसम्भवः। न चोक्तसम्व-

ल्पार्थः। आद्ये किमेकैकस्य विशेषस्यैव तमस्त्वं सर्वस्य वा प्रत्येकमिति विकल्प्याद्यमनूद्य दूषयति—**प्रागभावादीति**। दीपध्वंसेऽपि दीपव्यक्त्यन्तरप्रागभावे तमोबुद्धिर्न विरुध्यते। तद्ध्वंसेऽपि ततोऽन्यदीपप्रागभावे तमोबुद्धिर्भविष्यति, प्रदीपप्रध्वंसस्य तमोबुद्धिविषयत्वेऽपि प्रदीपप्रागवस्थायां प्रदीपान्तरप्रध्वंससिद्धेस्तमोबुद्धिरविरुद्धेति बुध्यमानश्चोदयति—**तदापीति**। अतिप्रसङ्गं प्रदर्शयन्प्रतिविधत्ते—**तर्हीति**। विकल्पान्तरमुत्थाप्य शिथिलयति—**अथेत्यादिना**। इष्टापत्तिमाशङ्क्य निराचष्टे—**भवत्वित्यादिना**। आदित्यादिप्रागभावादेस्तमस्त्वे दोषान्तरमाह—**कथं चेति**। श्वेतद्वीपादौ सत्येवादित्यादौ केतुमालादौ तत्प्रागभावाद्यभावेऽपि तमोव्यवहारान्न तत्प्रागभावादेस्तमस्त्वमिति भावः। आदित्यादौ सत्यपि दीपप्रागभावादिस्तमोव्यवहारभागीति शङ्कते—**तदापीति**। *यत्रादित्यादिसत्ता तत्रैव प्रदीपप्रागभावादिस्तमस्ततोऽन्यत्र वेति विकल्प्याद्यं निरस्यति—**तर्हीति**। द्वितीयं दूषयति—**किं चेत्यादिना**। इन्द्रियसंयुक्ततेजोविशेषणत्वात्प्रदीपप्रागभावादेः संयुक्तभूतलविशेषणघटाभावस्येवापरोक्षत्वमिति शङ्कते—**संयुक्तेति**। संयुक्तविशेषणत्वमङ्गीकृत्य प्रत्याचष्टे—**नेत्यादिना**। स्वपक्षे तस्यापि साक्षिवेद्यत्वेनापरोक्षं विवक्षन् विशिनष्टि—**तत्रेति**। प्रदीपप्रागभावादौ संयुक्तविशेषणत्वमपि नास्तीत्याह—

* यत्र, यदा तत्र तदा, अन्यत्र अन्यदा

**धोऽप्यत्र सम्भवी। दीपाभावो हि दीपावयवानां विशेषणं, ते च नेन्द्रियसंयुक्ताः। तमोदेशे तेषामभावात्। अथ द्व्यणुकादिसर्वकार्यासम्भवात् सर्वेऽभावाः परमाण्वाश्रिताः। तथा च संयुक्तविशेषणतोपपद्यत इति मतम्। एवमपि धर्म्यग्रहात्तत्र तमो न भासेत।**

**नन्वस्तु तर्ह्यालोकसंसर्गाभावस्तमः तथा चोक्तदोषराशिरपास्तः स्यात्। न च वाच्यं धर्म्यग्रहादज्ञातास्मृतौ च तत्र तमो न भासेतेति। धर्म्यग्रहेऽपि तत्सन्निकर्षादभावग्रहोपपत्तेः। अस्तु वाऽनु-**

---

**न चेति।** असम्भवमेव साधयति—**दीपाभावो हीति।** ननु दीपावयवानामिन्द्रियसंयुक्तत्वात्तद्विशेषणस्य दीपप्रागभावादेर्युक्तं संयुक्तविशेषणत्वमिति तत्राह—**ते चेति।** तैजसद्व्यणुकादेरवयविनः सर्वस्य कार्यस्य तमोदेशेनिरोधेनासम्भवेऽपि तेजःपरमाणूनामविरोधेन तत्रापि सम्भवात्प्रदीपद्व्यणुकादिप्रागभावाः तत्परमाणुषु पर्यवस्यान्ति। अतः संयुक्ततमोदेशस्य विशेषणीभूतपरमाणुविशेषणत्वेनेन्द्रियसम्बन्धादैन्द्रियकत्वं प्रदीपप्रागभावादेः सिध्यतीति चोदयति—**अथेति।** प्रदीपपरमाणनां संयुक्तविशेषणत्वेऽप्यप्रत्यक्षत्वात्तद्विशेषणप्रदीपप्रागभावादिरूपस्य तमसोऽप्रत्यक्षता स्यादिति दूषयति—**एवमपीति।** न चाकाशस्याप्रत्यक्षत्वेऽपि तद्विशेषणशब्दप्रत्यक्षतावत्परमाणूनामप्रत्यक्षत्वेऽपि तद्विशेषणीभूतदीपप्रागभादेः प्रत्यक्षतेति साम्प्रतम्। आकाशस्यापि साक्षिवेद्यत्वाभ्युपगमादप्रत्यक्षत्वासिद्धेरिति भावः। कल्पान्तरमुत्थापयति—**नन्विति।** आलोकसंसर्गाभावस्य तमस्त्वेऽपि कथं प्रागुक्तदोषसमाधिरित्यत आह—**तथा चेति।** [प्रागभाव] प्रध्वंसाभावयोस्तमस्त्वे[1]नानभ्युपगमात्तत्रोक्तदोषाभावोऽत्र फलतीत्यर्थः। तमो न भासंसर्गाभावः धर्मिप्रतीत्यनपेक्षप्रतीतित्वात् कुम्भवदित्याशङ्क्याह—**न चेति।** धर्मिणो गृह्यमाणत्वाभावेऽपि स्मर्यमाणत्वमाशङ्क्याज्ञातगिरिगुहादेरस्मृतावपि तत्र तमोभानान्न स्मरणविपरिवर्तित्वमपि धर्मिणोऽस्तीत्याह—**अज्ञातेति।** अथवा तमो नालोकसंसर्गाभावः प्रतियोगिस्मृत्यनपेक्षप्रतीतित्वात् घटादिवदित्याशङ्क्याह—**अज्ञातेति।** अज्ञातस्य प्रतियोगिनः स्मृत्यभावे सतीति यावत्। कुतो न वाच्यमिति तत्राह—

---

1. तमस्त्वेनाभ्युपगमात्

मितापवरकभूभागे तमोभानम्। अन्यथा तत्र तमोरूपस्यालोकाभावस्य भानं न स्यात्। नाप्यत्र प्रतियोगिस्मृतौ विवदितव्यम्। सर्वत्रैव हि तमउपलम्भसमये नाऽऽलोकोऽस्तीति प्रतियोगिस्मृतेरनुभवसिद्धत्वात्। अनुभवकलहे च स्मृतिनिरपेक्षतादूषणासम्प्रतिपत्तेः न तमसो अभावताक्षतिः। संसर्गप्रागभावादेर्विशेषस्य चाविवक्षितत्वान्न तत्प्रतिबन्धोक्तदोषसम्भवः। तदयं प्रयोगः—तमः आलोकसंसर्गाभावः। आलो-

---

धर्मीति। अभावग्रहस्य धर्मिसन्निकर्षो हेतुर्न तद्ग्रहः केवलव्यतिरेकाभावावगमात्। [1]अतो धर्मिप्रतीतिनिरपेक्षप्रतीतित्वेऽपि तमसो भानाभावत्वे बाधकाभावादप्रयोजको हेतुरिति भावः।

नन्वभावप्रतीतेर्धर्मिप्रतीत्यनपेक्षत्वे कुम्भो नेत्यनेन *तत्प्रतीतिप्रसङ्गाच्चक्षुःसंनिकृष्टस्यापि वायोश्चक्षुरनिरूपकत्वात्केवलव्यतिरेकसिद्धेरभावग्रहस्य धर्मिग्रहापेक्षानियमः। तथा च तमसोऽप्यभावत्वे धर्मिग्रहानपेक्षप्रतीतित्वानुपपत्तिरिति तत्राह—**अस्तु वेति**। यो हि प्रभूतान्धकारपरिवृतापवरकमध्यस्थमञ्चकमधिरूढो व्यवहरति स तावन्मञ्चाधिकरणं किं चिदधिगच्छन्नेतद् भूतलं भवितुमर्हति अपवरकत्वात् दिवानुभूतापवरकवदित्यनुमिमीते। तत्र चानुमिते भूभागे तमोभानमविरुद्धमित्ययमभिसन्धिः। नन्वनुमिते भूभागे तमोभानमनुपपन्नं, परोक्षत्वे धर्मिणस्तन्निरूप्यस्य तमसोऽपि परोक्षत्वप्रसङ्गादित्याशङ्क्य प्रतिबन्द्यापरिहरति—**अन्यथेति**। यत्तु प्रतियोगिस्मृत्यनपेक्षप्रतीतित्वात्तमो नालोकसंसर्गाभावो घटवदिति तत्राह—**नापीति**। विवादस्य कर्तव्यत्वाभावे हेतुं दर्शयन्ननुभवावष्टम्भेन हेत्वसिद्धिं साधयति—**सर्वत्रेति**। हेत्वसिद्धिसाधकानुभवे विप्रतिपत्तिमाशङ्क्य हेतुसाधकानुभवेऽपि सा तुल्येत्यभिप्रेत्याह—**अनुभवेति**। हेतुद्वयदूषणफलं कथयति—**न तमस इति**। ननु किमालोकसंसर्गप्रागभावादिस्तमस्तदभावमात्रं वा ?। प्रथमे तद्ध्वंसादौ तमोबुद्धिर्न सिध्येत्। द्वितीये तदन्योन्याभावस्यापि तमस्त्वे तन्नि†त्यतापत्तिरिति। तत्राह—**संसर्गेति**। उक्तमर्थमनुमानेन द्रढयति—**तदयमिति**। प्रागभावादिपक्षे

---

1. अतो न * कुंभाभावप्रतीतिप्रसगादित्यर्थः † आलोकान्योन्याभावस्य आलोके सत्यसति च भावात्तदात्मकस्य तमसो नित्यतेत्यर्थः।

कसंसर्गेण सहावस्थानायोग्यत्वात् कुम्भवदिति व्यतिरेकी। न तावदप्रसिद्धविशेषणता, उक्ताभावस्य सुप्रसिद्धत्वात्। न च मन्दप्रदीपे वेश्मनि तमस आलोकसहावस्थायित्वाद्भागासिद्धिरिति वाच्यम्। प्रशिथिलालोकावयवानां तमसा व्यधिकरणत्वात्। न चालोकावयविनस्तमसा संयोगवृत्त्या सहभावोऽवयवावयविनोः समानयोगित्वात्। एतेन छायातपयोः सहावस्थानं व्याख्यातम्। तस्मादालोकसंसर्गाभावः तम इति स्थितम्।

---

दोषनिरासार्थं संसर्गपदम्। तमसो घटादिसंसर्गाभावत्वानभ्युपगमादाशङ्किते बाधे विशिनष्टि—**आलोकेति**। आलोकेन सहावस्थानायोग्यत्वादिति हेत्वर्थः। आलोकसंसर्गाभावस्य प्रसिद्धत्वेऽपि धर्मिविशेषे तदप्रसिद्धेरप्रसिद्धविशेषणतेत्याशङ्क्याह—**न तावदिति**। व्यतिरेकिणि विशिष्टाप्रसिद्धिरदूषणमिति भावः। आलोकेन सहावस्थानायोग्यत्वहेतोर्भागासिद्धिमाशङ्क्य परिहरति—**न चेति**। विरलानामालोकावयवानां स्वावयववृत्तित्वात्तमसश्च वेश्माश्रितत्वात्तयोरेकाश्रयत्वाभावादिति हेतुमाह—**प्रशिथिलेति**। यद्वा यत्र वेश्मदेशे प्रदीपावयवास्ततोऽन्यत्र तमःस्थितेरालोकतमसोः सहावस्थानाभावान्न भागासिद्धिरित्यर्थः।

ननु वेश्मावयविनालोकावयविनः संयोगात्तत्रैव तमसोऽपि सत्त्वादालोकतमसोः सहावस्थानाद्भागासिद्धिरित्याशङ्क्याह—**न चेति**। यत्रावयवाः संयुज्यन्ते तत्रैव तन्निष्ठोऽवयवी संयुज्यते। यथा तन्तुसंयुक्तेष्वेव वीरणादिषु पटस्संयुज्यते। अतोऽवयवानामिवावयविनोऽपि तमसा न सहावस्थानम्। आलोकतमसोरन्यूनाधिकदेशत्वेच निवर्त्यनिवर्तकत्वानुपपत्तिरित्यर्थः। अथ च्छायायामौष्ण्यस्य तरतमभावेनोपलम्भात्तदाधारत्वेनातपस्यापि तत्र सत्त्वावगमाच्छायातपयोश्च तमःप्रकाशान्तर्भावात्तदवस्था भागासिद्धिरिति। तत्राह—**एतेनेति**। आतपावयवानां छायायाश्च भिन्नदेशत्वादवयविनां चावयवगतत्वान्न तयोः सहावस्थानमित्यर्थः। व्यतिरेक्यनुमानफलमुपसंहरति—**तस्मादिति**।

उच्यते—न तावत् भासंसर्गाभावमात्रं तमः। भासंसर्गान्योन्याभावस्य तमस्त्वप्रसङ्गात्। तस्य च तमस्त्वे भासंसर्गे सत्यपि तमोबुद्धिः स्यात्, तस्य भासंसर्गानिवर्त्यता च भवेत्। भासंसर्गान्योन्याभावेतरो भासंसर्गाभावस्तम इति चेत्, न। एकविशेषणविशिष्टयोर्विशेषणविशेष्यभावासम्भवात्। भासंसर्गो ह्यत्रान्योन्याभाव इत्यस्य विशेषणं, तथेतराभावस्य। तयोश्च विशेषणविशेष्यभावस्त्वयाभिमतः। न चैतदुपपद्यते। प्रमाणस्य वा गोचरः। भासंसर्गस्य स्वविशेषणविशेष्यतापत्तेः।

ननूक्तविधविशिष्टव्यवहारः कुम्भोऽयं कुम्भाभावो न भवतीत्यादिरबाधितो दृश्यते इष्यते च वादिभिस्त्वया च। सत्यम्। तथाप्यस्म-

---

भासंसर्गाभावमात्रं तमस्तद्विशेषो वेति विकल्पयति—**उच्यते इति**। नाद्य इत्याह—**न तावदिति**। प्रसङ्गस्यानिष्टत्वाभावमाशङ्क्य निराचष्टे—**तस्य चेति**। दूषणान्तरमाह—**तस्येति**। किं भासंसर्गोऽन्योन्याभावस्य विशेषणमुतोपलक्षणमिति विकल्प्याद्यं निरस्यति—**नैकेति**। एकेन भासंसर्गेण विशिष्टयोरितरेतराभावाभावयोर्मिथो विशेषणविशेष्यत्वस्यायुक्तस्य प्रसङ्गान्न विशेषणपक्षो युक्तिमानित्यर्थः। एतदेव प्रपञ्चयति—**भासंसर्गो हीति**। पूर्वोक्तं प्रतिवादिवाक्यमत्रेति परामृश्यते। तमस्त्वेनाभिमताभावस्य प्रतिवादिवाक्यभासंसर्गो विशेषणमित्याह—**तथेति**। भासंसर्गेण विशिष्टान्योन्याभावस्य तेनैव विशिष्टाभावस्य च परस्परं विशेषणविशेष्यभावमभिदधाति—**तयोश्चेति**। एकविशेषणविशिष्टयोर्मिथो विशेषणविशेष्यत्वप्रसङ्गस्यानिष्टपर्यवसानाभावमाशङ्क्य परिहरति—**न चैतदिति**। प्रामाणिकत्वादुपपत्तिमाशङ्क्याह—**प्रमाणस्येति**। विशिष्टयोर्विशेषणविशेष्यत्वे विशेषणस्यापि तद्भावादेकस्मिन्नेव क्रियाभेदं विना गुणप्रधानत्वापत्तेरिति हेतुमाह—**भासंसर्गस्येति**। एकविशेषणविशिष्टयोर्मिथो विशेषणविशेष्यत्वमविरुद्धं, तद्व्यवहारस्य दृष्टत्वादिति शङ्कते—**नन्विति**। रज्जुभुजगादिव्यवहारवैषम्यार्थं विशिनष्टि—**अबाधित इति**। दृश्यमानस्याबाधितत्वे वादिप्रतिवादिसंप्रतिपन्नत्वं हेतूकरोति—**इष्यते**

त्पक्ष एवासौ संगच्छते। मया हि विशिष्टं न विशेषणादितावन्मात्रमिष्यते। पक्षान्तरे[1]तूक्तव्यवहारोऽनुपपन्नः। विशिष्टस्य विशेषणाद्यनतिरेकात्। उपलक्षणं तर्हि भासंसर्ग इति चेन्न। प्रतियोगिनोऽभावोपलणत्वे निष्प्रतियोगिकाभावप्रतीतिप्रसङ्गात्। यतोऽवच्छेदकं सत् अवच्छेद्यप्रतीत्यनालिङ्गितमुपलक्षणं, तदालिङ्गेन तु विशेषणमेव स्यात्। अस्तु तर्ह्यन्योन्याभावादन्यो भासंसर्गाभावस्तम इति चेत्। न। अन्योन्या-

---

चेति। अनुभवाभ्युपगमावुक्तव्यवहारविषयावङ्गीकरोति—सत्यमिति। तर्हि स्वविशेषणविशेष्यत्वं स्वस्येव स्वीकृतमिति। नेत्याह—तथापीति। असावित्येकविशेषणविशिष्टयोर्मिथो विशेषणविशेष्यत्वव्यवहारो निरुच्यते। अस्मिन्पक्ष एवेत्यवधारणे हेतुमाह—मया हीति। विशिष्टस्य विशेषणादेस्तत्त्वान्यत्वाभ्यामनिर्वाच्यत्वाभ्युपगमादिति भावः। त्वत्पक्षवत्प*क्षान्तरेऽपि यथोक्तव्यवहारसम्भवात्पूर्वोक्तमवधारणमकिञ्चित्करमित्याशङ्क्याह—पक्षान्तरे त्विति। तत्र हेतुमाह—विशिष्टस्येति। एकस्मिन्नेव विशेषणविशेष्यतया युगपद् गुणप्रधानभावप्रसङ्गादिति शेषः। भासंसर्गो विशेषणमन्योन्याभावस्येति पक्षं प्रतिक्षिप्य द्वितीयं पक्षं [2]उपक्षिपति—उपलक्षणमिति। प्रतिवादिवाक्ये भासंसर्गस्यान्योन्याभावं, तमस्त्वेनाभिमताभावं च प्रत्युपलक्षणत्वमिति पक्षं प्रतिक्षिपति—न प्रतियोगिन इति। न हि प्रतियोगिनोऽभावं प्रत्युपलक्षणत्वमुपपद्यते। प्रतियोगिसङ्घटितस्यैवाभावस्य प्रतीतिनियमात्। अतोऽभावं प्रति प्रतियोगिनो नोपलक्षणत्वमित्यर्थः। उपलक्षणमपि विशेषणवद्व्यावर्तकत्वाद्व्यावर्त्यप्रतीत्यालिङ्गितमिति चेन्नेत्याह—यत इति। विपक्षे विशेषणोपलक्षणयोस्सांकर्यप्रसक्तिरित्याह—तदालिङ्गने त्विति। भासंसर्गस्य विशेषणत्वोपलक्षणत्वयोरुक्तं दोषं निराकर्तुं विशेषण†मुत्थापयति—अस्तु तर्हीति। किमेकोऽन्योन्याभावः, किं वा बहवः? नाद्य इत्याह—नान्योन्याभावस्येति। धर्मिणोऽन्यो हि प्रतियोगी। अन्यत्वं चान्योन्याभाववत्त्वम्। न चान्योन्याभावस्यान्योन्याभाववत्त्वं, एकत्रैवाश्रयाश्रयिभावानुपपत्तेः। अतोऽन्योन्याभावस्य प्रतियोगित्वायोगात्ततो भासंसर्गाभावस्यान्यत्वासम्भवात्। अन्योन्याभावादन्यः

---

1. पक्षान्तरेपीतरेषामयुक्त * पक्षान्तरेऽपि, नैय्यायिकमतेऽपि। 2. प्रतिक्षिपति † उत्थापयति–परित्यजतीत्यर्थः

भावस्यान्योन्याभावाभावात् ततोन्यत्वासम्भवात्। तत्राप्यन्योन्याभावसत्वे चानवस्था। *उक्तं चैतत्पुरस्तात्। न चान्योन्याभावादन्यो भासंसर्गाभावोऽपि तमः सम्भवेत्। तत्प्रध्वंसस्यापि तमस्त्वप्रसङ्गात्।

न च तस्य नित्यस्य तमस्त्वं युक्तमित्युक्तम्। एतेन प्रत्येकं प्रागभावादिस्तम इति निरस्तम्। भासंसर्गप्रागभावादेश्चैकस्यैव तमस्त्वे तत्प्रध्वंसादौ तमोबुद्धिर्न स्यादित्युक्तम्। आरोपितनीलरूप एवालोकाभावस्तम इति चेत्। न। अभावस्य तथात्वे मानाभावात्। निर्बीजा च कल्पना नार्थवती इतरथातिप्रसङ्गात्। कथं चायं भूतलनीलिमा-

---

इत्यादिवचनमनुचितमित्यर्थः। द्वितीयं दूषयति—**तत्रापीति**। अभावान्तरस्यानवश्यंभावित्वान्नानवस्थेत्याशङ्क्य शक्तिवादोक्तं स्मारयति—**उक्तं चेति**। भासंसर्गाभावस्यान्योन्याभावादन्यत्वमङ्गीकृत्यापि तमस्त्वं दूषयति—**न चेति**। भवतु भासंसर्गप्रध्वंसस्य तमस्त्वमित्यत आह—**न च तस्येति**। किं च भासंसर्गस्य प्रागभावादिः सर्वोऽपि प्रत्येकं तमः, सम्भूय वा किंचिदेव वा? । तत्र प्रथमं प्रध्वंसस्य तमस्त्वप्रत्याख्यानेन प्रत्यादिशति—**एतेनेति**। द्वितीयतृतीयौ निरस्यति—**भासंसर्गेति**। चकारेण द्वितीयो निरस्यते। मेलनस्यैवाभावात्। तमो नीलमिति प्रयोगाच्च न भाभावस्तम इति भावः। श्वैत्याभावे पटादौ नीलपदवदारोपितनीलरूपे भाभावे तमश्शब्दस्योपचारेण प्रयोगात्तस्य तमस्त्वमिति मतमुत्थापयति—**आरोपितेति**। नीलरूपवति द्रव्यविशेषे तमश्शब्दस्य मुख्यत्वे बाधकाभावात्, भाभावस्यारोपितरूपवत्वे मानाभावाच्च नैवमित्याह—**नाभावस्येति**। नन्वारोपो न मानमपेक्षते आरोपत्वादेव तस्याप्रामाणिकत्वादिति तत्राह—**निर्बीजा चेति**। ननु प्रयोजनमपि कल्पना नापेक्षते। प्रमाणवदित्यत आह—**इतरथेति**। मानकले विनैवाकस्मिकफलपनयार्थसिद्धौ सर्वस्सर्वं साधयेदित्यर्थः। ननु रूपवति तमश्शब्दस्य मुख्यत्वं

---

* चिदानन्दादेर्भेदाभेदविचारे "नहि भेदः कुतश्चिद्भिन्नः। अनवस्थाप्रसंगात्" इत्यादौ।

**भाऽभावे चाक्षुषः स्यात्। अन्धस्य निमीलिताक्षस्य वा साक्षाद्भासेत?। मनसैवेति चेन्न। तस्य साक्षाद्रूपाद्यबोधकत्वात्। रूपविशेषस्यापि तमस आलोकाभावव्यञ्जनीयत्वादालोकानपेक्षं चक्षुषा ग्रहणमिति चेत् । न आलोकाभावस्य रूपव्यञ्जकताऽदर्शनात् । न चालोकप्रागभावादिस्त-द्व्यञ्जकः। प्रध्वंसादौ तदभावापत्तेः। नाप्यालोकाभावमात्रम्। सत्य-प्यालोके तदन्योन्याभावस्यापि तमोव्यञ्जकताप्रसङ्गात्। कथं च**

---

नोपपद्यते। आलोकानपेक्षस्य चक्षुषो रूपरूपिप्रत्ययजनकत्वानुपपत्तेस्तमसो रूपवत्वे चाक्षुषत्वासम्भवस्य बाधकत्वादित्याशङ्क्य प्रतिबन्द्या परिहरति—**कथं चेति**। रूपवदभावस्य तत्रारोपितरूपस्य चालोकानपेक्षचक्षुर्विषयत्वानुपपत्ति-स्तुल्येति भावः। अयं हि भूतलस्य नीलिमा भाभावे आरोपितश्चेत् कथं चाक्षुषः स्यादिति योजना। आलोकाभावस्य तदारोपितरूपस्य चालोकनिरस्य-त्वान्निरपेक्षचक्षुर्विषयत्वमित्याशङ्क्याऽस्मन्मतेऽपि सममिदमित्यभिप्रेत्य प्रश्नान्तरं प्रस्तौति—**अन्धस्येति**। कथं भासेतेति पूर्वेण सम्बन्धः। स्वपक्षे त्वालोका-भावादेरपरोक्षता साक्षिबलादिति वक्ष्यते। अन्धादेश्चक्षुषा भाभावस्य तस्मि-न्नारोपितरूपस्याभानेऽपि मनसा तद्भानं सम्भवतीत्याशङ्कते—**मनसैवेति**। मनसश्चक्षुराद्यनपेक्षस्य बहिस्साधकत्वादृष्टेर्नैवमित्याह—**न तस्येति**। कथं चायं भूतलनीलिमेत्यत्र कन्दलिकारश्चोदयति—**रूपविशेषस्येति**। आलोको हि रूपस्य व्यञ्जको न तदभावः, तस्य तद्व्यञ्जकत्वादर्शनात्। अतो रूपविशेषस्य तमसो नालोकानपेक्षचक्षुर्विषयतेति दूषयति—**नालोकेति**। ननु रूपिव्यञ्ज-कत्वमपि भाभावस्य नोपपद्यते। तथा चालोकाभावस्य रूपितमोव्यञ्जकत्वं त्वयापि नाभ्युपेयमित्याशङ्क्य—आलोकाभावविशेषो वा त्वदिष्टतमोव्यञ्जक-स्तन्मात्रं वेति विकल्प्य नाद्य इत्याह—**न चेति**। न द्वितीय इत्याह—**नापीति**। आलोकाभावस्य रूपितमोव्यञ्जकत्वेऽपि तुल्यमेतदिति चेत् न। अन्योन्याभावादन्यस्यालोकाभावमात्रस्य तद्व्यञ्जकत्वाभ्युपगमात्। अन्योन्याभावे चान्यत्वस्य मायामयत्वोपपत्तेः। न च तदेव तमो लाघवादिति वाच्यम्। तद्ध्वंसस्यापि तमस्त्वप्रसङ्गात्। व्यञ्जकभावेऽपि व्यङ्ग्यव्यक्तिरनियता। दर्पणादौ

धर्मिसंविन्निरपेक्षा तमस्संविदभावसंविदिति वदन् सभ्यः स्यात् ।

अथ मतम्—अभावसंविदोऽपि धर्मिसन्निकर्षो निदानम् । न तु तद्ग्रहः । केवलव्यतिरेकाभावात् । न ह्यस्ति सम्भवः प्राप्तानुपलम्भसन्निकर्षादिभावेऽपि धर्म्यग्रहादभावाग्रह इति तन्न । धर्मिणोऽभावनिरूपकत्वात् । धर्मिग्रहनिरपेक्षे ह्यभावबोधे कुम्भो नेत्येव कल्पयेयुः कुम्भाभावम् । नयनसन्निकृष्टस्यापि च वायोश्चक्षुषोऽनिरूपकत्वात् ग्रहणव्यतिरेकसिद्धिः । तस्मादभावसंवित् धर्मिसंवित्सापेक्षा ।

अस्तु तर्हि अनुमितापवरकभूभागे तमःप्रतीतिः । न । तमसः

---

तथा दर्शनात् । व्यञ्जकमादाय व्यङ्ग्यापलापे चातिप्रसङ्गात् । अन्योन्याभावादन्यत्वस्य च त्वन्मते निरस्तत्वादित्याशयः । किञ्च तमस्संवित् अभावसंविन्न सम्भवति, धर्मिसंविन्निरपेक्षत्वात् घटसंविद्वदित्याह—**कथञ्चेति** । यत्तु धर्म्यग्रहेऽपि तत्संनिकर्षादभावग्रहोपपत्तिरिति तदनुवदति—**अथेति** । अपिशब्दो धर्मिज्ञानं दृष्टान्तयति । केवलस्य धर्मिग्रहमात्रस्य व्यतिरेकादभावग्रहस्य व्यतिरेकाभावादिति हेतुमाह—**केवलेति** । तदेतत्स्फुटयति—**न हीति** । आदिशब्देनाभावज्ञानसामग्री धर्मिग्रहातिरिक्ता गृह्यते । धर्मिणा सहितमभावज्ञानम् । तथा च धर्मिज्ञाननिरपेक्षमभावज्ञानमनुमितमिति दूषयति—**तन्नेति** । विपक्षे दोषमाह—**धर्मीति** । यत्तु केवलव्यतिरेकाभावाभिधानं तन्निराकरोति—**नयनेति** । चक्षुषा वायुः सन्निकृष्यते । न तु तेन चाक्षुषो वायुरिति चक्षुर्निरूप्यते । अतस्संनिकर्षस्य निरूपकत्वव्यभिचाराद्धर्मिणः संनिकर्षेऽप्यग्रहश्चेदभावानिरूपकत्वा[1]त्तद्ग्रहव्यतिरेके सति अभावग्रहव्यतिरेकः सिध्यतीत्यर्थः । अभावज्ञानस्य धर्मिसंनिकर्षो न हेतुरिति सिद्धे सिद्धमर्थं निगमयति—**तस्मादिति** । तमस्संविदोऽभावसंवित्वे धर्मिसंविन्निरपेक्षत्वानुपपत्तिरिति भावः । यत्पुनरस्तु वानुमितापवरकभूभागे तमोभानमित्युक्तं, तदनुद्रवति—**अस्तु तर्हीति** । अभावज्ञानस्य धर्मिज्ञानजन्यत्वं यदि नियतं हन्तायमपरको भूभागवानपवरकत्वात्सम्प्रतिपन्नवदित्यनुमिते धर्मिणि तमोभानं भविष्यतीत्यर्थः । निरूपकस्यानुमेयत्वेन परोक्षत्वे निरूप्यस्यापि परोक्षत्वापत्तावनुभवविरोधप्रसङ्गा-

---

1. व्यवहारादित्यधिकः पाठः ।

परोक्षत्वप्रसङ्गात् । तन्निरूपकधर्मिणः परोक्षत्वात् । आलोकाभाव-
प्रतीतिस्त्वस्माकं परोक्षैव । नापि तमःप्रतीतेः प्रतियोगिस्मृति-
निदानता सम्भविनी । गाढे तमसि सुप्तोत्थितेन सहसैव तमउप-
लम्भात् । तत्रालोकाभावसंविद्भावेऽपि सा तमोऽनुभवानुजैव सम्भवेत् ।
तमोऽनुभवप्राथम्यस्यानुभवसिद्धत्वात् । प्रतियोगिस्मृतेः प्राथम्ये मा-
नाभावाच्च ।

किञ्च तमसि सुप्तोत्थितस्य ते तमोऽनुभवनियमो न स्यात् ।
प्रतियोगिस्मृतेरनवश्यम्भावित्वात् । अनुभवापलापनिपुणेन चालोक-
स्तमोऽभावः इति वदन् कथं वार्येत । मानाभावेनेति चेन्न । आलोकस्त-

---

न्मैवमित्याह—न तमस इति । स्यादेतत् । त्वत्पक्षेऽपि भाभावग्रहे धर्मिग्रहो
वक्तव्यः । स च प्रत्यक्षादनुमानाद्वा । नाद्यः । आलोकानपेक्षचक्षुषोऽप्रकाश-
कत्वात् । नेतरः । धर्मिवदालोकाभावस्यापि परोक्षत्वापत्तेरिति । *तत्रा"न्यथा
तवे"त्यादिनोक्तं प्रतिबन्दिग्रहं प्रतिवदन्प्रतिविधत्ते—आलोकाभावेति ।
योग्यानुपलब्धिजन्यत्वाभ्युपगमादिति भावः । यत्पुनर्नापि"प्यत्र प्रतियोगिस्मृतौ
विवदितव्यमि"ति तत्राह—नापीति । प्रतियोगित्वाभिमतालोकस्य तमोदेशे
संनिध्यभावमभिधत्ते—गाढ इति । असन्निहितस्यापि तस्य तमोऽनुभवात्पूर्व-
काले स्मृतिः स्यादित्याशङ्क्याह—सुप्तेति । न च प्रतियोगिघटितं तमोभान-
मनुभवविरोधादित्याह—सहसेति । यत्तु "सर्वत्रैव हीत्यादि," तत्राह—
तत्रेति । अनुभवस्य प्रतियोगिस्मृतिप्राथम्येऽपि साम्यमाशङ्क्याह—प्रतियो-
गीति । भवतु प्रतियोगिनः स्मृतिः, तथापि नासाववश्यंभाविनी । अतो
हेत्वनियमे कार्यनियमासिद्धिरित्याह—किञ्चेति । धर्म्यादिप्रतीतिपूर्वकत्वेनैव
सर्वत्र तमोभानात्तमो भाभाव एवेत्याशङ्क्य प्रतिबन्द्या परिहरति—अनुभवेति ।
कथमित्याक्षेपो निवारकाभावात् । निवारकमाशङ्कते—मानेति । त्वदुक्तमनु-
मानमस्माभिरपि [1]सुवचमिति निवारकं निवारयति—नालोक इति । अत्रेत्या-
[लो]कपरामर्शः । तमसो भाभावत्वे व्यतिरेकी दर्शितो यथेत्यपेरर्थः । सम्भवानु-
[गु]णत्वात् तमसोऽभावत्वोपपत्त†ावनुकूलत्वादित्यर्थः । गुणत्वादौ तमस्संसर्गा-

---

* पूर्वपक्षावसरे 1. दुर्वचं † आलोकस्य

मस्संसर्गाभावः तमसा सहावस्थानायोग्यत्वात् कुम्भवदिति व्यतिरेकिप्रयोगस्यात्रापि सम्भवानुगुणत्वात् । विपक्षगामित्वाद्धेतोर्विरुद्धमत्रेति चेन्न । तस्याभावानुमानेऽपि तुल्यत्वात् । सामान्येतरत्वविशेषणं चात्रापि समम् ।

किञ्च सामान्येतरत्वविशेषितस्यापि साधनस्य भासंसर्गान्योन्याभावलक्षणसपक्षाप्रवेशिनोऽनध्यवसितत्वम् । तदितरत्वविशेषितं च साध्यमप्रसिद्धम् । स्फुटा चात्र विपक्षे बाधाभावात्, सन्दिग्धोपाधिता । आलोकेन सहावस्थानायोग्यता तु तमस आलोकनिवर्त्यत्वादप्युपपद्यते । तस्मान्न भासंसर्गाभावस्तमः । प्रयोगस्तु—तमो नालोकसं-

---

भावविलक्षणे तमसा सहावस्थानायोग्यत्वस्य सत्वाद्विरुद्धतेति शङ्कते—**विपक्षेति** आलोकस्य स्वावयवनिष्ठत्वात् गुणत्वादेश्च गुणादिगतत्वात्तयोः सहानवस्थानातुल्यं त्वदनुमानेऽपि विरुद्धत्वमित्याह—**न तस्येति** । तमसो भासंसर्गाभावत्वानुमाने विरुद्धत्वनिरासार्थं हेतोर्विशेषणमाशङ्क्यालोकस्य तमस्संसर्गाभावत्वानुमानेऽपि विशेषणत्वस्य तुल्यत्वाद्विरुद्धतोद्धारसिद्धिरित्याह—**सामान्येति** । आलोकतमसोः साम्यापादनेनातिप्रसङ्गबाधकमभिधाय तमसो भासंसर्गाभावत्वानुमाने दोषान्तरमाह—**किं चेति** । निर्विशेषणस्य हेतोरसाधारणत्वं तुल्यमित्यपेरर्थः । इतरेतराभावेतरो भासंसर्गाभावस्तम इति साध्यनिर्देशान्नासाधारणत्वमित्याशङ्क्याह— **तदितरत्वेति** । इतरेतराभावस्य प्रतियोगिताया निरस्तत्वात्तदितरत्वविशेषितभासंसर्गाभावत्वसाध्यस्याप्रसिद्धत्वादप्रसिद्धविशेषणतेत्यर्थः । किं च तमसो भासंसर्गाभावत्वाभावे बाधकाभावादप्रयोजको हेतुरित्याह—**स्फुटा चेति** । अत्रेति प्रतिवाद्युक्तं प्रयोगं परामृशति । प्रकृतहेत्वनुपपत्तिरेव तमसो भावत्वे बाधिकेत्याशङ्क्याह—**आलोकेनेति** । विमतो भाभावः तमश्शब्दवाच्यः इतरेतराभावेतरालोकाभावत्वादालोकवदिति व्यतिरेक्यनुमानं मानमनोहरकारोदीरितं निराकृतमित्युपसंहरति—**तस्मान्नेति** । उक्तमर्थमनुमानतो द्रढयति—**प्रयोगस्त्विति** । हेत्वोरनुभवपदमसिद्धिनिरासार्थमवसेयम् ।

सर्गाभावः प्रतियोगिप्रतीतिनिरपेक्षानुभवत्वात्, धर्मिप्रतीतिनिरपेक्षानुभवत्वाद्वा कुम्भवदिति। न तावदाश्रयासिद्धिः। तमस्सिद्धेरुभयवादिसिद्धत्वात्। यः पुनर्गुरुमतानुसारी तम एव नाङ्गीकुरुते स कथमुल्लङ्घितानुभवमर्यादो वादिनं प्रति सङ्गः स्यात्।

स्यान्मतम्—अप्रतीतावेव प्रतीतिभ्रमो मन्दानाम्। तमसः कारणाक्लृप्तेर्निष्पत्तिक्लृप्त्यसम्भवात्। कथं चालोकसापेक्षं चक्षुस्तमो गोचरयेत्?। कथं वा स्फीतालोकमध्यमध्यासीनस्य तमोबोधोऽन्धस्य सम्भवति?। सोऽयं वेदान्तस्पर्धया भ्रान्त्योपपत्तिमाचरन् हंस-

---

नन्वालोकसंसर्गाभावस्ततोऽन्यद्वा तमश्शब्देन पक्षीक्रियते? आद्ये व्याघातः। द्वितीये त्वाश्रयासिद्धिरिति। तत्राह—**न तावदिति**। उभयसंमतस्य तमोमात्रस्य पक्षत्वान्नाश्रयासिद्धिव्याघातौ। अन्यथा त्वदनुमानेऽपि सिद्धसाध्यताव्याघाताविति तमस्सिद्धेरुभयासिद्धत्वमसिद्धमिति शङ्कते—**यः पुनरिति**। तमस्तमालमालाश्यामलमिति अनुभवविरोधेन समाधत्ते—**स कथमिति**। अनुभवे विवदमानः शङ्कते—**स्यान्मतमिति**। बाधाभावान्नेयं भ्रान्तिरित्याशङ्क्याह—[1]**कारणाक्लृप्तेरिति**। किं च तमसो न प्रतीतिकारणमपि क्लृप्तमस्तीत्याह—**कथं चेति**। आलोकाभावत्वात्तद्विरोधित्वाद्वा तमसस्तन्निरपेक्षचक्षुर्विषयत्वमित्याशङ्क्याह—**कथं चेति**। **अन्धस्य**। निमीलिताक्षस्य वेति शेषः। रूपादिप्रतीतौ तमःप्रतीतिरिति भ्रान्तिरूपेण तमःप्रतीतेर्गतिं वदतोऽख्यातिवादिनो राद्धान्तहानिरित्यत्राह—**सोऽयमिति**। कश्चित्किल काकपोतो वणिजां बालकै रक्ष्यमाणस्तेषां हर्षमावहन्नखर्वं गर्वमारूढो रूढवयसामाधिक्यमात्मनो मेने। ते च कदाचिदभिरक्षिणो विहायसि हेलया गच्छन्तं हंसं आलक्ष्य स्वकीयं करटपोतमूचिरे "गच्छ तुच्छमते त्वयायं हंसो विजीयतामि"ति। [2]तदात्मीयवीर्यपर्यवसानमपश्यन् प्रवृद्धहंसस्पर्धो गमनागमनाभ्यां हंसमुपहसन्नतिवेगितो लवणजलधिमध्ये परिपतितः। तमुपरिचरो हंसस्समुत्थातुमनीश्वरं तरङ्गमालापरिवेष्टितं निश्चेष्टं अरिष्टं दृष्ट्वा कृपाविष्टहृदयः समादाय पद्भ्यां भूयो यथागतमभ्येत्य रक्षिभ्यः समर्पयांचक्रे। एव-

---

1. तमस इति 2. यथा

काकीयवृत्तान्तं नातिवर्तते। तथाहि—तमसस्तत्प्रतीतेश्च सिद्धावसिद्धौ च न तद्बाधः। तदन्यथात्वसाधनं वा तवोल्लसति। एतेन तद्विशेषितव्यवहारस्य धर्मिता व्याख्याता। परस्य तत्सिद्धमेव स्मार्यत इति चेन्न, तस्य कारणाक्लृप्त्यसिद्धेः। मूलप्रकृतेः सहसा तमो विवर्तत इति तस्य रहस्यम्। मूलकारणाद्धि तमोरूपाविद्योत्पत्तिः पुराणे प्रसिद्धा।

"तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः॥"—इति॥

---

मयं गुरुमतानुसारी ब्रह्मवादिनि स्पर्धया रूपभाने तमोभानमिति भ्रमरूपं तमोभानमभिदधानः स्वसिद्धान्तविरुद्धवादी असत्ख्यातिवादी जात इति स्वपक्षनिक्षेपक्षमो न भवतीत्यर्थः। तमोव्यवहारस्य बाध्यत्वात् तमस्तत्प्रती[1]त्योः "अप्रतीतावेव प्रतीतिभ्रमो मन्दाना[2]मि"त्युक्तत्वात्कथं अपराद्धान्तः, शङ्कयते। तत्राह—**तथा हीति**। विषयविषयिणोस्तमस्तत्प्र[3]तीत्योरस्तित्वे सर्वप्रत्यययाथात्म्यन्यायेन तमोवि[4]षयौ भ्रान्तिबाधौ न सम्भवतः। नास्तित्वे तु विषयाभावान्न तौ सुतरामित्यर्थः। तमोव्यवहारस्य बाध्यत्वादि साध्यते न तमस्तत्प्रतीत्योरित्याशङ्क्याह—**एतेनेति**। *तयोरभावे तमोविशेषितव्यवहाराभावान्न तस्य बाध्यत्वादिसाधनं सिध्यति आश्रयासिद्धेरित्यर्थः। स्वपक्षे तमोभानस्य भ्रमत्वं नोच्यते, परपक्षे तु तस्य भ्रमत्वं सिद्धं, परं प्रति [5]स्मार्यते अतो नापराद्धान्त इति शङ्कते—**परस्येति**। परपक्षे तमस्सत्ताप्रतीत्योरक्लृप्तकारणत्वासिद्धेर्न तद्भानस्य भ्रमत्वमिति परिहरति—**न तस्येति**। किं तर्हि तमसः सत्ताकार[6]णमभिप्रेतं? तदाह—**मूलप्रकृतेरिति**। बाह्यनिमित्तानपेक्षत्वं दर्शयति—**सहसेति**। तत्र प्रमाणमाह—**मूलकारणादिति**।

तमोऽप्रकाशो मोहः स्यादन्तःकरणविभ्रमः।
महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषिता॥
मरणं[†] चान्धतामिस्र उच्यत" इति।

तत्रैवास्य श्लोकस्य व्याख्यानं द्रष्टव्यम्॥

---

1. "रित्याशंक्य" इत्यधिकः पाठः 2. इति नानोक्तत्वात् 3. विषयेन भ्रान्तिबाधेन 4. प्रतीतिभानयोरित्यधिकः पाठः * तयोः तमस्तत्प्रतीत्योरित्यर्थः 5. साध्यते 6. कारणवदभि † क्रोधस्तामिस्रसंज्ञोऽन्धतामिस्रोऽभिनिवेशिता।

तमसोऽचाक्षुषत्वप्रदर्शनप्रयासोऽनुगुण एव । एवं च स्फीतालोकेऽपि तमोबोधोऽन्धस्य न विरुध्यते । आन्तरस्यान्धतमसस्य नित्यानुभववेद्यत्वात् । तस्मात्तद*भावेतरदपि तमो यथाऽऽलोकविरोधात्तद्भावाभावि, एवमज्ञानमपि ज्ञानभावाभावि । अतोऽनिर्वचनीयं तदनिर्वचनीयस्य रूप्यादेरुपादानमिति सिद्धम् ।

### वियदादेः प्रपञ्चस्य मायाविलासत्वे प्रमाणप्रदर्शनम्

वियदादिप्रपञ्चोऽपि रूप्यवत्स्वप्नप्रपञ्चवच्च मायाविलास एवेति द्रष्टव्यम् । प्रसिद्धं हि मायामयत्वे अस्य श्रुतिवाक्यं मानम् । "इन्द्रो मायाभिः" "मायां तु प्रकृतिं विद्यादि" त्यादि । मिथ्यात्वादप्यस्य रूप्यादिवन्मायामयत्वं युक्तम् । उक्तं ह्यस्य मिथ्यात्वे मानम् ।

---

यत्त्वालोकसापेक्षं चक्षुः कथं तमो गोचरयेदिति तत्राह—**तमस इति** । बाह्यसहकार्यभावेऽपि साक्षिसहकृतं चक्षुस्तमो विषयीकरोति भावः । यत्तु कथं वा स्फीतालोकमध्यमध्यासीनस्येत्यादि तत्राह—**एवं चेति** । तमसः साक्षिवेद्यत्वे सति, निमीलितचक्षुषः साक्षिसहकृतान्तर्मु[1]खचक्षुषा आन्तरं तमो भाति, [2]अन्धस्य तु साक्षिणैवेति विभागः । एतेन तमसो [3]भानकारणाक्लृप्तिरपास्ता । सम्प्रति प्रसाधितं दृष्टान्तमुपसंहरति—**तस्मादिति** । दृष्टान्तगतमर्थं दार्ष्टान्तिके समर्पयति—**एवमिति** । अभावविलक्षणाज्ञानसमर्थने फलितमाह—**अत इति** । रूप्यादेर्मायामयत्वसाधनं कुत्रोपयुक्तमित्याशङ्क्य प्रपञ्चस्य मायामयत्वसिद्धौ इत्याह—**वियदादीति** । विमतमविद्याविलसितम् । अविद्यातोऽन्यत्वे सति जडत्वात् [4]रूप्यादिवदित्याह—**रूप्यवदिति** । विमतम् अविद्यात्मकं स्वाधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वात् संमतवदित्याह—**मिथ्यात्वादिति** । हेत्वसिद्धिं श्रुतिस्मृतिभ्यां परिहरति—**उक्तं हीत्यदिना** । ज्ञप्तिमात्रं तत्वमित्युक्त्वा तस्य जन्मादिविकारवत्वं निरस्यति—†**अत्यन्तेति** । विरोधं

---

* तदभावः आलोकाभावः 1. मुखचक्षुषा । 2. अर्थस्य 3. ज्ञानकारणक्लृप्तिः 4. द्रव्यवत् † ज्ञानस्वरूपमिति पद्यगतात्यन्तपदं ।

"नेह नानास्ति किंचन।" "वाचारम्भणं विकारो नामधेय"मित्यादि। पुराणवचांसि च प्रसिद्धानि।

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥"—इति

*"यदेतत् दृश्यते मूर्तमेतत् ज्ञानात्मनस्तव।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे॥"—इत्यादीनि

अनुमानान्यप्याचार्यसूचितान्युच्यन्ते। तथाहि—विवादपदं बाध्यं जडत्वात्परिच्छिन्नत्वाद् दृश्यत्वाच्च भ्रमसिद्धवत्। न तावत्प्रपञ्चस्य प्रमाणवत्त्वेन बाधः। तदसिद्धेः। नापि प्रमाणासत्त्वादाश्रयासिद्धिः। प्रतीतिमात्रसिद्धस्य प्रतिबिम्बवन्निस्स्वभावविलक्षणस्य साधना-

---

परिहरति—परमार्थत इति। कूटस्थं ज्ञानमात्रं चेत्तत्त्वं कथं तर्हि नभोनभस्वदादिज्ञेयवस्तुप्रतिभानं, तत्राह—तदेवेति। कथं ज्ञानस्य ज्ञेयरूपेण स्थितिस्तत्राह—भ्रान्तीति। ज्ञानस्वरूपमेवार्थात्मना स्थितमित्येतदुपपादयति—यदेतदिति। यदेतत् परिच्छिन्नं पृथिव्यादि दृश्यते तदेतज्ज्ञानात्मनस्तवैव रूपमिति योजना। भ्रान्तिदर्शनतस्स्थितमित्येतत्प्रपञ्चयति—अर्थस्वरूपमिति। एतदेव ज्ञानं, मोहसम्प्लवं निमित्तीकृत्य ज्ञेयरूपं कल्पयन्तो भ्रान्त्या ज्ञानं ज्ञेयमिति भेदं विदन्तीत्यर्थः। आदिपदेन

"यदस्ति यन्नास्ति तदात्मरूपं ग्राह्यं गृहीतेऽपि मृषैव कल्पना।"
"एकस्स भिद्यते भ्रान्त्या मायया न स्वरूपतः।"

"भूतानि विष्णुर्भुवनानि विष्णुरि"त्यादीनि गृह्यन्ते। यस्त्वागममात्रान्न तुष्यति तं प्रति अनुमानतो हेतुं साधयति—अनुमानानीति। तेषामदुष्टत्वं सूचयति—आचार्यसूचितानीति। ननु प्रपञ्चो धर्मी प्रामाणिको न वा? आद्ये बाधः। द्वितीये त्वाश्रयासिद्धिः। मानसिद्धस्यैवाश्रयत्वादिति तत्राह—प्रतीतिमात्रेति। प्रतीतिमात्रसिद्धस्य साधनाश्रयतोपपत्तेरिति सम्बन्धः। ननु प्रपञ्चो नाश्रयः मानाविषयत्वान्नरविषाणवदित्याशङ्क्य प्रति-

---

* भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः। ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः। इमौ अनयोः पूर्वोत्तरार्धयोरुत्तरार्धपूर्वार्धत्वेन दृश्येते।

**श्रयतोपपत्तेः । न चाश्रयासिद्धिविलोपप्रसङ्गः । 'असज्जगज्जनयति । स्वप्रागभाववदि' त्यादावाश्रयासिद्धिसिद्धेः । न च प्रमाणसिद्धमेवानुमानाङ्गमिति नियन्तुं शक्यम् । प्रतिबिम्बादेरप्यनुमानाङ्गत्वात् । तद्ज्ञानमेवानुमानाङ्गमिति चेन्न । प्रतिबिम्बस्यापि तद्विशेषणतयानुमानाङ्गत्वोपपत्तेः ।**

**अन्यथा ज्ञानमात्रस्यानुमानाङ्गत्वे भागे बाधः । प्रतिबिम्बोपलक्षितं ज्ञानं तथास्त्विति चेन्न । प्रतिबिम्बस्याङ्गत्वेऽनंगत्वे**

---

बिम्बे व्यभिचारमाह—**प्रतिबिम्बवदिति** । किं च निरुपाख्यत्वमत्रोपाधिः । न च साधनव्याप्तिः । प्रपञ्चस्यापरोक्षानुभवादेव तद्विलक्षणत्वावगमादित्याह—**निःस्वभावविलक्षणस्येति** । मानाविषयत्वहेतुं प्रत्याश्रयत्वानाश्रयत्वयोर्व्याघातश्चेत्यभिप्रायः । अप्रामाणिकस्याप्याश्रयत्वे सर्वस्यैवाश्रयत्वसंभवादाश्रयासिद्धिदोषोऽस्तमियादित्याशङ्क्याह—**न चेति** । असत् जगज्जनयतीत्यत्रासत्वादिति हेतुर्द्रष्टव्यः । आदिपदेन[1]नृशृङ्गः तीक्ष्णः शृङ्गत्वात् गोशृङ्गवदित्यादि गृह्यते । ननु प्रतीतमात्रस्याश्रयत्वे दूषणादेरपि तथाभूतस्य सुलभत्वादशेषवादविधिनिषेधप्रसङ्गात्प्रमितस्यैवाश्रयत्वमिति तत्राह—**न चेति** । [वादि] प्रतिवादिमध्यस्थानां मानसिद्धमेतदिति सम्मतत्वेन त्रिचतुरकक्ष्याविश्रान्तस्य तत्तदाभासलक्षणा[2]कान्तस्याश्रयस्य दूषणादेश्च सम्भवादनुमानाङ्गस्याश्रयादेस्तत्वावेदकमानसिद्धत्वनियमो नास्तीति मत्वाह—**प्रतिबिम्बादेरिति** । प्रतिबिम्बादिज्ञानं सत्यमेव साधनाङ्गं नासत्यं प्रतिबिम्बादीति शङ्कते—**तज्ज्ञानमिति** । किं प्रतिबिम्बादिविशेषितं ज्ञानं अनुमानाङ्गं किं वा ज्ञानमात्रमथवा तदुपलक्षितं ज्ञानमिति विकल्प्याद्यं प्रत्याह—**न प्रतिबिम्बस्येति** । कार्योपरक्तत्वेन व्यावर्तकस्य विशेषणत्वादित्यर्थः । द्वितीयमनूद्य दूषयति—**अन्यथेत्यादिना** । घटादिज्ञानानां बिम्बाद्यनुमापकत्वानभ्युपगमादिति भावः । तृतीयमनुवदति—**प्रतिबिम्बोपलक्षितमिति** । उपलक्षणस्यापि प्रतिबिम्बस्य बिम्बानुमानेऽङ्गत्वमनङ्गत्वं वा, प्रथमे मिथ्याभूतस्यापि साधनाङ्गत्वाङ्गीकारप्रसङ्गः । द्वितीये ज्ञानमात्रस्य तदङ्गतायां भागे बाधः स्यादिति दूषयति—**न**

---

1. श्रृंगः 2. लक्षणानाक्रान्तस्य

**चोक्तदोषापत्तेः । मानालिङ्गितमेवानुमानाङ्गमिति पक्षे परपक्षदूषणानुमानं न स्यात् । स्मर्यमाणोदनादौ च प्रवृत्त्यर्थमिष्टसाधनत्वानुमानं न भवेत् । तदपि कदाचिन्मानगम्यमिति चेत् तर्हि तदाभाससिद्धस्यापि धर्मितेत्यागतम् ।**

**नन्वेकस्यैवोभयवादिसिद्धस्यानुमानधर्मिता । अन्यथा अन्यतरासिद्धिप्रसङ्गात् । न च कल्पितस्योभयसिद्धता । एकस्यापि तद्बाधेऽन्यस्यापि तत्प्रसङ्गात् । अतो मानसिद्धमेवानुमानाङ्गम् । न । साधारणतया,**

---

**प्रतिबिम्बस्येति** । किं च विमतं विहेयं भ्रान्तिमूलत्वात्संमतवदिति परपक्षप्रतिक्षेपानुमानं नियमपक्षे न सिध्यति । परपक्षस्य मानागम्यत्वात् । अन्यथा तन्निषेधव्याघातादित्याह—**मानालिङ्गितमिति** । नियमपक्षे दोषान्तरमाह—**स्मर्यमाणेति** । विमतमिष्टसाधनं अन्नत्वात् भुक्तान्नवदिति भुक्तसजातीये स्मर्यमाणे प्रवृत्त्यर्थमनुमानं दृश्यते । तदपि नियमपक्षे न संभवेदिति । स्मर्यमाणस्य तदा मानाविषयत्वादित्यर्थः । यद्यपि स्मर्यमाणं स्मृतिकाले मानगम्यं न भवति, तथापि तन्मूलानुभवकाले मानगम्यमेव । अतो मानसिद्धस्यानुमानाङ्गत्वे नेयं व्यभिचारभूमिरिति चोदयति—**तदपीति** । यदाकदाचिन्मानसिद्धस्य साधनाङ्गत्वे सर्वस्यैव ते तदङ्गता । यदाकदाचित् मानविषयत्वस्य सर्वत्र सत्वात् । अतो मानसिद्धत्वविशेषणमनर्थकमिति परिहरति—**तर्हीति** । प्रामाणिकस्यैवसाधनाङ्गत्वमिति युक्त्या साधयन्नाशङ्कते—**नन्विति** । प्रयोक्तुः सिद्धतामात्रेण धर्मिता किं न स्यादित्याशङ्क्याह—**अन्यथेति** । अस्तु तर्हि कल्पितस्यैवाप्रामाणिकस्योभयसिद्धत्वेन धर्मितेत्यत आह—**न चेति** । कल्पितमेकमुभयसिद्धं चेदेकस्य सम्यक्ज्ञानात्तद्बाधे सम्यग्ज्ञानहीनस्यान्यस्यापि कल्पितबाधः स्यात् । घटनाशकवतो देवदत्तस्य [1]तन्नाशदर्शने तद्धेतुशून्ययज्ञदत्तस्यापि तन्नाशदर्शनात् । दृश्यते च भ्रमविषयरजतादेर्भ्रान्तभेदेन निवृत्त्यनिवृत्तिव्यवस्था । अतो न कल्पितस्य धर्मित्वमुभयसिद्धत्वासम्भवादित्यर्थः । कल्पितस्य धर्मित्वासंभवे फलितमाह—**अत इति** । कल्पितत्वाकल्पितत्वविशेषणमन्तरेण प्रसिद्धिमात्रसिद्धस्यानुमानाङ्गत्वाद्विशेषणस्य केवलव्यतिरेकविरहिणो

---

1. तन्नाशे तद्धेतु

**प्रसिद्धस्याप्यनुमानाङ्गतोपपत्तेः। कथमन्यथा शब्दो नित्योऽनित्यो वा साध्येत। न हि शब्दः साधारणः तद्विशेषस्याप्रत्यक्षतायास्तार्किक-सामयिकत्वात्। वलयाकाराः शब्दा जायन्ते अतस्तत्साधारणतेति चेन्न। एकस्योभयाध्यक्षत्वे मानाभावात्। तदेवं प्रसिद्धितोऽप्याश्रयासिद्धिर-सिद्धा। नापि हेत्वसिद्धिः। जडत्वं ह्यचिद्रूपत्वं, परिच्छिन्नत्वं च भिन्नत्वं, दृश्यता तु दृक्कर्मता। सर्वञ्चैतत्पक्षधर्मतया सम्प्रतिपन्नम्।**

---

ऽकिञ्चित्करत्वान्नाश्रयासिध्यादि दूषणमिति समाधत्ते—**न साधारणतयेति।** प्रसिद्धमात्रस्यानुमानाङ्गतानङ्गीकारे तार्किकमीमांसकयोः शब्दविषयो विचारो न निर्वहेत्। अतस्ताभ्यां मानविषयस्यैवानुमानाङ्गत्वं इति नाभिनिवेष्टव्य-मित्याह—**कथमिति।** अस्तु तर्हि साधारणप्रसिद्धिसिद्धस्य शब्दस्य धर्मित्वम् अत आह—**न हीति। तद्विशेषस्य।** विषयशब्दविशेषस्योपान्त्यादेरिति यावत्। श्रोत्रग्राह्यत्वाभावे कथमुपान्त्यादेश्शब्दत्वमित्याशंक्याह—**[तार्किक] सामयिकत्वादिति।** श्रोत्राग्राह्यत्वेऽपि शब्दत्वमुपान्त्यादेस्तार्किकैस्सङ्केत्यते। न चासौ मीमांसकसमयः। अतः साधारणशब्दाभावान्न तद्विषयो विचारः सम्भ-वतीत्यर्थः। शब्दानां वलयाकारेण वीचीसान्तानवज्जायमानत्वादुपान्त्यादेरप्र-त्यक्षत्वेऽपि पक्षीकृतान्त्यशब्दस्य वलयाकारत्वेनानेकसाधारण्यसंभवादेकस्योभय-साधारणत्वोपपत्तेः शब्दविषयो विचारः सुकर इति तार्किकः शङ्कते—**वलया-कारा इति।** एकस्य शब्दस्य त्वन्मते द्वाभ्यां प्रत्यक्षत्वं मानतो न सिध्यति। एकश्रोत्रसमवेतशब्दव्यक्तेः श्रोत्रान्तरे समवायानभ्युपगमात्। अतः शब्दविष-यविचारानुपपत्तिरित्युत्तरमाह—**नैकस्येति।** प्रसिद्धमात्रस्य शब्दस्यानित्य-त्वादिसाधने धर्मितावत्प्रपञ्चस्यापि प्रतिपन्नमात्रस्याश्रयत्वसिद्धेर्नाश्रयासिद्धिधर्मि-ग्रहबाधावित्युपसंहरति—**तदेवमिति।** प्रसिद्धितोऽप्याश्रयत्वसंभवादिति शेषः। स्वरूपासिद्धिं निरस्यति—**नापीति।** तदर्थं हेत्वर्थं कथयति—**जडत्वं हीत्यादिना।** कथमेतावता हेतूनां नाश्रयासिद्धत्वमित्याशङ्क्य तल्लक्ष-णाभावादित्याह—**सर्वं चेति।** न च दृक्कर्मत्वं नित्यानुमेयेषु नास्ति। तेषामपि[1]स्वातिरिक्तदृगधीनव्यवहारनियमादिति भावः। [2]जडत्वादीनां प्रती-

---

1. स्वतिरेका दर्शना....न 2. अस्थि इत्यधिकः पाठः

तेषां प्रतीतिरपि धर्मिप्रतीतिवद् द्रष्टव्या। अन्यथा सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादिति हेतुर्न कृत्स्नं शब्दजातं व्याप्नुयात्। "उपान्त्यादिशब्देष्वभावात्। तस्मात् "उक्तशब्दं शृणोमी"ति शब्दप्रत्यक्षताप्रसिद्धिवज्जडत्वादिप्रसिद्धौ न मानमन्वेष्टव्यम्। मतान्तरे तु स्मर्यमाणान्नत्वाद्युदाहरणीयम्।

प्रपञ्चान्तर्गतो हेतुर्न स्वधर्मः। स्ववृत्तिविरोधात्। अतो भागासिद्धिः। तथा बाध्यत्वे बाध्यत्वं साध्यं नास्तीति भागे बाधश्च। यदि कश्चिन्न दृश्यत्वादि पक्षीकुर्यात् स मिथ्यात्वे व्यभिचारं कथं परिहरेत्। किञ्चापक्षत्वेऽपि दृश्यत्वस्यादृश्यत्वे हेत्वसिद्धिः। मिथ्यात्व-

---

तिर्मानाद्वा भ्रान्तेर्वा, नाद्यः। वादिनोऽसिद्धेः। नान्त्यः। प्रतिवादिनोऽसिद्धेरिति तत्राह—**तेषमिति**। हेतुप्रतीतिः साधारणी नोपयुज्यते, प्रामाणिकी तु तथेति निर्बन्धे दोषमाह—**अन्यथेति**। हेत्वन्तरेण शब्दानित्यानुमानान्नावद्यमिति चेत्। तथापि मानं विना शब्दस्याध्यक्षत्वप्रसिद्धिवत् प्रपञ्चस्यापि मानमनपेक्ष्य जडत्वादिप्रसिद्धिरुपयुज्यतामित्याह—**तस्मादिति**। तार्किकमते मानसिद्धस्यैव मानाङ्गत्वनियमेऽपि न ममीमांसकसमये तन्नियमोऽस्तीत्याशङ्क्याह—**मतान्तरे त्विति**। ननु हेतुसाध्ये पक्षान्तर्भूते न वा। आद्ये तयोस्साध्यसाधने स्तः न वा, नाद्यः। स्ववृत्तिविरोधात्। नेतरो भागासिद्धेः बाधाच्चेति प्रत्यवतिष्ठते—**प्रपञ्चेति**। द्वितीयमनूद्य दूषयति—**यदीति**। मिथ्यात्वस्य मिथ्यात्वे स्वाश्रयवृत्तिदोषान्मिथ्यात्वाभावेऽपि दृश्यत्वादिभावाद्व्यभिचारः। तदभावे तस्यासिद्धत्वादिप्रसङ्गादित्यर्थः। दृश्यत्वादेरपक्षान्तर्भावे दोषान्तरमाह—**किं चेति**। दृश्यत्वस्य दृश्यत्वे स्ववृत्तिविरोधस्योक्तत्वाददृश्यत्वे तस्यासिद्धिः, साधक*ाविषयत्वात्। अन्यथा दृगभेदादित्याह—**अपक्षत्वेऽपीति**। मिथ्यात्वस्यापि मिथ्यात्वे स्ववृत्तेरमिथ्यात्वे यद् दृश्यं तन्मिथ्येति व्याप्त्यसिद्धिर्मिथ्यात्वे व्यभिचारादित्याह—**मिथ्यात्वस्येति**। दृश्यत्वादेर्धर्म्यन्तर्भावमभ्युपेत्य स्ववृत्तिविरोधं समाधत्ते—**नेत्यादिना**। दृश्यत्वादेरौपाधिकत्वेऽपि स्वधर्मत्वे स्ववृत्तिविरोधस्य कः समाधिरत आह—**उपाधीति**। औपाधिकस्य दृश्यत्वा-

---

* प्रमाणागोचरत्वादित्यर्थः

**स्यामिथ्यात्वेऽन्वयविरोधः स्पष्ट इति चेन्न। औपाधिकत्वेनाप्यविरोधात्। उपाधियोगात्किलौपाधिकयोगः। अतः स्वस्मिन्नप्युपाधियोगादौपाधिकं वर्तते। तर्ह्युपाधावुपाधेरभावादुक्तदोषः स्यात्। न। अन्योन्याभाव भेद-दृक्सम्बन्ध-बाधसम्बन्धानामुपाधीनां स्वपरनिर्वाहकत्वात्। अवश्यं चान्योन्याभावाद्यतिरिक्तानौपाधिकेष्वेव वस्तुषु स्ववृत्तिविरोध आस्थेयः। अन्यथा भावलक्षणभङ्गप्रसङ्गात्। यदि भावलक्षणमपि न स्ववृत्तिः स्यात् तदा तस्य भागासिद्धिः। यदि च दृश्यत्वं न स्ववृत्ति**

---

देरुपाधिवशेन स्ववृत्तिश्चेत्तर्हि नोपाधावुपाधिरस्ति वृत्तिविरोधादुपाध्यन्तराभावाच्च। तथा च तत्रैव प्रपञ्चान्तर्भूते दृश्यत्वाद्युपाधौ दृश्यत्वाद्यभावात् भागासिद्धिः। मिथ्यात्वोपाधौ भागे बाधश्चेति शङ्कते—**तर्हीति**। जडत्वादिषु हेतुसाध्येषु क्रमेणोपाधीनुपदर्शयन्नुत्तरमाह-**नेत्यादिना**। संविदन्यत्वाद्युपाधीनां प्रपञ्चे जडत्वादिव्यवहारहेतुत्वेऽपि न स्वात्मनि तद्धेतुत्वं, एकत्रैव निर्वाह्यनिर्वाहकत्वानुपपत्तेरित्याशङ्क्याह—**अवश्यं चेति**। समवायादौ स्वपरनिर्वाहकत्वस्य स्वयमभ्युपगमात्तदशक्यनिरसनमिति भावः। अविद्याध्यासस्य स्वनिर्वाहकत्वमपि परनिर्वाहकत्ववदिष्टमिति[1]तद्व्यासेधार्थं विशिनष्टि—**वस्तुष्विति**। स्ववृत्तेश्चेद् क्वचित् दोषत्वमविशेषात्तस्याः सर्वत्र तथात्वमित्याशङ्क्याह—**अन्यथेति**। भावलक्षणं भावोऽभावो वा?। प्रथमे तस्य स्ववृत्तिरस्ति न वा। आद्ये स्ववृत्तिरदोषःस्यादिति मन्वानो द्वितीयमनुभाष्य दूषयति—**यदीति**। अभावत्वे तु न तस्य भावलक्षणत्वम्। न हि घटाभावो घटस्य लक्षणं इति द्रष्टव्यम्। किं च यद्वस्तु तद्वेद्यमिति वदता दृश्यत्वस्य वस्तुत्वमवस्तुत्वं वेष्यते। आद्ये तस्य दृश्यत्वं वाच्यम्। अन्यथा तस्य व्यभिचाराद्व्याप्त्यसिद्धेः। अतो न दोषः स्ववृत्तिः। अवस्तुत्वे दृश्यत्वस्या*हेतुत्वमिति मत्वाह—**यदि चेति**। दृशेः प्रत्यक्षवचनात् दृश्यत्वं प्रत्यक्षविषयत्वम्। तथा च नित्यानुमेयभागे तदभावात् भागासिद्धिरित्याशङ्क्याह—**तदेवमिति**। प्रमाणाप्रमाणसाधारणी प्रतीतिर्दृगुच्यते। तद्विषयत्वं च प्रपञ्चमात्रे संमतमिति कुतो भागासिद्धिरित्यर्थः। मिथ्यात्वादौ दृश्यत्वादिवन्मिथ्यात्वसद्भावकथनान्न भागे बाधोऽपीत्याह—

---

1. त....धेसार्थ * अवस्तुत्वस्याहेतुत्वमित्यर्थः

तदा आत्मा दृश्यो वस्तुत्वादित्येतद्दृश्यत्वेनानैकान्तं स्यात्। तदेवं न भागेऽसिद्धिर्वा बाधो वा। नाप्यत्राप्रयोजकता उपाधेरसभवात्।

ननु दोषगम्यत्वमुपाधिः। न च तस्य साधनव्यापकता। तद्व्याप्तौ मिथ्यात्वस्योपाधित्वात्। न च तदपि साधनव्यापकम्। तत्र दोषगम्यत्वस्योपाधेरुक्तत्वात्। हन्त अन्योन्याश्रयत्वम्। तथाहि—दोषगम्यत्वस्योपाधित्वे मिथ्यात्वं साधनाव्यापकत्वादुपाधिः। तदुपाधित्वे च दोषगम्यत्वमपि तथैवोपाधिरिति। सत्यम्। तथाप्यनयोः साधनव्यापकतयानुपाधिताप्यन्योन्याश्रया। तथा च प्रकृते निरुपाधिसम्बन्धासिद्धिः। एवं जडत्वेन मिथ्यात्वसाधने परिच्छिन्नत्वमुपाधिः।

---

बाधो वेति। यागे पश्वालंभो धर्महेतुरहिंसात्वादितिवत् दृश्यत्वादावप्यन्यथासिद्धिरित्याशङ्क्याह—नापीति। निषेध्यत्वप्रयुक्तव्याप्त्युपजीवित्वेनाहिं-[1]सात्वस्य व्याप्यत्वासिद्धत्वेऽपि दृश्यत्वादेरुपाधिनिबन्धनव्याप्त्यनुपजीवित्वादिति हेतुमाह—उपाधेरिति। उपाध्यसंभवस्यासिद्धिं शङ्कते—नन्विति। साधनवन्निष्ठात्यन्ताभावाप्रतियोगित्वान्न तस्योपाधित्वमित्याशङ्क्याह—न चेति। यत् दृश्यं तद् दोषगम्यमिति व्याप्तौ मिथ्यात्वस्य प्रयोजकत्वात् दृश्यत्वदोषगम्यत्वयोस्स्वतो व्याप्त्यसिद्धेरिति हेतुमाह—तद्व्याप्ताविति। यद् दृश्यं तन्मिथ्येति व्याप्तेर्न मिथ्यात्वस्योपाधित्वमित्याशङ्क्यानौपाधिकव्याप्त्यसिद्धेर्मैवमित्याह—न चेति। परस्परोपाधौ परस्पराश्रयत्वं परिचोदयति—हन्तेति। तथैवेति। साधनाव्यापकत्वेनेत्यर्थः। परस्पराश्रयत्वमङ्गीकरोति—सत्यमिति। तर्हि दोषगम्यत्वमिथ्यात्वयोरनुपाधित्वमभ्युपगतं भवति। नेत्याह—तथापीति। दोषगम्यत्वस्यानुपाधित्वे मिथ्यात्वस्य साधनव्यापकत्वादनुपाधित्वं मिथ्यात्वस्यानुपाधित्वे दोषगम्यत्वस्य साधनव्यापकत्वेनानुपाधित्वमिति वक्तव्यं परस्पराश्रयत्वमित्यर्थः। तयोरुपाधि[2]त्वसिद्धौ प्रकृते दृश्यत्वहेतौ किं जातमिति। तदाह—तथा चेति। मा तर्हि दृश्यत्वेन मिथ्यात्वसमर्थनं भूत्। जडत्वेन भविष्यतीत्यत आह—एवमिति। एतेन परिच्छिन्नत्वहेतुना मिथ्यात्वसाधनमपि

---

1. त्वेन हिंसात्वस्य 2. उपाधित्वासिद्धौ

साधनव्याप्तिशङ्का च दृश्यत्वोपाधिनापास्या। तस्य तु साधनव्याप्तौ परिच्छिन्नत्वमुपाधिः। एवं साधनान्तरेण मिथ्यात्वसाधनेऽप्यूहनीयम्। अतो भवन्नय एव दोषागम्यत्वादीनामुपाधिताभावादप्रयोजकतेति।

न। तेषां साधनव्यापकत्वात्। न चान्योन्योपाधितया साधनाव्याप्तिः। तथैवान्योन्योपाधितया साध्याव्याप्तेरपि प्रसङ्गात्। किञ्च नोपाध्यन्तरवशादुपाधेः साधनव्याप्तिरुपास्या। न ह्युपाधावपि निरुपाध्यविनाभावो व्याप्तिः। किं त्वविनाभावमात्रं, अन्यथा व्या-

---

प्रतिवदितव्यमित्याह—**एवमिति**। दोषगम्यत्वादिभावेऽपि शुक्तिकादेः सत्यत्वस्य सत्यत्ववादिभिरभ्युपगमादन्यतरोपाधित्वं दर्शयति—**अत इति**। अन्यतरोपाधिभावे चोभयसिद्धनिरुपाधिकसम्बन्धासिद्धेः सिद्धा व्याप्यत्वासिद्धिरित्याह—**अप्रयोजकतेति**। दोषगम्यत्वादीनां नोपाधित्वं, साधनाव्यापकः साध्यव्यापक उपाधिरिति लक्षणे साधनाव्यापकत्वांशाभा[1]वादिति दूषयति—**न तेषामिति**। दोषगम्यत्वादीनां साधनाव्याप्तिरुक्तेत्याशङ्क्याह—**न चेति**। दोषगम्यत्वादीतामन्योन्योपाधित्वेन साधनाव्याप्तिवत्तेषां परस्परोपाधित्वेन साध्याव्याप्तिरपि वक्तुं शक्यते। यन्मिथ्या तद् दोषगम्यत्वमित्यत्र दृश्यत्वमुपाधिः। यद् दोषगम्यं तद् दृश्यमित्यत्र, जडत्वमुपाधिः। तस्यापि साध्यव्याप्तौ परिच्छिन्नत्वमुपाधिरिति परस्परोपाधिपक्षे न क्वचिदपि साध्यव्याप्तिरित्याह—**तथैवेति**। उपाधेरुपाध्यन्तरवशात्साधनाव्याप्तिमङ्गीकृत्य तद्वशादेव तस्य साध्याव्याप्तिरपि सुवचेत्युक्तम्। इदानीं अङ्गीकारं निराकुर्वाणः साधनव्याप्तिं व्यनक्ति—**किं चेति**। उपाध्यन्तरे सति निरुपाध्यविनाभावाभावादुपाधेर्न साधनव्याप्तिरित्याशङ्क्याह—**न हीति**। निरुपाध्यविनाभाव[2]स्याविनाभावव्याप्तिशब्दार्थत्वाभावादुपाधिलक्षणासिद्धिरित्याशङ्क्याह—**किं त्विति**। मात्रपदेन निरुपाधित्वं धुनीते। उपाधावपि निरुपाध्यविनाभावाभ्युपगमे दोषमाह—**अन्यथेति**। निरुपाधिकसम्बन्धव्याप्ति-

---

1. अभावात्तु दूषयति 2. अविनाभावाभाववत्

प्त्युपाध्योरन्योन्याश्र[1]यतापत्तेः । अतो न क्वाप्यन्योन्योपाधिता-सम्भवः । प्रपञ्चस्य सत्यत्वं जडतादि च भवेत् । किं बाधकं? जडस्य सत्यत्वे संवित्सम्बन्धाऽसम्भवात्तद्व्यवहारभङ्ग इति ब्रूमः । तथाहि—न तावत्संविदा जडस्य संयोगादिसम्बन्धः सम्भवी । सा हि प्रत्यग-द्रव्यं च । न च सम्बन्धाभावे विज्ञानादेव व्यवहारो युज्यते अनियम-प्रसङ्गात् । स्वाभाविकविषयविषयिभावान्नायं दोष इति चेन्न । साक्षा-त्परम्परया वा सम्बन्धस्यैव विषयविषयिभावनियामकत्वात् । अन्यथा

---

सिद्धौ साधनाव्यापकत्वे सति साध्यव्याप्तिरित्युक्तोपाधिसिद्धिस्तत्सिद्धौ चोक्त-व्याप्तिरिति परस्पराश्रयादुपाधावविनाभावमात्रं व्याप्तिरित्यर्थः । साधनाव्याप्तिः साध्यव्याप्तिरिति लक्षणांशयोरसंभवादसंभवि परस्परोपाधित्वमित्युपसंहरति—अतो नेति । निश्चितोपाधि[2]प्रयोगाभावेऽपि विपक्षबाधकाभावप्रयुक्तशङ्कितो-पाधितोऽप्रयोजकत्वं तदवस्थमिति शङ्कते—प्रपञ्चस्येति । विपक्षे बाधकम-भिदधानः समाधत्ते—जडस्येति । तस्य संविदा संबन्धाभावासिद्धेर्न जडे व्यवहारानुपपत्तिरित्याशङ्क्याह—तथा हीति । तयोः सम्बन्धः संयोगो वा समवायो वा तादात्म्यं वा विषयविषयिभावो वेति विकल्प्य विकल्पत्रयं निर-स्यति—न तावदिति । संवित्संवेद्ययोरन्तर्बहिर्भावेन व्यवस्थितत्वान्न संयो-गादिरिति, कथमिति हेतुमाह—सा हीति । संयोगाभावे हेत्वन्तरमाह—अद्रव्यं चेति । द्रव्ययोरेव संयोगनियमाददद्रव्यत्वे संविदो न संयोगित्व-मित्यर्थः । संयोगाद्यभावेऽपि संविदः स्वभावभेदादेव स्वात्मनीव संवेद्येऽपि [3]व्यवहारसिद्धिरित्याशङ्क्यह—न चेति । घटादिज्ञानेनापि पटादिव्यवहार-प्रसङ्गाद्विशेषणविशेष्यभावस्य च नियामकमन्तरेणानियतत्वादिति हेतुमाह—अनियमप्रसङ्गादिति । कल्पान्तरं शङ्कते—स्वाभाविकेति । विषयविष-यिभावस्य सम्बन्धान्तरनैरपेक्ष्यं स्वाभाविकं नोपपद्यते । नियामकाभावे नियमा-संभादिति दूषयति—न साक्षादिति । नियामकसम्बन्धं विनापि विषय-विषयिभावमभ्युपगच्छन्तं प्रत्याह—अन्यथेति । भवत्वर्थेन्द्रिययोस्स्वभावतो

---

1. अन्योन्याश्रयतोपपत्तेः 2. प्रयो...भावे 3. व्यवहारासिद्धि

निरिन्द्रियस्यापि स्वभावत एव कदाचित् किञ्चिद्विषयः स्यात् । ततो न तत्संयोगः कल्प्येत । तथा चाप्राप्यकारीणीति माहायानिकपक्षः समर्थितः स्यात् ।

अस्तु तर्हि क्रियाया इव स्फुरणस्यापि करणविषय एव विषयः । न । सुषुप्तिभ्रमेश्वरज्ञानैः करणासंसर्गिणामेव स्फुरणात् । तस्माद्यज्जडं यथा भाति तत्तथैवानाद्यविद्यया संविदि आपितं चकास्तीति निरवद्यम् । दर्शितं चैतत् पुरस्तात् । तदेवं न हेतुः शङ्किताप्रयोजकः । नापि विरुद्धः । सपक्षवृत्तेः स्पष्टत्वात् । अनैकान्तता तु व्यभिचारासम्भवापास्या । जडत्वादेरात्मना व्यभिचार इति चेन्न । तत्र जडत्वादेरसंप्रतिपत्तेः । न च परसिद्धेनात्मना व्यभिचारः । त[1]स्याप्यहंप्रत्ययविषयस्य पक्षी-

---

विषयविषयिभावः । का नो हानिरित्यत आह—ततो नेति । संयोगशब्देन षोढा सम्बन्धो विवक्ष्यते, विषयेन्द्रिययोः षोढापि सम्बन्धाभावे का हानिरिति तत्राह—तथा चेति । जनकेन [2]करणेन समानविषयत्वं तज्जन्यज्ञानस्येति नियममाशङ्कते—अस्तु तर्हीति । अव्याप्त्या दूषयति—न सुषुप्तीति । कथं तर्हि त्वन्मतेऽपि जडप्रपञ्चप्रतीतिरित्याशङ्क्याध्यासिकतादात्म्यादित्याह—तस्मादिति । मायया चिदात्मन्यध्यस्तजडप्रपञ्चप्रतीतौ माया तदध्यासप्रतिभानं कथमित्याशङ्क्य तयोः स्वपरनिर्वाहकत्वात्प्रतीत्युपपत्तिरित्युक्तं स्मारयति—दर्शितं चेति । प्रपञ्चस्य सत्यत्वे संविदा सह संसर्गानिरूपणात्तद्व्यवहारानुपपत्तेर्बाधकत्वादुपाधिशङ्कानिमित्ताप्रयोजकत्वशङ्का न प्रकृतहेतूनामित्युपसंहरति—तदेवमिति ।

दृश्यत्वादिहेतूनां विरुद्धत्वमुद्धरति—नापीति । पक्षविपक्षयोरेव वर्तमानत्वलक्षणलक्षणाभावादित्याह—सपक्षेति । तेषामेव हेतूनामनैकान्तिकत्वं निराकरोति— अनैकान्तिकतेति । व्यभिचारासंभवस्यासिद्धिमाशङ्कते—जडत्वादेरिति । किमात्मशब्देनाहङ्कारसाक्षी विवक्षितः किं वाहंप्रत्ययीति विकल्प्याद्ये व्यभिचारासंभवं दर्शयति—न तत्रेति । द्वितीयं दूषयति—न चेति । नन्वहम्प्रत्ययालम्बनस्यैवात्मत्वात्त[3]स्य पक्षमिथ्यात्वे, नैरात्म्यं तदन्य-

---

1. कस्यापि 2. कारणेन 3. अपक्षामिथ्यात्वात

कृतत्वात्। न चाहंप्रत्ययिनोऽन्यस्यात्मनोऽसिद्धिः। दर्शितो हि चानवच्छिन्नचिदेकतानः आत्मा।

ननु जडत्वादिसाधनं किं वास्तवमवास्तवं वा? आहो साधारणम्। आद्ये द्वितीये वा अन्यतरासिद्धिः। चरमे चात्मनानैकान्त्यम्। आत्मा हि वेदान्तिनये आरोपितजडत्वादिरिति। नैवम्—तत्रापि जडत्वाद्यधिकरणस्य मिथ्यात्वात्। चिद्रूपात्मनि हि जडत्वाद्यध्यासोऽहंकाराद्यध्यासपुरस्सरः। अतो नात्मना व्यभिचारः। यथा च नाविद्यानिवृत्या व्यभिचारः तथा तदवसर एव वक्ष्यामः। विपक्षस्य सिद्धावसिद्धौ च तत्र व्यतिरेकासिद्धेः सन्दिग्धानैकान्ततेति चेन्न। अविषयगोचरनिरूपणनीत्या विपक्षबाधकतर्केणोपाधिनिरासेन च व्यतिरेकसिद्धेः। शङ्कितो-

---

स्यात्मनोऽसिद्धेरिति तत्राह—**न चाहमिति**। तत्र हेतुमाह—**दर्शितो हीति**। सम्प्रति प्रकारान्तरेणानैकान्तिकत्वमापिपादयिषुर्विकल्पयति—**नन्विति**। वास्तवत्वपक्षे वाद्यसिद्धिः। तेन जडत्वादेर्वास्तवत्वानभ्युपगमात्। अवास्तवत्वे प्रतिवाद्यसिद्धिः। तेन तस्य वास्तवत्वाङ्गीकारादित्याह—**आद्य इति**। साधारणपक्षं प्रत्याह—**चरमे चेति**। अनैकान्तिकत्वं साधयति—**आत्मा हीति**। अन्त्यं पक्षमाश्रित्य समाधत्ते—**नैवमिति**। आत्मन्यपि प्रपञ्चवज्जडत्वादिधर्म्यंशस्य मिथ्यात्वान्न तत्रानैकान्तिकत्वमित्येतत् प्रपञ्चयति—**चिद्रूपेति**। अविद्याया मिथ्यात्वात्तन्निवृत्तेस्तदयोगात्तत्र जडत्वादिभावाच्चानैकान्तिकत्वमतिव्यक्तमित्याशङ्क्याह—**यथा चेति**। विपक्षः सिद्धोऽसिद्धो वा? आद्ये तत्र दृश्यत्वादेः स्फुटमनैकान्तिकत्वम्। द्वितीये सन्दिग्धानैकान्तिकत्वं, दृश्यत्वादेस्तत्र व्यावृत्त्यनिश्चयात्। अप्रतिपन्ने भूतलादौ कुम्भाद्यभावानिश्चयादिति शङ्कते—**विपक्षस्येति**। नरविषाणादेरसतो धर्म्यन्तर्भावादात्मैव विपक्षस्तस्य चाविषयस्यैव सिद्धिरुक्ता प्रथमेऽध्याये। अतस्तस्मिन्नात्मनि स्वतः स्फुरति दृश्यत्वादेर्व्यतिरेकनिश्चयान्न सन्दिग्धानैकान्तिकत्वमित्युत्तरमाह—**नाविषयेति**। यत्र विपक्षे बाधकाभावस्तत्रैव हेतोर्विपक्षे वृत्तिश्शङ्क्यते। इह तु बाधकस्योक्तेर्न हेतोर्विपक्षवृत्त्याशङ्केत्याह—**विपक्षेति**। उपाधिभावे "व्यभिचारोन्नयं कुर्वन्नुपाधिर्याति दोषताम्" इति न्यायाद्धेतोर्विपक्षवृत्तिता शङ्क्येत।

**पाधेर्निरासः कथमिति चेत्। निर्बीजसंशयख्यातिप्रसङ्गित्वादिति ब्रूमः। शङ्क्यमानश्चोपाधिर्दोषगम्यत्वाधिकवृत्तिः, किं वा तत्तुल्यवृत्तिः, आहो तन्यूनवृत्तिः उत क्वचित् सहभावेऽपि परस्परव्यभिचारः अथवा क्वचिदप्यसहभावः? तत्र प्रथमद्वितीययोर्दोषगम्यत्वोपाधित्रत्साधनव्याप्तिः। इतरेषु च साद्ध्याव्याप्तिः। दोषगम्यत्वं हि साध्यसमव्याप्तं, अतस्तदव्याप्नुवन्नुपाधिः कथं साध्यं व्याप्नुयात्।**

**ननु परमते दोषगम्यत्वं न साधनव्यापकम्। नापि साध्यसम-**

---

अत्र तूपाधिनिरासान्न तदाशङ्केत्याह—**उपाधीति**। दृश्योपाधेरुक्तविधया निरासेऽपि शङ्क्यमानोपाधेर्निरासासम्भवात्तदवस्थं सन्दिग्धानैकान्तिकत्वमिति शङ्कते—**शङ्कितेति**। उपाधिशङ्काया विपक्षबाधकतर्काभावो बीजम्। इह च विपक्षबाधकतर्को दर्शितः। तथा च बीजाभावादुपाधि[1]शंकाया नावकाश इति। अन्यथा धूमानुमानेऽपि तदाशङ्कया सर्वानुमानभङ्गप्रसङ्गादिति परिहरति—**निर्बीजेति**। सम्प्रति प्रकारान्तरेण शङ्कितोपाधिं प्रतिवक्तुं विकल्पयति—**शङ्क्यमानश्चेति**। दोषगम्यत्वं [2]व्याप्यं व्यापकश्शंकितोपाधिरिति पक्षे कृतकत्वानित्यत्वयोरिव [3]दोषगम्यत्वपक्षवद् दोषमाह—**तत्रेति**। दोषगम्यत्वस्य साधनव्यापकत्वे तदधिकवृत्तेश्शङ्कितोपाधेः **सुतरामेव** तत्सिद्धिः। तेन समवृत्तेश्च तद्वदेव साधनव्यापकत्वमार्थिकमित्यर्थः। दोषगम्यत्वं व्यापकं व्याप्यः शङ्कितोपाधिरिति पक्षे, शिष्याचार्ययोरिव सहभावेऽपि दोषगम्यत्वशङ्कितोपाध्योः सहभावनियमो नास्ति इत्यत्र, क्वचिदपि तयोः सहभावाभावपक्षे च दूषणमाह—**इतरेष्विति**। साध्याव्याप्तिमेव व्यक्तीकरोति—**दोषगम्यत्वं हीति**। दोषगम्यत्वेन तुल्ययोगक्षेमतया शङ्कितोपाधिनिरासो न सिध्यतीति शङ्कते—**नन्विति**। यत् दृश्यं तद् दोषगम्यमिति सत्यत्ववादिनो न व्याप्तिः, आत्मनो दृश्यस्यापि दोषगम्यत्वानभ्युपगमादित्यर्थः। यत्तु दोषगम्यत्वस्य साध्यसमव्याप्तेस्तदव्याप्नुवन्न दृश्योपाधिर्न साध्यं व्याप्नुयादिति तत्राह—**नापीति**। दोषगम्यत्वेऽपि शुक्तिकादेरमिथ्यात्वात्। [4]न च परमते विषमव्याप्तिरपि सिध्यति। विमतं सत्यं दोषागम्यत्वादात्मवदिति व्यतिरेके शुक्त्यादिभागे हेत्वसिद्धेरिति

---

1. श....नावकाशति 2. वाच्यं 3. रिव.......क्षवत् 4. न च....मते

व्याप्तम् । अतस्तदवष्टम्भेन उपाधिनिरासो न परमते युक्तः । न । साधितं ह्यदृग्रूपस्याविद्यादोषोत्थतैव दृश्यत्वम् । अतो दोषगम्यत्वं मिथ्यात्वजडत्वादीनां समव्याप्तमिति दोषगम्यत्वमाश्रित्योपाधिनिरासः सुकर एव । तदेवं नोपाधिशङ्कासम्भवः । विपक्षबाधो, विषयतानिरूपणं च प्रपञ्चितं पुरस्तात् । तस्मान्न व्यतिरेकासिध्या, सन्दिग्धानैकान्तता । नापि कालातीतत्वं बाधाभावात् । न तावत्प्रत्यक्षबाधः । बाध्यत्वस्याप्रत्यक्षत्वात् । सन् कुम्भ इत्यादि प्रत्यक्षं बाधकमिति चेन्न । तस्य सद्गन्धर्वनगरमितिवत् प्रकृताप्रतीपत्वात् । नाप्यनुमानं बाधकम् । बलवत्प्रत्यनीकप्रयोगासम्भवात् । आगमः पुनरनुगुण एव,

---

भावः । साध्यसाधनव्याप्त्योरभावे दोषगम्यत्वमाश्रित्य शङ्कितोपाधिनिरासासिद्धिरिति फलितमाह—**अत इति** । दोषगम्यत्वस्य साधनाव्याप्तिरसिद्धेति समाधत्ते—**नेति** । कथं तर्हि दृश्यत्वदोषगम्यत्वयोर्व्याप्तिरत आह—**साधितं हीति** । यत्तु साध्याव्यापकं दोषगम्यत्वमिति तत्राह—**अत इति** । दोषगम्यत्वस्य साध्यसाधनव्यापकत्वे सिद्धे फलितमाह—**दोषगम्यत्वमिति** । शङ्कितोपधिविधूननमुपसंहरति—**तदेवमिति** । अविषयनिरूपणनीत्या विपक्षबाधकतर्केणोपाधेर्निरासेन च व्यतिरेकसिद्धिरिति प्रतिज्ञायोपाधिविधूननद्वारा व्यतिरेकसिद्धिं विशदीकृत्य कथं बाधकतर्कादिना व्यतिरेकसिद्धिरिति शङ्कमानं प्रत्याह—**विपक्ष इति** । व्यतिरेके निश्चिते सन्दिग्धानैकान्तिकत्वाभावफलमाह—**तस्मादिति** । क्रमप्राप्तं कालात्ययापदिष्टत्वं निरचष्टे—**नापीति** । प्रमाणबाधिते पक्षे वर्तमानत्वाभावादिति हेतुमाह—**बाधाभावादिति** । बाधाभावस्यासिद्धिरिति चेत्तत्र प्रत्यक्षेण वानुमानेन वागमेन वा अर्थापत्त्या वा अभावेन वा बाध इति वक्तव्यम् । तत्र नाद्य इत्याह—**न तावदिति** । प्रत्यक्षाविषयत्वमसिद्धमिति शङ्कते—**सन्निति** । प्रातीतिकसत्ताविषयत्वेन तस्योपपत्तेर्न प्रत्यक्षं बाधकमिति दृष्टान्तेन परिहरति—**न तस्येति** । द्वितीयं दूषयति—**नापीति** । तदनिरूपणादित्यर्थः । विमतं सत्यं ब्रह्मज्ञानेतरज्ञानाबाध्यत्वात् ब्रह्मवदित्याशङ्क्याह—**बलवदिति** । विशेषणा[1]नुक्तौ साध्या-

---

1. विशेषण....क्तौ

'नेह नानास्ति किंचने''ति स्वरूपोपाधावभावरूपबाधावेदकत्वात्। ''मृत्तिकेत्येव सत्यमि''ति तु व्यवहारसत्यतानुवादो न तात्त्विकसत्यताविधिः। वाक्यप्रकरणयोस्तात्त्विकसदद्वैतपरत्वा''द्वाचारम्भणं विकारो नामधेयमि''ति च मृदादिविकारानृतत्वबोधकविरोधात्।

ननु व्यवहारसत्यमेव सत्यं, न तु तस्य द्वैविध्यमस्ति। न। चन्द्रप्रादेशमात्रादेस्तात्त्विकसत्यताप्रसङ्गात्। तस्मादागमोऽनुगुण एव। नाप्यर्थापत्तिबाधः। अनुपपत्तेरभावात्। कल्पितेनापि संवादी व्यवहा-

---

विशिष्टत्वान्नेदमनुमानमुद्भवतीति भावः। न तृतीय इत्याह—**आगमः पुनरिति**। आनुगुण्यमेवावगमयति—**नेहेति**। स्वरूपोपाधिरित्यधिष्ठानं विवक्ष्यते। नन्वागमस्य मृत्तिकादिसत्यत्वप्रतिपादकस्यापि भावात्कथं प्रकृतानुगुण्यमिति। तत्राह—**मृत्तिकेत्येवेति**। साधारणे सत्यशब्दे कुतो विभागकथनमित्याशङ्क्य तात्त्विकसत्यत्वप्रतिपादने वाक्यप्रकरणविरोधाद्युक्ता विभागोक्तिरित्याह—**वाक्येति**। दृष्टान्तगतमेवकारमनुकृष्य सदेव सत्यमिति सन्मात्रस्याद्वितीयस्य सत्यत्वमवधारयद्वाक्यं मृत्तिकादेस्तात्त्विकसत्यत्वाङ्गीकारे विरुध्येत। प्रकरणमपि परमार्थसत्यं सन्मात्रमादिमध्यावसानेषु समुल्लिखन्मृदादेर्वास्तवसत्यतायामपहस्तितं स्यात्। अतो मृदादेर्व्यावहारिकसत्यतानुवादेन सन्मात्रस्य तात्त्विकसत्यतायां 'मृत्तिकेत्येव सत्यमि'ति वाक्यं पर्यवस्यतीति भावः। वाक्यप्रकरणाभ्यां श्रुतेर्बलीयस्त्वात्सत्यशब्दश्रुत्या वास्तवं सत्यत्वं मृत्तिकादेरेष्टव्यमित्याशङ्क्य श्रुत्यन्तरानुगृहीतप्रकरणादेः श्रुतिमात्रापेक्षया प्राबल्यमभिप्रेत्याह—**वाचारम्भणमिति**। व्यावहारिकसत्यातिरिक्तसत्याभावाद्विभागवचनमनुचितमिति चोदयति—**नन्विति**। व्यवहारसत्यस्यापि परमार्थसत्यत्वादृष्टेरुक्तविभागसिद्धिरित्याह—**न चन्द्रेति**। प्रपञ्चसत्यत्वसाधकागमाभावात्तन्मिथ्यात्वसाधकागमसद्भावाच्चागमस्य प्रकृतानुमानानुकूल्यमेवेत्युपसंहरति—**तस्मादिति**।

चतुर्थं निराकरोति—**नापीति**। व्यवहारमात्रानुपपत्तिर्वार्थापत्तिरविसंवादिव्यवहारानुपपत्तिर्वेति विकल्प्याद्यं प्रत्याह—**अनुपपत्तेरिति**। व्यवहार-

रोऽनुपपन्न इति चेन्न। देहात्मभावेनैव तादृशव्यवहारोपपत्तेः। न देहात्मभावः कल्पितः। किन्तु गौण इति चेन्न। तद्व्यापकरहितत्वात्। "ममात्मा मैत्र" इति गौणोऽर्थो मुख्यार्थभेदप्रतीतिपूर्वकं प्रतीयते। न चैवं प्रकृते प्रतीतिरस्तीति। अतो नार्थापत्तिबाधः। अभावोऽप्यत्र बाध्यत्वस्यायोग्यानुपलम्भादसम्भवी। तदेवं न कालातीतता। प्रतिमल्लप्रयोगासम्भवान्न सत्प्रतिपक्षतापि।

विमतं सत्यम्, अदुष्टकरणगम्यत्वान्मिथ्येतिप्रत्ययागोचरत्वाच्च, आत्मवदिति प्रतिप्रयोग इति चेदुच्यते। किमदुष्ट[1]करणगम्यत्वं हेतुः

---

मात्रस्य [2]स्वप्नादावपि दृष्टत्वादित्यर्थः। द्वितीयमाशङ्क्य निराचष्टे—**कल्पितेनेत्यादिना**। कल्पितेन देहात्मभावेनाविसंवादिवर्णाश्रमादिव्यवहारवत्कल्पितेनापि द्वैतप्रपञ्चेन तत्तदविसंवादिव्यवहारसंभवान्न तदनुपपत्तिर्मिथ्यात्वानुमानबाधिकेत्यर्थः। मीमांसकपक्षमाशङ्क्य प्रतिक्षिपति—**न देहेत्यादिना**। गौणत्वव्यापकाभावं मनुष्योऽहमिति व्यवहारे दर्शयितुं तद्व्यापकमनुवदति—**ममात्मेति**। मनुष्योऽहमिति व्यवहारे तु देहात्मनोर्न भेदप्रतीतिः। अतो नासौ व्यवहारो गौणः। व्यापकाभावे व्याप्याभावप्रसिद्धेरित्याह—**न चैवमिति**। द्वैतसत्यत्वसाधकार्थापत्तेरशक्यनिरूपणत्वे फलितमाह—**अत इति**। पञ्चमं परास्यति—**अभावोऽपीति**। कालान्तरवर्तिनो बाधस्य सम्प्रत्ययोग्यत्वाद्योग्यानुपलब्धेरभावादभावोऽपि प्रपञ्चे धर्मिणि सत्यत्वापरपर्यायाबाध्यत्वसाधको न संभवतीति न तस्य प्रकृतप्रयोगप्रतिकूलतेत्यर्थः। उपमानस्य तु सादृश्यमात्रगोचरस्य सत्यत्वासत्यत्वयोरुदासीनत्वान्न प्रकृतानुमानविरोधितेति मत्वोपसंहरति—**तदेवमिति**।

जडत्वादिहेतूनां क्रमप्राप्तं सत्प्रतिपक्षत्वं प्रतिक्षिपति—**प्रतिमल्लेति**। प्रतिकूलप्रयोगासम्भवस्यासिद्धिमाशङ्कते—**विमतमिति**। कारणगम्यत्वं मिथ्याभूतेऽपि शुक्तिरजतसंसर्गादावस्तीति व्यभिचारः। तं वारयितुं विशिनष्टि—**अदुष्टेति**। प्रत्ययागोचरत्वस्यासिद्धिमुद्धर्तुं मिथ्येति विशेषणम्। व्यावहारिकं वा सत्यत्वं साध्यते, तात्त्विकं वा?। नाद्यः सिद्धसाध्यत्वादित्याशयेनाह—

---

1. कारण 2. स्व...दा

किं वा दुष्टक[1]रणागम्यत्वं, आद्ये नित्यानुभवगम्येऽसिद्धिः। चरमे च नभोनीलिम्ना देहात्मभावेन चाऽनैकान्तता। न हि तत्र क[2]रणे दोषः सम्भवी। नभोयोगोऽक्षस्य दोष इति चेत्तर्हि कुम्भादेरपि दुष्टकरण-गम्यत्वाद्धेत्वसिद्धिः। यदपि-मिथ्येतिप्रत्ययागोचरत्वं, तदपि देहात्म-भावेन चन्द्रप्रादेशमात्रत्वेन चानैकान्तम्। व्युत्पन्नमतीनां तत्र मिथ्येति प्रत्ययोऽस्तीति चेत्, तर्हि प्रपञ्चेऽपि सोऽस्तीति हेत्वसिद्धिः। उभयत्र

---

उच्यत इति। द्वितीये त्वाद्यं हेतुं विकल्पयति—**किमदुष्टेति**। यथाश्रुतो हेतुर्न वेति विकल्पार्थः। अदुष्टकरणगम्यत्वमिति यथाश्रुतो हेतुरिति पक्षं प्रत्याह—**आद्य इति**। अन्तःकरणसुखाज्ञानादिषु साक्षिवेद्येषु करणागम्येषु हेत्वभावाद् भागासिद्धिरित्यर्थः। दुष्टकरणागम्यत्वं हेतुरिति पक्षं निराचष्टे—**चरमे चेति**। नभोनीलिमादौ तात्त्विकसत्यत्वाभावस्योभयसिद्धत्वं सिद्धवत्कृत्य हेतुसत्वं सङ्गिरते—**न हीति**। नभोनीलिमा दुष्टकरणागम्यो न भवति। नभसोऽरूपिद्रव्यत्वाच्चक्षुषस्तत्र सम्प्रयोगायोगान्नभसि नीलिमग्राहकस्य तस्या दुष्टत्वादिति शङ्कते—**नभोयोग इति**। यद्येवं नभोनीलिमा दुष्टकरणग्राह्यो गृह्यते, तर्हि ग्राहकात्मकताविद्यादोषदूषितचक्षुरादिग्राह्यत्वात्कुम्भादेरपि दुष्ट-करणागम्यत्वाभावाद्धेत्वसिद्धिरित्याह—**तर्हीति**। [3]हेतुपदेनादुष्टकरणगम्य-[4]त्वस्यापि ग्रहणम्। अदुष्टकरणगम्यत्वेन प्रपञ्चस्य तात्त्विकसत्यत्वसाधना-सम्भवेऽपि हेत्वन्तरमुक्तमित्याशङ्क्याह—**यदपीति**। चन्द्रप्रादेशमात्रत्वादौ हेत्वभावान्न व्यभिचारोऽस्तीति शङ्कते—**व्युत्पन्नमतीनामिति**। यदि विवेकिप्रसिद्धिमाश्रित्य व्यभिचारो निरस्यते तर्हि विवेकिप्रत्ययोऽस्तीति द्वितीय-हेतोरसिद्धिरिति परिहरति—**तर्हीति**। हेतुद्वयेऽपि साधारणं दूषणमाह—**उभयत्रेति**। कालात्ययापदिष्टता चोभयत्रेति सम्बन्धः। किं चात्मनः स्वतः प्रकाशत्वान्न तत्र करणगम्यत्वमिति साधनविकलता। न च तस्य सत्यत्व-धर्मवत्वं निर्धर्मकत्वादिति साध्यविकलता। न च सत्यत्वं स्वरूपमेवा[5]निष्टा-पत्तेः। न चात्मनो मिथ्येति प्रत्ययाविषयत्वं तस्यापि कैश्चि[6]न्मिथ्यात्वाभ्युपग-

---

1. कारण 2. कारण 3. आदि 4. गम्यत्वग्रहणम् 5. मेवा....पत्ते 6. श्चि....भ्युपगमात्

च विपक्षे बाधाभावात् । प्रपञ्चसत्यत्वे दृश्यत्वासम्भवबाधस्योक्तत्वाच्च-शङ्कितात्रयोजकता । "नेह नानास्ति किञ्चने"त्याद्यागमबाधात् कालात्ययापदेशता चेत्यलं कंचवेलालव्यु[1]त्पादनेन । प्रयोगान्तरनिरासश्चेष्टसिद्धिविवरणे द्रष्टव्यः । तदेवं न सत्प्रतिपक्षतापि ।

बाध्यत्वं च ज्ञाननिवर्त्यत्वम् । तच्च रूप्यादेरज्ञानमयत्वसाधनेनैव सिद्धम् । अथवा स्वरूपोपाधौ निषेध्यत्वं बाध्यत्वं, तच्च रूप्यसंसर्गे परस्यापि सिद्धम्, उक्तसाधनञ्च । दृष्टान्तधर्मी च दार्ष्टान्तिकधर्मीव द्रष्टव्यः । अतो नोदाहरणदोषोऽपि । तदेवं वियदादिप्रपञ्च-

---

मादिमेत्याह---**इत्यलमिति** । विमतं सत्यं प्रतिभासमानत्वात्, अर्थक्रियाकारित्वाच्च सम्मतवदिति प्रतिमल्लप्रयोगान्तरमस्ति इति चेन्नेत्याह---**प्रयोगान्तरेति** । शुक्तिरूप्यादावपि प्रतिभासमानत्वस्य सत्वादनैकान्तिकत्वं विपर्ययस्य साधितत्वात् । अर्थक्रियाकारित्वस्य स्वप्नादावपि भावेन विरुद्धता । आत्मनि केवले तदनभ्युपगमादिति भावः । हेत्वाभासोद्धारमुपसंहरति---**तदेवमिति** । अपिशब्देन कालातीतत्वाद्यभावोऽपि विवक्ष्यते । [2]शुक्तिरूप्यादौ दृष्टान्ते साध्यवैकल्यमुद्धर्तुं साध्यस्वरूपमनुकीर्तयति---**बाध्यत्वं चेति** । कथं पुना रूप्यादेर्ज्ञाननिवर्त्यत्वसिद्धिस्तत्राह---**तच्चेति** । अथेश्वरवादिभिरीश्वरज्ञानेन सत्यस्यैव प्रपञ्चस्य मुद्गरेणेव घटस्य निवर्त्यत्वाभ्युपगमान्नेदं मिथ्यात्वलक्षणमित्याशङ्क्य पक्षान्तरमाह---**अथवेति** । अधिष्ठाननिष्ठनिषेधविषयत्वं रूप्यादावसम्मतमिति चेत् । नेत्याह---**तच्चेति** । जडत्वादिसाधनं च रूप्यादिदृष्टान्ते परस्यापि सम्मतमिति साधनवैकल्यं निरस्यति---**उक्तेति** । ननु दृष्टान्तधर्मी प्रमितो न वा । आद्ये मानविरोधान्न तत्र मिथ्यात्वम् । द्वितीये तस्याश्रयत्वायोगः अप्रामाणिकत्वादिति । तन्न । दृष्टान्तस्यापि दार्ष्टान्तिकवत्प्रसिद्धिमात्रेणोपपत्तेरित्याह --- **दृष्टान्तधर्मी चेति** । दृष्टान्तस्य निर्दुष्टत्वं निगमयति---**अत इति** । अपिना हेतुदोषाभावं दृष्टान्तयति अनुमानागमाभ्यां समर्थितमर्थमुपसंहरति---**तदेवमिति** ।

---

1. व्युत्पन्नेन  2. अभिलप्यते

स्य, रूप्यादिवन्मिथ्यात्वादज्ञानमयत्वं सिद्धम् ।

### वियदादिभेदस्यापि मायाविलासत्वोपपादनम्

किञ्च वियदादिभेदस्यापि स्वप्नभेदवन्मायाविलासत्वान्नाद्वैतस्य विरोधगन्धोऽपि । नन्वबाधिताध्यक्षादिसिद्धो भेदो न मायाविलासः स्यात् । न । भेदतद्धर्म्यादिग्रहयोरन्योन्यायत्तत्वात् । एकस्याप्यसम्भवात् । नहि भेदग्रहं विना "इदमस्मादि"ति धर्म्यादिग्रहो युज्यते । अन्यथा स्वापेक्षयापि तद्ग्रहे भेदग्रहप्रसङ्गात् । दूरस्थयोरन्योन्यभेदाग्रहेऽपि धमित्वादिग्रहात् भेदग्रहप्रसङ्गाच्च । नापि धर्म्यादिग्रहं विना भेदग्रहो युज्यते । भेद इत्ये[1]व स्वातन्त्र्येण तद्ग्रहप्रसङ्गात् । पूर्वपूर्वभेदादिग्रह-

---

ननु शङ्काविषादेर्मृषात्वेऽपि तत्कार्यमरणादिसत्यत्ववत्प्रपञ्चस्य मिथ्यात्वेऽपि तद्भेदस्य सत्यत्वोपपत्तेस्तत्प्रतीतिविरोधादद्वैतासिद्धिरिति । तत्राह— **किं चेति** । विमतो भेदो मायाविलसितो भेदत्वात् स्वप्नभेदवदित्ययुक्तम्, विमतं सत्यं प्रामाणिकत्वादात्मवदित्यनुमानविरोधादिति शङ्कते—**नन्विति** । अबाधितत्वं प्रतीयमानबाधवैधुर्यं [2]तच्च प्रत्यक्षादेर्विवक्ष्यते । तथा च प्रामाणिको भेदो न मिथ्या भवितुमर्हतीत्यर्थः । प्रामाणिकत्वहेतोरसिद्ध्या परिहरति— **न भेदेति** । भेदग्रहे सति धर्म्यादिग्रहः, सति च धर्म्यादिग्रहे भेदग्रह इति परस्पराश्रयस्यानिष्टपर्यवसानमाचष्टे—**एकस्यापीति** । ननु भेदज्ञानस्य धर्म्यादिज्ञानकार्यत्वात्तत्पूर्वकत्वेऽपि धर्म्यादिज्ञानस्य भेदज्ञानानपेक्षत्वान्न परस्पराश्रयत्वमित्याशङ्क्याह—**न हीति** । कथं न युज्यते वस्तुमात्रग्रहस्य धर्म्यादिग्रहहेतुत्वादित्याशङ्क्याह—**अन्यथेति** । ननु विद्यमानभेदयोः स्वरूपेण स्फुरतोर्धर्म्यादिग्रहपूर्वके भेदग्रहे कथं स्वापेक्षया भेदग्रहप्रसक्तिरिति । तत्राह—**दूरस्थयोरिति** । क्षीरनीरयोः संकीर्णयोर्धर्म्यादिग्रहपूर्वको भेदग्रहः स्यादिति चकारार्थः । धर्म्यादिज्ञानस्य भेदज्ञानपूर्वकत्वेऽपि कथं इतरेतराश्रयत्वम्, अत आह— **नापीति** । ननु वार्तमानिकभेदग्रहस्य पूर्वधर्म्यादिग्रहपूर्वकत्वात्तस्यापि तत्पूर्वभेदग्रहपूर्वकत्वात् भेदधर्म्यादिग्रहयोरनादित्वान्नान्योन्याश्रयत्वमित्याशङ्क्य परम्प-

---

1. इत्येवम् 2. तेन

तन्त्रत्वे भेदग्रहविघातिन्यनवस्था स्यात्। सत्तयैव भेदो धर्म्यादिहोपकारी, अतो नान्योन्याश्रयादिदोष इति। न। आचार्योक्तदोषप्रसङ्गात्। उक्तो हि तत्रभवद्भिरिष्टसिद्धौ दशसु पदार्थेषु गृह्यमाणेषु युगपत्प्रत्येकं नवधा भेदग्रहप्रसङ्गदोषः।

ननु निर्विकल्पकप्रत्यये भेदादयोऽन्यनिरपेक्षा युगपदवभासन्ते। तदुपजीवी च सविकल्पको भेदग्रहः। तत्र कथय कथमन्योन्याश्रयादिदोषप्रसङ्गः। यत्तु—सविकल्पकदृष्टान्तेन निर्विकल्पकभेदप्रत्यये प्रतियोग्याद्यपेक्षानुमानं तत्राश्रयासिद्धिः। न हि भवन्नये निर्विकल्प-

---

रापत्तिमादर्शयति—पूर्वपूर्वेति। अनवस्थाया मूलक्षयकरत्वेन दोषत्वमाभाषते—भेदग्रहविघातिनीति। निरस्तमेव चोद्यं विधान्तरेण निरसितुं पुनरुपादत्ते—सत्तयैवेति। अज्ञातो भेदः सत्तामात्रेण धर्म्यादिग्रहहेतुश्चेत्, दशसङ्ख्यावच्छिन्नेषु घटेषु युगपदुपलभ्यमानेष्वेकैकस्य स्वेतरनवघटप्रतियोगिकानां नवानां भेदानां भावाद्धर्म्यादिग्रहपूर्वकं नवधा भेदग्रहणं अपर्यायेणापद्येत। न चैवमुपलभ्यते। अतो न सत्तामात्रेण भेदस्य धर्म्यादिग्रहहेतुतेति वृद्धोक्तं परिहारमाह—नेत्यादिना। परस्पराश्रयत्वादिपरिहारमाशङ्कते—नन्विति। यद्यपि निर्विकल्पके प्रत्यक्षे भेदो धर्मिप्रतियोगिनौ चेति त्रयमङ्गुलित्रयवदपर्यायमाहुः:

> "तदयुक्तं प्रतिद्रव्यं भिन्नरूपोपलम्भनात्।
> प्रत्याख्यातुमशक्यत्वात् भेदो नास्तीति गम्यते॥"

इति भट्टपादैरुक्तत्वात्। तथापि कथं परस्पराश्रयादिदोषनिरसनमिति तत्राह—तदुपजीवी चेति। भावेषु सविकल्पकस्य निर्विकल्पकपूर्वकत्वनियमादित्यर्थः। निर्विकल्पके भेदभेदिनोर्युगपदवभासे सत्येकं भेदिनमवधिं कृत्वा तस्मादितरस्य भेदोल्लेखिनः सविकल्पकस्य सम्भवे परस्पराश्रयत्वादित्यनवकाशमिति फलितमाह—तत्रेति। विमतं प्रतियोग्यादिप्रतीतिसापेक्षं भेदज्ञानत्वात् सविकल्पकभेदज्ञानवदित्यद्वैतवादिनामनुमाने जाग्रति कथं परस्पराश्रयत्वादिसमाधानमित्याशङ्क्य परोदीरितमनुमानमनुवदति—यत्त्विति। परकीयमनुमानमनुभाषितं दूषयति—तत्रेति।

कभेदज्ञानमस्ति। भेदापरपर्यायं किल विकल्पमस्पृशत् ज्ञानं निर्विकल्पकमित्यायुष्मतो मतम्।

यतः, "आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मने"ति। अथ निर्विकल्पिका प्रतीतिः न प्राथमिकप्रतियोग्याद्यवभासमन्तरेण भेदाध्यवसायिनी प्रत्यक्षत्वात् सम्प्रतिपन्नवदित्यनुमानं, तत्र किं निरपेक्षभेदागोचरत्वं साध्यं किं वा सापेक्षभेदागोचरत्वं, आद्ये भागे सिद्धसाधनता। कुम्भादिप्रतीतेस्तथात्वात्। न चास्योक्तप्रतीतिविशेष एव धर्मी।

---

[1]निर्विकल्पकबोधोऽपि द्व्यात्मकस्यापि वस्तुनः।
"ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते"

इति भट्टाचार्यवचनात्कथमाश्रयासिद्धिरत आह---न हीति। वेदान्तिमते निर्विकल्पकभेदज्ञानाभावमभिधित्समानस्तन्मतमनुद्रवति--भेदेति। तत्र ब्रह्मसिद्धिकारवचनं प्रमाणयति -- यत इति। इदानीं वेदान्तिनामेवानुमानान्तरमनुभाषते---अथेति। सविकल्पकदृष्टान्ते साध्यवैकल्यं परिहर्तुं प्रतियोग्याद्यवभासमन्तरेणेत्युक्तम्। निर्विकल्पके प्रत्यक्षे [द्वितीय] भेदग्रहकाले प्रतियोग्याद्यवभासस्य सिद्धत्वात्तद्व्यतिरेकेण भेदाध्यवसायित्वाभावस्येष्टत्वात् सिद्धसाध्यत्वमित्याशङ्क्य प्राथमिकेति विशेषणम्। सम्प्रत्यनुमानं दूषयितुं विकल्पयति---तत्रेति। निरपेक्षभेदागोचरत्वे साध्ये निर्विकल्पकमात्रं पक्षीक्रियते निर्विकल्पकभेदज्ञानं वेति विकल्प्य प्रथमं प्रत्याह--आद्य इति। निर्विकल्पके सर्वत्र प्रतिद्रव्यं भिन्नरूपोपलम्भस्य भाट्टानामिव तार्किकाणामसिद्धत्वात्कुम्भादिनिर्विकल्पकग्रहस्य निरपेक्षभेदागोचरत्वादिति हेतुमाह---कुम्भादीति। निर्विकल्पकभेदज्ञानस्य पक्षत्वपक्षे वेदान्तिमते धर्म्यसिद्धिरुक्तेत्याह---न चेति। अस्येति प्रत्यक्षत्वहेतुपरामर्शः। परपक्षे निर्विकल्पकभेदज्ञानसिद्धेस्तत्पक्षीकारेणानुमानप्रवृत्तौ नाश्रयासिद्धिः। परसिद्धेन परस्य बोधनमित्यभ्युपमादित्याशङ्क्याह---मदुक्त्येति।

अयं भावः---मदुक्तिस्ते मानं न वा, आद्ये निर्विकल्पकभेदज्ञानं निरपेक्षभेदावगाहीति, अस्यापि मद्वचसो मानत्वात्तद्विरोधात्त्वदनुमानानुदयः।

---

1. निर्विकल्पबोधेः ग्रहणं

भवतोऽसिद्धेः। मदुक्त्यैव तत्सिद्धौ स्फुटस्तयैव बाधः। द्वितीये विकल्पे कुम्भप्रत्ययभागे बाधः। सविकल्पककुम्भप्रत्यक्षेण चानैकान्त्यं, विपक्षबाधविरहाच्च शङ्किताप्रयोजकता। तस्मादाद्यो भेदप्रत्ययो निरपेक्षः। अतः कथमन्योन्याश्रयादिदोषसम्भव इति। न। आद्यभेदप्रत्ययस्य नैरपेक्ष्ये मानाभावात्।

अथ मानं सापेक्षभेदप्रत्ययो निरपेक्षभेदप्रत्ययपुरस्सरः सापेक्षप्रत्ययत्वात् दण्डीति प्रत्ययवदिति। न। दृष्टान्ते साध्यविरहात्। न हि भिन्नतयाऽप्रतिपन्नस्य विशेषणतया भानमप्युपपद्यते। दूरस्थयोर्विशेषणताद्यदृष्टेः। वाक्यप्रकरणादिप्रत्ययेन चानैकान्त्यात्। न चात्र विपक्षे

---

द्वितीये त्वाश्रयासिद्धिः नोद्भियते। प्रामाणिकस्यैव प्रमाणाङ्गत्वाङ्गीकारादिति। सापेक्षभेदागोचरत्वं साध्यमिति पक्षेऽपि निर्विकल्पकमात्रस्य पक्षत्वे दोषमाह—द्वितीय इति। निर्विकल्पकभेदज्ञानस्य पक्षत्वे पूर्वोक्ताश्रयासिद्धिं सिद्धवत्कृत्य दोषान्तरमाह—सविकल्पकेति। तस्य प्रत्यक्षत्वेऽपि कुम्भमात्रग्राहित्वेन सापेक्षभेदागोचरत्वादित्यर्थः। वेदान्तिनोऽपराद्धान्तश्चकारार्थः। विकल्पद्वयसाधारणं दूषणमाह—विपक्ष इति। प्रत्यक्षत्वं तु साक्षात्कारियथार्थज्ञानत्वादुपपन्नमिति भावः। अनुमाननिरसनफलमभिदधाति—तस्मादिति। निर्विकल्पकभेदग्रहस्य धर्म्यादिग्रहानपेक्षत्वे किमायातमिति तदाह—अत इति। निर्विकल्पकभेदग्रहस्यानपेक्षत्वे मानाभावादनपेक्षनिर्विकल्पकभेदग्रहपूर्वकसापेक्षसविकल्पकभेदग्रहं गृहीत्वा नोक्तदोषसमाधिरिति समाधत्ते—नाद्य इति। मानाभावस्यासिद्धिमाशङ्कते—अथेति। सापेक्षप्रत्ययस्य निरपेक्षप्रत्ययपुरस्सरत्वे साध्ये दण्डिप्रत्ययस्य दण्डादिप्रत्ययपुरस्सरत्वस्वीकारेणार्थान्तरता। तां व्यावर्तयति—भेदेति। धर्मिणि भेदविशेषणं स्वरूपपरं न व्यावर्तकं निर्विकल्पकव्यावृत्त्यर्थं वा प्रत्ययत्वादित्युक्ते निरपेक्षनिर्विकल्पकप्रत्यये व्यभिचारः, तं वारयति सापेक्षेति। सापेक्षत्वादित्युक्ते दीर्घत्वादौ व्यभिचारः, तं वारयितुं प्रत्ययत्वादिति पदम्। निरपेक्षभेदप्रत्ययपूर्वकत्वं वा साध्यते तादृक्प्रत्ययमात्रपूर्वकत्वं वा? न प्रथम इत्याह—न दृष्टान्त इति। साध्यविरहं दृष्टान्ते स्पष्टयति—न हीति। प्रतिपन्नमात्रस्य विशेषणविशेष्यभावश्चेदेकस्मिन्नपि तत्प्रसङ्गात् भेदेन प्रतीतिस्तथा त्वयाभ्युपगन्तव्या। सा च भेदप्रतीतिर्धर्म्या-

**बाधः कश्चित्। त्वत्पक्षे सविकल्पकभेदप्रत्ययस्य विशिष्टविषयतानुपपत्तिप्रसङ्ग इति चेन्न। चन्द्रभेदप्रत्ययवत्तदुपपत्तेः। चन्द्रभेदप्रत्ययस्य भ्रमत्वान्नेतरत्र तुल्यतेति चेन्न। इतरभेदप्रत्ययस्यापि "नेह ननास्ति किञ्चने"त्यागमबाधान्मिथ्यात्वसिद्धेः। "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति"। "अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिन" इत्यादि साक्षान्मिथ्यात्वाभिधानाच्च। तदेवं नात्र विपक्षे बाधकं**

---

दिप्रतीतिसापेक्षेति दृष्टान्तस्य स्पष्टा साध्यविकलतेति भावः। अप्रतिपन्नस्येति पदच्छेदः। विद्यमानभेदयोस्स्वरूपेण भातोर्विशेषणविशेष्यभावमाशङ्क्य दूषयति—**दूरस्थयोरिति**। न द्वितीयः। वाक्यप्रकरण[1]स्थानसमाख्याप्रत्ययानां सङ्गतिग्रहतात्पर्यपरिज्ञानादिसापेक्षपदवाक्यप्रत्ययादिपूर्वकत्वेन व्यभिचारात्तेषु सापेक्षप्रत्ययत्वस्य सत्त्वान्निरपेक्षप्रत्ययपुरस्सरत्वाभावच्चे[2]त्याह—**वाक्येति**। पूर्वत्रोक्तं दृष्टान्तस्य साध्यवैकल्यमत्रापि चकारेण समुच्चिनोति। पक्षद्वयेऽपि दोषान्तरमाह—**न चेति**। सापेक्षप्रत्ययत्वं तु सापेक्षप्रत्ययपुरस्सरत्वेऽपि दीर्घत्वादिप्रत्ययवत्सम्भवतीत्यभिप्रायः। बाधकान्तरमाशङ्कते—**त्वत्पक्ष इति**। सापेक्षप्रत्ययस्य निरपेक्षप्रत्ययपूर्वकत्वानियमे सविकल्पकस्येदमस्माद् भिन्नमिति धर्म्यादिघटितभेदविषयत्वं न स्यात्। भिन्नयोर्धर्मिप्रतियोगिनोर्भेदव्यावर्तकत्वान्निरपेक्षभेदभानानभ्युपगमे तयोर्भेदनिरूपकत्वायोगादनवस्थानात्। अतः सापेक्षप्रत्ययस्य निरपेक्षप्रत्ययपूर्वकत्वमावश्यकमित्याशयः। विमतं मिथ्याभेदसंवेदनम्। संवेदनत्वाच्चन्द्रभेदसंवेदनवदित्यनुमानात्कल्पितभेदविषयत्वेन सविकल्पकभेदसंवेदनस्योपपत्तेर्न निरपेक्षभेदवेदनापेक्षेति परिहरति—**न चन्द्रेति**। [3]बाध्यविषयत्वमुपाधिरिति शङ्कते—**चन्द्रेति**। साधनव्याप्त्या समाधत्ते—**नेतरेति**। अयं घट एतद्घनिष्ठासत्यभेदा[4]न्यभेदाधारः घटत्वात् घटान्तरवदित्यनुमानादबाधितभेदसिद्धिरित्याशङ्क्याह—**यत्र हीति**। आदिपदेन "वाचारम्भणं विकारो नामधेयम्" "अतोऽन्यदार्तमि"त्यादि गृह्यते। अयं घटः

---

1. कायशाखाप्रत्यय 2. चेति तत्राह 3. बाधविषयत्व 4. भेदाद...रः

किञ्चित्। एतेनार्थापत्तिरपास्ता। अनुपपत्तेरभावात्। तदेवं निरपेक्ष-भेदप्रत्यये न मानं किञ्चित्। तस्मादत्र दुस्तर एवान्योन्याश्रयादि-दोषः। अनवस्थान्तरप्रसङ्गाच्च भेदग्रहासम्भवो दर्शयितव्यः। भेदो हि विशेषणतया वा विशेष्यतया वा गृह्यते। न स्वतन्त्रः। विशेषणादिग्रहश्च भेदग्रहपूर्वकः। तत्राप्येवमिति न क्वापि भेदग्रहो भवेदिति।

### भेदस्य स्वपरनिर्वाहकताखण्डनम्

ननु भेदस्य समवायतादात्म्यवत् स्वपरनिर्वाहकत्वान्न भेदान्त-

---

एतद्घटत्वे सत्येतद्घटनिष्ठासत्यभेदान्यभेदानाधारः घटत्वात् घटान्तरवदिति चकारार्थः। सापेक्षप्रत्ययस्य निरपेक्षप्रत्ययपूर्वकत्वनियमाभावे बाधकाभावमुपसं-हरति—**तदेवमिति**। विपक्षे बाधकाभावाभिधानेन सापेक्षप्रत्ययस्य निरपेक्ष-क्षप्रत्ययपूर्वकत्वे प्रमाणान्तरमपि प्रत्युक्तमित्याह—**एतेनेति**। अनुमानार्थाप-त्योर्निरासान्मानान्तरस्य चाभावान्निर्विकल्पकभेदग्रहस्य निरपेक्षत्वे प्रमाणराहित्यं सिद्धमित्युपसंहरति—**तदेवमिति**। निर्विकल्पकभेदग्रहस्य सापेक्षत्वेऽपि माना-भावाविशेषात्कथमन्योन्याश्रयत्वमित्यशङ्क्योक्तानुमानस्य[1] निर्दोषत्वाद्धर्मिणस्त्व-त्पक्षे सुगतादिवचनात्क्षणिकत्वादिसिद्धिवत्त्वद्वचनादेव सिद्धे दुरुत्तरं परस्पराश्रयत्वमित्याह—**तस्मादिति**। अत्रेति [2]भेदग्रहो गृह्यते। वर्तमा नभेदग्रहस्य पूर्वधर्म्यादिग्रहापेक्षत्वं तस्यापि तत्पूर्वभेदग्रहापेक्षत्वमित्यनादित्वे सत्यधपरम्परारूपानवस्था प्रसरतीत्युक्तम्। इदानीमनवस्थान्तरेण भेदसंवेदना-संभवं साधयति—**अनवस्थान्तरेति**। तदेव दर्शयितुं भेदग्रहप्रकारमभिन-यति—**भेदो हीति**। तथापि कथमनवस्थेत्यत आह—**विशेषणादिति**। एकस्मिन्नेव विशेषणादिग्रहाभावादित्यर्थः। विशेषणादिग्रहनिर्वाहकभेदग्रहेऽपि विशेषणादिभेदस्य निर्वाह्यभेदग्रहवदावश्यकत्वान्निर्वाहकभेदग्रहान्तरापेक्षा दुर्वारे-त्याह—**तत्रापीति**। निर्वाहकोत्तरभेदाग्रहे निर्वाह्यपूर्वपूर्वभेदाग्रहादाद्यभेद-ग्रहोऽपि न स्यादिति मूलक्षतिमाह—**इति नेति**। तार्किकसमये समवायवत् भाट्टमते तादात्म्यवन्मायावादे मायावच्च भेदस्य स्वपरनिर्वाहकत्वान्नानवस्थादि-दोषोऽस्तीति चोदयति—**नन्विति**। भेदान्तरादीत्यादिपदेन विशेषणविशे-

---

1. त्वन्मते 2. भेदाग्रहः

रादिप्रयुक्तानवस्थादिदोषप्रसङ्गः। समवाय एवासिद्धोऽतस्तस्येत्थंभावोऽत्रपटो न दृष्टान्त इति चेत् सत्यम्, तथापि-नाप्रसिद्धा स्वपरनिर्वाहकता। त्वया मायायास्स्वपराध्यासहेतुत्वस्यावश्याभ्युपेयत्वात्। सा मायात्वात्तथेति चेन्न। भेदोऽपि हि भेदत्वात्तथा स्यात्। मायाया मिथ्यात्वात्तथेति वदतो भेदः सत्यत्वात्तथेत्युत्तरम्। एवं नाप्रसिद्धा स्वपरनिर्वाहकता। अतो भेदो धर्म्यादेः स्वस्य च भिन्नत्वव्यवहारहेतुरिति।

उच्यते—किं माया प्रतिवन्दित्वेनैवोच्यते? किं वा तद्दृष्टा-

---

न्यभावान्तरं गृह्यते। भाट्टवेदान्तिनोः समवायदृष्टान्तस्याश्रयशून्यत्वमाशङ्कते—समवाय इति। तार्किकपक्षे तादात्म्यदृष्टान्तस्य शशविषाणसादृश्यादनुपादेयत्वं मायावाद्यभिमतमायायाश्च सर्वाप्रसिद्धत्वेनानुदाहरणत्वं सुप्रसिद्धमित्यभिसन्धिः। दृष्टान्तयोराश्रयहीनतामङ्गीकरोति—सत्यमिति। तर्हि स्वपरनिर्वाहकस्याप्रसिद्धत्वात्कथं तेन भेदानवस्थादिसमाधिः, अत आह—तथापीति। पक्षान्तरेष्वप्रसिद्धापि माया मायावादे स्वपराध्यासहेतुरिष्यते। न हि तस्या वास्तवत्वं, तत्त्वव्याघातात्। नापि मायान्तरेण सा दृगात्मन्यध्यस्ता, अनवस्थानात्। तेनाहंकाराध्यासहेतुरेव माया स्वाध्यासहेतुरिति प्रसिद्धा स्वपरनिर्वाहकता। तथा च भेदेऽपि तत्संभवान्नानवस्थादिप्रसक्तिरित्याह—त्वयेति। "नास्त्यविद्येत्यविद्यायामेवासित्वा प्रकल्प्यते" इत्यभ्युपगमं सूचयति—अवश्येति। ननु मायाया मायात्वादेव स्वपराध्यासहेतुत्वं, न हि तस्यामनुपपत्तिरस्ति। अनुपपद्यमानरूपत्वादिति शङ्कते—सा मायात्वादिति। तर्हि भेदोऽपि भेदत्वादेव स्वपरनिर्वाहकोऽस्तु। न च मायायामनुपपत्त्युपपत्तिः। मुक्तानामपि ततो बन्धप्रसङ्गादित्यभिप्रेत्य प्रतिबन्द्या परिहरति—न भेदोऽपीति। उक्तावेव चोद्यपरिहारौ स्फुटयति—मायाया इत्यादिना। स्वपरनिर्वाहकत्वप्रसिद्धिं निगमयति—एवमिति। अस्तु प्रस्तुते किमिति तदाह—अत इति।

मायावद्भेदस्य स्वपरनिर्वाहकत्वान्नानवस्थादिदूषणमिति प्राप्तं प्रत्यवस्थानं परिहरति—उच्यत इति। यदि न भेदः स्वपरनिर्वाहकः तर्हि कथं माया स्वपरनिर्वाहिकेष्यते न्यायाविशेषादिति। प्रतिबन्दित्वेन सोच्यते, मायावद्

न्तेन स्वपरनिर्वाहकता भेदस्य साध्यते ?। नाद्यः। मतानुज्ञाप्रसङ्गात्। न द्वितीयः। मायाया अप्रामाणिकत्वात्। प्रामाणिको हि दृष्टान्तः। अतोऽप्रसिद्धविशेषणता पक्षस्य। न चात्र हेतुरपि कश्चित्सम्भवी। किञ्च केयं स्वनिर्वाहकता ? न तावत्स्वहेतुता। अनभ्युपगमात्। आत्माश्रयतापत्तेश्च। नापि स्वभिन्नत्वे हेतुभावः। भिन्नत्वोत्पत्तेः प्राग्भेदस्याभिन्नत्वप्रसङ्गात्। कदाचिच्चाभिन्नस्यान्यदा भिन्नत्वं न गीर्वाणशापशतेनापि शक्यं सम्पादयितुम्। अन्यथा स्वस्मादपि भिन्नत्व-

---

भेदस्यापि स्वपरनिर्वाहकतेति दृष्टान्तत्वेन वेति विकल्पार्थः। न तावत्प्रतिबन्दित्वेन मायोच्यते, स्वपक्षे प्राप्तं दोषं अपरिहृत्य परपक्षे तमासञ्जयतो निग्रहापत्तेः। "समानमित्यनुत्तरमभ्युपगमादि"ति न्यायवार्तिककृतोक्तत्वादित्याह—**नाद्य इति**। मायादृष्टान्तेन भेदस्य साध्यते स्वपरनिर्वाहकतेति पक्षं प्रत्याह—**न द्वितीय इति**। अप्रामाणिकस्य दृष्टान्तत्वानुपपत्तेः स्वपरनिर्वाकत्वमन्यत्राप्रसिद्धं भेदस्य दुःसाधमिति फलितमाह—**अत इति**। किं च मायादृष्टान्तेन भेदस्य स्वपरनिर्वाहकत्वे साध्ये न तावन्नि[1]श्चितपरतन्त्रत्वं हेतुः, संयोगादिषु व्यभिचारात्। नापि हेत्वन्तरमनुगतमस्तीत्याह—**न चात्रेति**। साध्यं च दुर्निरूपमित्याह—**किं चेति**। तिष्ठतु परनिर्वाहकत्वं स्वनिर्वाहकत्वं तु न निर्वहतीति निर्वक्तुं विकल्पयति—**केयमिति**। सा हि स्वहेतुता वा स्वभि[2]न्नत्वहेतुता वा त[*]द्व्यवहारहेतुता वेति विकल्पार्थः। स्वहेतुत्वमपि स्वोत्पत्तिहेतुत्वं वा स्वव्यवहारहेतुत्वं वेति विकल्प्याद्यं दूषयति—**न तावदिति**। न द्वितीयः, स्वव्यवहारो हि स्वविषयमभिधानमभिज्ञानं वा। तथा च [3]स्वविशिष्टोभयविधव्यवहारस्य स्वप्रयुक्तत्वे स्वस्यापि स्वप्रयोज्यत्वप्रसक्तेरात्माश्रयता समापतेदित्याह—**आत्माश्रयतेति**। पूर्वस्मिन्नपि पक्षे तुल्यमात्माश्रयत्वमिति चकारार्थः। कल्पान्तरं निरस्यति—**नापीति**। देवदत्तस्य पुत्रोत्पत्त्या[4] सपुत्रत्ववत् भेदस्यापि भेदोत्पत्तेर्भिन्नत्वं भविष्यतीत्याशङ्क्याह—**कदाचिदिति**। अभिन्नस्यैव [†]अनभिन्नत्वे दोषमाह—**अन्यथेति**। न तृतीय इत्याह—**न चेति**। भेदस्य भेदान्तर-

---

1. निश्चयपरतन्त्रत्वं 2. स्वभिन्नहेतुता * स्वभिन्नत्वव्यवहारेत्यर्थः 3. स्वविशिष्ट
4. उत्पत्त्या पुत्रत्ववत् † भिन्नत्व इत्यर्थः

प्रसङ्गात्। न च स्वभिन्नताव्यवहारनिमित्तत्वं, भेदस्य भेदान्तरानभ्युपगमे तद्भिन्नतायाः शशविषाणसमत्वात्तद्व्यवहारायोगात्। तस्मान्न परमार्थतः किञ्चिदपिस्वपरनिर्वाहकं मानाभावाद् दुर्घटत्वाच्च। मायायास्तु दुर्घटत्वं भूषणमेव, न दूषणम्। दुर्घटं हि प्रासादादेर्निगरणं मायेति वर्णयन्ति। अतो मिथ्यैव भेदोऽवभासते।

प्रयोगस्तु—विवादपदं मिथ्या भेदत्वात् स्वप्नभेदवदिति। विपक्षे च तत्प्रतीत्यसम्भवो बाधः। सैव* च शक्यतेऽर्थापत्तित उन्नेतुम्। आगमस्तु "नेह नानास्ती" त्यादिः प्रागेवोक्तः। तस्मान्मा-

---

मभ्युपगम्यते न वेति विकल्प्याद्ये दर्शितामवस्थां मनसि निधाय द्वितीयं प्रत्याह—**भेदान्तरेति**। समवायादेः स्वपरनिर्वाहकत्ववत् भेदस्यापि किं न स्यादित्याशङ्क्याह—**तस्मादिति**। स्वपरनिर्वाहकत्वस्य युक्तिमत्वे तदनुग्राह्यं मानं गृह्येत। तदपि न गृह्यते। अतोऽपि न स्वपरनिर्वाहकता युक्तिसरणिमनुसरतीत्याह—**दुर्घटत्वादिति**। कथं तर्हि मायायाः स्वपराध्यासहेतुतेति सौहार्देन पृच्छन्तं प्रत्याह—**मायायास्त्विति**। दुर्घटत्वस्य भूषणत्वं साधयति—**दुर्घटं हीति**। न च मायायामनुपपत्त्यभावे सा मुक्ता[1]नपि सम्बध्नीयादिति वाच्यम्। मायानिवृत्तेरेव मुक्तित्वादिति भावः। परस्पराश्रयादिदोषदूषितत्वे कथं भेदस्य प्रथा सम्भवेदित्याशङ्क्याह—**अत इति**। उक्तमर्थमनुमानेन समर्थयते—**प्रयोगस्त्विति**। स्वाप्नभेदभागे सिद्धसाध्यत्वनिवेधार्थं विवादपदमिति विशेषणम्। भेदस्य सत्यत्वे पूर्वोक्तपरस्पराश्रयादिदोषात्तत्प्रतीत्यनुपपत्तेर्बाधकत्वान्नाप्रयोजकता हेतोरित्याह—**विपक्षे चेति**। किं चार्थापत्तिरपि[2] सत्यभेदप्रतीत्यनुपपत्तिरूपा तन्मिथ्यात्वमावेदयतीत्याह—**सैव चेति**। यस्तु श्रद्धात्मतया नानुमानार्थापत्तिभ्यामेव च तुष्यति तं प्रत्याह—**आगमस्त्विति**। भेदप्रपञ्चस्य मायामयत्वे सत्यद्वितीये ब्रह्मणि समन्वयस्याध्यक्षादिविरोधवैधुर्यं फलतीति परमप्रकृतमुपसंहरति—**तस्मादिति**। निरूप्यमाणे विरोधाभावेऽपि द्वैतग्राहिप्रमाणैरद्वैतसमन्वयस्य विरोधो भवत्येवे-

---

* मिथ्यात्मता चेति भावः 1. मुक्तानामपि 2. पाठवादे

यामयद्वैतविषयैः प्रत्यक्षादिभिः तात्त्विकचैतन्यैकतानब्रह्मात्मानमद्वयं बोधयतामागमवाक्यानां न विरोधगन्धोऽपीति सिद्धम् ।

अद्वैतस्यार्षसमयविरोधशंकापरिहारौ

नन्वेवमप्यार्षसमयविरोधो दुर्वारः । तथाहि—कणभक्षाक्षपादादयो वैदिका एवर्षयोऽद्वयसमयविरुद्धानि समयान्तराणि चक्रुः । तेषु हि षडेव क्वचित् तत्वतः पदार्थाः । क्वचिच्च षोडशैव । तथा क्वचित्पञ्च-विंशतिः । तत्वविषयमेव च प्रत्यक्षादि प्रमाणमिति वर्णयाम्बभूवुः ।

---

त्याशङ्क्य भिन्नविषयत्वान्न विरोधाशङ्केत्याह—**गन्धोऽपीति** । प्रत्यक्षा दिप्रमाणाविरोधेऽपि समन्वयस्य न्यायविरोधोऽस्तीति शङ्कते—**नन्वेवमिति** । [1]काणादादीनां [2]बुद्धादिवदवैदिकत्वान्न तन्मतविरोधो वैदिकदर्शनस्येत्याश-ङ्क्याह—**तथा हीति** । तेषां वैदिकत्वे वेदव्यास[3]समयसिद्धाद्वितीयात्माविरु-द्धवादित्व स्यादित्याशङ्क्याह—**अद्वयेति** । विरुद्धत्वमेव दर्शयन्नादौ वैशेषि-कमतमाह—**तेष्विति** । द्रव्यगुणकर्मसामान्यविशेषसमवायाः षडेव पदार्था वैशेषिकैरध्यक्षानुमानाभ्यामभ्युपेयम् । न च तेषामवास्तवत्वं, प्रामा-णिकत्वादित्यर्थः । अक्षपादपक्षमाह—**क्वचिच्चेति** । प्रमाणप्रमेय-संशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजा-तिनिग्रहस्थानानि षोडश पदार्था नैयायिकैरिष्यन्ते । ते च प्रत्यक्षानुमानो-पमानागमैर्यथायोगं सिद्धत्वात्पारमार्थिका इत्यर्थः । कापिलं मतमाह—**तथेति** । ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि भूतमात्राणि महाभूतानि मनोऽहङ्कारौ महानव्यक्तं पुरुष इति पञ्चविंशतिः पदार्थाः सांख्यैः स्वीक्रियन्ते ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकश्चविकारो न प्रकृतिर्नविकृतिः पुरुषः ॥

इत्युक्तत्वात् । तेषां च प्रत्यक्षानुमाना[4]गमोपमानार्थापत्तिसिद्धतया परमार्थत्व-मित्यर्थः । व्यावहारिकप्रमाणसिद्धत्वात् भेदप्रपञ्चस्य चन्द्रप्रादेशमात्रत्ववन्मृषा-त्वमित्याशङ्क्य प्रमितत्वं मृषात्वं च व्याहतमिति मत्वाह—**तत्वविषयमिति** ।

---

1. करणानां 2. बुध्यादि 3. व्यस द्वितीय 4. अत्र सांख्यैः प्रमाण-त्रयस्यैवोपेतत्वादुपमानार्थापत्ती अधिके इव प्रतिभाति ।

अतो विरोधः स्वमते स्फुट इति ।

उच्यते—ऋषिमतेष्वतिभक्तेन कथं तेषु बृहस्पतिमतविरोधोऽपास्यते । प्रत्यक्षैकमानेन तेषु बाधासम्भवादिति चेत् । तर्हि बौद्धादिमतेनेश्वरप्रणीतेन विरोधः स्यात् । तस्यानुमाना*गमप्रधानत्वात् । "सं बाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः" इत्यादिवेदानुसारिषु परमाणुवादिकाणादादिमतेषु "अजामेकां लोहितशुक्लकृष्णामि"-

---

भेदप्रपञ्चस्य प्रामाणिकत्वेनात्मवत्तात्त्विकत्वे तद्विषयवैशेषिकादिशास्त्र[1]विरोधान्नसमन्वयसिद्धिरित्युपसंहरति—अत इति । कणभक्षादिपक्षाणां मिथो विरुद्धत्वात्तदीयतर्काणामप्रतिष्ठत्वान्न तद्विरोधः समन्वयस्येत्याह–उच्यत इति । प्रत्यक्षमेकमेव लोकायतमते मानम् । तेनानुमानाद्यनेकमानसिद्धवैशेषिकादिदर्शनेषु न बाधः संभवति । एकमानवतोऽनेकमानवतां बलवत्त्वादिति शङ्कते—प्रत्यक्षेति । लोकायतमतं प्रत्यक्षमात्रप्रमाणत्वाद्वैशेषिकादिमता[2]नां न बाधकं चेत्तर्हि बुद्धदिगम्बरादिमतेनानुमानादिबहुप्रमाणकेन वैशेषिका[3]भिमतमतबाधः स्यादित्याह—तर्हीति । अनाप्तप्रणीतत्वात् बुद्धादिमतस्य न तेनाप्तप्रणीतमतानां बाध इत्याशङ्क्याह—ईश्वरेति । वैदिकमतानामवैदिकेन मतेन बाधो न युक्तिमानिति चोदयति—सम्बाहुभ्यामिति । विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् देवो द्योतनवान एकः सदृशपुरुषान्तरशून्यः । द्यावाभूमी द्युलोकोपलक्षितं तेजः पृथिव्युपलक्षितं च भूतत्रयम् । सम्पतत्रैः सर्वतोऽपि प्रसरणशीलैश्चतुर्विधपरमाणुभिः, जनयन्नुत्पा[4]दयन् कार्यं सम्बाहुभ्यां भोक्तृसमवेतधर्माधर्माभ्याम् धमति पोषयति स्ववशे स्थापयति पालयतीत्यर्थः । आदिपदेन "अणुः पन्थाः" "अणोरणीया''निति च गृह्यते । अजां, जन्मरहितां मूलप्रकृतिमेकां सजातीयप्रकृतिशून्यां लोहितशुक्लकृष्णां रजस्सत्वतमोरूपां बहुविधाः प्रजाः समानरूपाः सृजन्तीं एकः पुरुषः जुषमाणोऽनुशेते । अन्यः अपरस्तु निष्पन्नभोगो भुक्तभोगां प्रकृतिं विवेकविज्ञानेन जहातीति प्रधानमतमुक्तमित्याह–अजामिति । "आदिपदेन यस्मिन्पञ्च पञ्चजना" "महतः

---

* आगमशब्देनात्त बौद्धागमो विवक्षितः । 1. सिद्धत्वादित्यधिकः पाठः । 2. मतानि बाधकं 3 अभिमतबाधः 4. उत्पादितं

**त्याद्युक्तप्रधानमते च नावैदिकेन विरोध इति चेन्न। तस्य "असद्वा इदमग्र आसीदि"त्यादिवेदानुसारित्वात्। बहुवाक्यविरोधान्नैवमिति चेन्न। इतरेष्वपि तद्विरोधस्य तुल्यत्वात्। संपतत्रशब्देनाजाशब्देन च परमाणुः प्रधानं चोच्यत इति शपथसाध्यम्। तदेकनिष्ठवृत्त्यसम्भवात् तात्पर्याभावाच्च।**

---

परमव्यक्तमि"त्याद्युच्यते। परमाण्वादिवादानां वैदिकत्वमङ्गीकृत्य बौद्धादिमतस्यापि तथात्वात्तेन विरोधस्तेषामिति दूषयति—**न तस्येति**। आदिपदेन "असदेवेदं" "न प्रेत्य संज्ञा"स्तीत्येतदुच्यते। परमाणुप्रधानवादानुसारिनानावाक्यविरोधान्नासद्वादस्यान्यपरवाक्यावगतस्य वैदिकत्वमिति चोदयति—**बहुवाक्येति**। प्रधानादिवादेष्वपि ब्रह्मकारणवादिभूयोवाक्यविरोधान्न वैदिकतेत्याह—**नेतरेष्विति**। परमाणुप्रधानवादयोरवैदिकत्वे हेत्वन्तरमाह—**सम्पतत्रशब्देनेति**।

इदमत्राकूतम्—न तावत्सम्पतत्रशब्देन परमाणुरुच्यते। विश्वतश्चक्षुरिति पूर्ववाक्ये सर्वात्मत्वस्योक्तत्वात्। अत्रापि भगवतश्चिदेकतानस्यानाद्यनिर्वाच्याविद्याकृतापञ्चीकृतभूतसूक्ष्मप्रयुक्तपञ्चीकृतस्थूलभूतकारणत्वानुवादेनैकत्वस्य विधीयमानत्वात्। अणुः पन्था इति च ज्ञानमार्गस्य मोक्षहेतोरतिसूक्ष्मताकथनात्। अणोरणीयानिति च सर्वात्मतानिर्देशादपादानवाचकाणुशब्दस्य महत्त्वप्रतियोगिसूक्ष्मवस्तुमात्रविषयत्वात्। अन्यथा महच्छब्दस्यापि निरतिशयमहद्वस्तुविषयतया ततो महीयस्त्वानुपपत्तेः। न चाजामन्त्रेण प्रधानमभिधीयते "यदग्ने रोहितं रूपमि"ति श्रुत्यन्तरसिद्धायाः तेजोऽबन्नात्मिकाया लोहितशुक्लकृष्णायाः कल्पिता[1]जात्वायाः प्रकृतेरभिधीयमानत्वात्। प्रधानमतानुसारित्वे च परमात्मप्रकरणविरोधात्। न च पञ्चजनवाक्यं पञ्चविंशतितत्त्वविषयम्। प्राणचक्षुःश्रोत्रमनसामन्नसहितानां ज्योतिस्सहितानां वा वाक्यशेषेण पञ्चजनत्वाभ्युपगमात्। न च "महतः परमि"त्यत्र प्रधानमव्यक्तम्। प्रकरणपरिशेषाभ्यां स्थूलशरीरस्यैवाव्यक्तपदवेदनीयत्वात्। अतो न परमतानां वैदिकत्वमिति।

कथं पुनः सम्पतत्रशब्देनाजाशब्देन च परमाणुप्रधानयोरनुपादानमिति ?। तत्र किमेतौ शब्दौ स्वशक्त्या तयोर्वर्तेते किं वा वाक्यतात्पर्यादिति

---

1. जाता येन

**किञ्च वैदिकंमन्येन कथमितरेषु परस्परविरोधो वेदव्यासादि-मतविरोधश्चापास्येत । तस्मादविचारसुन्दरव्यवहारसिद्धवस्तुपराण्येव मतान्तराणि, न तु तात्विकभेदपराणीति न तैर्विरोधः शङ्कनीयः ।**

### सप्रपञ्चं परमाणुकारणतावादखण्डनम्

**किञ्च भिन्नत्वात्परमाणोः कुम्भवत्कार्यत्वं, अतो न मूलकारणतासम्भवः । ननु परमाणुसिद्धौ बाधः, तदसिद्धावाश्रयासिद्धिः । तथाहि—यतः परमणुर्नास्ति स परमाणुः । अतोऽनवयवः । अतः**

---

वाच्यम् । नाद्य इत्याह—**तदेकनिष्ठेति** । सम्पतत्रादिपदस्य वृद्धव्यवहारे परमाण्वादौ अगृहीतसङ्गतिकत्वादित्यर्थः । द्वितीयं दूषयति—**तात्पर्येति** । सम्भाहुभ्यामित्यादिवाक्यस्य न परमाणुपरत्वं, प्रकरणावगतेश्वरपरताविरोधात् । न चाजावाक्यं प्रधानपरम् । उपक्रमाद्यधिगतेश्वरपरत्वाभावप्रसङ्गात् । तेन तात्पर्यवशादपि शब्दद्वयस्य न परमाण्वादिविषयतेत्यर्थः । कपिलकणादादि-वादानां वैदिकानामवैदिकबौद्धादिराद्धान्तेन विरोधाभावेऽपि तेष्वेव मिथो विरोधो वैयासिकजैमिनीयमतविरोधश्च दुर्वारः । प्रमाणप्रत्ययविप्रतिपत्तेः । यथाह—

"कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा ।
तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयो"रिति ॥

तदेतदाह—**किञ्चेति** । मतान्तराणामप्रामाणिकत्वे विरुद्धत्वे च सिद्धे फलितपाह—**तस्मादिति** । कणादादिमतानां भ्रान्तिमूलत्वादपि तदीयतर्क-विरोधो नास्ति समन्वयस्येत्याह—**किं चेति** । तत्र प्रथमं परमाणुवादं प्रत्याह—**भिन्नत्वादिति** । परमाणुर्जायते भिन्नत्वात् कुम्भवत् इति । घटादि-प्रागभावस्यापि पिण्डाद्यात्मकस्य जायमानत्वान्नानैकान्त्यमिति भावः । कार्यत्वेन परमाणोर्मूलकारणत्वासम्भवे तद्विषयतर्कविरोधसमाधिः समन्वयस्य फलतीत्याह—**अतो नेति** । परमाणुः प्रमितोऽप्रमितो वेति विकल्प्याद्ये धर्मिग्रहविरोधं दर्शयति—**नन्विति** । द्वितीयं प्रत्याह—**तदसिद्धाविति** । धर्मिग्रहबाधं साधयति—**तथा हीति** । निरवयवस्यापि स्वरूप[1]त्वाज्जन्म स्यादित्या-

---

1. स्वरूपादियज्जन्म

कारणसमवायरूपजन्मरहितः स सिध्येत् । सिध्येद्यदि कारणसमवायो जन्मेति सिध्येत् तच्चान्योन्याश्रयत्वान्न सिध्यति । कारणत्वं हि जन्मविवेचनीयम् । जन्मपूर्वभाविनः कारणताभ्युपगमात् । जन्म च कारणाधीनविवेकं कारणसमवायो जन्मेत्याश्रयणात् । एतेन प्रागसतः सत्तासमवायो जन्मेत्यपास्तम् । प्राग्जन्मनोरन्योन्याश्रयत्वात् सर्वजनप्रसिद्धामप्रसिद्धसमवायेन जनिमाचक्षाणस्य शोभते मतम् । समवायरहितस्यापि च प्रध्वंसस्य जनिमत्वान्न कथमपि समवायो [1]जनिः । अथ कारणाधीनात्मलाभो जन्म न समवाय इति मतम् । न। आत्मलाभस्य दुर्निरूपत्वात् । कारणादिज्ञप्त्योरन्योन्याश्रयत्वाच्च । अन्यायत्तं स्वरूपसत्वं जन्मेति चेन्न। तस्य सर्वकार्येष्वननुगमाल्लक्षणत्वायोगात् ।

---

शङ्कयाह—अत इति । कारणसमवायो हि जन्म । परमाणुश्च निरवयवद्रव्यत्वादात्मवत्कारणरहितः । स कथं जायेतेत्यर्थः । निरवयवद्रव्यत्वहेतौ विशेषणासिद्धेर्वक्ष्यमाणत्वं विवक्षन् जन्मलक्षणं तावत्प्रतिक्षिपति—**सिद्ध्येदित्यादिना**। अन्योन्याश्रयत्वमेव विशदयति—**कारणत्वं हीति** । परस्पराश्रयत्वप्रसञ्जनेन लक्षणान्तरं निराकरोति—**एतेनेति** । किं च प्रसिद्धेनाप्रसिद्धं निरूप्यते नान्यथेत्यभिसन्धायोभयत्र दोषान्तरमाह—**सर्वजनेति** । अव्याप्तेश्च नेदं लक्षणद्वयमुपपन्नमित्याह—**समवायेति** । लक्षणान्तरमाशङ्कते—**अथेति** । कोऽयमात्मलाभः कार्यस्य, कारणे समवायो वा सत्तासमवायो वा तस्य तत्र संयोगो वा । नाद्यौ । समवायस्य नित्यत्वेन कारणानधीनात्वात् । अप्रसिद्धसमवायेन प्रसिद्धजन्मव्याख्यानानुपपत्तेरुक्तत्वाच्च। नान्त्यः तयोः संयोगानङ्गीकारादित्यसंभवित्वेन दूषयति—**नात्मलाभस्येति** । कारणे ज्ञाते तदधीनात्मलाभजन्मसिद्धिः । तत्सिद्धौ च ततो नियतपूर्वक्षणवृत्तिकारणत्वसिद्धिरिति परस्पराश्रयत्वाच्चासंभवि इत्याह—**कारणादीति** । लक्षणान्तरमुत्थापयति—**अन्यायत्तमिति** । किमिदं स्वरूपसत्वं स्वरूपे सत्वं वा स्वरूपमेव सत्वं वा, आद्येऽपि तदनुगतमननुगतं वा । नाद्यः । तस्य सत्ताजात्यनतिरेकात् । अन्याधीनत्वानुपपत्तेरिति मत्वा परिशिष्टौ निराचष्टे—**न तस्येति** । जन्म-

---

1. जातिः

स्यादेतत्—अजः क्रियावान् परमाणुरिति परस्य मतम् । तत्सिद्धस्य धर्मित्वे कथं न बाधः ? विपर्यये वा कथं नाश्रयासिद्धिः । प्रकारान्तरेण तदसिद्धेरिति, सत्यम् । तथापि यथा न तव तत्राजत्वसाधकहेतोराश्रयासिद्धिः एवमस्माकमपि हेतोर्नाश्रयासिद्धिः स्यात् । तस्मान्न धर्मिग्रहबाधः । नाप्याश्रयासिद्धिः । भिन्नत्वकार्यत्वसम्बधे प्रागसत्वमुपाधिरिति चेन्न, तस्य साधनव्यापकत्वात् । वियदादेर्भिन्न-

---

लक्षणनिराकरणेन परमाणोरजननानुपपत्तेर्न तद्ग्रहविरोधः, तत्कार्यत्वानुमानस्येति स्थिते विधान्तरेण तद्ग्राहकमानविरोधमाशङ्कते—स्यादेतदिति । घटादौ *व्यभिचारं वारयितुं अजविशेषणम् । आत्मादौ व्यभि†चारं निरसितुं क्रियावानित्युक्तम् । किं तावतेत्याशङ्क्य किं तेन मतेन सिद्धस्य धर्मित्वमुत नेति विकल्प्याद्ये दोषमाह—तत्सिद्धस्येति । द्वितीये दोषमाभाषते—विपर्यये चेति । लोकसिद्धस्याणोर्धर्मित्वान्न दोषाविति चेन्न । विवक्षिताणुविषयलोकप्रसिध्यभावादित्याह—प्रकारान्तरेणेति ।

"जालान्तरगते भानावणीयो दृश्यते रजः ।
तत्परं परमाणूनां परमाणुं प्रचक्षत" ॥

इतिपुराणानुसारेण त्रसरेणोरेवाणुत्वात्तस्याजत्वासिद्धेर्विशिष्टलक्षणायोगमभिप्रेत्य परसिद्धपरमाणोर्धर्मित्वमङ्गीकरोति—सत्यमिति । तर्हि बाधः समापतति नेत्याह—तथापीति । परमाणुवादे परमाणुर्न जायते निरवयवद्रव्यत्वादित्यत्र हेतोराश्रयासिद्धिबाधाभाववदस्मन्मतेऽपि भिन्नत्वहेतोर्नाश्रयासिद्धिबाधौ । साधारणप्रसिद्धस्य धर्मित्वाविशेषात् । अन्यथा प्रयोगवैयर्थ्यात् । न च परार्थत्वादर्थवत्त्वम् । परार्थप्रयोगस्यास्मकमपि सुवचत्वादिति भावः । प्रसिद्धस्य धर्मित्वे दोषद्वयसमाधिफलमाह—तस्मान्नेति । सोपाधिकत्वेन हेतोरप्रयोजकत्वं शङ्कते—भिन्नत्वेति । कुम्भादौ भिन्नत्वस्य कार्यत्वस्य च न स्वाभाविकः सम्बन्धः । तत्र प्रागसत्वस्य प्रयोजकत्वादित्यर्थः । परमाणवः प्रागसन्तः भिन्नत्वात् कुम्भवदिति दूषयति—न तस्येति । आकाशादौ व्यभिचारं शङ्कित्वानुमानेन निरस्यति—वियदादेरित्यादिना । वियदादौ व्यभिचारा-

---

* व्यभिचारोऽत्रातिव्याप्तिः † अत्रापि व्यभिचारोऽतिव्याप्तिः

स्यापि प्रागसत्त्वाभावान्नात्र साधनव्याप्तिरिति चेन्न। तस्यापि कुम्भवत्प्रागसत्त्वस्योक्तहेतुनैव साधयितुं सुकरत्वात्। तथाप्यस्माकं भिन्नस्यात्मनः प्रागसत्त्वाभावान्न साधनव्याप्तिरिति चेन्न। तस्याहंप्रत्ययिनः कुम्भसमत्वात्तदन्यस्य च भिन्नस्यासिद्धेः। ईश्वरस्य भिन्नस्यापि प्रागसत्त्वाभावान्नेयं व्याप्तिरिति चेन्न। तस्य भेदासिद्धेः। भिन्नत्वे च तस्यापि वियदादितुल्यत्वात्। ननु कालस्य भिन्नस्यापि प्रागसत्त्वाभावान्नेयं व्याप्तिः। न च तस्य प्रागसत्त्वं साधयितुं शक्यम्। कालस्य कालानवच्छिन्नस्य प्रागसत्त्वासम्भवादिति चेत्, तर्हि प्रागसत्त्वरहितस्यापि कालस्य "स संवत्सरोऽभवदि" त्युत्पत्तिश्रवणात् साध्याव्याप्तिः। न च कारणवत्त्वमुपाधिः। तस्य साधनव्यापकत्वात्। विप्रतिपन्ने च साधयितुं सुकरत्वात्। अत एव नोपाधिः शङ्कनीयः। तस्य कारणव-

---

भावेऽपि आत्मन्यन्यतरव्यभिचारोऽस्तीति चोदयति—**तथापीति**। जीवे वा व्यभिचारः शङ्क्यते ईश्वरे वा। आद्येऽपि जीवशब्दवाच्ये वा तल्लक्ष्ये वेति विकल्प्य नाद्य इत्याह—**न तस्येति**। न द्वितीय इत्याह—**तदन्यस्येति**। कल्पान्तरमालम्बते—**ईश्वरस्येति**। तस्य ब्रह्मत्वेन निरतिशयमहत्त्वान्नैवमित्याह—**नेति**। ईश्वरस्य घटादेर्भिन्नत्वमभिन्नत्वं वा। आद्ये कथं भेदासिद्धिः। द्वितीये घटादिवदनीश्वरत्वापत्तिरित्याशङ्क्याह—**भिन्नत्वे चेति**। आरम्भणाधिकरणन्यायेन कार्यप्रपञ्चस्येश्वरव्यतिरेकेणाभावान्नाभेदप्रयुक्तं दूषणमिति भावः। काले व्यभिचारमाशङ्कते—**नन्विति**। कालस्यापि भिन्नत्वेन कुम्भवत्प्रागसत्त्वानुमानमाशङ्क्याह—**न चेति**। यदि काले व्यभिचारादुपाधेः साधनव्याप्तिर्न सम्भवति तर्हि सा मा भूत्। तथापि [1]यत्र कार्यत्वं तत्र प्रागसत्त्वमिति व्याप्त्यभावान्नोक्तोपाधिसिद्धिरित्याह—**तर्हीति**। उपाध्यन्तरमाशङ्क्य निराकरोति—**न चेति**। आकाशादौ भिन्नत्वे सत्यपि कारणवत्त्वाभावान्न साधनव्याप्तिरित्याशंक्याह—**विप्रतिपन्ने चेति**। तथापि कः शङ्कितोपाधेः प्रतीकारः ?। अत आह—**अत एवेति**। कथं कारणवत्त्वोपाधिनिरासेन शङ्कितोपाधिनिरसनमिति। तदेतदाह—**तस्येति**। उपाधिर्हि शङ्क्यमानः-

---

1. यदि

त्वाधिकवृत्त्यादिविकल्पासहत्वात्। विपक्षे च निरुपाधिसम्बन्धभङ्ग-प्रसङ्गो बाधः। प्रतिप्रयोगासंभवान्न सत्प्रतिपक्षतापि।

अथ पृथिवीत्वमजाश्रयं कृत्स्नपृथिवीवृत्तित्वात्, सत्ववदिति प्रयोग इति मतम्। न। दृष्टान्ते साध्यविरहात्। न च परमाणवोऽजाः द्रव्यत्वे सति निरंशत्वात् आत्मवदिति वाच्यम्। हेत्वसिद्धेः। विपक्षे बाधाभावाच्च। न चात्र निरंशत्वसाधको हेतुरस्ति। अथ अयं घट

---

[1]कारणवत्वाधिकवृत्तिः? किं वा तत्तुल्यवृत्तिः? आहो तन्न्यूनवृत्तिः? तत्र आद्ययोः साधनव्याप्तिः। कारणवत्त्वस्य तथात्वात्। तृतीये साध्याव्याप्तिः। तद्व्यापककारणवत्वाव्यापकत्वादित्यर्थः। उभयविधोपाध्यभावेऽपि बाधकतर्का-भावादप्रयोजकत्वं भिन्नत्वहेतोर्दुष्परिहरमित्याशंक्याह—विपक्षे चेति।

ननु पृथिवी[2]त्वं नित्याश्रयं नित्यानित्यपृथिवीनिष्ठात्यन्ताभावाप्रतियोगि-त्वात् द्रव्यत्ववत् इति सत्प्रतिपक्षत्वमाशङ्क्याह—प्रतिप्रयोगेति। पृथिवी-त्वमनित्यमात्रवृत्ति पृथिवीमात्रवृत्तित्वात् घटत्ववदित्यपि सम्भवान्न प्रतिप्रयोगाव-काशः। न च यावत्पृथिव्यवृत्तित्वमुपाधिः। व्यतिरेकासिद्धेरित्यभिसन्धिः। व्यतिरेकसिद्धिमाशङ्कते—अथेति। घटत्वादौ व्यभिचारव्यावृत्त्यर्थं कृत्स्नेत्युक्तम्। असिद्धिमुद्धर्तुं पृथिवीतिपदम्। आत्ममात्रस्यैव नित्यत्वात् तस्य निर्धर्मकस्य सदेवेत्यादिश्रुतेः सन्मात्रस्य सत्वाद्यनधिकरणत्वेन दृष्टान्तस्य साध्यवैकल्यान्मैव-मित्याह—न दृष्टान्त इति। प्रतिप्रयोगान्तरमाशङ्क्य प्रत्याचष्टे—न चेति। रूपादिव्या*वृत्त्यर्थं द्रव्यत्वे सतीत्युक्तम्। घटादिनिरा†सार्थं निरंशत्वादिति पदम्। निरंशत्वविशेषणासिध्या विशिष्टासिद्धिमभिसन्धायाह—हेत्वसिद्धेरिति। स्वरूपासिद्धिमुक्त्वा व्याप्यत्वासिद्धिमाह—विपक्ष इति। विशेषणासिद्धेर-सिद्धत्वाद्विशिष्टहेत्वनुपपत्तिरेव बाधिकेत्याशङ्क्य विशेषणासिद्धिं साधयति—न चात्रेति। परमाणुषु निरंशत्वे साधकं हेतुमुद्भावयति—अथेति। अयं घट इतरेतराभाववानित्युक्ते सिद्धसाध्यता। रूपादेरन्यत्वस्यास्मिन्घटे सिद्धत्वात्।

---

1. कारणत्वेना....आद्य 2. पृथिवीत्वं नित्या * व्यभिचारनिरासार्थम्
† व्यभिचारनिरासार्थम्

**एतद्व्यतिरिक्तसांशेतरस्पर्शवदितरेतराभाववान् द्रव्यत्वात् पटवदिति मानम् । न । इतरेतराभावादिमात्रसाध्यस्य सिद्धत्वात् । विशिष्टस्य चासिद्धेः । न हि ते विशिष्टं तत्वान्तरमस्ति । एतेन महाविद्यान्तराण्यपि निरस्तानि । अस्ति च सांशत्वे मानम् । परमाणुः सांशः संयोगित्वात् कुम्भवदिति ।**

**ननु परमाणुः सांशश्चेति स्फुटो बाधः । तथाहि—अणुपरिमाण-**

---

अत आह—**स्पर्शवदिति** । एवमपि स एव दोषः स्पर्शवत्पटादेरितरत्वात् । अत आह—**सांशेतरेति** । तथा चाप्रसिद्धविशेषणता, सांशेतरस्पर्शवतोऽप्रसिध्या तदितरत्वस्यापि प्रसिध्यसंभवात्तत्राह—**एतद्व्यतिरिक्तेति** । ततश्च पक्षीकृतादेतस्मात् घटादतिरिक्तो यः सांशादिस्तस्मादितरस्पर्शवान् पक्षीकृतो घटः, तस्मादन्यत्वस्य पटे प्रसिद्धेर्नाप्रसिद्धविशेषणता । एवं चास्य घटस्यास्मादेव घटादन्यत्वस्य व्याहतत्वादेतस्मात् घटादतिरिक्तस्यैतद्घटान्यसांशाच्चेतरस्य स्पर्शवतोऽन्यत्वप्रतियोगिनः सिद्धौ निरंशः परमाणुर्नित्यमूर्तः सिध्यतीति तात्पर्यार्थः । न तावन्नित्यमूर्तत्वं परमाणोरुपपद्यते । नित्यत्वमूर्तत्वयोरेकत्र व्याहतत्वात् । अनित्यत्वेन मूर्तत्वस्य व्याप्तेरित्याह—**नेति** । किं चेतरेतराभावादिमात्रस्यैकैकस्य वा साध्यत्वं विशिष्टस्य वा ? । नाद्य इत्याह—**इतरेतराभावादिति** । द्वितीयं निराचष्टे—**विशिष्टस्येति** । दण्डीत्यादिप्रयोगप्रत्ययाभ्यामिष्टमेव विशिष्टमित्याशंक्य तयोर्विशेषणादिमात्रविषयत्वादतिरिक्तविशिष्टासिद्धेस्तन्मात्रसाधने च सिद्धसाधनस्योक्तत्वान्न त्वदीयमनुमानं सम्भवतीत्यर्थः । अयं घट एतद्घटेतरानित्यमूर्तेतरमूर्तेतरः कार्यत्वात्पटवदित्यादिपरमाणुसाधकानुमानेषु दर्शितन्यायमतिदिशति—**एतेनेति** । अयं घट एतद्घटेतरानित्यसावयवेतरसावयवान्यः कार्यत्वादित्याभाससमानत्वाच्च त्वदीय[1]महाविद्या-[2]प्रयोगाप्रवृत्तिरित्यर्थः । परमाणोः सांशत्वे मानाभावात्परिशेषतो निरंशत्वसिद्धिरित्याशङ्क्याह—**अस्ति चेति** । प्रतिज्ञापदयोर्व्याहतिमाशङ्कते—**नन्विति** । व्याहतिमेव साधयति—**तथा हीति** । नन्वणुपरिमाणतारतम्य-

---

1. त्वदीय....विद्या 2. प्रयोगप्रवृत्तिः

**तारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात्, महत्परिमाणतारतम्यवदिति परमाणुनिरंशतामानविरुद्धं तत्सांशतानुमानम्। न। अस्माकं निरंशत्वासिद्धेः। न ह्यणुपरिमाणतारतम्यविश्रान्तिरेव निरंशता। तच्छून्यस्यापि गुणादेर्निरंशत्वात्।**

**नन्वणोः परिमाणतारतम्यविश्रान्त्याश्रयत्वादाकाशवन्निरंशत्वसिद्धिः। न, आकाशे साध्याभावात्। तर्ह्यात्माऽस्तु दृष्टान्तः। न। तस्य साधनविकलत्वात्। पृथिवीत्वं निरंशवृत्ति, कृत्स्नपृथिवीवृत्तित्वात्**

---

मणुनिष्ठपरिमाणतारतम्यं चेदाश्रयासिद्धिः। अणोरसिद्धौ तत्परिमाणतारतम्यासंभवात्। तस्यैकरूपतया तारतम्यानुपपत्तेश्च। महत्परिमाणापकर्षतारतम्यस्य च त्रसरेणुषु तद्विश्रान्तेः सिद्धसाध्यत्वमिति तत्राह—**इति परमाण्विति**। त्रसरेणोश्चाक्षुषद्रव्यत्वेन सावयवत्वानुमानान्महत्वापकर्षस्य तत्राविश्रान्तेः तदारम्भकद्व्यणुकावयवे विश्रमात्तन्निरंशतायामनुमानं पर्यवस्यति। अतस्तेनावरुद्धं परमाणुसांशत्वानुमानं व्याहतमित्यर्थः। चाक्षुषद्रव्यत्वस्य योगिचक्षुर्ग्राह्यपरमाणुषु व्यभिचारादद्यापि *तदसिद्धेस्त†न्निरासार्थमस्मद्विशेषणायोगात्त्रसरेणुषु महत्वापकर्षविश्रमान्नोक्तानुमानादणुनिरंशतेति न सांशत्वनुमानं व्याहतमिति परिहरति—**नास्माकमिति**। एतेन परमाणवो नापरोक्षाः परमसूक्ष्मत्वात् एकाणुवदिति प्रत्युक्तम्। किं च किमणुपरिमाणतारतम्यविश्रान्तिरेव निरंशता किं वा तत्साध्येति वक्तव्यम्। नाद्य इत्याह—**न हीति**। द्वितीयमालम्बते—**नन्विति**। द्रव्यत्वे सति समवेतत्वं हि सांशत्वम्। तस्याकाशेऽपि भावात्। तत्र निरंशत्वस्य तद्विरुद्धस्यासत्वान्नायं दृष्टान्त इति निराचष्टे—**नाकाश इति**। दृष्टान्तान्तरं शङ्कित्वा दूषयति—**तर्हीत्यादिना**। आत्मनो निर्धर्मकत्वस्यागमिकत्वात्परिमाणवत्वस्याप्यभावादिति भावः। सांशत्वानुमानस्यानुमानान्तरविरोधमाशङ्क्य प्रत्यनुमानेन प्रत्याचष्टे—**पृथिवीत्वमित्यादिना**। प्रत्यनुमाने सत्वादिव्यावृत्त्यर्थं द्रव्यत्वापरजातित्वे सतीत्युक्तम्। आत्मत्वादिव्यावृत्त्यर्थं

---

* निरंशपरमाण्वसिद्धेः † व्यभिचारनिरासार्थम्

सत्ववदिति चेन्न। पृथिवीत्वं न निरंशवृत्ति, द्रव्यत्वापरजातित्वे सति पृथिवीवृत्तित्वात् घटत्ववदिति प्रतिप्रयोगत्यागे पक्षरागोऽपराध्यते।

ननु परमाणोः सांशत्वेऽणुपरिमाणतारतम्यविश्रान्तिर्न स्यात्। अतः परमाण्वसिद्धेराश्रयासिद्धिः स्यात्। न। सांशत्वेऽपि परमाणुत्वोपपत्तेः। यथा हि महापरिमाणदुकूलद्व्यावयवन्यूनपरिमाणं किंचित् द्रव्यं एवमनणुपरिमाणद्व्यावयवमणुतरं किंचित् किं न स्यात्?। दुकूलसंयोग एव तथा भाति न द्रव्यान्तरमिति चेन्न। सर्वावयविविलोपप्रसङ्गात्। दुकूलान्त्यावयवित्वं शपथसाध्यं मानाभावात्। तदन्त्यावयवि

---

पृथिवीवृत्तित्वादिति विशेषणमिति द्रष्टव्यम्। सांशत्वानुमाने पक्षबाधकतर्कपराहतिं शङ्कते—नन्विति। यदि परमाणोः सांशत्वं तदा न तत्राणुपरिमाणतारतम्यं विश्राम्येत्। अनन्तावयवत्वेन मे*रुसर्षपयोस्तुल्यतापातादवयावयविनोश्चातिदूरविप्रकर्षप्रसङ्गादित्यर्थः। न केवलमनुमानं पक्षबाधकपराहतमेव किं चाश्रयासिद्धत्वोपहतं चेत्याह—अत इति। त्रसरेणुषु महत्वापकर्षविश्रान्तेरुक्तत्वान्नोक्तदोषद्वयमिति समाधत्ते—न सांशत्वेऽपीति। यच्चूक्तं सावयवत्वेन मेरुसर्षपतुल्यतेति तत्राह—यथा हीति। अवयवानां सङ्कोचविकाससम्भवान्नोक्तातिप्रसक्तिरित्यभिप्रायः। न चावयवावयविनोरतिदूरविप्रकर्षः, पटादिष्वपि स्वारम्भकावयवातिरिक्तावयवानभ्युपगमात्तेषु तद्वृत्त्युपपत्तेः। न चाणुष्वारम्भकावयवाभावः। भूतसूक्ष्माणां तथात्वात्। तेषां चानिर्वाच्याविद्याप्रसूतत्वादिति द्रष्टव्यम्। महापरिमाणयोर्द्रव्यारम्भकत्वे नैष दृष्टान्तः सम्भवतीति शङ्कते—दुकूलेति। अतिप्रसङ्गेन परिहरति—सर्वेति। तन्त्वादिसंयोगस्यैव पटादिरूपेण प्रतीतिसम्भवादित्यर्थः।

ननु तन्त्वादीनां खण्डावयवित्वात् द्रव्यारम्भकत्वं, दुकूलस्य तु नैवमन्त्यावयवित्वादिति तत्राह—दुकूलेति। एकस्थूलनीलाभासो बाह्ये प्रमा प्रमात्वाद्रूपदर्शनवदिति मानमनोहरोदीरितानुमानादवयविसिद्धिमभिसन्धाय

---

* अवयवानामनन्तत्वे मेरुसर्षपयोरुत्कर्षापकर्षनियामकासंभवान्न तयोः परिमाणतारतम्यं सिद्ध्येत्। मेर्वयवसर्षपावयवयोरनन्तावयवत्वसाम्यात् इति भावः।

अवयवित्वे सति द्रव्यानारम्भकत्वात् घटादिवदित्यनुमीयत इति चेन्न। साध्याविशिष्टत्वात्। अथ विशिष्टावयवित्वं साध्यम्। विशिष्टानारम्भकत्वं साधनं च मिथो भिन्नं, तथाप्यन्योन्यापेक्षसिद्धत्वात्तदसिद्धिः। तदेवं सांशत्वसाधनस्य न बाधो नाप्यश्रयासिद्धिः। संयोगित्वेऽपि निरंशः स्यात् का हानिरिति चेत्। संयोगित्वमेव हीयेतेति ब्रूमः। न हि निरंशस्य गुणादेः संयोगो दृष्टः इष्टो वा।

नन्वु संयोगो द्रव्यनियतः नावयवनियतः। कुम्भसंयोगोऽपि

---

दुकूलस्यान्त्यावयवित्वे मानमाशङ्कते—**तदन्त्येति**। आकाशादौ व्यभिचारं व्यावर्तयति—**अवयवित्वे सतीति**। खण्डावयविनि व्यभिचारव्यावृत्त्यर्थमनारम्भकत्वपदम्। असिद्धिनिरासार्थं द्रव्यपदम्। विशेष्यासिध्या परिहरति—**नेति**। दूषणान्तरमाह—**साध्याविशिष्टत्वादिति**। अन्त्यावयवित्वं हि द्रव्यानारम्भकत्वे सत्यवयवित्वम्। तदेव च हेतूकृतमिति तयोरैक्ये साध्यसन्देहे हेतावपि सन्देहः स्यात्। हेतुनिश्चये साध्येऽपि निश्चयात्प्रयोगवैयर्थ्यमित्यर्थः। अन्त्यत्वविशेषितावयवित्वस्य साध्यत्वादवयवित्वस्य द्रव्यत्वविशेषितानारम्भकत्वस्य हेतुत्वाद्धेतुसाध्ययोर[1]भेदो नास्तीति चोदयति—**अथेति**। विशेषणविशेष्यत्वविभागमात्रम्। अर्थभेदस्तु नास्तीत्यरु[2]चिं अपिना सूचयन्। अङ्गीकृत्योत्तरमाह—**तथापीति**। अवयवित्वे सति द्रव्यानारम्भकत्वसिद्धावन्त्यावयवित्वसिद्धिः तत्सिद्धौ चेतरसिद्धिरिति परस्पराश्रयत्वादेकस्याप्यसिद्धेर्नानुमानसिद्धिरित्यर्थः। संयोगित्वं सावयवमात्रवृत्ति संयोगिमात्रवृत्तित्वात् घटत्ववदित्यभिप्रेत्योपसंहरति—**तदेवमिति**। संयोगित्वस्य निरंशवृत्तित्वे बाधाभावात् अप्रयोजकत्वमिति चोदयति—**संयोगित्वेऽपीति**। संयोगित्वसावयवत्वयोरेकाश्रयत्वनियमान्निरंशवृत्तित्वे संयोगित्वमेवाकस्मिकं स्यादिति बाधकमाह—**संयोगित्वमेवेति**। संयोगित्वसांशत्वयोर्व्याप्तिं व्यक्तीकरोति—**न हीति**। संयोगित्वस्य द्रव्यत्वेन व्याप्तावपि सांशत्वेन न व्याप्तिरिति शङ्कते—**नन्विति**। आत्मादावंशाभावेऽपि संयोगाश्रयणादित्याशयः। ननु कुम्भस्त-

---

1. अभेदोऽस्तीति 2. अरुचिं सूचयति अंगीकृत्य

हि कुम्भाश्रयः कुम्भगुणत्वात् तत्परिमाणवत्। अन्यथाऽवयवपरम्परया परमाणुवृत्तिः कुम्भसंयोगोऽप्रत्यक्षः स्यात्। न। अध्यक्षसिद्धसंयोगस्यावयववृत्तेरनुमानशतेनाप्यपह्नवायोगात्। संयोगाप्रत्यक्षताप्रसङ्गोऽपि नास्मन्मते सम्भवी। न हि परमाण्वादयोऽवयवाः द्व्यणुकादिक्रमेण कुम्भमारभन्त इत्याश्रयामः। तस्मादंशवृत्तिरेव संयोगो न निरंशे सम्भवी। यदि च संयोगो नावयववृत्तिः स कथमव्याप्यवृत्तिः स्यात्। शब्दवदिति चेन्न। तस्यौपाधिकाकाशैकदेशवृत्तित्वात्। अथ

---

म्भयोस्संयोगस्यावयववृत्तित्वं प्रत्यक्षमिति, नेत्याह—**कुम्भेति**। ननु कुम्भगुणस्यापि संयोगस्य तदवयववृत्तित्वमेष्टव्यम्। संयोगविभागात्मविशेषगुणानां प्रदेश*वृत्तित्वाश्रयणादिति तत्राह—**अन्यथेति**। आत्मादौ संयोगस्या†सम्प्रतिपत्तेर्ज्ञानधर्मकत्वाद्युक्तैव ‡संयोगित्वसावयवत्वयोर्व्याप्तिरिति मत्वाह—**नेति**। संयोगित्वे द्रव्यत्वं प्रयोजकमित्यादाय तस्यावयविवृत्तित्वे दर्शितमनुमानमित्याशङ्क्याह—**अध्यक्षेति**। यत्तु संयोगस्यावयववृत्तित्वे, नासौ** प्रत्यक्षः स्यादिति तत्राह—**संयोगेति**। आरम्भवादानभ्युपगमादिति हेतुमाह—**न हीति**। मूलकारणस्यैव मृदादिद्वारा कुम्भाद्यात्मना परिणामात्तदेकदेशाश्रितसंयोगस्य परम्परया परमाणुनिष्ठत्वानङ्गीकारान्नाप्रत्यक्षत्वं तदाश्रयकुम्भाद्येकदेशानां प्रत्यक्षत्वात्तत्प्रत्यक्षत्वोपपत्तेरिति भावः। संयोगित्वस्य निरंशवृत्तित्वे संयोगित्वमेवाकस्मिकं स्यादित्युक्तं तर्कमुपसंहरति—**तस्मादिति**। संयोगस्य देशवृत्तित्वं प्रत्यक्षावष्टम्भेनोपदिष्टम्। इदानीमव्याप्यवृत्तित्वादपि तस्य प्रदेशवृत्तित्वमित्याह—**यदि चेति**। शब्दस्याव्याप्यवृत्तित्वेऽपि तदाश्रयाकाशस्य निरंशत्ववदव्याप्यवृत्तेरपि संयोगस्याश्रये सांशत्वानियतिरिति शङ्कते—**शब्दवदिति**। तस्य पक्षतुल्यत्वादाकाशस्य निरंशत्वासम्प्रतिपत्तेर्नैवमित्याह—**तस्येति**। एतेन सुखादिदृष्टान्तोऽपि व्याख्यातः। अव्याप्यवृत्तित्वं स्वात्यन्ताभावसमानाधारत्वम्। अतो न तेन संयोगाश्रयस्य सांशतेति शङ्कते—**अथेति**। प्रामाणिकानभ्युपगतिरप्रामाणिकाङ्गीकारश्चेति विरुद्धमिति सोपहा-

---

* अव्याप्यवृत्तित्वाश्रयणादित्यर्थः † सिद्धान्तिनः ‡ कुंभसंयोगः ** परैरात्मनो ज्ञानगुणवत्त्वाभ्युपगमात्सावयवत्वमवश्याभ्युपेयम्। तथाच न व्याप्तिभंग इति भावः

संयोगो द्रव्ये वर्तते न वर्तते चेत्यव्याप्यवृत्तितेति मतम्। अहो विचित्रमस्य पाण्डित्यम्? । यदयं संयोगस्याध्यक्षसिद्धामवयवे वृत्तिं न निश्चिनोति। निश्चिनोति च तस्यैकत्र व्याहतौ भावाभावाविति।

यदपि—किरणावल्यां संयोगभावाभावयोरव्याहतत्वमुक्तम्—'अवयवान्तरावच्छेदेन हि तावविरुद्धौ। तथैव दर्शनादि"ति। तदप्यसत्। संयोगस्य दिगन्तरविशिष्टावयववृत्तित्वे चाक्षुषत्वप्रसङ्गात्। दिगन्तरो-

---

समुत्तरमाह—अहो विचित्रमिति। संयोगभावाभावयोरेकस्मिन्नाश्रये विरोध-समाधानं गुणपदार्थे साधर्म्यपरीक्षायां उदयनोक्तमनुवदति—यदपीति। तदीयामुक्तिमेवोपादत्ते—अवयवेति। सावयवेष्वेकावयवावच्छेदेन संयोगस्य भावोऽवयवान्तरवच्छेदेनाभावश्चेत्यव्याहतिः। निरवयवेषु पुनरेकदिगवच्छेदेन संयोगस्य भावः। दिगन्तरावच्छेदेनाभावश्चेत्यविरोधः। एवं संयोगभावा-भावावे[1]ककालीनावेकाधारावविरुद्धावित्यर्थः। तत्र प्रमाणमाह—तथैवेति। अवयवभेदावच्छेदेन कुम्भादिषु स्तम्भादिसंयोगभावाभावयो[2]र्दिग्भेदावच्छेदेन चाकाशादिषु श्येनादिसंयोगभावाभावयोरनुभवादित्यर्थः। अवयविष्वावयव-भेदावच्छेदेऽपि न निरवयवेषु दिग्भेदावच्छेदः सङ्गच्छते। स हि पुंसो दण्डावच्छेदवत्तत्संयोगः। न च कालदिगादिषु तदुपपत्तिः। विभूनां मिथः संयोगानभ्युपगमात्। न चाणुषु तत्संभवः। तेषामेवाव्याप्यसिद्धेः। अतो दिग्भेदावच्छेदेन संयोगभावाभावयोरेकत्राविरोधासिद्धिरि[3]त्याह—तदप्यसदिति। अस्तु तर्हि दिग्भेदस्याप्यवयवभेदवदवयविष्वेवावच्छेदकत्वं तर्हि तस्यावयविनि विशेषणत्वमुपलक्षणत्वं वा? नाद्य इत्याह—संयोगस्येति। विशिष्टस्याचाक्षुषत्वे तद्वृत्तेः संयोगस्य वायुवनस्पतिसंयोगवदचाक्षुषत्वम्। न च शब्दप्रति[4]बन्दीग्रहः। तद्ग्रहस्याश्रयग्रहपूर्वकत्वानियमेऽपि सम्बद्धस्य सम्बन्धिग्रहपूर्वकत्वनियमादिति भावः। द्वितीयं दूषयति—दिगन्तरेति। दिगन्तरस्य तटस्थत्वाद् घटादिमात्रस्य संयोगाश्रयत्वमनाश्रयत्वं चेति व्याहति-तादवस्थ्यमित्यर्थः। अवयव[5]भेदेन संयोगभावाभावयोरेकत्राविरोधोऽपि न

---

1. काकाल 2. भेदावच्छेदेन 3. इत्यत्राह 4. प्रतिब....ग्रहः
5. अवयव भे....मं

पलक्षितावयववृत्तित्वे च व्याघातस्तदवस्थः। अवयववृत्तित्वानुभव-विरोधश्चोभयत्राप्यतिस्फुटः। तस्मान्नावयवनिरपेक्षः संयोगः सम्भवी। तदेवं सांशः परमाणुर्न निरंश इति स्थितम्। अतो न परमाणोर्भिन्न-त्वेन कार्यत्वसाधनं सत्प्रतिपक्षम्। अस्तु तर्हि विमतं निरंशं परमाणु-त्वात्। मनोवदिति प्रयोगः। न। मनसोऽपि सांशत्वात्। "अन्नमयं हि सोम्य मन" इति श्रुतेः। तस्मान्निष्प्रत्यूहं परमाणूनां कार्यतानु-मानमिति न ते पृथिव्यादिमूलकारणमिति सिद्धम्।

### असत्कार्यवादखण्डनम्

कार्यञ्च परस्यानुपपन्नम्। तथा हि—असन् कुम्भो जायते। न नृशृङ्गमिति को हेतुः। कुम्भस्य कारणवत्त्वमिति चेत्। तदसतोऽपि कुम्भस्य चेत्स्यात् नृशृङ्गस्य किं न स्यात्। ननु कार्यस्य प्रागसत्त्वेऽपि

---

निरूपणगोचरः, अवयवविशिष्टावयविवृत्तित्वे संयोगस्यावयववृत्तित्वप्रसङ्गात्तदुपल-क्षितावयविवृत्तित्वे व्याघातादिति मन्वानः पक्षद्वयेऽपि दोषान्तरमाह—**अव-यवेति**। एतेन विभागादीनामपि स्वात्यन्ताभावसमानधारत्वं निरस्तम्। अव्याप्यवृत्तित्वेन हेतुना संयोगस्य प्रदेशवृत्तित्वं प्रसाधितमुपसंहरति—**तस्मा-न्नेति**। सांशत्वसाधकसंयोगित्वस्याप्रयोजकत्वाभावे परमा[1]ण्वकार्यत्वसाधक-निरवयवद्रव्यत्वस्यासिद्धिः सिद्धेत्यवान्तरप्रकृतं निगमयत्ति—**तदेवमिति**। तथापि प्रकृते परमाणौ भिन्नत्वेन कार्यत्वसाधने किमायातमिति। अत आह—**अतो नेति**। संयोगित्वस्य प्रतिप्रयोगान्तरमुत्था[2]प्य चोदयति—**अस्तु तर्ही-त्यादिना**। वादार्थमुपसंहरति—**तस्मादिति**। परमाणुवादे परमकारणव-त्कार्यमपि दुर्निरूपममिति निरूपयति—**कार्यं चेति**। अनुपपन्नत्वमुपपाद-यति—**तथा हीति**। विमतं न जनिमदसत्त्वान्नरविषाणवदित्यर्थः। कारण-रहितत्वमुपाधिरिति मन्वानस्तस्य साधनाव्यापकत्वमाह—**कुम्भस्येति**। विमतं कारणरहितमसत्त्वात्संमतवदिति साधनव्याप्तिः। अन्यथा नरविषाणस्यापि कार-णवत्वं स्यादित्युपाधेरसंभवित्वमित्याह—**तदसतोऽपीति**। प्रागभा[3]वाप्रतियो-

---

1. परमाणुकार्यत्व 2. उत्थाप्य...लयति 3. प्रागभावप्रतियोगित्वं

**न नृशृङ्गसाम्यम् । प्रागभाववत्त्वेनैव ततो विशेषात् । न च प्रागसत्वं वैधर्म्यमात्रं न तु जन्मप्रयोजकमिति वाच्यम् । कार्यतुल्यवृत्तेस्तस्य जन्मप्रयोजकान्तरतुल्यत्वादिति । न । नृशृङ्गस्येवासतो जन्मायोग्यस्य प्रागभावासम्भवात् । न जन्मापेक्षया प्राक्त्वमभावस्य, किन्तु कुम्भापेक्षयेति चेन्न, क्रियापेक्षयैव कालतः प्राक्त्वसिद्धेः । भोजनात्प्राग्गमनमिति युज्यते, न मैत्रात् । अन्यथा चैत्रमैत्रयोरपि स्वरूपापेक्षया कालतः पौर्वापर्यं गृह्येत । तस्मान्न प्रागसत्वमसतो जन्मव्यवस्थापकम् ।**

---

गित्वमुपाधिरिति शङ्कते—**नन्विति** । नभसः शब्दाधारत्ववत् प्रागभा[1]ववत्वमपि कुम्भस्य वैधर्म्यमात्रं न जन्मप्रयोजकमित्याशङ्क्याह—**न चेति** । प्रागभाववत्वं कार्यत्वाधिकवृत्ति वा तन्न्यूनवृत्ति वा तत्तुल्यवृत्ति वा । नाद्यः, प्रागभाववतोऽपि कस्यचिदकार्यत्वप्रसङ्गात् । न द्वितीयः । प्रागभावरहितस्य सतोऽपि कार्यतापत्तेः । तृतीये तु प्रागभाववत्वस्य कारणवत्ववत्कार्यत्वप्रयोजकत्वादसाधनव्याप[2]कत्वेन प्रागभावाप्रतियोगित्वस्य सिद्धमुपाधित्वमित्यभिप्रेत्याह—**कार्यतुल्यवृत्तेरिति** । जन्मयोग्यत्वं हि प्रागभाववत्वे प्रयोजकम् । अभावस्य जन्मापेक्षया प्राक्त्वस्य वक्तव्यत्वात् । असतो नरविषाणादेरिव[3] व्यापकं व्यावर्तमानं जन्मयोग्यत्वं प्रागभाववत्वमपि व्याप्यं व्यावर्तयति । तथा च विमतं न प्रागभावप्रतियोगि जन्मायोग्यत्वात्सम्मतवदसत्वाच्च हेतुसिद्धिरिति साधनव्याप्त्या परिहरति—**न नृशृङ्गस्येति** । जन्मयोग्यत्वं प्रागभाववत्वे न प्रयोजकमिति शङ्कते—**न जन्मेति** । तत्र प्रयोजकं पृच्छति—**किं त्विति** । कारणाधीनत्वमिति मत्वाह—**कुम्भेति** । असतो जन्मायोग्यस्य कारणाधीनत्वमेव न सिध्यतीति सिद्धान्तयति—**न क्रियेति** । एतदेव दृष्टान्तेन स्पष्टयति—**भोजनादिति** । जन्मलक्षणक्रियापेक्षया प्रागभाववत्वनियमाभावे चैत्रमैत्रयोस्सतोरपि परस्परापेक्षया प्रागभाववत्वेन जन्मप्रसङ्गा[4]दसत्कार्यवादहानिरित्याह—**अन्यथेति** । असतो जन्मयोग्यत्वादेरभावात्प्रागभाववत्वस्य कार्यत्वव्यवस्थापकत्वानुपपत्तेरुक्तोपाधेः साधनव्यापकत्वं सिद्धमित्याह—**तस्मादिति** । कार्यस्य

---

1. प्रागभावत्वम् 2. व्यापकत्वस्य 3. रिवव्यावर्तमान 4. प्रसंगवदसत्

किञ्च नासदाश्रया जनिः। जनेः प्रागसतः सर्वस्य कार्यस्यानभिव्यक्तनामरूपतयाऽवस्थानश्रुतेः। "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत" "नासदासीन्नो सदासीदि"ति च। प्रयोगोऽप्यत्र सुलभः। जनिर्नासदाश्रया क्रियात्वात् गमिवदिति। विपक्षे जनेः स्वातन्त्र्यप्रसंङ्गो बाधः। न चाभावग्रहबाधोऽनभिव्यक्तनामरूपस्योपलब्धुमयोग्यत्वात्।

### जनेः क्रियात्मताव्यवस्थापनम्

ननु जनेः क्रियात्वमसिद्धम्। जनिर्हि कारणसमवायः सत्तासमवायो वाभ्युपेयते, न। जनेः समवायतायाः परमाणुवादेऽपास्त-

---

प्रागसत्वं न जन्मव्यवस्थापकमित्यत्र हेत्वन्तरमाह— **किं चेति**। कारकव्यापारवैयर्थ्यपरि[1]हारार्थं जन्मनः प्रागसत्वं कार्यस्य स्वीकर्तव्यमित्याशङ्क्य श्रुतिविरोधमाह—**जनेरिति**। कारकव्यापारस्त्वभिव्यञ्जकत्वेनार्थवानित्यर्थः। प्रागवस्थस्येदानीन्तनस्य च जगतो भेदाभावद्योतनार्थं श्रुतौ तदिदमिति सामानाधिकरण्यम्। नि[*]पातेनानादित्वं जगतः सूच्यते। तर्हि तस्मिन्काले प्रागवस्थायामव्याकृतमनभिव्यक्तनामरूपं व्यवहारायोग्यमासीत्तदेव जगदुत्पत्तिकाले नामरूपेण रूपरूपेण च विस्पष्टं समन्तादक्रियत, सुकरतया कृतमासीदित्यर्थः। प्रागवस्थायां कार्यस्याव्याकृतशब्दवाच्यप्रधानात्म[2]नाऽवस्थितिशङ्कां निरसितुमनिर्वचनीयाविद्यात्मना तदावस्थितिवादिश्रुत्यन्तरं दर्शयति—**नासदिति**। कार्यस्य प्रागसत्वाभावे श्रुतिवदनुमानमपि मानमित्याह—**प्रयोगोऽपीति**। जनिकर्तुरसत्वे दोषं दर्शयन्नप्रयोजकत्वं प्रत्याह—**विपक्ष इति**। ननु प्रागपि सत्वे कार्यस्येदानीमिवोपलम्भप्रसङ्गात्त[3]दभावोपलब्धिविरुद्धमनुमानमिति। नेत्याह—**न चेति**। अनुपलम्भमात्रादभावोपलम्भे पिशाचादेरपि भूभागादावभावोपलम्भो भवेदिति भावः। क्रियात्वहेतोरसिद्धिं शङ्कते—**नन्विति**। का तर्हि जनिरित्यत आह—**जनिर्हीति**। परस्पराश्रयत्वेनोक्तं परिहारं स्मारयति—**न जनेरिति**। प्रकारान्तरेण जन्मनः समवायत्वसाधनेन हेतोरसिद्धिं प्रतिपाद-

---

1. परिहारार्थं ...प्रागसत्वं * हेति निपातेनेत्यर्थः 2. नात्मना...ति
3. तदभावेत्यधिकः पाठः

त्वात्। अथ परिशेषाज्जनेः समवायता निश्चीयते। तथाहि—न तावज्ज-निर्द्रव्यगुणकर्मान्त्यविशेषभावं भजते। कर्मधर्मत्वात् सामान्यवत्। नापि सामान्यं,अननुगतत्वात् कुम्भवत्। अतः समवायो जनिरिति। न। जनेः समवायत्वस्याप्यसम्भवात्। समवायरहितस्य प्रध्वंसस्य जनिमत्त्वात्। ये तु गुरुमतानुसारिणः प्रध्वंसं नेच्छन्ति तेषामपि न समवायो जनिः सम्भवेत्। असमवायस्यापि समवायस्य जनिमत्त्वात्। किं तर्हि जनेस्तत्वं? क्रियेति ब्रूमः।

ननु न क्रियापि जनिः तद्धर्मत्वादित्युक्तम्। सत्यम्। अत एव न

---

यति—अथेति। परिशेषमेव दर्शयति—तथा हीति। पदार्थाः षडेवेति भावेषु नियमात्पञ्चसु चानन्तर्भावात् स्वरूपापलापायोगाच्च जन्मनः समवायता-सिद्धिः। न च परस्पराश्रयत्वम्। उक्तयुक्त्यनुगृहीतजन्मप्रतीतिविरोधे तस्या-भासत्वादित्याह—अत इति। पञ्चसु जन्मनोऽनन्तर्भावात्तस्य समवायतापि न युक्तेति परिशेषं दूषयति—न जनेरिति। जन्मनः समवायत्वे ध्वंसस्य जन्म न स्यात्। अभावे समवायाभावादिति हेत्वर्थः। प्राभाकरपक्षे ध्वंसस्यासिद्धे-रुक्तदोषाभावात्तन्मते जनेः समवायत्वमविरुद्धमित्याशङ्क्याह—ये त्विति। तत्र हेतुमाह—असमवायस्येति। 'नित्यद्रव्यसमवाययोरसमेवतत्वमिति' प्रशस्तपादवचनादनवस्थानाच्च समवायरहितः समवायः। तथापि तस्य जन्म प्राभाकरैरिष्यते। न च समवायस्य नित्यत्वान्न जनिमत्त्वम्। तन्नित्यत्वे माना-भावात्। सम्बन्धत्वेन संयोगवदनित्यत्वानुमानाच्च। अन्यथा संयोगस्यापि नित्यत्वप्रसङ्गात्। अनुभवविरोधस्य तुल्यत्वात्। न चायं सम्बन्धः एतदति-रिक्तानित्यसम्बन्धातिरिक्तसम्बन्धान्यः मेयत्वात् घटवदिति साम्प्रतम्। अयं सम्बन्धः एतदतिरिक्तानित्यसंयोगानिरिसंयोगान्यः मेयत्वादित्याभाससमानत्वात्। अतः समवायरहितस्यापि समवायस्य जनिमत्त्वान्न समवायो जनिरिति भावः। यदि जनेर्न समवायता तर्हि तस्याद्रव्यादिभावस्य निरस्तत्वात्प्रतीयमानतया[1] चा तुच्छत्वात् स्वरूपं वाच्यमित्याह—किं तर्हीति। प्रसिद्धिमनुसृत्य जनिस्वरूपमाह—क्रियेति। जनिर्न क्रिया क्रियाधर्मत्वाज्जातिवदित्युक्तं स्मारयति—नन्विति।

---

1. च तुच्छत्वात्

परिस्पन्दरूपा जनिः। किन्तूत्पत्तिक्रियेत्येव लोके प्रसिद्धा। वैयाकरणानां च जनिः क्रियेति मतम्। क्रिया हि साक्षाद्धात्वर्थो धात्वर्थश्च जनिः।

ननु न क्रियैव धात्वर्थः। गण्डस्यापि धात्वर्थत्वात्। "गडि वदनैकदेश" इति हि पठन्ति। सत्यम्। तथापि न द्रव्यादिरूपता जनेः। द्रव्यादिवैलक्षण्यस्य भवतोऽपि सम्मतत्वात्। परिस्पन्दरूपैव क्रियेति तन्मन्त्रपाठः। तन्मानाभावात्। अत एवाहुः भट्टाचार्याः— "न परिस्पन्द एवैकः क्रिया, नः कणभोजिवदि"ति।

यत्तु जनिर्न क्रिया असंयोगहेतुत्वात् रूपवदिति मानम्। तत्र न तावदचलनात्मकं साध्यं सिद्धत्वात्। नाप्यधात्वर्थत्वम्। व्याकरण-

---

कर्मधर्मत्वं जनेरङ्गीकरोति—सत्यमिति। न तर्हि सा क्रियेत्यत आह—अत एवेति। परिस्पन्दत्वाभावे तदन्यक्रियाभावज्जनेरक्रियात्वमेवेत्याह—किं त्विति। उत्पत्तिरपरिस्पन्दरूपा क्रियैव। लोके तत्क्रियात्वप्रसिद्धेरित्याह—उत्पत्तीति। लोकप्रसिद्धेर्विभ्रमत्वमपि सम्भवतीत्याशङ्क्य तत्रैव परीक्षकप्रसिद्धिरपि प्रमाणमित्याह—वैयाकरणानामिति। तदेव मतं व्युत्पादयति—क्रिया हीति। धात्वर्थस्य क्रियात्वव्यभिचारं शङ्कते—नन्विति। क्रियात्वमन्तरेणापि धात्वर्थत्वमङ्गीकरोति—सत्यमिति। तर्हि जनेरपि न क्रियात्वं, अक्रियात्वेऽपि धात्वर्थत्वसंभवादिति। नेत्याह—तथापीति।

ननु क्रियात्वे प्रस्पन्दता जनेरेष्टव्या क्रियान्तराभावात्। न च प्रस्पन्दो जनिः अनङ्गीकारादिति, तत्राह—परिस्पन्देति। क्रियानियमे मानाभावम्[1]भिप्रेत्य भट्टमिश्रैरुक्तमित्युक्तेऽर्थे वृद्धसंमतिमाह—अत एवेति। "यजमानत्वमप्यात्मा सक्रियत्वात्प्रपद्यत" इति पूर्वो भागः। क्रियात्वं जनेरनुमानविरुद्धमित्याशङ्क्य परोक्तमनुमानमनुवदति—यत्त्विति। अविभागहेतुत्वेनापि जनेरक्रियात्वमनुमेयम्। अपरिस्पन्दत्वं वा साध्यं अधात्वर्थत्वं वेति विकल्पयति—तत्रेति। नाद्य इत्याह—न तावदिति। न द्वितीय इत्याह—नापीति। "जनी प्रादुर्भाव" इति स्मरणादित्यर्थः। "ज्ञा अवबोधन"

---

1. अभ्युपेत्य

विरोधात् । ज्ञानेनैकान्त्यात् । विपक्षे बाधाभावाच्च । असंयोगहेतुत्वं चाचलनात्मन उपपन्नम् । तस्मात्प्रसिद्धेर्द्रव्यादित्वाद्धात्वर्थत्वाच्च जनेः क्रियात्वमभ्युपेयम् । तदेवं न हेत्वसिद्धिः । अतो न कार्यमसन्नापि सदिति वक्ष्यत इत्यनिर्वचनीयमेव कार्यम् ।

किञ्च उत्पत्यादयो न युक्तिक्षमाः । तथाहि—हेतुव्यापारात् प्राक् जनिरप्यसती चेत्, तस्या अपि जनिरेष्टव्या । तत्राप्येवमिति जन्यनवस्थाप्रसङ्गात् नाद्यापि जनिः सिध्येत् । ननु जनेरनवस्था-

---

इति स्मृतेर्ज्ञानस्यास्ति धात्वर्थत्वम्, न च संयोगादिहेतुत्वमिति द्वितीये पक्षे दोषान्तरमाह—**ज्ञानेनेति** । पक्षद्वयेऽपि दोषान्तरं समुच्चिनोति—**विपक्ष इति** । असंयोगहेतुत्वस्य अविभागहेतुत्वस्यापि चानुपपत्तिर्विपक्षे बाधिकेत्याशङ्क्याह—**असंयोगेति** । चकारेणाविभागहेतुत्वं समुच्चीयते । जनेरक्रियात्वे साधकाभावात्तक्रियात्वस्य लौकिकपरीक्षकप्रसिद्धत्वात् द्रव्यादित्वस्य निरस्तत्वात् [1]क्रियाधर्मत्वालम्बनेऽपि धात्वर्थत्वात्क्रियात्वमेवेत्युपसंहरति—**तस्मादिति** । क्रियात्वे सिद्धे फलितमाह—**तदेवमिति** । जनिकर्तुरसत्वनिराकरणानुमानं निगमयति—**अतो नेति** । कार्यस्यासत्वनिरासे सत्वं पर्यवस्यति परस्परप्रतिस्पर्धित्वात्तयोरित्याशङ्क्याह—**नापीति** । का तर्हि प्रतिभासमानस्य कार्यस्य गतिस्तामाह—**इत्यनिर्वचनीयमिति** । धर्मिणो[2]ऽनिर्वाच्य[3]त्वमुक्त्वा धर्माणामपि तद्वक्तुमारभते—**किं चेति** । कारकव्या[4]पारात्पूर्वं जनेः सत्वमसत्वं वा । नाद्यः । कारकव्यापारवैयर्थ्यप्रसङ्गादित्यभिप्रेत्य द्वितीयमुत्थापयति—**हेतुव्यापारादिति** । जायमानधर्मिवदित्य*पेरर्थः । अनवस्थापत्या निराकरोति—**तस्या इति** । उत्तरोत्तरजन्मासिद्धौ पूर्वपूर्वजन्मासिद्धेर्घटस्यापि न जन्मेति मूलक्षयकरत्वेनानवस्थाया दोषत्वमाह—**नाद्यापीति** । एतेन नाशभेदज्ञानाद्यनवस्थाप्रसङ्गो वेदितव्यः । जन्माद्यनवस्थाप्रसञ्जनं जात्युत्तरमिति शङ्कते—**नन्विति** । तत्राक्षपादसूत्रं प्रमाणयति—**तथा चेति** ।

---

1. धर्मत्वेन चालंबनत्वे 2. धर्मिणोर्निर्वाच्यत्व 3. त्वमित्युक्त्वा 4. व्यापाराजननेनपूर्वं * जनिरपीत्यत्रापेः

प्रसङ्गः प्रसङ्ग*समा जातिः। तथा चोक्तं "अनवस्थाभासप्रसङ्गः प्रसङ्गसमः" इति। यत्तु अत्रोदाहृतं ज्ञप्तौ कृतौ च कारणस्य कारणान्तरकल्पनायामनवस्थाप्रसञ्जनं तदुदाहरणमात्रम्। जन्याद्यनवस्थाभासापत्तिरपि स्वव्याघातकरीति निस्तरङ्गैवेयं जातिः। अथ कोऽत्र व्याघातः? जनिस्वरूपनिषेधनीत्या निषेधजनेरप्यखम्भत्र इति ब्रूमः। अत एव जात्युत्तरावष्टम्भत्वं वेदान्तिनामप्याह स्मोदयनः—"बौद्धचार्वाकवेदान्तिनामप्यत्रैव निर्भरः" इति। जन्माद्यपलाप एव व्याघातापत्तेः जात्युत्तरतापत्तिः। न तु जन्मादेर्मायामयत्वाभ्युपगमे। अतो न वेदान्तिनां जायुत्तरापत्तिरिति चेन्न। शब्दान्तरेण जात्यपलापात्। माया

---

ननु प्रसङ्गसमायामुदाहरणान्तरस्य भाष्यकारादिभिरुदाहृतत्वान्न जन्माद्यनवस्थाप्रसङ्गस्य जातित्वमिति तत्राह—**यत्त्विति**। ननु स्वव्याघातकं उत्तरं जातिरिति सामान्यलक्षणानाक्रान्तस्य जन्याद्यनवस्थाप्रसङ्गस्य कथं जातित्वं? तत्राह—**जन्याद्यनवस्थेति**। अहं मौनीतिवज्जन्याद्यनवस्थाप्रसञ्जने प्रतीयमानो व्याघातो नास्तीत्याक्षिपति—**अथेति**। यो हि जनिस्वरूपं निषेधति स प्रष्टव्यः किमस्य निषेधस्य नित्यत्वमनित्यत्वं वेति। आद्ये कदाचिदपि जन्माभावात्कुतस्तत्प्रतियोगिको निषेधः सिध्येत्। द्वितीये तु न निषेधस्य जन्म सम्भवति। जनिस्वरूपनिषेधवन्निषेधजनेरपि निषेधसम्भवादनवस्थाऽविशेषात्। अतः स्वव्याघातकत्वाज्जनिस्वरूपनिषेधो न साधीयानिति समाधत्ते—**जनिस्वरूपेति**। जन्माद्यनवस्थाप्रसञ्जनस्य जात्युत्तरत्वमङ्गीकृत्य वेदान्तिनामपि बौद्धादिसमत्वमुक्तं न्यायविद्भिरिति प्रकृतेऽर्थे लिङ्गमाह—**अत एवेति**। जन्मादेर्वास्तमे[1]वापलप्यते न प्रातीतिकं स्वरूपम्। अतो न व्याहतिरिति चोदयति—**जन्मादीति**। मायामयत्वनिर्देशेन जन्मादेः स्वरूपस्यैव निरासात्तदवस्था व्याहतिरिति परिहरति—**न शब्दान्तरेणेति**। कथं जन्मादिस्वरूपनिरासः मायाया मृदादिवज्जन्मादिस्वरूपेण परिणामादिति नेत्याह—

---

* आत्मा सक्रियः क्रियाहेतुगुणवत्वात् लोष्टवदित्यत्र क्रियाहेतुगुणवत्वे किं साधनं? तत्रापि किं साधनमित्यादिसाधनपरंपराप्रश्नः प्रसंगसमा जातिः। 1. अवलंब्यते

हि जन्मादिरूपेण परिणममाना न तथाभूतैव परिणमते । विरोधात् । अन्यथाभूता चेदन्यथाभावोऽपि कादाचित्को जन्म अन्यथाभावान्तर-मन्तरेणासम्भवीत्यनवस्थापत्तेर्न मायामयमपि जन्म सम्भवेत् । मायायां न किञ्चिदनुपपन्नमिति चेत् । तर्हि निवृत्तापि सोत्पद्येतेत्यनिर्मोक्ष-प्रसङ्गः । निरधिष्ठानापि विवर्तेतेति शून्यतावादः स्यात् । तदेवं जन्मादिनिरासे व्याघातापत्तेः जात्युत्तरं सर्वेषामविशिष्टम् ।

नैतत्सारम्—जन्मस्वरूपानपह्नवात् । इह हि तस्य स्वरूपमनुप-मृद्य मायामयतोपपाद्यते । अथ कथमुन्नीतनीत्याऽन्यथाभावजन्मा-सम्भवे मायाया विकारसम्भवः । अपरिणामरूपत्वादिति ब्रूमः । न

---

माया हीति । तथाभूता वा परिणमतेऽन्यथाभूता वेति विकल्प्य नाद्य इत्याह—न तथाभूतेति । तथाभावस्यान्यथाभावपरिणामविरोधित्वादित्यर्थः । द्वितीयमनुभाष्य दूषयति—अन्यथाभूतेति । अन्यथाभावहेतुरन्याथाभावो नित्योऽनित्यो वा ? । आद्ये प्रथमान्यथाभावस्यैव सदा भावात् द्वितोयोऽन्यथा-भावो निरवकाशस्स्यात् । द्वितीये तु प्रथमान्यथाभावोऽन्यथाभावमन्तरेण भवति चेत् द्वितीयोऽपि तथा भवेत् । प्रथमश्चेद्धेतुभूतोऽन्यथाभावोऽन्यथाभाव-मपेक्ष्य भवेत् भवेदनवस्थेति भावः । अनुपपद्यमानरूपत्वान्मायाया न तत्र काचिदनुपपत्तिरिति चोदयति—मायायामिति । अतिप्रसङ्गेनोत्तरमाह—तर्हीति । अतिप्रसङ्गान्तरं प्रदर्शयति—निरधिष्ठानापीति । जन्मादेर्माया-मयत्वेऽपि व्याघातसमाधेरसंभवात् सिद्धं बौद्धादिसमत्वं वेदान्तिनामिति पूर्व-पक्षमुपसंहरति—तदेवमिति । जन्मादेर्वास्तवत्वनिरासेऽपि [1]प्रातीतिकस्वरूपा-निरासान्न व्याहतिरिति सिद्धान्तयति—नैतदिति । नन्ववस्थायाः स्वरूपमेव जन्मादेरपह्नूयते । नेत्याह—इह हीति । मायाया न जन्मादिर्विकारः तत्परिणा[2]मस्य दुर्भणत्वादित्युक्तं स्मारयति—अथेति । मायाविकारस्य रजत-भुजगादिवद्विवर्तत्वान्न किञ्चिदवद्यमित्याह—अपरिणामेति । तदेवोपपाद-यति—न हीति । ननु मायाकार्यस्य परिणामत्वे कानुपपत्तिर्येन विवर्त[3]वाद

---

1. प्रातीतिस्वरूपनिरासात् 2. दु....णतादि 3. वादो कार्यते

हि मायाकार्यमन्यथाभावपुरस्सरः परिणाम इष्यते। अन्यथा बाधाभावप्रसङ्गात्। किञ्चान्यथाभावासम्भवो मायायाः कार्योपपादक एव न विरोधी। कार्यानुगुणव्यापाराभावे हि जायमानमिन्द्रजालादि मायामयं वर्णयन्ति।

तर्हि प्रमाणस्य कल्पितत्वाद्विधिनिषेधव्यवहारासम्भवाद्व्याघातस्तदवस्थ इति चेन्न, कल्पितस्यापि प्रतिबिम्बवद्विधिनिषेधव्यवहारहेतुतोपपत्तेः। तस्मान्न वास्तवजन्मादिनिरासे व्याघातापातः। एवं च सति न क्वापि वेदान्तेषु जात्युत्तरमाशङ्कितव्यम्। "स्वव्याघातकमुत्तरं

---

इष्यते तत्राह—अन्यथेति। परिणामत्वेऽपि मायाकार्यस्य मायाधीनत्वान्मिथ्यात्वमित्याशङ्कय युक्त्यन्तरमाह—किं चेति। [वास्तव]परिणामानुगुणान्यथाभावस्य विकल्पासहत्वेनासम्भवाद्वास्तवपरिणामविरोधेऽपि मायामयः परिणामो न विरुध्यते। अवास्तवान्यथाभावस्य तदनुगुणत्वादित्यर्थः। समुचितसामग्र्यभावे जायमानस्य मायामयत्वमित्युक्तेऽर्थे लोकप्रसिद्धिमुपन्यस्यति—कार्येति। ननु जन्मादिमायामयमङ्गीकृत्य स्वमते व्याहतिः समाधीयते चेत्तर्हि सर्वस्य द्वैतस्य कल्पितत्वात्तदन्तर्भूतस्य मानस्यापि तथात्वाद्व्यवहाराहेतुत्वादुभयविधव्यवहारासंभवे मोक्षस्यापि दुष्करत्वाद्व्याहतिरिति विधान्तरेण वेदान्तिनां [1]जात्युत्तरान्तरावष्टम्भत्वमाशङ्कते—तर्हीति। [2]मानस्य कल्पितत्वेऽपि व्यवहारद्वयहेतुत्वस्य दृष्टचनुसारेण सम्भवान्न व्याहतिरिति परिहरति—न कल्पितस्येति। मायामयजन्माद्यभ्युपगमेन व्याघातसमाधानं साधितमुपसंहरति—तस्मादिति। जन्मानवस्थाप्रसङ्गस्य जात्युत्तरत्वाभावे सति गुणगुणिभावजातिव्यक्तिक्रियातदाश्रयादिषु भेदाद्यनवस्थाप्रसङ्गस्यापि न जात्युत्तरत्वम्। वस्तुतो भेदाद्यभावेऽपि प्रातीतिकस्य मायिकस्य तस्य स्वीकारादित्यतिदिशति—एवं चेति। शङ्कितव्या[3]घाताभावे कारणमाह—स्वव्याघातकमिति। न हि वेदान्तेषु जन्मनाशभेदाद्यनवस्थासु समुद्भाव्यमानासु जातिलक्षणमालक्ष्यते। मायामयत्वेन तन्मते भेदादीनामुपपत्तेरित्यर्थः। यत्तु 'बौद्ध-

---

1. ज्ञातुर 2. कल्पिता इत्यधिकः पाठः 3. तव्या...भावे

जातिरि"ति सामान्यलक्षणस्य तत्रासम्भवात्। उदयनः पुनरस्मद्ग्रन्थमात्रदर्शी तत्र जातीस्सूचयन् स्वाज्ञानमेव सूचयतीति शोच्यो विदुषाम्। अतोऽसत्कार्यवादिनां न जन्मादिव्यवहारोऽपि सम्भवतीति स्थितम्।

### सत्कार्यवादोपक्षेपः

अस्तु तर्हि कारणमेवाभिन्नकार्यरूपेण परिणमत इति सत्कार्यवादः। तत्रोक्तदोषासम्भवात्। नन्वत्यन्ताभेदे कार्यकारणव्यवस्था जन्म च न स्यात्। अतो भिन्नाभिन्नं कार्यमिति। न। अभिव्यक्त्यपेक्षया

---

चार्वाकवेदान्तिनामप्यत्रैव निर्हार" इति शब्दितं तत्राह—**उदयन इति**। जन्मादेर्वास्तवस्यासम्भवान्मायिकस्य परानिष्टेर्न परमते कार्यव्यवहारवज्जन्मादिव्यवहारोऽपि सम्भवतीत्युपसंहरति—**अत इति**। आरम्भवादस्य भ्रान्तिमूलत्वं प्रतिपाद्य परिणामवादस्यापि तत्प्रतिपादयितुं प्रारभमाणः प्रागवस्थायां कारणमेवापीतकार्यमवतिष्ठमानमुत्पत्तिकाले परिणमते कार्याकारेणेति कार्यकारणयोरत्यन्ताभिन्नत्वं सत्वं चास्तीति मतमुत्थापयति—**अस्तु तर्हीति**। अथायं कार्यकारणविभागः प्रागस्ति न वा। आद्ये नावस्थाभेदः। अभिव्यक्त्यनभिव्यक्तिभ्यां विशेषेऽभिव्यक्तेः प्रागसत्वे असत्कार्यवादः। सत्वे [1]चाविशेष एव। द्वितीये चासत्कार्यवादात्तत्रोक्तदोषोपपत्तिस्तत्राह—**तत्रेति**। प्रागवस्थायामपि कार्यकारणयोरत्यन्ताभेदान्नासत्कार्यवादप्रयुक्तदोषप्राप्तिः। अवस्थाविशेषस्त्वभिव्यक्त्यनभिव्यक्तिप्रयुक्तोऽवगन्तव्यः। ते च तर्कतो न निराकर्तव्ये प्रतीयमानत्वात्। प्रतीतेश्च तर्कतो बलीयस्त्वादिति भावः। तत्र भेदाभेदवादी चोदयति—**नन्विति**। न हि कारणे कार्यं कारणमिति व्यवस्था सम्भवति। नापि तस्मिन् जन्मनाशादिप्रतीतिर्युक्तिमती। अतो व्यवस्थादिप्रतीत्या कार्यकारणयोरात्यन्तिकमेकत्वमवहेयमित्यर्थः। ननु कार्यकारणयोर्भेदपक्षस्य प्रागेव प्रतिक्षिप्तत्वादभेदपक्षस्यापि श्रद्धेयत्वाभावे कथं व्यवस्थादिप्रतीतिर्निर्वहेदित्यत आह—**अत इति**। व्यवस्थादिप्रतिभासानुपपत्तिरेव कार्यकारणयोर्भिन्नाभिन्नत्वं

---

1. अविशे ...एव

**तदुपपत्तेः। कुण्डलाद्यवस्थारूपेणाभिव्यक्तं सुवर्णं कार्यमित्युच्यते। स्वरूपेण कारणं, अभिव्यक्तिरेव च जन्मेति व्यवह्रियते। अतोऽन्यथा कार्यादिव्यवहारासम्भवात्। न हि यद्यतो अभिन्नं तत्ततो भिन्नमिति युज्यते। विरोधात्। स्वस्मादपि भेदप्रसङ्गाच्च। रूपान्तरात् भिन्नमिति चेन्न। तदपि रूपमितररूपात् भिन्नं चेदत्यन्तभेदप्रसङ्गः। अभिन्नं चेत्पूर्वोक्तदोषः स्यात्। भिन्नाभिन्नत्वे च विरोधानवस्थादिदोषप्रसङ्गः।**

---

कल्पयतीत्यर्थः। प्रागव्यक्तकार्यस्येदानीं व्यक्तिमपेक्ष्यात्यन्ताभेदेऽपि व्यवस्थादिप्रतीत्युपपत्तेर्न भिन्नाभिन्नत्वमिति सांख्यः सङ्किरते—**नेत्यादिना**। अनभिव्यक्त्यपेक्षया नाशप्रतीतिश्चात्र विवक्षिता। एतदेव विवृणोति—**कुण्डलादीति**। अभिव्यक्तिरेव चेत्यत्र चकारेणानभिव्यक्तिरेव नाशत्वेन व्यवह्रि[1]यत इति सूचयति। अभिव्यक्त्यनभिव्यक्त्यपेक्षामन्तरेण कार्यकारणव्यवस्थाद्यनुपपत्तिमुक्तार्थे प्रमाणयति—**अतोऽन्यथेति**। भिन्नाभिन्नत्वपक्षेऽपि व्यवस्थादेरुपपत्तिरुक्तेति। अत आह—**न हीति**। एकप्रतियोगिकभावाभावयोरेकत्रैकदा विरोधादविरोधे जगति विरोधोच्छेदप्रसङ्गादित्याह—**विरोधादिति**। किं चाभेदकमेव रूपं भेदकं किं वा रूपान्तरम्? आद्ये दोषमाह—**स्वस्मादपीति**। द्वितीयमालम्बते—**रूपान्तरादिति**। तत्र वक्तव्यं किं भेदकं रूपमभेदकरूपाद् भिन्नं किं वाऽभिन्नमथवा भिन्नाभिन्नमिति। तत्राद्यमादत्ते—**तदपीति**। भेदकरूपस्याभेदकरूपादत्यन्तभेदपक्षे कार्यस्यापि कारणादत्यन्तभेदसंभवाद्व्यवस्थाद्यनुपपत्तिस्तदवस्थेत्युत्तरमाह—**अत्यन्तेति**। कल्पान्तरमनुभाष्य दूषयति—**अभिन्नं चेदिति**। भेदकं रूपमभेदकादत्यन्ताभिन्नमिति पक्षे कार्यस्यापि कारणाद[2]त्यन्ताभेदात् स्वस्मादपि भेदः स्यादित्युक्तो दोषः समापतेदित्यर्थः। तृतीयं प्रत्याह—**भिन्नाभिन्नत्वे चेति**। कार्यकारणयोरिव रूपयोरपि भिन्नाभिन्नत्वे रूपाभेदस्यासत्वे कार्यस्यापि सदसत्वापत्त्या पूर्वोक्तविरोधतादवस्थ्यं प्रसज्येत। कार्यका-रणवत् रुपयोरपि भिन्नाभिन्नात्वेऽभ्युपगते तत्राप्यभेदकरूपस्य भेदकत्वे स्वस्य स्वस्माद्भेदापत्तिः। रूपान्तरस्य भेदकत्वे तु तच्च रूपान्तरं अभेदकरूपात्

---

1. व्यवह्रियमाणेति 2. अत्यन्तभेदात्

भिन्नं च रूपमसदिति च सदसत्त्वं कार्यस्य विरुद्धमापद्येत। सदेव कार्यमवगम्यते। "सदेव सोम्येदमग्र आसीदि"ति श्रुतेः। तस्माद-भिन्नमेव कारणात् कार्यं, अतस्तत्सदेवेति स्थितम्।

### सत्कार्यवादप्रतिक्षेपः

उच्यते। कारणतावन्मात्रत्वे कार्यस्यानभिव्यक्त्यसम्भवादभि-व्यक्तेरप्यसंभवः। न चाभिव्यक्तेरप्यभिव्यक्त्यनभिव्यक्ती। तत्राप्येव-मित्यनवस्थाप्रङ्गात्। किञ्च परिणामोऽपि कारणस्य पूर्वरूपे स्थित एवोतान्यथाभूते। आद्ये आधेय विरोधः। द्वितीयेऽनवस्थाप्रसङ्गः। परिणामो हि वास्तवोऽन्यथाभावः। स पूर्वरूपे स्थिते विरुध्यते।

---

भिन्नं अभिन्नं भिन्नाभिन्नं वेति विकल्पस्य संभवादनवस्थाऽऽपद्येत। अतो न कार्यकारणयोर्भेदाभेदौ न संगच्छेते। एवं च कारणे सत्वमभिन्नत्वं च कार्य-स्याभ्युपेयमित्याह—भिन्नं चेत्यादिना। श्रुतिरपि सत्कार्यवादे प्रमाणमित्याह—**सदेवेति**। कार्यं सत् सद्रूपकारणाभिन्नत्वादित्यनुमानमपि सत्कार्यवादस्य साधकमिति ब्रुवन् सत्कार्यवादमुपसंहरति—**तस्मादिति**। सत्कार्यवादं निर-सितुमुपक्रमते—**उच्यत इति**। अभिव्यत्तयपेक्षयापि कार्यकारणव्यवस्था नोपपद्यत इत्याह—**कारणतावन्मात्रत्व इति**। सत्कार्यवादे कार्यस्येव कार्याभिव्यक्तेरपि कारणे सत्वावश्यकत्वात् कार्यानभिव्यक्तेरसंगतत्वेन तत्सापे-क्षाऽभिव्यक्तिरप्यनुपपन्नेति भावः। ननु कार्याभिव्यक्तिरपि कार्यमिव कारणे पूर्वमनभिव्यक्ता पश्चात्कारणव्यापारेणाभिव्यज्यत इत्यभ्युपगमान्नानभिव्यक्त्यसंभव इति चोदयति—**न चेति**। येयं कार्याभिव्यक्तेरभिव्यक्तिः सा सती असती वा, सती चेत् कारणव्यापारात्पूर्वमपि प्रतीयेत। कारणव्यापारनैरर्थक्यं च। तस्या अप्यभिव्यक्त्यन्तरकल्पनायामनवस्था च स्यात्। असती चेत् असत्कार्यवादा-पत्तिरिति दूषयति—**तत्रापीति**। परिणामं निराकुरुते—**किं चेति**। कारणं तथाभूतमेव परिणमते उतातथाभूतमिति विकल्प्याद्यपक्षं प्रतिक्षिपति—**आद्य इति**। द्वितीयपक्षे दोषमाह—**द्वितीय इति**। प्रथमपक्षोक्तविरोधं स्फुटयति—**परिणामो हीति**। सत्यकार्यान्तरतापत्तिः परिणामः। स च परिणमिनि

अन्यथाभूते त्वनवस्था स्यात्। तत्राप्यन्यथाभावान्तरस्यावश्यम्भावित्वात्। किञ्च तैस्त्रिगुणं प्रधानमिष्यते। अतस्तत्कार्यं, सावयवत्वात् कुम्भवत्। अतो न तन्मूलकारणम्। गुणाश्च सावयवाः परिणामित्वान्मृद्वत्। अतस्ते कार्या अनित्याश्चेति न तेऽपि मूलकारणम्। कथं च कारणमचेतनं चेतनानधिष्ठितं च नियतप्रयोजनं कार्यमुत्सृजेत्। तस्माद्दुर्घट एव कार्यकारणादिव्यवहारः सत्कार्यवादेऽपि।

---

तथाभूत एव सति न संभवति। तथाभावस्यातथाभावेन विरोधादिति भावः। द्वितीयपक्षोक्तदूषणं विवृणोति—**अन्यथाभूत इति**। अन्यथाभावस्य कार्यत्वेनान्यथाभावान्तरं तत्र हेतुर्वक्तव्यः। स चान्यथाभावहेतुरन्यथाभावो नित्योऽनित्यो वा। आद्ये प्रथमान्यथाभावस्यैव सदा सत्वात् द्वितीयान्यथाभावस्यानवकशतापत्तेः। द्वितीये प्रथमान्यथाभावोऽन्यथाभावान्तरमन्तरेण भवति चेत्, द्वितीयोऽपि तथा भवेत्। यदि प्रथमान्यथाभावोऽन्यथाभावान्तरमपेक्ष्य भवेत्। तदाऽनवस्था दुर्वारा भवेदिति भावः। परिणामं निराकृत्य प्रधानस्य मूलकारणत्वं निरस्यति—**किं चेति**। प्रधानं न मूलकारणं कार्यत्वात् घटवत्, न च हेत्वसिद्धिः। प्रधानं कार्यं त्रिगुणात्मकत्वात् सावयवत्वाच्च कुम्भवत् इत्यनुमानात् तत्सिद्धेः। न च सावयत्वमसिद्धम्। संघातत्वेन सावयवत्वसिद्धेः। संघातत्वं चानेकात्मकत्वम्। तच्च प्रधानस्य सांख्यानुमतमेव। अतो न सावयवत्वासिद्धिः। गुणानामपि कारणत्वं निषेधति—**गुणाश्चेति**। गुणाः सवयवाः परिणामित्वात् मृद्वत् इत्यनुमानेन कार्यत्वानित्यत्वादयो गुणानां सिद्ध्यन्ति। सत्वरजस्तमसां परस्परसंबंधस्य नित्यत्वं न संभवति। संबन्धसामान्यस्यानित्यत्वाभ्युपगमात्। तेन गुणानां सावयत्वमप्रत्यूहं सिद्ध्यति। प्रधानस्य मूलकारणत्वं निराकृत्याचेतनस्य तस्य सृष्ट्यर्थप्रवृत्तिमपि प्रत्याचष्टे—**कथं चेति**। अचेतनस्य केवलस्य मृदादेः प्रवृत्त्यदर्शनेऽपि क्षीरस्याचेतनस्य चेतनानधिष्ठितस्य प्रवृत्तिर्यथा दृश्यते तथा प्रधानस्याऽपि भवत्विति आशंक्याह—**चेतनानधिष्ठितमिति**। क्षीरेऽपि चेतनाधिष्ठित एव प्रवृत्तेरंगीकारान्न तदुदाहारणमिति भावः। ईश्वराधिष्ठितत्वस्य धेन्वधिष्ठितत्वस्य च क्षीरे प्रमाणसिद्धत्वात्। अनागतावस्थपुरुषप्रयोजनज्ञानमपि प्रधानस्याचेतनत्वादयुक्तमित्याह—**नियतप्रयोजनमिति**। कार्यकारणव्यवस्थासंभवः सत्कार्यवादेऽपि तुल्यइत्युपसंह-

### अनिर्वचनीयवादोपसंहारः

**आगमादपि कार्यस्यानिर्वचनीयतैव निश्चीयते न सत्वं, "सदेवे" त्युपक्रम्य "एकमेवाद्वितीयमि"ति चोक्त्व"वाचारम्भणं विकारो नामधेयमि"ति विकारानृतत्वाभिधानात् ।**

### अनिर्वचनीयतावादविमुखानां दौःस्थ्योद्धारणम्

**किञ्चानिर्वचनीयख्यातिविमुखानां वादिनां परस्परसमयनिरासोऽप्यसम्भवी । तथाहि—न तावत्परमतं तैः प्रमाणसिद्धमसिद्धं वा निरस्येत । अशक्यत्वादतिप्रसङ्गाच्च । स्मृतिभ्रमसिद्धमपि सत्ख्याति-**

---

रति—**तस्मादिति** । यदुक्तं सत्कार्यवादे श्रुतिः प्रमाणमिति तत्राह—**आगमादपीति** । विकारानृतत्वबोधकवाक्यविरोधात् "सदेवे"त्यादिश्रुतेर्न सत्कार्यबोधकत्वं संगच्छते । अपि तु कार्यानिर्वचनीयत्वनिश्चायकत्वमेवावगम्यते ।

अनिर्वाच्यतानभ्युपगमे परपक्षप्रतिक्षेपव्यवहारोऽपि न निर्वहेत् । अतस्तदनुपपत्त्या प्रपञ्चानिर्वाच्यत्वं परैरेष्टव्यमित्याह—**किं चेति** । तमेवासंभवं साधयति—**तथा हीति** । परमतं प्रतिपन्नमप्रतिपन्नं वा निरस्यते । आद्येऽपि मानेन वा स्मरणभ्रमयोरन्यतरेण वा वादिप्रसिध्या वा प्रतिपत्तिरिति विकल्प्य पक्षद्वयं प्रतिक्षिपति—**न तावदिति** । न हि मानसिद्धं निरसितुं शक्यते । तद्विरोधात् । स्वपक्षस्यापि प्रतिक्षेपप्रसङ्गाच्च । अप्रतिपन्नमपि न शक्यते निरसितुम् । *लब्धरूपन्यायविरोधात् । अप्राप्तनिरासे तस्य निरङ्कुशतया शून्यवादापत्तेश्चेत्यर्थः ।

कल्पद्वयं निरस्य [1]कल्पान्तरं दूषयति—**न चेति** । अनिर्वाच्यत्वमनङ्गीकुर्वतां परसमयनिरासव्यवहारस्य दुस्सम्पादत्वादत्वादनिर्वाच्यत्वं सर्वतन्त्र-

---

* लब्धरूपे क्वचित् किंचित् तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य संभवः ॥

इति ब्रह्मसिद्धिकारोक्तन्यायविरोधादित्यर्थः । न्यायार्थस्तु—लब्धरूपे प्रमाणान्तरसिद्धस्वरूपे क्वचिद्भूतलादौ किंचिद्घटादि तादृगेव प्रमाणान्तरसिद्धमेव निषिद्धयते । ततो विधानादृते न निषेधस्य संभवः इति । यदि अधिकरणनिषेध्यौ प्रमाणसिद्धावनपेक्ष्यैव निषेधस्स्यात्, तदा नास्तीत्येव निषेधः स्यात् । न तु भूतले घटो नास्तीति । ततः सर्वत्र सर्वस्याविशेषेण निषेधापत्त्या सर्वशून्यतैव प्रमाणस्य विषयो भवेत् इति भावः ।

1. स्मृति इत्यधिकः पाठः ।

वादिनः[1]प्रामाणिकमेवेति न निषेध्यम् । न च तेषां वादिप्रसिद्धिःप्रमाणादिभ्योऽन्याऽस्ति । अतस्तैः परमतं न शक्यं दूषयितुम् । यथा च तेषां भोगापवर्गादिव्यवस्था न सम्भवेत् तथा तृतीये वक्ष्यते । अतः स्वप्नवत्सर्वो व्यवहारो मायाविजृम्भित इत्यनभ्युपगच्छतां न कश्चिदपि क्रियाकारकप्रमाणप्रमेयादिव्यवहारः सङ्गच्छते । न हि अवास्तवभेदोत्पत्तिनाशान्यथाभावादि विना वास्तवः कश्चिदपि व्यवहारः सम्भवी । भेदादेरवास्तवत्वं च प्रपञ्चितमधस्तात् । तस्मान्न मानैस्समयान्तरैर्वा वेदोदितैकरसे वस्तुनि विरोधगन्धोऽपीति सिद्धमिति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्नारायणज्योतिःपूज्यचरण
शिष्यस्य भगवत आनन्दानुभवस्य कृतौ न्यायरत्नदीपावल्यां
द्वितीयोऽध्यायः समाप्तः

---

सिद्धान्त इत्युपसंहरति—अतस्तैरिति । मा भूत्परमतनिराकरणव्यवहारः बन्धमोक्षगुरुशिष्यादिव्यवहारस्तावदस्मत्पक्षे निर्वक्ष्यतीति न प्रपञ्चानिर्वाच्यत्वमभ्युपेयमित्याशङ्क्याह— यथा चेति । पक्षान्तरवत्त्वत्पक्षेऽपि सर्वव्यवहारानुपपत्तिस्तुल्येत्याशङ्क्याह—अतः स्वप्नवदिति ।

"उपपादयितुं तैस्तैर्मतैराशंकनीययोः ।
अनिर्वक्तव्यतावादपादसेवा गतिस्तयोः" ॥

इति न्यायादनिर्वाच्यतापराङ्मुखानामखिलव्यवहारविरहेऽपि मायावादिनां स्वप्नवन्मायावशादशेषव्यवहारसिद्धिरित्यभिसन्धिः । मायाविजृम्भितं व्यवहारमनभ्युपगच्छतां मायामयक्रियाकारकादिव्यवहाराभावेऽपि वास्तवः स भविष्यतीत्याशङ्क्याह—न हीति । अस्तु तर्हि भेदादेरपि वास्तवत्वं । नेत्याह—भेदादेरिति । समन्वये विरोधाभावमुपसंहरति—तस्मान्नेति । न चैकरसे वस्तुनि बन्धमोक्षादिव्यवहारानुपपत्तिविरोधः । पराकरिष्यमाणत्वादित्यभिप्रेत्य गन्धोऽपीति शब्दप्रयोगः ।

इति श्रीमत्परमहंसपरिव्राजकश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचित न्यायरत्नदीपावलीटीकायां
द्वितीयोऽध्यायः समाप्तः

---

1. क्वचित् इत्यधिकः पाठः

॥ श्रीः ॥

# ॥ न्यायरत्नदीपावलिः ॥

## ॥ तृतीयोऽध्यायः ॥

विरोधोऽपाकृतो न्यायैः साधनं चिन्त्यतेऽधुना ।
अविरुद्धे यतः साध्ये साधनार्थी प्रवर्तते ॥

### अध्यायारम्भाक्षेपसमर्थने

ननु ब्रह्मणि वेदान्तानां समन्वयवचनेनैव ब्रह्मज्ञानस्य वेदान्ताः साधनमित्युक्तम् । किमपरं साधनमवशिष्यते । यदिदानीं चिन्त्यते । उच्यते—यद्यपि वेदान्ता ब्रह्मापरोक्षज्ञानोपजनक्षमाः, तथापि श्रुतवेदान्तानामपि तादृक्ज्ञानादर्शनात्, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रवणातिरिक्तमननादिविधानाच्च । ब्रह्मात्मन्यपरोक्षज्ञानोत्पत्तौ वेदान्तानां सहायाः सन्तीति निश्चीयते ।

---

॥ श्रीः ॥

# ॥ न्यायरत्नवदीपावलिटीकायां ॥

## ॥ तृतीयोऽध्यायः ॥

पूर्वोत्तराध्याययोस्सम्बन्धं वक्तुं वृत्तमनुद्रवति—**विरोध इति** । वर्तिष्यमाणाध्यायार्थं संक्षिपति—**साधनमिति** । ज्ञानस्य मुक्तिहेतोरन्तरङ्गबहिरङ्गसाधनविवेचनायाध्यायारंभ इत्यर्थः । साधनाध्यायस्याविरोधाध्यायानन्तर्ये हेतुमाचक्षाणस्तयोर्हेतुहेतुमद्भावं सम्बन्धमाह—**अविरुद्ध इति** । साध्यं ज्ञानं विवक्षितम् । गतार्थत्वेन साधनविचारस्याननुष्ठेयत्वमाशङ्कते—**नन्विति** । समाधत्ते—**उच्यत इति** । वेदान्तानां ब्रह्मज्ञानसाधनत्वमङ्गीकरोति—**यद्यपीति** । तर्हि निश्चिते साधने तार्तीयो विचारो नावसरमुपढौकते । तत्राह—**तथापीति** । वेदान्तानां ब्रह्मात्मन्यपरोक्षज्ञानोत्पत्तौ सहायाः सन्तीत्युत्तरत्र सम्बन्धः । तेषां सहायसापेक्षत्वे हेतुमाह—**श्रुतवेदान्तानामिति** । श्रवणासम्पूर्तेरेव तेषां विशिष्टज्ञानानुपपत्तिरित्याशङ्क्याह—**आत्मेति** । वेदान्तानां ब्रह्मात्मसाक्षात्कारं कुर्वतां अन्तरङ्गबहिरङ्गभूतसहायाध्यवसायार्थमध्यायारम्भ

**अतस्तन्निर्णयार्थस्तृतीयोऽध्याय आरभ्यते ।**

**शाब्दापरोक्ष्ये पूर्वपक्षः ।**

**ननु शब्दोऽपरोक्षज्ञानं जनयतीति प्रक्रियामात्रम् । न हि शाब्दं ज्ञानमपरोक्षं क्वचिदपि दृश्यते, इष्यते वा शब्दप्रमाणकैः । अथ कस्यचित्तु नवसङ्ख्याज्ञानात् स्वभ्रान्तस्यात्मानमगणयतो दशमः कतमो नास्तीति जिज्ञासो"र्दशमस्त्वमसी"ति शब्दादपरोक्षज्ञानं दृश्यत इति मतम् । तन्न । दशमोऽयं कुम्भ इति शाब्दज्ञानसमानत्वात् । कुम्भस्येव ह्यात्मनो दशसङ्ख्यापूरकत्वं शब्दात्परोक्षमेव मीयते । द्रष्टापि च कुम्भवच्छब्दात् परोक्षमेव प्रतीयते । मानस्वाभाव्यात् । अपरोक्ष आत्मनि परोक्षा शाब्दी संवित् भ्रान्तिः स्यादिति चेन्न । अपरोक्षताया ज्ञानैकधर्मत्वात् । चक्षुरादिसामग्र्या**

---

इति फलितमाह—**अत इति** । ब्रह्मात्मनि वेदान्तानामपरोक्षज्ञानोपजननक्षत्वमुक्तमाक्षिपति—**नन्विति** । कथमिति चेत्किं मानस्वभावमनुसृत्येत्थं कथ्यते किं वा मेयस्वभावमवलम्ब्येति वाच्यम् । नाद्यः । यः शब्दः स परोक्षमेव ज्ञानं जनयतीति विपरीतव्याप्तेरित्याह—**न हीति** । समिदादिसमाहरणार्थं दशसु माणवकेषु विपिनमुपगतेषु समागमनसमये सम्भूय प्रत्येकं परिगणने वस्तुतो दशमस्यापि स्वेतरमाणवकसमवेतनवसङ्ख्याज्ञानपरिभूतविज्ञास्य स्वात्मानमेव दशममपश्यतः भ्रान्तशेमुषीजुषो " दशमस्त्वमि"ति परमकारुणिकवचनसमाकर्णनसमनन्तरमहं "दशमोऽस्मी" त्यपरोक्षमेव विज्ञानमुपजायमानमुपलक्ष्यते, एवं तत्त्वमस्यादिवाक्यादपीति व्यासञ्जयति—**अथेति** । दृष्टान्तवाक्यस्यापि परोक्षज्ञानजनकत्वमेवेति दृष्टान्तेन परिहरति—**न दशमोऽयमिति** । कथं पुनर्दशमस्त्वमिति शाब्दज्ञानस्य परोक्षत्वमिति । किं तद् दशसंख्यापूरकत्वविषयं किं वा द्रष्टृविषयमिति विकल्प्याद्ये परोक्षत्वं तस्य स्पष्टयति—**कुम्भस्येवेति** । द्वितीयेऽपि तत्परोक्षतातादवस्थ्यमित्याह—**द्रष्टापीति** । मेयस्वभावमनुसृत्य शब्दस्यापरोक्षज्ञानजनकत्वमिति पक्षमुत्थापयति—**अपरोक्ष इति** । अरजते रजतज्ञानवदपरोक्षे परोक्षज्ञानस्याप्रमात्वात्तत्र शब्दादपरोक्षमेव ज्ञानमुचितमित्यर्थः । आत्मनोऽपरोक्षत्वस्यासिद्धेर्नैवमिति परिहरति—**नापरोक्षताया इति** । अनुमानादिज्ञानेष्वपि तर्हि स्यादपरोक्षत्वं तत्राह—**चक्षुरा-**

ह्यपरोक्षं ज्ञानं जन्यते। विषयापरोक्षत्वञ्च तादृक्ज्ञानोपाधिकम्। अन्यथा विषयापरोक्षताविकल्पो न स्यात्। अतस्सर्वत्र शब्दात्परोक्षमेव ज्ञानं जायते।

प्रयोगस्तु—विमतं नापरोक्षज्ञानोपजनक्षमं शब्दत्वात् अतीन्द्रियविषयत्वाद्वा, संप्रतिपन्नवत्। यद्वा विमतं नापरोक्षं परोक्षमिति वा अतीन्द्रियविषयत्वाद्गुरुत्वज्ञानवत्। विपक्षे च तस्य ज्ञानस्य शब्दजन्यता न स्यात्। तस्मादात्मापि ब्रह्मशब्दात्परोक्षमेव ज्ञायते। तत्त्वज्ञानाभ्यासाच्चापरोक्षीभवन्मोक्षाय क्षम इत्यास्थेयमिति।

---

दीति। अपरोक्षत्वस्यानुमितित्ववत् ज्ञानत्वावान्तरजातित्वे विषयविशेषेषु कथं तद्व्यवहारस्तत्राह—विषयेति। नन्वपरोक्षस्वभावो विषयस्तद्विषयत्वोपाधेर्ज्ञानस्यापरोक्षत्वं किं न स्यादत आह—अन्यथेति। विषयस्यापरोक्ष्यं स्वभावश्चेत्परोक्षत्वापरोक्षत्वविभागस्तत्रास्तं गच्छेत्। ज्ञानत्वावान्तरजातित्वे तु परोक्षत्वापरोक्षत्वयोरिन्द्रियानिन्द्रियमानमेयस्वभावाभ्याम् शब्दस्यापरोक्षज्ञानाजनकत्वे फलितमाह—अतः सर्वत्रेति। आत्मन्यनात्मनि चेत्यर्थः। उक्तेऽर्थे प्रमाणमाह—प्रयोगस्त्विति। ज्योतिष्टोमादिवाक्यभागे सिद्धसाध्यत्वं निराकर्तुं विमतमिति विशेषणम्। अवान्तरवाक्यं महावाक्यं चात्मविषयमत्र [1]पक्षीकृतम्। अधिकारिणः प्रतीतिजनको वेद इति न्यायादनधिकारिणोऽपरोक्षज्ञानाजनकमपि वाक्यमितरस्य तज्जनकमिति। नेत्याह—क्षममिति। "दशमस्त्व"मिति वाक्ये व्यभिचारमाशङ्क्य हेत्वन्तरमाह— अतीन्द्रियेति। तत्त्वमस्यादिवाक्यीयं ज्ञानं पक्षीकृत्यानुमानान्तरमाह—यद्वेति। प्रयोगद्वयेऽपि हेतोरप्रयोजकत्वं प्रतिक्षिपति—विपक्षे चेति। वाक्यजन्यज्ञानस्यापरोक्षत्वे तस्य शाब्दत्वं चाक्षुषज्ञानवन्न स्यात्। अन्यथा ज्योतिष्टोमादिवाक्यजन्यज्ञानवन्नापरोक्षतेत्यर्थः। अहमित्यात्मनि सर्वापरोक्षे तद्रूपे ब्रह्मणि कथं शब्दात्परोक्षं ज्ञानमित्याशङ्क्यापरोक्षानुभवविषयत्वेनात्मनोऽपरोक्षतोक्तेर्नानुपपत्तिरित्युपसंहरति—तस्मादात्मापीति। नन्वपरोक्षज्ञानस्यैव मोक्षहेतुत्वात् ब्राह्मात्मनि शब्दान्यतद्धेत्वसिद्धेः शब्दादेव तदेष्टव्यमिति। नेत्याह—तत्त्वज्ञानेति।

---

1. पक्षीकारिणः

## शाब्दापरोक्ष्यसमर्थनम्

उच्यते—मुख्यमापरोक्ष्यं तावदात्मनो निजमेव रूपं, "यत्साक्षादपरोक्षाद्ब्रह्मे'ति श्रुतेः। अपरोक्षज्ञानविषयतया तदपरोक्षमिति चेन्न। "साक्षा"दिति श्रुतिविरोधात्। ज्ञाने मुख्यापरोक्षत्वासम्भवाच्च। न हि ज्ञानस्वरूपं तावदापरोक्ष्यं, ज्ञानस्यापरोक्षताविकल्पभङ्गप्रसङ्गात्। न ह्यस्ति सम्भवः कस्यचित् ज्ञानमेवान्यस्याज्ञानमिति। आपरोक्ष्यस्यात्मरूपत्वेऽप्येतत्तुल्यमिति चेन्न। आत्मन्यपरोक्षत्वाभावस्य भ्रमसिद्धत्वेनोपपत्तेः। तर्हि ज्ञानमपि स्वतोऽपरोक्षमेव

---

ब्रह्मात्मनि प्रवृत्तवाक्यस्यापरोक्षज्ञानजनकत्वं विना न प्रामाण्यमिति प्रतिपादयितुं प्रारभते—**उच्यत इति**। आपरोक्ष्यं हि द्विविधं, मुख्यममुख्यं च। मुख्यमात्मस्वरूपमिति प्रतिजानीते—**मुख्यमिति**। तत्र प्रमाणमाह—**यत्साक्षादिति**। अपरोक्षत्वस्यागौणत्वं—**साक्षादिति** विवक्ष्यते। **अपरोक्षादिति**। अपरोक्षमिति यावत्। ब्रह्मण्यपि घटादेरिवापरोक्ष्यमन्यथासिद्धमिति शङ्कते—**अपरोक्षेति**। विशेषणश्रुत्या परिहरति—**न साक्षादिति**। साक्षादपरोक्षत्वं घटादिवत् ब्रह्मात्मन्यपरोक्षज्ञानविषयत्वेनापरोक्षत्वेऽपि विशेषणश्रुतिरविरुद्धेत्याशङ्क्याह—**ज्ञान इति**। कथमसम्भवस्तत्र वक्तव्यं, किं वाऽऽपरोक्ष्यं ज्ञानस्वरूपं ज्ञानत्वावान्तरजातिर्वेति। नाद्य इत्याह—**न हीति**। स्वरूपत्वपक्षे स्वगतं ज्ञानं स्वस्यापरोक्षं परस्य च परोक्षमिति विभागो न भवेत्। न हि घटस्य पुरुषभेदेन पटत्वमप्यस्तीति हेतुमाह—**ज्ञानस्येति**। प्रसङ्गमेव प्रकटयति—**न ह्यस्तीति**। आत्मन्यपि पुरुषभेदेन परोक्षत्वापरोक्षत्वानुभवात्तस्यापि नापरोक्षता स्वरूपमिति चोदयति—**आपरोक्ष्यस्येति**। स्वतस्तावदापरोक्ष्यमात्मनः स्वरूपं "यत्साक्षादि"त्यादिश्रुतेरुदाहृतत्वात्। भ्रान्त्या तदभावभानमिति विभागसम्भवात्पुम्भेदस्य चासिद्धेर्नात्मप्रतिबन्दितेति परिहरति—**नात्मनीति**। आत्मनः स्वरूपापरोक्षत्वे ज्ञानस्यापि तदविशिष्टमिति शङ्कते—**तर्हीति**। ज्ञाने परोक्षत्वव्यवहारस्तर्हि कथमिति तत्राह—**परोक्षेति**। परोक्षार्थविषयत्वेन परोक्षत्ववदपरोक्षार्थविषयत्वेनापरोक्षत्वस्यापि सम्भवादौपाधिकमेवोभयमपि ज्ञानस्येत्युत्तरमाह—**नापरोक्षत्वस्येति**। परोक्षत्वस्य परोक्षार्थविषयत्वोपाधिकृतत्वेऽपि नापरोक्षत्वस्यापरोक्षार्थविषयत्वोपाधिप्रयुक्त-

परोक्षविषयत्वेन च परोक्षमिति चेन्न। अपरोक्षत्वस्यापि तथात्वप्रसङ्गात्। अपरोक्षत्वस्य हि परोक्षत्ववदौपाधिकत्वसम्भवे स्वाभाविकत्वे मानाभावात्। अस्तु तर्हि क्वचित् ज्ञाने मुख्यमापरोक्ष्यम्। सत्यम्। आत्मस्वरूपानुभवे तस्य दर्शितत्वात्। तदेवं न ते ज्ञानस्वरूपमापरोक्ष्यम्। नापि ज्ञानत्वापरजातिः। विकल्पासम्भवप्रसङ्गादेव अपरोक्षानुभवसम्बन्धात् कुम्भस्येव ज्ञानस्याप्यौपाधिकापरोक्षत्वसम्भवे जातिकल्पनासम्भवाच्च। यथा हि पचिक्रियासम्बद्धयोर्द्वयोरपि पाचकत्वमौपाधिकं न त्वेकस्यौपाधिकमपरस्यापरजातिरिति युज्यते। एवं कुम्भतज्ज्ञानयोरप्यपरोक्षज्ञानयोगिनोरापरोक्ष्यं न्याय्यम्। अन्य-

---

त्वम्। अपरोक्षत्वस्य स्वभावत्वेऽपि दोषाभावादित्याशङ्क्याह—अपरोक्षत्वस्येति। अपरोक्षताविकल्पानुपपत्तिश्चोक्तेति भावः। अपरोक्षार्थविषयत्वेन ज्ञानस्यापरोक्ष्यं चेत्तर्हि तस्मिन्ज्ञाने मुख्यमेवापरोक्ष्यमेष्टव्यम्। यद्विषयत्वादर्थस्यापरोक्षत्वम्। अन्यथानवस्थानात्। तदनुषङ्गादन्यत्र तदयोगादिति चोदयति—अस्तु र्हीति। क्वचिदापरोक्ष्यं मुख्यमित्येतदङ्गीकरोति—सत्यमिति। आत्मातिरिक्तेऽपि तर्हि ज्ञाने मुख्यमापरोक्ष्यमभ्युपगतमिति। नेत्याह—आत्मस्वरूपेति। आत्मस्वरूपभूतज्ञानात्मकापरोक्षतानुषङ्गात्तदारोपिताशेषापरोक्षतोपपत्तेः न किंचिदस्ति दौस्थ्यमित्यर्थः। प्रथमपक्षनिराकरणं निगमयति—तदेवमिति।

द्वितीयं दूषयति—नापीति। न खलु खण्डादौ पुरुषभेदापेक्षया गोत्वागोत्वविकल्पोऽवगम्यते। तद्वदपरोक्षत्वस्य जातित्वे ज्ञानेऽपि पुरुषविशेषापेक्षया परोक्षत्वापरोक्षत्वविकल्पो नावकल्पेतेति हेतुमाह- विकल्पासम्भवेति। अपरोक्षत्वस्य जातित्वाभावे हेत्वन्तरमाह— अपरोक्षेति। अनुगतप्रत्ययवशात्क्वचिदपरोक्षत्वं जातिः, क्वचिदौपाधिकमित्यङ्गीकारे का हानिरिति चेत्तत्राह—यथा हीति। अनुगतप्रत्ययस्तूपाधिवशादपि निर्वहतीति भावः। आत्मस्वरूपभूतापरोक्षज्ञानविषययोरपि कुम्भतत्ज्ञानयोरापरोक्ष्यव्यवस्था किं न स्यात्। तथा च कुम्भज्ञाने जातिरपरोक्षत्वं, कुम्भे पुनरौपाधिकमिति। अत आह—अन्यथेति। उक्तोपाधिसम्बन्धस्योभयत्रापि विशेषाभावादिति हेत्वर्थः। ज्ञाने मुख्यापरोक्ष्यासम्भवादात्मस्वरूपस्यैव तद्भावेऽपि भवदभिमतोपाधिनिबन्धनमा-

था पाचकत्वमपि क्वचिज्जातिस्स्यादविशेषात् ।

अथेन्द्रियजन्यतयानुभवस्यापरोक्षतै*वौपाधिकी । न । ईश्वरज्ञानस्य तदभावप्रसङ्गात् । श्रूयते हीश्वरस्य नेन्द्रियजमपरोक्षज्ञानं, "पश्यत्यचक्षुः स शृणोत्यकर्ण" इत्यादि । न च ज्ञानकरणाजन्यानुभवत्वमपरोक्षत्वं, भागे व्यर्थविशेषणत्वात् । अजन्यानुभवत्वमेव ह्यपरोक्षत्वलक्षणमीश्वरज्ञानेऽर्थवत् । इतरत्र तद्भागासिद्धिपरिहारार्थमिति चेन्न, यत आहुः—"सम्भवे व्यभिचारे च विशेषणमर्थवदि"ति । अनीश्वरवादिनस्तु सुषुप्त्यनुभव उदाहर्तव्यः । समर्थितश्च सुषुप्तावपरोक्षानुभवः ।

---

परोक्ष्यं न भवति । किं तूपाध्यन्तरप्रयुक्तमिति चेत्तत्र किमिन्द्रियजन्यानुभवत्वमुपाधिः किं वा ज्ञानकरणाजन्यानुभवत्वमथवा सम्प्रयोगमन्तरेणाजन्यानुभवत्वमिति विकल्प्याद्यमादत्ते—अथेति । अव्याप्त्या परिहरति—नेति । ईश्वरस्यानैन्द्रियकमपरोक्षं ज्ञानमसिद्धं, मानाभावादिति प्रसङ्गस्यानिष्टत्वाभावमाशङ्क्याह—श्रूयते हीति । विकल्पान्तरं निरस्यति—न चेति । ईश्वरप्रमायां ज्ञानकरणलिङ्गाद्यजन्यत्वादुक्तोपाधिसंभवेऽपि ज्ञानकरणविशेषणस्य तत्र नैरर्थक्यादिति हेतुमाह—भाग इति । तदेव व्यनक्ति—अजन्येति । चक्षुरादिजन्यासाकीनरूपादिसाक्षात्कारभागे प्राप्तासिद्धिवारणार्थमर्थवद्विशेषणमिति शङ्कते—इतरत्रेति । तदभ्युपगमविरोधान्न भागासिद्धिनिरासार्थं हेतुविशेषणमुचितमिति सूचयति—नेत्यादिना । ईश्वरवादिपक्षे यद्यपीश्वरप्रमायामाद्यलक्षणस्याव्याप्तिः । द्वितीयलक्षणस्य व्यर्थविशेषणता । तस्य च भागासिद्धिनिरासार्थत्वे समयहानिः । तदनभ्युपगमेऽपि दूषणादिव्यवस्था[1]ते दुर्वारैवेत्याह—अनीश्वरवदिन इति । सुषुप्तावपरोक्षानुभवे नास्ति संमतिरित्याशङ्क्याह—समर्थितश्चेति । न केवलं परामर्शादेव सौषुप्तानुभवसिद्धिः किं तु श्रुतेरपीत्याह—विज्ञायते चेति । द्वितीयलक्षणनिराकरणन्यायेन सम्प्रयोगमन्तरेणाजन्यानुभवत्वमिति तृतीयमपि लक्षणं प्रतिक्षेप्तुं क्षममित्याह—एवमिति । परपक्षासंभवे स्वपक्षमुपसंहरति—तस्मादिति । आत्मनि परोक्षत्वव्यवहारस्य

---

* एवकारो भिन्नक्रमः । अनुभवस्येन्द्रियजन्यतयैवापरोक्षता औपाधिकीत्यन्वयः । ज्ञानस्यापरोक्षत्वे इन्द्रियजन्यत्वमेवोपाधिः नापरोक्षात्मविषयकत्वमिति भावः ।

1. स्थापि ते दु....वस्थं:

विज्ञायते च "पश्यन्वैतन्न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत" इति। एवं ज्ञानापरोक्ष्यलक्षणान्तरमप्यपास्यम्। तस्मादात्मस्वरूपचैतन्यमेवापरोक्ष्यमिति युक्तम्। पारोक्ष्यं च तस्याविद्यावतो यथावदस्फुरणं देहादेश्चापरोक्ष्यमभिव्यक्तचैतन्यसम्भेदादमुख्यं दग्धृत्वमिवायःपिण्डादेः। तद्विपरीतं च पारोक्ष्यम्। ज्ञानन्तु विषयापरोक्ष्याभिव्यञ्जकमपरोक्षमन्यत्परोक्षम्। अत आत्मन्यपरोक्षेऽपरोक्षमेव ज्ञानं जनयन् शब्दः प्रमाणम्। अन्यथाऽप्रमाणं स्यात्। यथा ह्यात्मानमगणयतो नवसङ्ख्याज्ञानादस्वस्थहृदयस्य कतमो दशमो नास्तीति जिज्ञासो "र्दशमस्त्वमसी"ति दशमानुवादेनापरोक्षं स्वरूपं बोधयत् वाक्यं प्रमाणं

---

तर्हि का गतिरिति तत्राह—**पारोक्ष्यं चेति**। यथावदस्फुरणे हेतुरविद्यावत इति। मुख्यमापरोक्ष्यमात्मस्वरूपमिति प्रतिपादितमधस्तात्। इदानीं अनात्मनि कथमापरोक्ष्यमित्याशङ्क्यामुख्यं आपरोक्ष्यं तत्र निवेशयति—**देहादेश्चेति**। अनात्मन्यमुख्यापरोक्ष्ये दृष्टान्तमाह—**दग्धृत्वमिति**। तर्हि पारोक्ष्यमपि देहादेरापरोक्ष्यवदमुख्यमापतेदिति। नेत्याह—**तद्विपरीतमिति**। न हि द्वयोरमुख्यत्वे मुख्यं विधान्तरं सम्भवति। न हि देहादेरचेतनस्य मुख्यमापरोक्ष्यमुपपद्यते। अतस्तस्य पारोक्ष्यमेव मुख्यमिति भावः। कथं तर्हि ज्ञाने परोक्षत्वापरोक्षत्वव्यवस्थेति तत्राह—**ज्ञानं त्विति**। मुख्यापरोक्ष्यमात्मस्वरूपमिति स्थिते फलितमाह—**अत इति**।

नन्वप्रकाशे विषये प्रकाशात्मकज्ञानजनकचक्षुरादिवदपरोक्षे परोक्षज्ञानहेतोरपि शब्दस्य प्रामाण्यमविरुद्धमिति तत्राह—**अन्यथेति**। अक्ष्यादि कारकत्वादभिव्यञ्जकविलक्षणम्। ज्ञानं पुनरभिव्यञ्जकमेव। अन्यथा चक्षुरादिवत् ज्ञानत्वव्याघातात्। अपरोक्षे चात्मनि शाब्दज्ञानस्य तदभिव्यञ्जकत्वादपरोक्षत्वम्। तस्य तल्लक्षणत्वात्। तदभिव्यञ्जकज्ञानानुत्पादकत्वे तत्र शब्दो न प्रमाणं स्यादित्यर्थः। विमतं नापरोक्षं शाब्दज्ञानत्वाज्ज्योतिष्टोमादिवाक्योत्थज्ञानवदित्याशङ्क्य व्यभिचारमाह—**यथा हीति**। तथा तत्त्वमसिवाक्यमपि जीवानुवादेन तस्य ब्रह्मत्वं बोधयत् प्रमाणमिति शेषः। दशमस्त्वमितिवाक्यीयज्ञानमपि परोक्षमेवेति व्यभिचारपरिहारमाशङ्कते—**दशसंख्येति**। दशमस्त्वमितिवाक्योत्थज्ञानस्य दशसंख्यापूरकत्वविशिष्टपरोक्षमाणवकविषयत्वाभावान्न

दशसङ्ख्यापूरकत्वविशिष्टं स्वरूपं परोक्षं बोध्यत इति चेन्न, तदुपलक्षितस्वरूपस्यैवाज्ञातस्य बोध्यत्वात्। सङ्ख्यापूरकत्वं च ज्ञातत्वादबुभुत्सितं न बोध्यते। प्रयोगस्तु—विमतम् अपरोक्षं, अपरोक्षविषयत्वात् सुखज्ञानवदिति। आत्मापरोक्षः इत्यागमतो दर्शितं, तद्विषयत्वं च शाब्दज्ञानस्य "तं त्वौपनिषदं पुरुषं पृच्छामी"ति श्रुतिसिद्धम्। अतो न हेत्वसिद्धिः।

ननु साध्यमौपाधिकं, स्वाभाविकं वा? आद्ये सिद्धसाधनता। शाब्दज्ञानं हि मनोगम्यमपरोक्षमिष्यते। तत्र साध्याविशिष्टता च। विषयापरोक्षताभिव्यञ्जकत्वं हि ज्ञानेऽपरोक्षत्वं त्वयेष्यते। साधनं च ते तदेव। द्वितीये तु सिद्धान्तविरोधः। न हि ते ज्ञाने मुख्यमापरोक्ष्यम्।

---

परोक्षत्वम्। दशसंख्यापूरकत्वोपलक्षितापरोक्षस्वरूपविषयत्वात्। तस्य [1]चाज्ञातत्वेन बुभुत्सितत्वात्तद्विषयज्ञानस्यापरोक्षता। तथा च व्यभिचारतादवस्थ्यमिति परिहरति—न **तदुपलक्षितेति**। ननु दशसंख्यापूरकत्वविशिष्टस्याप्यज्ञातत्वेन बुभुत्सितत्वाविशेषाद्वाक्यप्रतिपाद्यत्वम्। अतस्तज्जन्यं ज्ञानं परोक्षमिति। तत्राह—**संख्येति**। विशिष्टस्य ज्ञातत्वेनाप्रतिपाद्यत्वादुपलक्षितस्वरूपमात्रस्यैवापरोक्षस्य तद्भावाद्वाक्यीयतज्ज्ञानमपरोक्षमेवेति शाब्दज्ञानत्वहेतोरुक्तमनैकान्त्यं स्थितमिति भावः। दशमस्त्वमितिवाक्योत्थज्ञानस्यापरोक्षत्वेऽपि तत्वमस्यादिवाक्यजन्यज्ञानस्य किं जातमित्याशङ्क्याह—**प्रयोगस्त्विति**। केचिदनुमेयत्वेनात्मानं परोक्षमाचक्षाणा हेत्वसिद्धिमुत्प्रेक्षन्ते। तान्प्रत्याह—**आत्मेति**। "यत्साक्षादपरोक्षाद् ब्रह्म"त्यात्मनोऽपरोक्षत्वेऽपि शाब्दज्ञानस्य न तद्विषयत्वं, तस्य संसृष्टपरोक्षविषयत्वादित्याशङ्क्याह—**तद्विषयत्वमिति**। साध्यं विकल्पयन्नाशङ्कते—**नन्विति**। औपाधिकमापरोक्ष्यमिति पक्षं प्रत्याह—**आद्य इति**। सिद्धसाधनतामेव साधयति—**शाब्दज्ञानं हीति**। सिद्धान्तिपक्षे दोषान्तरमाह—**तत्रेति**। साध्याविशिष्टत्वं स्पष्टयति—**विषयेति**। स्वाभाविकापरोक्ष्यपक्षं दूषयति—**द्वितीये त्विति**। वेदान्तिनः सिद्धान्तविरोधं स्फोरयति—**न हीति**। साधारणोक्तसाध्यस्य विशेषविकल्पेन निरासोऽति-

---

1. अज्ञानेन

उच्यते। न समयसिद्धमौपाधिकं निजं वापरोक्ष्यं ज्ञाने साध्यम्। किन्तु सुखतज्ज्ञानयोरिव लोकसिद्धम्। अतो न सिद्धसाधनतादिप्रसङ्गः। लोकसिद्धमपि हि धूमवत्त्वमनुमानाङ्गमिष्यते। न वादिसिद्धं धूमयोगित्वं, वह्न्यादिनानैकान्त्यात्। अपक्षधर्मतापत्तेश्च। इन्धनाश्रय एव हि धूमः शैलाश्रयोऽपि प्रतीयते। अतो धूमाश्रयत्वप्रसिद्धिरेव वह्न्यनुमानाङ्गम्। धूमयोगित्वाविशेषेऽपि क्वचिदेव धूमवत्त्वं प्रसिद्धम्। यथा पङ्कोद्भवत्वाविशेषेऽपि क्वचिदेव पङ्कजत्वं प्रसिद्धम्। नापि च विरुद्धता। सपक्षवृत्तेः स्पष्टत्वात्। आत्मस्मृत्या ते व्यभिचार इति चेन्न। आत्मस्वरूपमात्रे चिन्मात्रतया नित्यापरोक्षे स्मृत्यसम्भवात्।

---

प्रसङ्गीत्यभिप्रेत्याह—**उच्यत इति**। विकल्पद्वयमनङ्गीकारेण निरस्यति—**समयेति**। तर्हि पक्षद्वयबहिर्भूतापरोक्षाभावात्कथं साध्यसिद्धिरित्याह—**किंत्विति**। साधारणस्य साध्यत्वं मत्वाह—**सुखेति**। लोकसिद्धसाधारणापरोक्ष्यस्य साध्यत्वे पक्षद्वयोक्तदोषाभावं फलमाह—**अतो नेति**। वादिसिद्धं प्रामाणिकमेवानुमानाङ्गं, न लोकसिद्धं, तस्याभासत्वादित्याशंक्याह—**लोकसिद्धमपीति**। वादिसिद्धधूमयोगित्वस्यानुमानाङ्गत्वे दोषमाह—**वन्ह्यादिनेति**। दहनगगनादौ धूमयोगित्वेऽपि धूमध्वजाधारत्वसाध्यासिद्धेरित्यर्थः। दोषान्तरमाह—**अपक्षेति**। तदेव दर्शयति—**इन्धनेति**। लोकसिद्धमपि तर्हि धूमवत्त्वमपक्षधर्मत्वान्नाग्निं साधयेदिति। नेत्याह—**शैलेति**। प्रसिद्धधूमवत्त्वस्यानुमानाङ्गत्वे व्यभिचारादिनिराससंभवे फलितमाह—**अतो धूमेति**। धूमयोगित्वस्य पर्वतपावकगगनपवनादिषु अविशेषात्पर्वते तत्प्रसिद्धेरनिबन्धनत्वान्न तदनुरोधेनापि प्रसिद्धानुमानसिद्धिरित्याशङ्क्याह—**धूमयोगित्वेति**। निमित्ताविशेषेऽपि नैमित्तिकव्यवहारविशेषे दृष्टान्तमाह—**यथेति**। अपरोक्षविषयत्वहेतोः साध्याविशिष्टत्वादि निराकृत्य साध्यविपरीतव्याप्तत्वं निराकरोति—**नापीति**। आत्मविषयस्मृतेरपरोक्षत्वाभावेऽपि तद्विषयत्वमस्ति आत्मनोऽपरोक्षत्वात्। तथा चानैकान्त्यमिति चोदयति—**आत्मस्मृत्येति**। किं निरुपाधिकात्मविषया स्मृतिरुत सोपाधिकविषयेति विकल्प्याद्यमपाकरोति—**नेत्यादिना**। द्वितीयं दूषयति—**आत्मा हीति**। प्रकारान्तरेण व्यभिचारं

आत्मा हि देशकालावस्थाविशेषोपाध्यवच्छिन्नः स्मर्यते। स च परोक्ष एवेति न तत्स्मृत्या व्यभिचारः।

ननु परसुखाद्यनुमानेन स्पष्टो व्यभिचारः। अस्माकं च साधनशून्यं निदर्शनम्। न हि सुख ज्ञाननिरपेक्षमपरोक्षम्। येन सुखज्ञानं तद्विषयं स्यात्। न। अपरोक्षविषयत्वं ह्यपरोक्ष इति व्यवहारार्हताकारणत्वं विवक्षितं, तदस्ति सुखप्रत्यक्षे, नास्ति च सुखाद्यनुमाने। विपक्षे च बाधोऽपरोक्षे परोक्षं ज्ञानमप्रमाणं स्यादित्युक्तम्। नापि सत्प्रतिपक्षता। प्रतिप्रयोगायोगात्। यत्तु विमतं नापरोक्षज्ञानोपजनक्षमं शाब्दत्वादतीन्द्रियविषयत्वाद्वा संप्रतिपन्नवदिति, तत्र तार्किकपक्षे तावद्धर्मिणोऽसिद्धिः। न हि तस्योभयसिद्धः कश्चिदपि शब्दोऽस्ति। *उक्तश्चैतत्पुरस्तात्।

---

शङ्कते—नन्विति। परकीयसुखादेस्तं प्रत्यपरोक्षस्यापि परेणानुमानात्तत्रापरोक्षविषये परोक्षे, व्यभिचार इत्यर्थः। वैशेषिकादिपक्षमाश्रित्य दोषान्तरमाह—अस्माकं चेति। तदेव साधयति—न हीति। यदि पुनरपरोक्षज्ञानसापेक्षत्वेनापरोक्षं सुखं तद्विषयत्वेन ज्ञानस्यापरोक्षविषयत्वमिष्यते तदा परस्पराश्रयत्वमित्याशयः। दोषद्वयं परिहरति—नेति। तदर्थं हेत्वर्थमाह-अपरोक्षविषयत्वमिति। व्यवहारोऽभिवदनम्। साधनशून्यत्वाभावं दर्शयति—तदस्तीति। व्यभिचाराभावं कथयति—नास्ति चेति। तत्त्वमस्यादिवाक्यादात्मनि परोक्षज्ञानोत्पत्तौ बाधकस्योक्तत्वान्नापरोक्षविषयत्वहेतोरप्रयोजकतेत्याह—विपक्षे चेति। विमतं नापरोक्षमनैन्द्रियकज्ञान[1]त्वादनुमानवदित्याशंक्याह—नापीति। ईश्वरज्ञाने व्यभिचारात्पक्षान्तरे च सौषुप्तज्ञाने व्यभिचारतादवस्थ्यादिति भावः। तथापि पूर्वोक्तानुमाने जाग्रति प्रतिप्रयोगाभावाभिधानमयुक्तमिति तत्राह—यत्त्विति। किमिदं तार्किकाणामनुमानमुत मीमांसकानामिति विकल्पयति—तत्रेति। आद्ये दोषमाह—तार्किकेति। शब्दत्वहेतोश्चासिद्धिरत्राभिसंहिता। असिद्धिद्वयं साधयति—न हीति। उभयसिद्धशब्दासिद्धिस्तार्किकमते कथ-

---

* वेदापौरुषेयत्वसाधनावसरे "किं चैकश्शब्द एकस्यैवेन्द्रियस्य ग्रहणार्ह इति ते स्थितिः। श्रोत्रान्तरे तस्यासमवायात्" इत्यादौ। 1. ज्ञानजनकत्वात्

त्वया श्रुतः शब्दस्त्वदुक्तयानुमानेन वा परेण ज्ञातो धर्मीति चेन्न। तस्याः परस्याप्रमाणत्वात्। प्रमाणत्वे च तयैव बाधः। अनुमानमपि चिन्त्यम्। अतो न धर्मिसिद्धिः। साध्यमपि दुर्निरूपम्। तथा हि—अपरोक्षज्ञानोपजनं स्वसिद्धं चेन्निषिध्यते, सिद्धसाधनता। परसिद्धं चेदप्रसिद्धविशेषणता। यदपि विमतं नापरोक्षं परोक्षमिति वा अतीन्द्रियविषयत्वात् गुरुत्वज्ञानवदित्युक्तम्, तदपि साध्यासम्भवपरास्तम्। ईश्वरज्ञानेन चानैकान्तमिति। मीमांसकपक्षेऽपि

---

मिति। तत्राह—**उक्तं चेति**। असिद्धिद्वयं परिहर्तुं शङ्कते—**त्वयेति**। प्रतिवादिश्रुतस्यापि शब्दस्य वाद्यज्ञातस्य कथं धर्मित्वमित्याशङ्क्य तद्वचनाद्वादिज्ञातस्य धर्मित्वोपपत्तिरित्याह—**त्वदुक्तयेति**। विमतः शब्दश्रवणवान् तत्कार्यवत्त्वान्मद्वदिति ज्ञातस्य वा धर्मित्वमित्याह—**अनुमानेनेति**। यत्तावत्प्रतिवाद्युक्त्यवगतः शब्दो धर्मीति साऽप्रमाणं प्रमाणं वेति विकल्प्याद्ये धर्म्यसिद्धिस्तदवस्थेत्याह—**न तस्या इति**। द्वितीये तु वाक्यमपरोक्षज्ञानमपि जनयतीति प्रमाणभूतप्रतिवाद्युक्त्यन्तरविरोधात्प्रकृतमनुमानमनवकाशमित्याह—**प्रमाणत्वे चेति**। यत्पुनरनुमानसिद्धः शब्दो धर्मीति तत्राह—**अनुमानमपीति**। शब्दश्रवणव्याप्तव्यवस्थितकार्याभावाद्धेतोर्दुर्निरूपत्वादित्यर्थः। असिद्धिद्वयमुपसंहरति—**अतो नेति**। अपरोक्षज्ञानोपजनक्षमत्वाभावसाध्यस्यानिरूपणादपि न प्रतिप्रयोग इत्याह—**साध्यमपीति**। ऐन्द्रियकज्ञानोत्पादकत्वाभावः साध्यते, विषयगतापरोक्ष्यव्यञ्जकज्ञानजनकत्वाभावो वेति विकल्पयति—**तथा हीति**। तत्राद्यमनूद्य दूषयति—**अपरोक्षेति**। तत्त्वमस्यादिवाक्योत्थज्ञानस्येन्द्रियजन्यत्वानभ्युपगमादित्यर्थः। द्वितीयमनूद्य निराकरोति—**परेति**। विषयगतापरोक्ष्यस्य तदभिव्यञ्जकज्ञानस्य तदभिव्यञ्जकत्वस्य च तवासिद्धेस्तन्निषेधाप्रसिद्धेरित्यर्थः। प्रतिप्रयोगान्तरमनुवदपि—**यदपीति**। तत्रापीन्द्रियजन्यज्ञानत्वाभावे तदजन्यज्ञानत्वे वा साध्ये सिद्धसाध्यता। विषयापरोक्ष्यव्यञ्जकज्ञानत्वाभावे तदव्यञ्जकज्ञानत्वे वा साध्ये प्रमितप्रतियोगिकप्रतिषेधपक्षे प्रतियोगिनि त्वन्मते मानाभावात्तन्निषेधासिद्धेरप्रसिद्धविशेषणतेति दूषयति—**तदपीति**। प्रसिद्धमात्रप्रतिपन्नप्रतियोगिकप्रतिषेधपक्षे दोषान्तरमाह—**ईश्व-**

साध्यासम्भवस्तुल्यः। न च परस्य प्रमाणं विना लोकसिद्धमेवानुमानाङ्गम्। अतो न सत्प्रतिपक्षतापीति निष्प्रत्यूहं शाब्दज्ञानापरोक्षत्वानुमानम्। तस्माद्वेदान्तेभ्य एव ब्रह्मयाथात्म्यापरोक्ष्यज्ञानोपजनो, नाभ्यासात्। तस्याप्रमाणत्वादित्यास्थेयम्।

### वेदान्तानां ब्रह्मसाक्षात्कारजनने सहकार्यपेक्षता

ननु वेदान्तेभ्योऽपि न मुक्तिबीजब्रह्मसाक्षात्कारो जायते। श्रुतवेदान्तानामपि पूर्ववत्संसारित्वदर्शनात्। उच्यते–यद्यपि वेदान्तास्तादृग्ज्ञानोत्पादनक्षमाः, तथाप्यधिकारिविशेषं, मननादिसहकारिविशेषं

---

रेति। मीमांसकानामिदमनुमानद्वयमिति पक्षं प्रतिक्षिपति—**मीमांसकेति**। अपरोक्षज्ञानोपजनक्षमत्वाभावादेर्लोकसिद्धस्य, साध्यत्वान्नाप्रसिद्धविशेषणत्वादि दूषणमित्याशङ्क्याह—**न चेति**। प्रतिप्रयोगाभावं निगमयति–**अतो नेति**। दोषान्तराणाभावमभिप्रेत्य प्रकृतमनुमानमुपसंहरति—**इति निष्प्रत्यूहमिति**। ये तु मन्यन्ते शाब्दज्ञानं परोक्षमप्यभ्यस्यमानमपरोक्षीभवन्मोक्षाय क्षममिति तदपि शाब्दज्ञानस्यापरोक्षताया मानसिद्धत्वान्निरस्तमित्याह—**तस्मादिति**। शाब्दापरोक्षज्ञानसहकारिसाधननिर्धारणार्थं तृतीयाध्यायारम्[1]भ इत्युक्तमर्थमुपसंहरति—**इत्यास्थेयमिति**।

वेदान्तानां प्रमाणत्वेऽपि तेषां मोक्षसाधनब्रह्मात्मसाक्षात्कारे नाभ्यासादितिवत् साधनत्वं संभाव्यते। सर्वेषामविशेषेण वेदान्तश्राविणां तत्प्रसङ्गात्। अतो न तदुपायनिरूपणार्थमध्यायारंभः संभवतीति चोदयति—**नन्विति**। शक्तितात्पर्यनिश्चयवतो वेदान्तेभ्यो यथोक्तज्ञानसम्भवात्तदुपायनिरूपणाध्यायारम्भसंभवमाशङ्क्य श्रवणोत्तरकालं संसारोपलब्धिविरोधान्नैवमित्याह–**श्रुतेति**। वेदान्तानां मोक्षोपायज्ञानसाधनत्वं सम्भवतीति समाधत्ते—**उच्यते इति**। किमिति तर्हि सर्वेषामविशेषेण तेभ्यो ब्रह्मात्मसाक्षात्कारो मोक्षहेतुर्न भवति इत्याशक्याह—**तथापीति**। वेदान्तानामधिकारिविशेषापेक्षायां प्रमाणमाह–

---

1. आरंभमुप

चापेक्षन्ते । "वेदान्तविज्ञानसुनिश्चितार्थास्सन्न्यासयोगाद्यतयः शुद्धसत्वाः ।" इत्यधिकारिविशेषश्रवणात् । तथा "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति सहकारिश्रवणाच्च । श्रवणादयश्चावघातवदावर्तनीयाः । तत्त्वमसि तत्त्वमसीत्यसकृदुपदेशात् । तथा शमादयोऽपि सहकारिणः श्रूयन्ते । "शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदि"ति । तस्मान्मन्दा-

---

**वेदान्तेति** । निषिद्धत्यागरूपसन्यासान्नित्यनैमित्तिकानुष्ठानाख्ययोगाच्च शुद्धचेतसो यतयस्त्यक्तसमस्तशिखायज्ञोपवीतादिपरिग्रहा वेदान्तश्रवणजनितापरोक्षज्ञाने[ना]बाधितासन्दिग्धात्मस्वरूपा मुक्तिभाजो भवन्तीत्यधिकारिविशेषणस्य शुद्धसत्वादिरूपस्य श्रवणादविशेषेण न सर्वेषां वेदान्तजन्यमुक्तिबीजज्ञानसिद्धिरित्यर्थः । मननादिसहकारिविशेषापेक्षायां प्रमाणमाह—**तथेति** । "एतावदेवामृतत्व"मिति प्रकृतामृतत्वसाधनात्मदर्शनं द्रष्टव्य इत्यनूद्य तस्योपायापेक्षायां प्रमाणमाह—**तथेति** । श्रोतव्य इति श्रवणमङ्गित्वेन विधाय मन्तव्यो निदिध्यासितव्य इति मनननिदिध्यासने तस्य फलोपकार्यङ्गत्वेन विधीयेते । अतो न श्रवणमात्रेण यथोक्तज्ञानोत्पत्तिरित्यर्थः । श्रवणादीनां सकृदेवानुष्ठानं प्रोक्षणादिवत्तावन्मात्रेण सिध्यत्यर्थनिष्पत्तिरिति चेन्नेत्याह—**श्रवणादयश्चेति** । "आवृत्तिरसकृदुपदेशादि"ति [1]सूत्रात् ।

"अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढीभवेत् ।
शमादिसहितस्तावदभ्यासेत् श्रवणादिकम् ॥"

इति चोक्तेरित्यर्थः । सहकार्यन्तरश्रवणादपि नाविशेण यथोक्तज्ञानोत्पत्तिरित्याह—**तथेति** । बहिरिन्द्रियोपरतिविशिष्टत्वमाचष्टे—**शान्त इति** । उपरतान्तरिन्द्रियत्वमाह—**दान्त इति** । परित्यक्तनित्यादिकर्मत्वमाह—**उपरत इति** । द्वन्द्वसहिष्णुतामाह–**तितिक्षुरिति** । मनसोऽपि बहिर्व्यापाराभावेऽपि प्रत्यगात्मनि तात्पर्येण पर्यवसानराहित्यं वारयति—**समाहित इति** । स्वमहिमप्रतिष्ठमात्मानं द्रष्टुमिच्छतो यथोक्तसाधनान्यनुष्ठेयानीत्याह–**भूत्वेति** ।

---

1. श्रुतात्

धिकारिणः श्रुतवेदान्तस्यापि यथोक्तसाधनाभावे मुक्तिबीजं ज्ञानं न जायत इति युज्यते ॥

### असंयतस्य मनसोऽपरोक्षज्ञानहेतुतानिराकरणम्

यत्तु मतम्—असंयतमेव मनो मत्तकरीव विपरिवृत्य स्वयमेव धैर्यमालम्बते, उपदेशं च प्राप्य मुक्तिबीजं ज्ञानं जनयतीति, तदतिमन्दम्। प्रमाणाभावात् श्रुतिस्मृतिविरोधाच्च। न ह्यसंयतं मनः स्वयं स्थैर्यमालम्बते, ब्रह्मज्ञानस्य हेतुर्भवतीति च प्रमाणगोचरः।

"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्"
मनो दुर्निग्रहं चलम्।"
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते।
असंयतात्मना योगो दुष्प्राप इति मे मतिः॥

---

अधिकारिविशेषस्य सहकारिविशेषस्य च वेदान्तैरपेक्षितत्वे मानसिद्धे फलितमाह—**तस्मादिति**। शमादीनां सहकारित्वमसिद्धमिति मन्वानस्य मतमुपन्यस्यति—**यत्त्विति**। तथापि कथं तस्य सम्यगज्ञानहेतुतेत्यत आह—**उपदेशं चेति**। यथेष्टचेष्टावादिनो मतं निराचष्टे—**तदतिमन्दमिति**। प्रमाणाभावं प्रकटयति—**न हीति**। श्रुतिविरोधं दर्शयति—**नाविरत इति**। निषिद्धकर्मसहितोऽशुद्धबुद्धिरात्मानं तत्त्वतो नाधिगन्तुमर्हतीत्यर्थः। काम्यकर्मत्यागरहितोऽपि नात्मानमवगन्तुमलमित्याह—**नाशान्त इति**। मनोराज्यनिवृत्तिशून्यो नित्यनैमित्तिकतदङ्गत्यागसन्यासविमुखोऽपि नात्मानमीष्टे द्रष्टुमित्याह—**नासमाहित इति**। शान्ते कूटस्थे, प्रतिष्ठितचेतोरहितश्रवणादिपराङ्मुखोऽपि तत्वसाक्षात्कारेण ब्रह्मतत्वं न प्राप्नोतीत्याह—**नाशान्तेति**। विरोधमधिगमयति—**मनो दुर्निग्रहमिति**। मनसः स्वभावतोऽसंयतत्वमर्जुनोक्तं तद्बुध्यनुरोधार्थं भगवानङ्गीकृतवानित्यर्थः। कथं तर्हि तस्य संयमनमित्याशंक्य विषयदोषदर्शनावृत्या तेषु वैतृष्ण्येन चेत्याह—**अभ्यासेनेति**। संयातिवर्जितस्यापि मनसः सम्यक्ज्ञानप्राप्त्युपाय[1]त्वं स्यादित्याशंक्याह—**असंयतेति**।

---

1. उपायस्त्वमुपदेशा

वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ।
श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ॥"

इत्यादिश्रुतिस्मृतिविरोधोऽपि स्पष्टः । तस्माद्यथेष्टचेष्टारसिकस्य मतमुपेक्षणीयम् ।

### कर्मणां चित्तशुद्धिद्वारा ज्ञानहेतुताकथनम्

सन्यासिनोऽपि यथोक्तसाधनवतस्तत्वज्ञानं नोत्पद्यत इति चेन्न । विरोधात् । हेतुसम्पत्तौ हि कार्यं न जायत इति विरुध्यते । कस्यचिन्नित्यादिकर्मणामिहामुत्र वाऽननुष्ठानादपक्वकषायस्य हेत्वभावादेव ज्ञानं न जायत इति न विरुध्यते । कर्मणामपि ह्यन्तःकरणशुध्यादिद्वारेण ज्ञानहेतुता श्रूयते ॥

---

आत्मपदेन मनो गृह्यते । योगः सम्यग्ज्ञानमिति यावत् । वैराग्यादिना वशीकृतचेतसा श्रवणान्यभ्यस्यता तत्त्वमस्यादिवाक्यादेव तत्वज्ञानमवाप्तुं शक्यमित्युक्तव्यतिरेकविरोधिनमर्थद्वयमन्वय[1]मुखेन व्याचष्टे—वश्येति । इतश्चानुपपन्नमलेपकमतमित्याह—श्रद्धावानिति । तत्परः । अपरोक्षज्ञानसाधनश्रवणादिनिष्ठावानिति यावत् । आदिशब्देन "श्रद्धावित्तो भूत्वा" "श्रद्धत्स्व सौम्य" "सन्नियम्येन्द्रियग्राममि"त्यादि श्रुतिस्मृतिवाक्यं गृह्यते । हेतुद्वये सिद्धे फलितमाह—तस्मादिति । शमादिसाधनवतः सर्वकर्मसन्यासिनोऽपि तत्वज्ञानं नोत्पद्यते । तस्यापि संसारित्वोपलम्भात् । अतो न शमादेर्ज्ञानहेतुतेति शङ्कते—सन्यासिनोऽपीति । किं हि सन्यासिनः सर्वस्यैव ज्ञानानुत्पत्तिश्चोद्यते किं वा कस्य चिदेवेति विकल्प्याद्यमपनुदति—नेत्यादिना । द्वितीयमङ्गीकरोति—कस्यचिदिति । साधनानुष्ठानस्यैहिकत्वनियमं निवारयति—इहामुत्र वेति । यदा कदाचिदनुष्ठितनित्यादिकर्मणा शुद्धान्तःकरणस्य सन्यासिनः श्रवणादिद्वारा सम्यग्ज्ञानोत्पत्तिर्नान्यथेत्यर्थः । ननु शमादिवत्कर्मणां ज्ञानहेतुत्वे प्रमाणाभावात्तद्भावाभावयोरकिञ्चित्करत्वमिति । तत्राह-कर्मणामिति । बुद्धिशुद्धिद्वारा कर्मणां ज्ञानहेतुत्वे "येन केनचन यजेतेत्या"दिश्रुतिं विवक्षित्वा

---

1. अन्वय....चष्टे

"कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥" इति ॥

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"ति च । यद्यपि "विविदिषन्ति यज्ञेने"त्यादिश्रुतौ यज्ञादीनां विविदिषाहेतुत्वं श्रूयते । युज्यते च । नान्तःकरणशुद्धि-वैराग्यादिद्वारेण विशिष्टहेतुत्वम् । तथापि फलविषयत्वादिच्छायास्त-द्द्वारा फलसहितहेतुताऽऽश्रीयते । एवं हि विविदिषन्तीति प्रत्ययार्थ-प्राधान्यं न विरुध्यते । तथा प्रकृत्यर्थप्राधान्यं च । अश्वेन जिगमिषन्ती-तिवत् । तस्मात् सर्वकर्मणां सत्वशुद्ध्यादिद्वारा ज्ञानहेतुत्वमेव निश्री-यते । न तु मोक्षे ज्ञानेन सह समुच्चय इति युक्तम् ।

### कर्मणां साक्षान्मोक्षहेतुत्वाशङ्का

ननु "विज्ञाय प्रज्ञां कुर्वीते"ति विध्यवरुद्धा भावना प्रतीयते ।

---

स्मृतिमाह—कषायेति । विविदिषाद्वारा नित्यादीनां ज्ञानहेतुत्वे श्रुतिं दर्शयति—तमेतमिति । वेदानुवचनं नित्यस्वाध्यायः । अनाशकं हितमितमे-ध्याशनम् । विविदिषाहेतुत्वमेवात्र यज्ञादीनां श्रुतं न ज्ञानहेतुत्वमित्या-शङ्कयाह—यद्यपीति । प्रकृत्यर्थस्यान्योपसर्जनत्वात्प्रत्ययार्थस्य प्राधान्यात्ते-नेतरेषामन्वयात् बुद्धिशुध्यादिद्वारा प्रत्ययवाच्येच्छायामेव यज्ञादीनामनु-प्रवेशाच्च न तेषां ज्ञानसाधनतेत्याह—युज्यते चेति । श्रुतियुक्तिभ्यां यज्ञा-दीनामिच्छाहेतुत्वेऽवगतेऽपि वेदनेच्छायाः स्वरूपेणाफलत्वादतदुपायत्वाच्च तत्र यज्ञाद्यपर्यवसानात्तदुपहारद्वारा तद्विषयज्ञाने फलवति तेषामुपायत्वमित्याह—तथापीति । इष्यमाणज्ञानसाधनत्वे यज्ञादीनामाश्रिते प्रकृतिप्रत्ययार्थयोरुभयो-रपि प्राधान्यसिद्धिरिति फलितमाह—एवं हीति । इष्यमाणज्ञानेन यज्ञादि-सम्बन्धे दृष्टान्तमाह—अश्वेनेति । मा भूद्यज्ञादीनां ज्ञानेच्छासम्बन्धः । ज्ञानेन तु तेषां मोक्षे समुच्चयो भविष्यतीत्याशङ्कयोपसंहारव्याजेनोत्तरमाह—तस्मादिति । न खलु फले ज्ञानकर्मणोर्मिथो विरुद्धयोः समुच्चयः सम्भवतीति भावः ।

सम्प्रति समुच्चयवादिनो मतमुपन्यस्यति—नन्विति । विधिशब्देन

**सा च मोक्षब्रह्मज्ञानशमाद्यंशत्रयवती युक्ता, मोक्षादिभ्योऽन्येषां भाव्यताद्यसम्भवात्। एतत्प्रकरणाम्नातानि "विविदिषन्ति यज्ञेने"ति यज्ञादिकर्माणि प्रकरणेनैव ज्ञानसहकारितया मोक्षविनियुक्तानि कथमन्यत्र पर्यवस्येयुः।**

**न च "विविदिषन्ति यज्ञेने"ति वाक्यीयविनियोगविरोधः। यज्ञादीनामिच्छायां ज्ञाने वा साधनत्वेनान्वयायोग्यत्वात्। मोक्षान्वययोग्यता तु यज्ञादीनां दुरितादि[प्रति]बन्धक्षयहेतुत्वात्। अपि च**

---

सम्बन्धज्ञानकरणिका स्तुतिनिन्दार्थवादेतिकर्तव्यताका अर्थभावनाभाव्या शब्दभावनाऽभिधीयते। तद्विषयतया तदवच्छिन्नत्वेनांशत्रयविशिष्टार्थभावनाप्रतीतिस्तथापि कथं कर्मणां मोक्षे विनियोगो [1]भाति किं वार्थभावनायामंशत्रयमिति तदाह—**सा चेति**। ननु स्वर्गदर्शपूर्णमासप्रयाजाद्यंशत्रयवती सा किं न स्यादत आह—**मोक्षादिभ्य इति**। प्रकरणान्तरगतस्य स्वर्गादेर्न प्रकृतभावनाभाव्यत्वादि सम्भवतीति भावः। ननु मोक्षकामो ब्रह्मज्ञानेन शमादीतिकर्तव्यताकेन मोक्षं भावयेदिति भवतु भावनाप्रतीतिः। तथापि कथं कर्मणां मोक्षे विनियोगः, विनियोजकप्रमाणाभावादिति। तत्राह—**एतत्प्रकरणेति**। एतच्छब्देन प्रकृतार्थभावना परामृश्यते।

स्यादेतत्। यज्ञादीनां इच्छायां ज्ञाने वा विविदिषावाक्येन विनियोगात्तस्य प्रकरणाद्बलवत्वात्तद्विरोधे न प्राकरणिकविनियोगसिद्धिरिति तत्राह—**न चेति**। इच्छाया विषयसौन्दर्याधीनत्वात् ज्ञानस्य चाप्रमाणयज्ञाद्यसाध्यत्वात्तत्र साधनत्वेन कर्मणां वाक्यीयविनियोगायोगात्प्राकरणिकविनियोगसिद्धिरित्यभिसन्धिः। ननु मोक्षेऽपि कर्मणां साधनत्वेन नान्वययोग्यत्वं, मोक्षस्य नित्यत्वेन [2]कर्मणामसाधनत्वादिति तत्राह—**मोक्षेति**। यज्ञादीनां विज्ञाने वाक्येन विनियोगावगतिमङ्गीकृत्य तदुपायत्वेनान्वयायोग्यत्वात्तदीयविनियोगासम्भवात्प्रकरणान्मोक्षे विनियोगो दर्शितः। सम्प्रति वाक्यादपि विनियोगस्तत्रैवेत्याह—**अपि चेति**। ननु वेदनकरणकभावनावगतावपि कथं कर्मणां

---

1. भातीत्यर्थः। किं 2. कर्मणां....साध्यत्वात्

विविदिषन्तीति प*ञ्चमलकाराद्वेदनावरुद्धा भावना गम्यते। अतः "प्रज्ञां कुर्वीते"ति प्रतीतां ज्ञानकरणावरुद्धां भावनामनूद्य कारणोपकारिता यज्ञादीनां, "विविदिषन्ति यज्ञेने"ति वोच्यते। तेन वाक्यीयोऽपि कर्मणां मोक्ष एव विनियोगः।

ननु "प्रज्ञां कुर्वीते"ति ज्ञानविधानमिह नोपपद्यते। तथाहि—ब्रह्मज्ञाने विधिविषये ज्ञाते ब्रह्मापि तद्विशेषणीभूतं ज्ञातमेवेति कथं तत्ज्ञानविधानम्। अज्ञातेऽपि ज्ञाने तद्विधानानुपपत्तिः। विधिविषयास्फुरणात्। पुरुषतन्त्रं च ज्ञानमनिष्टगन्धाद्युपलब्धेः। तत्कथं विधेर्गोचरः। अपरोक्षज्ञानसाधनं ज्ञानाभ्यासो विधीयत इति चेन्न। तस्य ज्ञानहेतुताऽक्लृप्तेः। तद्विधानेऽपि न ज्ञानकर्मसमुच्चयसिद्धिः। अभ्यासो

---

भावनाकरणभूतवेदनसहकारित्वेन मोक्षे विनियोगो वाक्यादिष्यते। अत आह—**अतः प्रज्ञामिति**। ज्ञानस्य फलोपकार्यङ्गविधानार्थं "विज्ञाय प्रज्ञा"मित्यत्रावगतभावनाया विविदिषन्तीत्यनुवादादनूद्यमानभावनाकरणज्ञानसहकारितया वाक्येनापि कर्मणां मोक्षे विनियोग इत्यर्थः। ज्ञानविधेरेवासम्भवात् विधीयमानज्ञानसहकारित्वं कर्मणामनुपपन्नमिति सिद्धान्ती चोदयति—**नन्विति**। किं हि विधित्सितं? ब्रह्म [1]ज्ञानं वेति विकल्पयति—**तथा हीति**। आद्ये विधिवैयर्थ्यमित्याह—**ब्रह्मेति**। द्वितीये विधेरशक्यत्वमादर्शयति—**अज्ञातेऽपीति**। पक्षद्वयेऽपि साधारणं दूषणमाह—**पुरुषेति**। यागादिविधेयवैधर्म्यात् ज्ञानस्याविधेयत्वमित्यर्थः। शाब्दे ज्ञाने विध्यभावेऽपि अपरोक्षज्ञानसाधने प्रसंख्याने विधिरिति समुच्चयवादी शङ्कते—**अपरोक्षेति**। प्रसंख्यानस्याप्रमाणत्वात्तस्यापरोक्षज्ञानाहेतुत्वान्नैवमिति सिद्धान्ती ब्रूते—**न तस्येति**। अक्लृप्तेरिति पदच्छेदः। अथ वाभ्यासस्यान्वयव्यतिरेकाभ्यामेवाभ्यस्यमानातिशयहेतुभावक्लृप्तेर्न विध्यपेक्षेत्याह—**न तस्येति**। किं चाभ्यासविध्यभ्युपगमेऽपि समुच्चयवादिनो नाभिमतसिद्धिरित्याह—**तद्विधानेऽपीति**। तत्र हेतुमाह—**अभ्यासो हीति**। अभ्यासस्य मानसकर्मत्वे तस्य कर्मसमुच्चि-

---

* पञ्चमो लकारः लेट् 1. ज्ञानं.... विकल्पयति

हि मानसी क्रिया। एवं च केवलकर्मसाध्यो मोक्ष इति स्यात्। तच्च "न कर्मणा" "नास्त्यकृतः कृतेने"त्यादिभिर्निषिद्धम्। तदेवं समुच्चयो गगनकुसुमायत इति चेत्।

उच्यते—ज्ञानाभ्यासस्य मानसकर्मत्वेऽप्यपरोक्षज्ञानव्यवधानेन मोक्षसाधनत्वान्न कर्मैकसाध्यो मोक्षः स्यात्। अभ्यासस्य तत्वज्ञान-हेतुता रत्नपरीक्षादौ दृष्टचरी। तदेवं विविदिषन्ति यज्ञेनेति यज्ञादिसर्व-कर्मणां ज्ञानोपकारितया मोक्षे प्रवेश इति निरवद्यम्। तदुक्तं तत्व-विद्भिः "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि"ति। तथा श्रुत्यन्तरम्।

---

तस्य मोक्षसाधनत्वे च फलितं दोषं कथयति—एवं चेति। मोक्षस्य स्वर्गा-दिवत्केवलकर्मसाध्यत्वं नानिष्टमिति कर्मिणो वर्णयन्ति। तान्प्रत्याह—तच्चेति। न च साक्षात्कारे विधिः। [1]तस्य फलत्वात्। अतो ज्ञानस्याविधेयत्वान्न तत्सह-कारितया कर्मणामुपयोगो मुक्तावित्याक्षेपमुपसंहरति—तदेवमिति। शाब्द-साक्षात्कारप्रतिपत्योरविधेयत्वेऽपि भावनापरपर्याया प्रतिपत्तिर्विधेयेति समुच्चय-वादी समाधत्ते—उच्यते इति। ननु तस्य मानसकर्मत्वात्ततो विधेयात्कर्म-सहायान्मोक्षविधौ सिद्धे कर्मैकसाध्यत्वं मोक्षस्य श्रुतिविरुद्धमापतेदित्युक्तमत आह—ज्ञानाभ्यासस्येति। यत्पुनरभ्यासस्यामानत्वान्नापरोक्षज्ञानहेतुतेति तत्राह—अभ्यासस्येति। यच्चाभ्यासस्य विषयातिशयहेतुत्वस्यान्वयव्यति-रेकसिद्धेरविधेयत्वमिति। तन्न। अवघातादिवदुपपत्तेरिति मत्वा समुच्चयवादी स्वमतमुपसहरति—तदेवमिति। यज्ञादीनां विज्ञानोपकारितया मोक्षप्रवे[2]श इत्यत्र सूत्रकारसंमतिमाह—तदुक्तमिति। सर्वेष्वग्निहोत्रादिकर्मसु ब्रह्मविद्यायाः स्वोत्पत्तावपेक्षास्ति। "विविदिषन्ति यज्ञेने"त्यादिश्रुतेः। यथाश्वो रथचर्यायां नियुज्यते न लाङ्गलाकर्षणादौ तथा यज्ञादिकर्माण्यपि ज्ञानोत्पत्तावेव शुध्यादि-द्वारा विनियुज्यन्ते, न तत्फले मोक्ष इति विवक्षिताक्षरार्थः। यथा ग्रामादि[3]-प्राप्तौ क्षिप्रगमनार्थमन्योऽपेक्ष्यते तथा यज्ञादीन्यपि ज्ञानसहकारित्वेन मोक्षे-ऽपेक्ष्यन्ते "विविदिषन्ति यज्ञेने"त्यादिश्रुतेरिति समुच्चयवाद्यभिमतोऽर्थः। बृहदारण्यकश्रुतिसूत्राभ्यां ज्ञानकर्मणोस्समुच्चितत्वमभिधायाथर्ववाक्यमपि तयो-

---

1. तस्या 2. प्रवेशस्तव 3. प्राप्तौ ...प्रार्थ

"आत्मरतिक्रियावानेष ब्रह्मविदां वरिष्ठः। तथा "मन्त्रेषु कर्माणि यान्यपश्यन्।" "तान्याचरथ नियतं सत्यकामा" इति कर्मणां मोक्षसाधनतामाह। स्मरति च भगवान् याज्ञवल्क्यः—

ज्ञानं प्रधानं न तु कर्महीनं
कर्म प्रधानं न तु तद्विहीनम्।
तस्मादुभाभ्यां भवतीह सिद्धिः
न ह्येकपक्षो विहगः प्रयाति॥ इति।

तथा च मनुः—

"तपो विद्या च विप्रस्य निश्रेयसकरं परमि"ति।

तथा—"यथान्नं मधुसंयुक्त" मित्यादीनि च बहूनि स्मृत्यन्तराणि समुच्चयमेवोद्घोषयन्ति।

ननु मनुरेव कर्मत्यागमाह—

"यथोक्तान्यपि कर्माणि परिहाप्य द्विजोत्तमः।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवानि"ति॥

---

स्समुच्चयप्रापकमस्तीत्याह—तथा चेति। 'मन्त्रेषु कर्माणी'त्यादिवाक्ये मोक्षकामनया कर्मणामेवानुष्ठेयत्वश्रवणान्न तस्य समुच्चयपरतेत्याशङ्क्य तदर्थनिर्णयार्थं स्मृतिमुदाहरति—स्मरति चेति। ज्ञानोपसर्जनत्वे कर्मणः तदुपसर्जनत्वे च ज्ञानस्य कथं समप्राधान्यमित्याशङ्क्य स्मृत्यन्तरं दर्शयति—तथा च मनुरिति। षड्यागवत् ज्ञानकर्मणोः समुच्चयः समप्रधानभावेनेत्यर्थः। एकरूपे फले किं साधनद्वयेनेति तत्राह—तप इति। तर्हि फलविभागवचनान्न समुच्चयस्तत्राह—तथेति। एकस्मिन्नेव मोक्षे प्रकारभेदेन ज्ञानकर्मसमुच्चयः समुच्चयवाक्यप्रमाणकोऽप्रत्याख्येय इत्यर्थः।

सम्प्रति सिद्धान्ती मानवमेव वचनमनुसृत्य शङ्कते—ननु मनुरिति। काम्यप्रतिषिद्धवन्नित्यनैमित्तिकान्यपि पूर्वोक्तबन्धहेतुत्वलक्षणं रूपमतिक्रम्यावस्थितानि परित्यज्यात्मज्ञानसाधने श्रवणादौ तदुपकरणे शमादौ प्रणवाभ्यासे [1]च

---

1. यदि वा न प्रमत्त

वेदविदामाचार्योऽपि कर्मत्यागस्य स्मरति ।

"त्यज धर्ममधर्मञ्च उमे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज । इति ॥

न । पूर्वापरविरोधप्रसङ्गात् । तथाहि—

"नि*ष्कामं ज्ञानपूर्वञ्च निवृत्तमिह चोच्यत ॥"

इति निवृत्ताख्यं कर्म विभज्याह—

"नि†वृत्तं सेवमानस्तु ब्रह्माप्येति सनातनम् ।
अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चापि कर्मभिः ॥
तपसश्चरणैश्चोग्रैः साधयन्तीह तत्परम् ॥"

इत्यादिपूर्वापरविरोधो मनोः कर्मत्यागवादित्वे व्यक्तः स्यात् । परिहाप्येति च कर्माणि फलं त्याजयित्वेति णिचोऽर्थः । अन्यथा

---

यत्नवानप्रमत्तो मुमुक्षुः स्यादिति वचनार्थः । फलत्यागमात्रमत्र वक्ष्यते, न कर्मणां स्वरूपेण त्यागः । अन्यथा परिहाप्येति प्रयोगायोगादित्याशङ्कय व्यासवचनविरोधान्नैवमित्याह—**वेदविदामिति** । कर्मत्यागस्येति कर्मणि षष्ठी । धर्माधर्मतद्धेतुसत्यानृतत्यागहेतोर्विवेकप्रत्ययस्य भेदविषयत्वात्त्याज्यत्वं दर्शयति—**येनेति** । न तावन्मनुवाक्यं कर्मत्यागसाधकमित्याह—**न पूर्वेति** । तमेव प्रसङ्गं प्रकटयति—**तथा हीति** । द्विविधं हि कर्म प्रवृत्तं निवृत्तं च । तत्र प्रवृत्ते ज्ञानरहिते कामसहाये च प्रवृत्तः संसरति । निवृत्तमपि द्विविधं निष्कामं ज्ञानपूर्वञ्च । तदुभयमप्यनुतिष्ठन्ब्रह्म प्राप्नोतीत्याह—**निष्काममित्यादिना** । निवृत्तमनुतिष्ठतो ब्रह्मप्राप्तिं व्यक्तीकरोति—**अहिंसयेति** । "यद्वै किं च मनुरवदत्तद्भेषजमि"ति श्रुतेः मानवं वचनमनर्थकत्वेन न हातव्यमित्याशङ्कय प्रयोजकव्यापाराभिधायिप्रत्ययसामर्थ्यात्फलत्यागविषयत्वेन मनुवाक्यस्यार्थवत्त्वमित्याह—[1]**परिहाप्येति चेति** । नन्वस्मिन्पक्षे साध्याहारयोजनापत्तेः स्वार्थेऽपि णिचः सम्भवात्कर्मत्यागविषयत्वमेव वाक्यस्येति । तत्राह—

---

* इह वामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते । इति पूर्वार्धम् । † प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम् । इति पूर्वार्धम् । 1. परिभाव्येति

णिचो वैयर्थ्यप्रसङ्गात् । "त्यज धर्ममि"त्यस्य च 'त्यज धर्मांस्तु काम्यादीनि'त्याद्युत्तरश्लोकविरोधः । यानि चान्यानि कर्मनिन्दावचनानि तानि केवलनिन्दापराणीति गमयितव्यम् ।

अपि च "ततो भूय इव ते तमो य उ विद्यायां रता" इति केवलविद्यायां कर्मवन्निन्दाश्रवणात् , तयोः पृथग्विधानाच्च समुच्चय एव शब्दतात्पर्यगोचरः । न च लाङ्गलभोजनयोरिव जीवने ज्ञानकर्मणोर्मोक्षे समुच्चय इति वाच्यम् । कर्मणां परम्परया विज्ञानजनकत्वे मानाभावात् । केवलज्ञानस्य च मोक्षसाधनताया निषिद्धत्वात् । कर्म-

---

अन्यथेति । तद्व्यतिरेकेणापि तदर्थलाभादध्याहारस्य चानुपपत्तिलभ्यस्यादोषत्वान्न कर्मत्यागविषयं मनुवचनमिति भावः । यत्तु वेदव्यासवचनमनुसृत्य कर्मत्यागाङ्गीकरणं तद् दूषयति—त्यजेति । वैयासिकमपि वाक्यं वाक्यशेषात्फलत्यागविषयं न कर्मत्यागं गोचरयतीत्यर्थः । स्यादेतत् । "नास्त्यकृतः कृतेन" "न कर्मणा न प्रजया धनेन" "प्लवा ह्येते अदृढा यज्ञरूपाः" "अग्निमुग्धो हैव धूमान्तः स्वं लोकं न प्रतिप्रजानाती"त्यादिना कर्मणां निन्दितत्वान्न तेषां मोक्षसाधनतेति । तत्र समुच्चयवचनवशान्निन्दावचनानामसमुच्चितकर्मविषयत्वमित्याह—यानि चेति । इतश्च फले समुच्चयो ज्ञानकर्मणोरित्याह—अपि चेति । "अन्धं तमः प्रविशन्ती"ति पूर्वार्धेन अविद्यापदवेदनीयं केवलं कर्म निन्दित्वा "ततो भूय" इत्युत्तरार्धेन केवलाविद्या निन्द्यते । न च निन्दितत्वादुभयोरपि त्यागः । उभयविधिविरोधात् । न च तयोर्विकल्पोऽवकल्पते "विद्यां चाविद्यां चे"त्यादिसमुच्चयविधिविरोधात् । अतः समुच्चये शब्दस्य तात्पर्यमित्याह—तत इत्यादिना । ननु ज्ञानकर्मणोरुपायोपेयभावेन साहित्यविधानादुक्तानि वाक्यानि पारम्पर्यसमुच्चयपराणीत्याशङ्क्याह—न चेति । विविदिषावाक्यस्य समुच्चयपरतया व्याख्यातत्वा 'द्येन के[1]नचने'त्यस्य कर्मस्तुतिपरत्वात्'कषायपक्तिरि'त्यादीनां च श्रुत्यनुसारेण नेतव्यत्वादित्यभिप्रेत्याह—कर्मणामिति । इतश्च कर्मणां साक्षादेव मोक्षान्वयो न ज्ञानद्वारेत्याह—केवलेति । ननु कर्मजन्यत्वान्मोक्षस्य स्वर्गादिवदनित्यत्वं ?।

---

1. येनकेन च...स्य

**जस्यापि मोक्षस्य नित्यत्वं बन्धप्रध्वंसत्वादविरुद्धम् । तस्मात्कर्मणां श्रुतिस्मृतीतिहासपुराणादिषु निष्प्रत्यूहं मोक्षसाधनतावसीयते । एतेन सर्वकर्मसन्न्यासलक्षणं पारिव्राज्यं व्याख्यातम् । न च तत्र किञ्चित्प्रमाणमस्तीत्येषा दिक् ।**

कर्मणां साक्षान्मोक्षहेतुतानिराकरणम्

**अत्राभिधीयते—विविदिषन्ति यज्ञेनेति यज्ञादिकर्मणां करणभावस्तृयाश्रुत्या बोध्यते । स च सत्वशुद्धिद्वारेण ज्ञानोत्पत्तौ सङ्गच्छते न पुनर्मोक्षे । तस्यानुत्पाद्यत्वात् । उत्पाद्यत्वे चानित्यत्वप्रसङ्गात् । न च कर्मणा ग्रामवत्प्राप्यो मोक्षः, मुमुक्षोरभिन्नब्रह्मस्वरूप-**

---

नेत्याह—**कर्मजस्यापीति** । समुच्चयपक्षमुपसंहरति—**तस्मादिति** । न्यायागमाभ्यां समुच्चयसिद्धौ सर्वकर्मतदङ्गत्या[1]गवचनप्रामाण्यं मोक्षसाधनज्ञानसहका[2]रिबोधकत्वेन परोदीरितं निरस्तमित्याह—**एतेनेति** । अतिदेशसूचितमधिकं दर्शयति—**न चेति** । 'सशिखं वपनमि'त्यादिवाक्यमत्र मानमित्याशङ्क्याह—**इत्येषेति** । शिखात्यागस्य छन्दोगब्रह्मचारिविषयत्वाद्यज्ञोपवीतत्यागस्य पुरातनपरित्यागरूपत्वाद्यावज्जीवादिश्रुतिविरोधाच्च सन्यासविधीनां काम्यादित्यागपरत्वान्नास्ति नित्यादिकर्मत्यागे मानमित्यभिप्रायः ।

सिद्धान्तमारभते—**अत्रेति** । यत्तु प्रकरणवाक्याभ्यां कर्मणामन्वयो मुक्ताविति तत्र श्रुत्या परिहरति —**विविदिषन्तीति** । ननु तृतीयाश्रुतिरपि मोक्षे यज्ञादीनां करणभावावभासिका किं न स्यात्तत्राह—**स चेति** । व्यावर्त्यं दर्शयति—**न पुनरिति** । यदा पुनर्मुक्तौ कर्मणां करणभावः तदा सा कर्मभिः उत्पाद्या वा प्राप्या वा विकार्या वा संस्कार्या वेति वक्तव्यम् । नाद्य इत्याह—**तस्येति** । न द्वितीय इत्याह—**न चेति** । न तृतीय इत्याह—**नापीति** । चतुर्थमुत्थापयति—**अस्त्विति** । गुणाधानं दोषापगमो वा संस्कारो मोक्षे न सम्भवति । तस्य गुणदोषास्पृष्टात्ममात्रत्वादित्याह—**न निरञ्जनत्वादिति** । श्रुतेर्बलवत्वान्मोक्षस्य चतुर्विधक्रियाफलत्वाभावाच्च न प्रकरणादिना क्रियानुप्रवेशो मुक्तावित्युपसंहरति—**अतो नेति** । संस्कारपक्षमाश्रित्य शङ्कते—**नन्विति** । अङ्कुरस्यातिशयशालित्व लौहित्यभाक्त्वं विवक्षितम् । फलस्य वैशिष्ट्यमपि लोहि-

---

1. त्यागरूप 2. सहकारित्वेन

त्वात् । नापि विकार्यो निरवयवत्वात् । अस्तु संस्कार्यो मोक्ष इति चेन्न । निरञ्जनत्वात् । अतो न कर्मणां प्रकरणाम्नानाद्वाक्याद्वा ज्ञानोपकारितया मोक्षान्वयः ।

ननु यथा लाक्षारससिक्तात् बीजादङ्कुरोऽतिशयशाली जायते। त[1]स्माच्च विशिष्टफलोदयः । तथा कर्मोपरञ्जितान्तःकरणात् सातिशयज्ञानोपजनः। ततश्च कर्मजन्यातिशयाद्दुरितादिप्रतिबन्धप्रध्वंसे सातिशयज्ञानात् भ्रमतत्संस्कारनिवृत्तौ च जीवस्वरूपाभिन्नब्रह्माविर्भावो मोक्षः। अतो न काचन दोषकलेति चेदुच्यते—न तावत्कालान्तरकालीना कर्मभ्यो दुरितनिवृत्तिः प्रमाणाभावात् । कर्मभिः क्षाळितान्तःकरणस्यैव तु सूक्ष्मात्मतत्त्वज्ञानं युज्यते । तथा च शास्त्रम्—

"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ॥" इति ॥

तथा—"कषाये कर्मभिः पक्वे ततो ज्ञान प्रवर्तते ॥" इत्यादि ।

सति चैवं कर्मभ्यो ज्ञानं ज्ञानान्मोक्ष इति क्रमसमुच्चय एव

---

तिमसाहित्यम् । अन्तःकरणशब्देन ज्ञानसाधनमुच्यते। कर्मणां ज्ञानसाधनानां चानुष्ठानाज्जायते संस्कारः, सध्रीचीनं विज्ञानं च। तयोः संस्कारविज्ञानयोर्मुक्तावनुप्रवेशप्रकारं प्रदर्शयति— **ततश्चेति** । मोक्षस्य निरञ्जनात्ममात्रत्वेऽपि दोषस्य दुरितादेः सम्भवात्तन्निरासस्य कर्मायत्तत्वात् ज्ञानाधीनत्वाच्च स्वरूपाभिव्यक्तेर्द्वयोर्मोक्षे समुच्चये तस्यानित्यत्वादिदोषाप्रसक्तिरिति फलितमाह—**अतो नेति** । विद्ययैवाविद्यानिवृत्युपपत्तावपि कर्मभ्यो दुरितनिवृत्तिरुच्यमाना ज्ञानात्पराचीना प्राचीना वेति विकल्पयति—**उच्यत इति** । नाद्य इत्याह—**न तावदिति** । दुरितनिवृत्तिमन्तरेण ज्ञानोत्पत्तेरनुपपत्तेरस्य पक्षस्यैवानुत्थानमित्यभिप्रायः । द्वितीयमङ्गीकरोति—**कर्मभिरिति** । अन्यथा श्रुतवाक्यानामविशेषेण तत्त्वज्ञानोदयः स्यादिति भावः । न केवलं यौक्तिकमेतत् शास्त्रीयमपीत्याह—**तथा चेति** । आदिशब्देन "योगिनः कर्म कुर्वन्ती"त्यादि गृह्यते । भवतु कर्मभिश्शुद्धबुद्धेर्ज्ञानं, किं तावता तव फलतीति । तत्राह—**सति चेति** । कर्मणां शुध्यादिद्वारा ज्ञानहेतूनां ज्ञानात्पूर्वभावित्वादिति भावः।

---

1. तस्याश्च

युज्यते । तथा च स्मरणम्—"धर्मात्सुखं च [ज्ञानं च] ज्ञानान्मोक्षोऽधिगम्यत" इति । अतो यज्ञादीनां ज्ञानोत्पत्तावेव हेतुभावः श्रूयते "विविदिषन्ति यज्ञेने"ति । एतदेवोक्तं तत्त्वविद्भिः—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि"ति । यदपि च "प्रज्ञां कुर्वीते"त्यत्र ज्ञानाभ्यासस्य ब्रह्मसाक्षात्कारसाधनतया विधिसमर्थनं, तदतिमन्दम् । अभ्यासस्याप्रमाणत्वात् साक्षात्कारसाधनताऽसम्भवात् । न हि भ्रमनिदानाज्ञानानिवृत्तावेकश्चन्द्र इति सहस्रशोऽभ्यस्यमानं चन्द्रतत्त्वमपरोक्षं दृश्यते । रत्नतत्त्वापरोक्ष्येऽपि नाभ्यासः करणम् । किन्तु लक्षणज्ञानसंस्कारसहितः संप्रयोगः । सूक्ष्मलक्षणेक्षणार्थमेव च प्रमाणे पुनः पुनरालोचनमुपपद्यते । यः पुनर्व्यवहितपुत्रादि चिन्तयतस्तत्साक्षात्कारस्स स्वप्नवत्संप्रयोगासम्भवात् भ्रम एव न च तादृगात्मस्वरूपब्रह्मापरोक्ष्यं मोक्षनिदानम् । ब्रह्मतत्त्वसंवेदनस्यैव मुक्तिहेतोरुपनिषदादिप्रसिद्धत्वात् । तस्मादापरोक्ष्यस्याभ्यासासाध्यत्वात्प्रागुक्तनीत्या च ज्ञाने विधि-

---

क्रमसमुच्चये प्रमाणमाह—तथा चेति । तृतीयाश्रुत्यर्थमुपसंहरति—अत इति । कर्मणां साक्षान्मोक्षेऽन्वयासम्भवादिति हेत्वर्थः । यत्तु सूत्रं कर्मणां साक्षान्मोक्षस्य प्रवेशे प्रमाणमिति तत्राह—एतदेवेति । यज्ञादीनां तृतीयाश्रुत्यवगतकरणत्वबलान्मुक्तिसाधनेऽन्वयो न मुक्तावित्युक्तम् । इदानीं विधेयाभावाच्च तद्द्वारा नान्वयो मोक्षे तेषामिति वक्तुमुक्तमनुभाष्य दूषयति—यदपीत्यादिना । अभ्यासस्य तत्त्वसाक्षात्कारकारणत्वासम्भवं साधयति—न हीति । एकश्चन्द्र इति चन्द्रतत्त्वं परोक्षं सहस्रशोऽभ्यस्यमानमपि नापरोक्षं भवदुपलभ्यते । तथा च भ्रमनिदानाज्ञानानिवृत्तौ भ्रमतत्संस्कारयोरप्यनिवृत्तेरकिञ्चित्करत्वमभ्यासस्येत्यर्थः । यत्तु रत्नपरीक्षायामभ्यासस्य तत्त्वापरोक्ष्ये हेतुत्वमुक्तं तद् दूषयति—रत्नतत्त्वेति । किमर्थं तर्हि अभ्यासः । तदाह—सूक्ष्मेति । ननु व्यवहितस्य पुत्रादेः साक्षात्कारो ध्यानानुरोधादुपलभ्यते । तत्राह—यः पुनरिति । अस्तु तर्हि ब्रह्मात्मन्यपि भ्रान्तिरूपमभ्यासनिबन्धनमापरोक्ष्यं नेत्याह—न चेति । उपनिषदादीत्यादिपदेन विद्वदनुभवस्मृतीतिहासादेरुपादानम् । अभ्यासस्याकिञ्चित्करत्वान्न तत्र विधिरित्युपसंहरति—तस्मादिति ।

विषयेऽज्ञाते च "प्रज्ञां कुर्वीते"ति ज्ञानविधानायोगान्न प्रकरणेन वाक्येन वा ज्ञानोपकारितया कर्मणां समर्पणं मोक्षे इति सिद्धम् ।

यदपि श्रुत्यन्तरम्—आत्मरतिक्रियावानि"ति, तदप्यात्मरतिरेव क्रिया तद्वानात्मरतिक्रियावानिति समस्तं श्रूयमाणमनुगुणमेवास्माकं, क्रियान्तरव्यावृत्तिपरत्वात् । आत्मनि रतिर्यस्य स च क्रियावान् । यद्वा रतिश्च क्रिया च तदुभयवानिति समास इति चेन्न । कल्पनागौरवात् । तच्चानिष्टं सम्भवति गत्यन्तरे । तस्माल्लाघवान्निषादस्थपतिवदाद्य एव समासो न्याय्यः ।

यत्तु "तान्याचरथ नियतं सत्यकामा" इति, तत्र सत्यशब्देन

---

अस्तु तर्हि शाब्दे ज्ञाने विधिर्नेत्याह—**प्रागिति** । विधेयाभावाद्विध्यभावे फलितमाह—**न प्रकरणेनेति** । यत्तु श्रुत्यन्तरं समुच्चयसाधकमिति, तदनूद्यापनुदति—**यदपीत्यादिना** । अनुगुणत्वे हेतुमाह—**क्रियान्तरेति** । आत्मनिष्ठातिरिक्तक्रियानिवृत्तिपरत्वाद्वाक्यस्यासमुच्चयपक्षानुकूलतेत्यर्थः । समासान्तरस्वीकारादेतद्वाक्यं समुच्चयानुगुणमेवेति शङ्कते—**आत्मनीति** । भेदानपेक्षसमाससम्भवे तदपेक्षसमासस्वीकारो गौरवादनुचित इत्याह—**न कल्पनेति** । कल्पकसद्भावे कल्पनागौरवमपि न दोषावहमित्याशङ्क्याह—**तच्चेति** । आत्मरतिरेव क्रिया तद्वानिति समासस्य स्वीकर्तव्यत्वं निगमयति—**तस्मादिति** । **निषादस्थपतिवदिति** । स्थपतिर्निषादः शब्दसामर्थ्यात् । "एतया रौद्रेष्ट्या निषादस्थपतिं याजये"दित्यत्र निषादस्थपतिस्त्रैवर्णिकान्यतमो वा ततोऽन्यो वेति संशये, विद्यावत्त्वेन सामर्थ्यान्निषादानां स्थपतिः स्वामीति शब्दवृत्तिसम्भवात्त्रैवर्णिकान्यतम इति प्राप्तावुच्यते । निषाद एव स्थपतिः स्यात् । कर्मधारयसमासे निषादशब्दस्य श्रौतार्थलाभेन शब्दसामर्थ्यात्कल्पनालाघवाच्चेति स्थितं प्रथमे तन्त्रे । तथेहापि कर्मधारयसमासः स्वीकारमर्हतीति भावः । वाक्यान्तरस्य समुच्चयपरत्वं परिगीतं पराकरोति—**यत्त्वित्यादिना** । "सत्यं ज्ञान"मितिवदत्रापि सत्यशब्देन ब्रह्मैवोच्यते । तत्रैव तस्य मुख्यत्वादिति चेन्नेत्याह—

यथाभूतं कर्मफलमेवोच्यते, न पुनर्ब्रह्म कर्मलभ्यम् । पूर्वोक्तापरविद्याविषयस्य कर्त्रादिसाधनक्रियाफलभेदस्य दर्शयितुं प्रक्रान्तत्वात् । "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।" "प्लवा ह्येते अदृढा यज्ञरूपा" इत्यादिवक्ष्यमाणेन विरोधप्रसङ्गाच्च । एवं श्रुत्यन्तरेष्वपि समुच्चयासम्भवो यथायोगमूहनीयः ।

यदपि 'ज्ञानं प्रधानमि'त्यादिस्मरणं, तदेकप्रयोजनतया व्यवहिताव्यवहितसाधनयोः समुच्चयगोचरम् । ज्ञानकर्मणोर्लाङ्गलभोजनयोरिव स्वविषये प्राधान्योपपत्तेः । न हि ज्ञानोपसर्जनत्वे कर्मणां प्राधान्यस्मृतिरुपपद्यते । अस्तु तर्हि षड्यागवत्तयोः प्राधान्यमिति चेन्मैवम् । विरोधिनोः समुच्चयासम्भवात् । ज्ञानकर्मणोर्विरोधसिद्धिश्च—"तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते ।" इति, "यथा पुष्करपलाश आपो न श्लिष्यन्त [एवमेवं-

---

**न पुनरिति** । तस्य नित्यत्वादिति शेषः । तथापि कथं कर्मफलस्य सत्यशब्दवाच्यतेत्याशङ्क्य पूर्वापरपरामर्शवशादित्याह—**पूर्वोक्तेति** । द्वे हि परापरविद्ये प्रकृते । तत्र परविद्यासमधिगम्यमक्षरमुपक्षिप्तम् । अपरविद्याविषयस्तु क्रियाकारकफलात्मको द्वैतप्रपञ्चः "तत्र अपरे"त्यादिना प्रागुक्तः । तमेव प्रपञ्चयितुं "मन्त्रेषु कर्माणी"त्यादि प्रवृत्तम् । अतोऽत्र सत्यशब्देन कर्मफलमेवाभिलप्यते । यदि च सत्यशब्देन ब्रह्म गृहीत्वा तत्प्रेप्सया कर्माण्यत्र विधित्स्यन्ते तदा कर्मणां मुक्तिसाधनत्वनिषेधो निन्दा च वाक्यशेषगता विरुध्येतेत्यभिसन्धिः । यानि पुन'र्विद्यां चाविद्यां चे'त्यादिश्रुत्यन्तराणि समुच्चयपराणि परिगीयन्ते तेषामपि न समुच्चयपरत्वमित्याह—**एवमिति** । मोक्षस्य चतुर्विधक्रियाफलत्वाभावे सिद्धे सतीति यावत् । सम्प्रति याज्ञवल्कीयवाक्यस्य गतिमुद्गिरति—**यदपीति** । ज्ञानकर्मणोर्विरोधे छान्दोग्योपनिषद्वाक्यमपि प्रमाणमित्याह—**यथेति** । ज्ञानकर्मणोर्निवर्त्यनिवर्तकभावेन विरुद्धत्वे सिद्धे फलितमाह—**एवमिति** । कथं तर्हि व्यवहितसाधने कर्मणि प्राधान्यस्मृतिरित्या-

विदि पापं कर्म न श्लिष्यत"] इति च ज्ञानात् कर्मणां दाहाश्लेषश्रुतेः। तथा तत्वविदां सूत्रम्—"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादि"ति। अनिष्टकर्मणामेव दाहाश्लेषावुच्येते। [1]पाप्पशब्दनिर्देशान्न पुनः पुण्यस्येति चेत् न। पुण्यस्यापि संसारफलस्य तत्वविदोऽनिष्टस्य [2]पाप्मशब्देन निर्दिष्टत्वात्। कथमन्यथा "सुहृदः साधुकृत्यां, द्विषन्तः पापकृत्या" मित्यादौ विदुषोऽविशेषेण पुण्यपापयोर्विनियोगः श्रुतोऽवकल्पते।

तथा चौपनिषदं सूत्रं विद्वत्पुण्यपापयोर्दाहमाह—"अनारब्धकार्ये एव तु पूर्वे तदवधेरि"ति। यथा चाह भगवान्विश्वात्मा—"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा।" इति।

एवं विरोधित्वात् ज्ञानकर्मणोः न षडयागवत् प्राधान्येन समुच्चयः। तस्मादैहिकैरामुष्मिकैर्वा कर्मभिरशोधितान्तःकरणस्य जायमानमपि न बन्धप्रध्वंसक्षममिति कर्मणां व्यवधानेन मोक्षसाधनानामपि प्राधान्यस्मरणम्। एवं [3]स्मृत्यन्तराण्यपि कर्मणां मोक्षहेतुत्वपराणि गमयितव्यानि। कथमन्यथा "नान्यः पन्था विद्यतेऽयनाय"।

"कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः॥"

"यथोक्तान्यपि कर्माणि परिहाप्ये"त्यादिश्रुतिस्मृतीतिहासपुराणवचनान्युपपद्येरन्। परिहाप्येति च णिचः स्वार्थे व्युत्पत्तिः।

---

शङ्क्य उपसंहारव्याजेनोत्तरमाह—**तस्मादिति**। मनुपराशरादिवचनानां समुच्चयपराणां कर्मणां व्यवहितसाधनत्वपक्षे का गतिरित्याशङ्क्याह—**एवं स्मृत्यन्तराणीति**। तान्यपि क्रमसमुच्चयपराणीति भावः। ननु साक्षादेवान्वयो मोक्षे तेषां किं न स्यादित्याशङ्क्य श्रुतिस्मृतिविरोधादित्याह—**कथमिति**। यत्तु प्रयोजकव्यापारवाचिनो णिचः सामर्थ्यात्काम्यकर्मत्यागमात्रं मनुना विवक्षितमिति तत्राह—**परिहाप्येति**। णिचः स्वार्थे प्रयोगे दृष्टान्तमाह—

---

1. अघशब्द 2. वा चशब्देन 3. वृत्त्यन्तराणि

यथा "रामो राज्यमकारयदि"ति। अन्यथा फलं परिहाप्य कर्त-व्यानीति च साध्याध्याहारप्रसङ्गात्। न चामूनि वाक्यानि केवलकर्म-त्यागविषयतया समुच्चयपराणीति वाच्यम्। कर्मणां साक्षान्मो-क्षसाधनभावस्यापरोक्षज्ञानेन सहभावस्य च पराकृतत्वात्। एतेन कर्मवज्ज्ञानस्यापि निन्दाश्रवणादुभयोर्विधानाच्च विकल्पस्य च जघन्यत्वात् समुच्चय एव शास्त्रार्थ इत्यपास्तम्। केवलविद्यानिन्दापि केवलदेवतादर्शनविषया द्रष्टव्या। तस्यैव कर्मणा समुच्चिचीपितत्वात्। तत्वविद्यासमुच्चयासम्भवस्यानेकधोक्तत्वात्। देवतादर्शनमप्रस्तुतं कथं निन्द्यत इति चेन्न, ब्रह्मप्रकरणात् प्रसक्तत्वात्। ब्रह्मण एव हिरण्यगर्भादिरूपेण दर्शनं पुरुषार्थ इति तत्र तत्र प्रसिद्धम्।

---

यथेति। दृष्टान्ते व्यापारद्वयादृष्टेर्दार्ष्टान्तिके [1]तद्दर्शनात् णिचोऽवैयर्थ्यमित्या-शङ्क्याह—अन्यथेति। यत्तु कर्मत्यागवचनानां समुच्चयवचनानुसारेण केवल-कर्मविषयतया समुच्चयानुगुणतेति तत्राह—न चेति। ज्ञानकर्मणोर्विरोधि-तया सहभावनिरासेन चोद्यान्तरमपि निरस्तमित्याह—एतेनेति। अपास्त-मित्युत्तरत्र सम्बन्धः। तदेवापास्यमनुद्रवति—कर्मवदिति। अस्तु तर्हि ब्रह्महननसुरापानवदुभयोरपुरुषार्थतया परिहरणं, नेत्याह—उभयोरिति। तर्हि व्रीहियववत्कर्मणा वा ज्ञानेन वा मुक्तिरिति विकल्पो भविष्यति। तत्राह—विकल्पस्येति।

"एवमेषोऽष्टदोषोऽपि स्यात् व्रीहियववाक्ययोः।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते॥"

"इति न्यायादित्यर्थः। यत्तु केवलविद्याया" स्ततो भूय इवे"त्यादिना निन्दनान्न मोक्षसाधनतेति तत्राह—केवलेति। "सा विद्या या विमुक्तये" इत्युक्तत्वात्त-त्वविद्यैव विद्यापदवेद्येति चेन्नेत्याह—तत्वविद्येति। अप्रसक्तनिन्दा न युक्तेति शङ्कते—देवतेति। अप्रसक्तिरसिद्धेति परिहरति—नेति। तर्हि ब्रह्मदर्श-नस्यैव प्रसक्तिर्न देवतादर्शनस्येत्याशङ्क्याह—ब्रह्मण इति। अतो देवतादर्श-नस्य प्रसक्तत्वात्कर्मणां केवलानां केवलस्य तस्य च निन्दा युक्तेति निगमयति—

---

1. तदादाविणिचो

तत्र ब्रह्मप्रकरणे प्रसक्तं केवलं निन्द्यते समुच्चयार्थम् । तदेवं न कर्मणां साक्षान्मोक्षान्वयः प्रमाणतो न्यायतो वा सम्भवी । किन्तु ज्ञानोत्पत्तिद्वारेण मोक्षप्रयोजनतैव तेषां शाब्दी, युज्यते च । अतः केवलं ज्ञानं मोक्षनिदानम् । तथाहुराचार्यास्तन्त्रटीकायाम्—तयोर्भिन्नाधिकारत्वात् भिन्नमार्गत्वाच्च बाधविकल्पसमुच्चया नाशङ्कनीया " इति । एतेन सर्वकर्मतदङ्गत्यागरूपं पारिव्राज्यं श्रुतमुपपन्नं भवति ॥

### परमहंसाश्रमाक्षेपः

ननु यद्यपि समस्ताग्निहोत्रादिवैदिककर्मतदङ्गपत्न्यादित्याग

---

तत्रेति । कर्मणां साक्षान्मोक्षसाधनत्वाभावमुपसंहरति—तदेवमिति । तर्हि निवृत्तकामानां मुमुक्षूणामनर्थकं कर्मेत्यायातं, नेत्याह—किं त्विति । क्रमसमुच्चयस्य पूर्वोक्तोपपत्तिमत्त्वं सूचयति—युज्यते चेति । व्यवधानेन समुच्चये फलितमाह—अत इति । ज्ञानकर्मणोः साक्षादसमुच्चये भट्टाचार्यवचनं प्रमाणयति—तथेति । "न च तेषां भिन्नप्रयोजनत्वात् भिन्नमार्गत्वाच्च बाधविकल्पपरस्पराङ्गाङ्गिभावाः संभवन्ती"ति तदीयं ग्रन्थमर्थतोऽनुवदति—तयोरिति । ज्ञानकर्मणोरिति यावत् । भिन्नाधिकारित्वं भिन्नप्रयोजनत्वं, भिन्नमार्गत्वं भिन्नाधिकारिविषयत्वम् । कर्माणि हि विषयेन्द्रियजन्यसुखकामुकस्य विधीयन्ते । ज्ञानं तु ततो विमुखस्य । तेषु गृहस्थेन चाहवनीयादिसाधनवता तानि कर्माणि कर्तव्यानि । परिव्राजकेन च यमनियमादियुक्तेन ज्ञानम् । अतोऽधिकारिफलभेदान्न बाधविकल्पसमुच्चयाः शङ्कनीयाः । न चात्र काम्यकर्मणामेव ज्ञानेन समुच्चयो वार्यते । नित्यनैमित्तिकानां त्वभ्यनुज्ञायते । न च ज्ञानविधा ? गुक्तत्वादिति वाच्यम् । तत्रापि फलादिभेदस्य तुल्यत्वात् । न च तत्र फलभेदेऽप्यकार्यभेदो ? । जरामर्यवादस्याविरक्तविषयत्वात् । अतिदेशेन पराकृतं पारिव्राज्यमतिदेशेन साधयति—एतेनेति । तत्र प्रमाणमाह—श्रुतमिति । "यदहरेव विरजेत्तदहरेव [1]प्रव्रजेदि"त्यादिश्रुतिप्रतिपन्ने पारमहंस्ये पारिव्राज्ये कथं प्रमाणाभावशङ्का शोभां बिभर्तीत्यर्थः ।

सम्प्रति पारमहंस्यं पारिव्राज्यममृष्यमाणो भास्करीयश्चोदयति—नन्विति । चातुर्वर्ण्यवच्चातुराश्रम्यस्यापि प्रसिद्धत्वात्पारिव्राज्यस्यापलापो न

आगमगम्य उपपन्नश्च । तथापि स्मृतिबलात् सन्ध्यावन्दनादिकर्मतदङ्गशिखादि[1] लिङ्गिनस्त्रिदण्डिन एव सन्यासिनो न शिखादित्यागिनः । तन्मानाभावात्,

सप्रमाणं परमहंसाश्रमव्यवस्थापनम्

मैवम् । तद्विषयश्रुतिवाक्यानां बहुलमुपलम्भात् । तथा ह्याथर्वणे—पिप्पलादशाखायां ब्रह्मोपनिषदि श्रूयते—

"सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥" इति ।

इदं च वाक्यं सर्वकर्मसन्यासपरत्वेन सूत्रादित्यागमाह । यतस्तच्छेषेऽत्याजितोपवीतान् गृहस्थादीन् कर्माधिकारिणस्तुशब्देन विशेष्य तेषामेव हि सूत्रधारणं विधत्ते—

---

संमतीत्याह—उपपन्नश्चेति । तर्हि पारमहंस्यप्रद्वेषे तवाज्ञानमेव निदानं तत्राह—तथापीति । स्मृतिबलादिति । "त्रिदण्डेन यतिश्चैवे"ति लक्षणादित्यर्थः । नन्वेकदण्डिनोऽपि सन्यासिनः सन्यासिनां चातुर्विध्यप्रसिद्धेरित्यत आह—न शिखादीति । त्रिदण्डिष्वेव चातुर्विध्यसंभवाद्वचनानां च तद्विषयत्वादिति भावः । श्रुतिस्मृत्यधिगतसर्वकर्मसन्यासस्य नापलापोपपत्तिरित्युत्तरमाह—मैवमिति । प्रक्षेपशङ्काप्रतिक्षेपार्थमाथर्वण इत्यादि विशेषणम् । शिखादित्यागे विवेककार्यं वैराग्यं कारणमिति सूचयति—बुध इति । शिखायज्ञोपवीतहीनस्य पाषण्डित्वमाशङ्क्याह—यदक्षरमिति । कथं पुनरस्य विवक्षितसन्यासगमकत्वं, तदाह—इदं चेति । "बहिः सूत्रं त्यजेद्विद्वान्योगमुत्तममास्थितः" इत्युत्तरवाक्ये बहिस्सूत्रत्यागस्योत्तमयोगसम्बन्धाधिगमात्, "अध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरुपेक्षकस्ये"त्यादिस्मृतेः सन्यासस्यापि तच्छेषत्वादेकशेषिसम्बन्धिनोरुपसंहारादेरेकराशिभावेन विधेयत्वोपपत्तेः शिखावपनपूर्वको बहिस्सूत्रत्यागो विधीयमानो योगाख्यसमानशेषिप्रत्यभिज्ञापितसर्वस्वत्यागात्मकसन्यासविधेरेव विधेयैकदेश इति भावः । बहिस्सूत्रत्या-

---

1. शालीत्यधिकः पाठः

"कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।
तैः सन्धार्यं बहिः सूत्रं क्रियाङ्गं तद्धि वै श्रुतम् । इति ॥

न च सशिखं शिरो यथा स्यात्तथा वपनं कृत्वेति व्याख्येयम् अश्रुतकल्पनाप्रसङ्गात् । गत्यन्तरे सत्यश्रुतकल्पनेऽतिप्रसङ्गात् ।

अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ॥

इति वाक्यशेषविरोधाच्च । अत्र हि विहितं विशिखत्वमेव स्तूयते । यत्तु छन्दोगब्रह्मचारिसन्न्यासविषयं विशिखत्ववचनमिति मतं, तदतिमन्दम् । छन्दोगवटोर्विशिखस्य सशिखत्ववचनं नोपपद्यते । बहिः सूत्रं त्यजेदित्यपि सूत्रशब्द उपवीतमेवाभिधत्ते । न प्राणोपास-

---

गपुरस्सरमान्तरसूत्रधारिपुरुषप्रशंसापूर्वकं वाक्यशेषेण क्रियावतामेव बहिस्सूत्रनियमादकर्मनिष्ठाः सन्यासिनस्तत्त्यागिनोऽत्र विवक्षिता इत्याह—**यत इत्यादिना** । 'सशिखं वपनं कृत्वे'ति शिखापरिशेषाभिप्रायमित्याशङ्क्याह—**न चेति** । शिखापरिशेषाभिप्राये दोषान्तरमाह—**अग्नेरिति** । वाक्यशेषे विशिखत्ववतस्तस्य पूर्ववाक्ये विधिर्गम्यते । यद्विधीयते तत् स्तूयत इति न्यायादित्याह—**अत्र हीति** । सन्यासिनो विशिखत्ववचनस्य सङ्कोचाशङ्कामनुवदति—**यत्त्विति** । तदा शिखावपनपूर्वकं विशिखत्वप्रतिपादनायोगान्नेति दूषयति—**तदतिमन्दमिति** । "बहिस्सूत्रं त्यजे"दिति वाक्यं प्राणस्य सूत्रात्मनो ध्यानं ब्रह्मैकनिष्ठत्वाय त्याजयतीति केचित् । तान्प्रत्याह—**बहिस्सूत्रमिति** ।

"सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ॥

ज्ञानं शिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥
इदं यज्ञोपवीतं तु परमं यत्परायणम् ।"

इत्यादिषु सूत्रादिपदप्रत्यभिज्ञापितं तन्तुमयमेव सूत्रं वदत् बहिस्सूत्र-

नादि। उपसंहारे श्रुतैरुपवीतादिशब्दैर्निर्णयात्। श्रूयते हि—"शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम्। ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः।" इति॥

तथा—"ज्ञानयज्ञोपवीतिनाम्।" "ज्ञानयज्ञोपवीतिन" इति च। तस्मात्सन्यासिनः शिखायज्ञोपवीतपरित्याग एवात्रावसीयते। यदपि मतं, सन्यासाङ्गतया पूर्वोपवीतादेः त्यागोऽभिनवस्योपादानमास्थेयमिति, तदप्युक्तोत्तरम्। उक्तं हि सति गत्यन्तरे कल्पनं न युज्यत इति। अथाऽऽचमनाद्यङ्गतया द्विजातीनां पुरुषार्थस्योपवीतस्य धारणं क्रत्वर्थस्यैव च त्याग इति मतम्। न। "ब्राह्मण्यं सकलं तस्ये-त्य" न्तेनोपवीतादित्यागिन एकावैकल्याभिधानात्। कठादिश्रुतौ च—तादृक्सन्यासिन आश्रमधर्मविधानात्। कठ[रुद्र]श्रुतौ तावत् "सशि-

---

मित्यत्र सूत्रपदमुपपन्नमित्याह—श्रूयते हीत्यादिना। "नखान्निकृत्य पुराणवस्त्रयज्ञोपवीतकमण्डलुं त्यक्त्वा नवानि गृहीत्वाश्रमं प्रविशेदिति मस्करिवचनात् सन्यासकाले "नवयज्ञोपवीतं धारयेत्। पुराणमप्सु प्रक्षिपेदि"त्यादिश्रुतेश्चेति मतान्तरमवतारयति—यदपीति। पुराणनूतनोपवीतत्यागोपादानयोः सन्यासात् पूर्वत्वस्य स्मृतौ प्रतीतेः। श्रुतौ च तदनुसारेणार्थोपादानाद्विरुद्धयोश्च हानोपादानयोरयौगपद्यान्मुख्यार्थसम्भवे चाश्रुतकल्पनायोगान्नैवमिति मनीषया दूषयति—तदपीति। द्विविधमुपवीतम् पुरुषार्थं क्रत्वर्थं च। तत्राद्यमाचमनाद्यङ्गत्वेन धार्यम्। "विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भवे"दि"त्यादिवाक्यादिति शङ्कते—अथेति। कथं तर्हि त्यागवचनानि तत्राह—क्रत्वर्थस्येति। बाह्यसूत्रव्यावृत्तिपूर्वकं ब्रह्मण एव सूत्रतां सम्पाद्य "धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत्" इत्यादिना "ब्राह्मण्यं सकलं तस्य" इत्यन्तेन बाह्यसूत्रादित्यागिनि सन्यासिनि स्वाश्रमविहितसर्वब्राह्मणकर्मनिष्पत्तेरुक्तत्वादाचमनादिकालेऽपि तस्य न बाह्योपवीताद्यपेक्षेति विवक्षन्नाह—न ब्राह्मण्यमिति। इतश्च उपवीतादित्यागिनः सन्यासिनो न वैकल्यमित्याह—कठादीति। तादृक्सन्यासिनः। शिखादित्यागपूर्वकं त्यक्तसर्वकर्मण इति

खान् केशान्निकृत्य विसृज्य यज्ञोपवीतं भूः स्वाहेत्यप्सु जुहुया''दि-त्युपक्रम्य ''सन्न्यस्याग्नीन्न पुनरावर्तये''दिति चाभिधायोक्तम्—''अद्ध्यात्ममन्त्रान् जपेत् ।'' ''स्वस्ति सर्वजीवेभ्य'' इत्युक्त्वा दीक्षा-मुपेयात् । ''काषायवासाः कक्षोपस्थलोमा लघुमुण्डोऽस्त्रोदरपात्र'' इति । तथा अनिकेतश्चरेत् । भैक्षाशी यत्किंचिन्नाद्यात् । पूर्वैः कं न धावयेदि''ति तत्रैव श्रूयते । तथा जाबालश्रुतिरपि ''गृहाद्वनीभूत्वा प्रव्रजेदि'' त्यविशेषेण उपवीतादेरात्यन्तिकत्यागमाह—वाक्यशेषे ''पृच्छामि त्वा याज्ञवल्क्य ! अयज्ञोपवीती कथं ब्राह्मण'' इति विशेष-श्रवणात् । परिहारवाक्ये च ''स होवाच यज्ञवाल्क्य इदमेवास्य तद्यज्ञो-पवीतं य आत्मा अपः प्राश्याचम्यायं विधिः प्रव्राजिना'' मित्येवकारेण बाह्योपवीतराहित्यस्य द्योतितत्वात् । तथा कौषीतकिब्राह्मणे—''सशिखान् केशान्निकृत्य विसृज्य यज्ञोपवीत'' मित्यादिना ''यो वा एवं क्रमेण सन्यस्यती''त्यन्तेन सविधिं सन्न्यासमभिधायोक्तम्—''किमस्य यज्ञोपवीतं का वास्य शिखा कथं वास्योपस्पर्शन''मिति, 'तं होवाचेदमेवास्य तद्यज्ञोपवीतं यदात्मध्यानं विद्या शिखे''त्यादि ॥

---

यावत् । ''न पुनरावर्तयेदि''ति । सन्यासानन्तरमग्निसङ्ग्रहोपलक्षितमाश्रमं नाश्रयेदित्यर्थः । अध्यात्ममन्त्राः । प्रणवादयस्तत्ववाचिनः । लघुशब्देनार्जव-मुच्यते । अविशेषश्रुतेर्विशेषे सङ्कोचमाशङ्क्य वाक्यशेषविरोधान्नैवमित्याह—वाक्यशेष इति । विशेषश्रवणात् । अयज्ञोपवीतित्वस्य विशेषस्य श्रवणा-दित्यर्थः । बाह्यं यज्ञोपवीतं व्यावर्त्यायज्ञोपवीतस्यैवाचमनादिविधानात्तदङ्ग-मपि यज्ञोपवीतं नास्ति यतेरित्याह—**प्राश्येति** । न चेदमात्मनो यज्ञोपवीत-त्वसम्पादनपरम् । एवकारेण बाह्ययज्ञोपवीतव्यावृत्तिपरत्वप्रतिपत्तेरित्याह—**एव-कारेणेति** । ''विद्या शिखेत्यादी''त्यत्रादिशब्देन नीरैः सर्वत्रावस्थितैः कार्यं निर्वर्तयतीत्येतदुच्यते । कौषीतकिश्रुतावपि जाबालश्रुतिवदेवकारेण बाह्यं यज्ञोपवीतं व्यावर्त्यात्मनि ध्यानमेव यज्ञोपवीतं सम्पादितमित्याह—**अत्रापीति** ।

अत्रापि पूर्ववदयज्ञोपवीतत्वमात्यन्तिकं यतेः प्रतीयते। तथा मैत्रायणीयब्राह्मणे "अथ परिव्राडि"त्युपक्रम्य "एकशाटीपरिहितो मुण्ड इति" चाभिधाय "अयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीते"त्ययमेवार्थोऽभिहित इति वेदान्तेषु संक्षेपः। तस्माद्यतेरात्यन्तिकोपवीतादित्यागेऽपि न विवदितव्यम् ॥

अत्राह कश्चिन्मन्दमतिः—नन्वेतानि वाक्यानि न घटिकास्थानेषु पठ्यंते। नाप्यन्यत्र दृष्टानि। अतः केनापि दुर्विदग्धेन विरचितानीति। मन्द; मैवं वोचः। न हि सर्वो वेदः सर्वत्र पठ्यते। अतो घटिकाव्यवहारवति देशविशेषे पाठाभावाद्वेदापलापोऽतिप्रसङ्गी। न हि तत्रतत्र सहस्रशाखो वेदः पठ्यते। क्वचिदपाठेनापलापे च तैत्तिरीयादिशाखापलापः स्पष्टः स्यात्। मध्यदेशादौ तत्पाठाभावात्। अपि च कथमाथर्वणैः पठ्यमानानि शौनकमहर्षिकृतभाष्यव्याख्यानानि च वाक्यानि प्रक्षेपशङ्कास्पदानि। यद्येतानि श्रुतिवाक्यानि कथं तर्हि

---

" कुटुम्बपुत्रदारांश्च वेदाङ्गानि च सर्वशः।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः ॥ "

इति बाष्कलश्रुतिमभिप्रेत्याह—**इति वेदा[1]न्तेषु इति**। आत्यन्तिकोपवीतादित्यागवादिषु वेदवाक्येषु विद्यमानेषु फलितं कथयति—**तस्मादिति**। उदाहृतवाक्यानामौत्प्रेक्षिकत्वमाशङ्कते—**अत्राहेति**। ननु वारस्थानेष्वपाठेऽपि स्थानान्तरे पाठान्न वेदत्वापलापस्तेषामित्यत आह—**नापीति**। तर्हि का गतिरेतेषामिति तत्राह—**अत इति**। किं सर्वत्र पठ्यमानत्वाभावादवेदत्वं उत क्वचिदिति विकल्प्य नाद्य इत्याह—**मन्देति**। अतिप्रसङ्गमेव प्रकटयति—**न हि तत्र तत्रेति**। द्वितीयं दूषयति—**क्वचिदिति**। इतश्च सशिखमित्यादिषु न प्रक्षेपाशङ्केत्याह—**अपि चेति**। आथर्वणैरधीतत्वान्महर्षिणा च शौनकेन तेषु भाष्यस्य प्रणीतत्वादिति हेतुगर्भे विशेषणे। तथापि नैतानि वेदवाक्यानि शारीरके सर्ववेदवाक्यानि विचारयता भाष्यकृता तेषामुदाहृत्या विचारितत्वादिति शङ्कते—**यदीति**। सन्यासवाक्यानां श्रीमच्छारीरके प्राधान्येना विचा-

---

1. वेदवाक्येषु

तद्भाष्यकारेण न लिखितानि । न । लिखितानि हि तान्याचार्येण बृहदारण्यके कहोळब्राह्मणे पञ्चप्रकरण्याञ्च । अदर्शनं तूक्तवाक्यानां प्रतिज्ञामात्रं सिद्धम् ।

ननु नैतद्वेदवाक्यं भास्कराचार्येणोपलब्धम् । एवमेवहि स्वग्रन्थेष्वाह । सत्यम्, अत्यल्पमिदं, नैतावतोक्तवाक्यापलापसम्भवः । न हि कूपकुटीरकभेकानुपलब्धेः बुद्धिरपलापगोचरः । अपि चासौ द्वेषोपहतमतिः पश्यन्नपि न पश्यामीति वदेत् । प्रसिद्धं हि तस्य द्वेषात् भाषणम्—"कन्थां वहसि दुर्बुद्धे" इत्यादि । अत एवास्य कृतप्रयत्नस्यापि परमहंसद्वेषं शास्त्रे चाकौशलमुन्नीय काश्मीरकपण्डितैर्न ग्रन्थः परिगृहीतः[1] । किञ्च प्रसिद्धाप्त [2]वाक्यैर्विश्वरूपप्रभाकरगुरुमण्डनवाचस्पतिसुचरितमिश्रैः शिष्टाग्रणीभिः परिगृहीतस्य कथं द्वेषमोहाभ्यां विनापलापसम्भवः ।

ननु विश्वरूपप्रभाकरौ भवत्पक्षपतितौ । तावप्येकदण्डिनौ

---

रितत्वेऽपि ग्रन्थान्तरे भाष्यकारैरेव विचारितत्वान्नैवमित्याह—**नेत्यादिना** । यत्तु घटिकास्थानेभ्योऽन्यत्रापि न दृष्टान्युक्तानि वाक्यानीति, तत्र किं सर्वैरदृष्टत्वमुत भास्करेणेति विकल्प्याद्यं दूषयति—**अदर्शनं त्विति**। विशिष्टपरिग्रहस्य वक्ष्यमाणत्वादित्यर्थः। द्वितीयं शङ्कते—**नन्विति** । तेनादृष्टत्वे तदीयं वाक्यं प्रमाणयति—**एवमिति** । उक्तवाक्यानां भास्करेणादृष्टत्वमङ्गीकरोति—**सत्यमिति** । तर्हि तेषामवेदत्वमित्याशङ्क्य तस्यासर्वज्ञत्वादपि तदज्ञानसम्भवान्नैवमित्याह—**अत्यल्पमिति** । न ह्येष स्थाणोरपराधः यदेनमन्धो न पश्यतीत्याशयेन दृष्टान्तमाह—**न हीति** । भास्करस्य विप्रलम्भकत्वेन तद्वाक्यानामनादरणीयत्वाच्चोक्तवाक्यानां वेदत्वापलापवाचोयुक्ती रिक्तेत्याह—**अपि चेति** । वेदार्थव्याख्यातुरस्य कथं द्वेषोपहतमतित्वं तत्राह—**प्रसिद्धमिति** । तदीयग्रन्थस्य शिष्टापरिग्रहादपि तस्य विप्रलम्भकत्वमित्याह—**अत एवेति** । शिष्टपरिग्रहाच्चोक्तवाक्यानामसत्वमश्रुतित्वमप्रामाण्यं वा नाशङ्कनीयमित्याह—**किं चेति** । विश्वरूपप्रभाकरयोराप्तत्वासिद्धिमाशङ्कते—**नन्विति** ।

---

1. ग्रन्थो निबद्धः   2. भावैः

प्रसिद्धौ। एवं तर्हि तादृशसन्न्यासस्सत्प्रमाणश्चेन्नापलापमर्हति। न हि तादृशाः सर्वज्ञकल्पाः स्वपुरुषार्थनाशे बुद्धिपूर्वं प्रवर्तन्ते। गृहस्थावस्थायां विरचिते च विश्वरूपग्रन्थे दर्शितवाक्यपरिग्रहो दृश्यते। न चासौ ग्रन्थः सन्न्यासिना विरचितः। तथा हि—"परिव्राजकाचार्यसुरेश्वरविरचिते' इति ग्रन्थे नाम लिखेत्। लिखितं तु "भट्टविश्वरूपविरचिते" इति। तस्मात्प्रसिद्धविशिष्टपरिगृहीतयोर्मलयहिमालयादिनिलयविद्वदुपासितयोर्वाक्यतदर्थयोर्द्वेषमात्रान्न विवदितव्यम्।

ननु कथं तदुक्तार्थानि ऋषिवचनानि न कानिचिदपि दृश्यन्ते। न। दृश्यन्ते हि बहूनि तद्वचनानि। तथा ह्यमुमर्थं स्मरति भगवान्व्यासः

---

पक्षपाते हेतुमाह—तावपीति। तर्हि विदिताशेषवेद्ययोस्तयोस्त्रैविद्यवृद्धपुरुषधौरेययोरनिर्णीश्रुतिभावान्यपि वचनानि स्वग्रन्थेषूदाहृत्य विश्वविप्रलम्भासम्भवात्तथाशङ्कायां तत्प्रणीतनिबन्धनेषु नानादेशिमहाजनपरिग्रहानुपपत्तेश्च तदुपात्तवाक्येषु तदुक्तार्थे च नाविश्वासस्सम्भवीत्याह—एवं तर्हीति। किं च गार्हस्थ्ये स्थित्वैव निबन्धनिर्माणान्न विश्वरूपाचार्ये पक्षपाताशङ्केत्याह—गृहस्थेति। विश्वरूपनिबन्धस्यापि कथं गृहस्थविरचितत्वं तत्राह—न चेति। सति नामान्तरे प्राचीननाम्ना सन्यासिनां ग्रन्थनिर्माणादृष्टेरित्यर्थः। भट्टविश्वरूपविरचितनामाङ्कितस्तु प्रत्यध्यायं तन्निबन्धस्तत्र तत्रोपलभ्यते। अतो गृहस्थावस्थायामेव तन्निर्माणान्न पक्षपाताशङ्केत्याह—लिखितं त्विति। नानादेशिनश्चानुष्ठातारो यावन्त एकदण्डिनः न तावन्तस्त्रिदण्डिनः, सन्तोऽपि हि कियन्त एव यथादर्शिन एव चोपलभ्यन्ते, मलयमहाराष्ट्रादिमण्डलेषु च यावानेकदण्डिनां पूजातिशयलक्षणो महाजनपरिग्रहो न तावानितरेषामिति प्रत्यक्षमित्युपसंहरति—तस्मादिति।

श्रुत्याचारपरम्पराप्राप्तमनेकदेशीयमप्याचारं कथं स्मृतिकाराः स्वग्रन्थेषु कलयापि न निबध्नन्ति स्मेति शङ्कते—नन्विति। इत्थमाचारं परिपूर्णमेव हि ते बहवो निबबन्धुरित्याह—नेत्यादिना। तत्र स्मृतिकृतामग्रेसरस्य भगवतो वेदव्यासस्य वचनमुदाहरति—तथा हीति। यथेष्टचेष्टाप्राप्तिं व्यावर्त-

"यज्ञोपवीतं सन्त्यज्य सर्वकर्माणि चैव हि ।
विविक्तसेवी लघ्वाशी ध्याननिष्ठः सदा भवेत् ॥

यज्ञोपवीतं कर्माङ्गं वदन्त्युत्तमबुद्धयः ।
उपकुर्वाणकात्पूर्वं यतो लोके न दृश्यते ॥

यावत्कर्माणि कुरुते तावदस्यैव धारणम् ।
तस्मादस्य परित्यागः क्रियते कर्मभिः सह ॥

अग्निहोत्रविनाशे तु जुह्वादीनि यथा त्यजेत् ।
यथा च मेखलादीनि गृहस्थाश्रमवाञ्छया ॥

पत्नी योक्त्रं यथेष्यन्ते सोमान्ते च यथा ग्रहान् ।
तद्वद्यज्ञोपवीतस्य त्यागमिच्छन्ति योगिनः ॥" ॥ इति ॥

तथा तत्रभवान् वसिष्ठोऽपि सस्मार—"मुण्डोऽममोऽपरिग्रह" इत्युपक्रम्य "अव्यक्तलिङ्गोऽव्यक्ताचारोऽनुन्मत्त उन्मत्ताविशेष" इति निःशेषशिखायज्ञोपवीतादित्यागमभिधायोक्तार्थे संवादार्थमुक्तम् ।

---

यतति—**विविक्तेति** । अग्निहोत्रादित्यागेऽपि ततो न यज्ञोपवीतं त्यज्यते । तत्राह—**यज्ञोपवीतमिति** । अङ्गाङ्गिभावे मानमाह—**वदन्तीति** । तत्रान्वयव्यतिरेकौ प्रमाणयति—**उपकुर्वाणकादिति** । अङ्गाङ्गिभावे सिद्धे फलितमाह—**यावदिति** । तावदेवेति सम्बन्धः । अनुष्ठानजनितशुद्धिप्रसूतवैराग्यपरामर्शार्थः तच्छब्दः । अङ्गित्यागादङ्गत्यागं दृष्टान्तैरुपपादयति—**अग्निहोत्रेत्यादिना** । एकस्य प्रतिभानं तु कृतकान्न विशिष्यते" इति न्यायमनुस्मरन् व्यासोक्तेऽप्यर्थे वसिष्ठसम्मतिमाह—**तथेति** । **अव्यक्तलिङ्ग इति** । न विद्यते व्यक्तं सामान्यशास्त्रप्रकाशितं लिङ्गं यज्ञोपवीतादि यस्य स तथा । न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः" इति वाक्यान्तरसंवादादसाधारणशास्त्रप्रकाशितयमनियामाद्याचारवत्त्वमाह—**अव्यक्ताचार इति** । अव्यक्तलिङ्गपदेन यज्ञोपवीतादिलिङ्गानि व्यञ्जयन्न डाम्भिको भवेदित्येतद्विवक्षितमित्याशङ्क्याह—**निश्शेषेति** । श्लोके यज्ञोपवीतत्यागो न विवक्षितः,

तथाप्युदहारन्ति त्यक्त्वा शोकमोहौ

न कुड्यां नोदके सङ्गो न चेले न त्रिपुष्करे ।
नाहारे नासने नान्ने यस्य वै मोक्षवित्तु सः" ॥ इति ॥

त्रिपुष्करशब्देन यज्ञोपवीतमुच्यते । त्रयाणां देवपितृमनुष्याणां पोषणं त्रिपुः, तां करोतीति व्युत्पत्तेः ।

"त्रिपुष्करापसव्येन प्रेतेभ्यो बलिमाहरेदि"ति प्रयोगदर्शनाच्च ।

ननु कुड्यादावासक्त्यभाव एवात्राभिधीयते । अन्नेन समभिव्याहारात् । अन्यथान्नस्यापि त्यागे मरणप्रसङ्गात् । न, एवं हि परिग्रहाभावमभिधायासक्त्यभावे संवादार्थं श्लोकमुदाहरतो मुनेरप्यकौशलं प्रदर्शितं स्यात् । अन्नेऽपि न स्वाम्यमस्ति । यतः परान्नेन देहधारणोपपत्तेः । अपरिग्रहेऽपि स्मृत्यन्तरसंवादोऽपि दृश्यते । तथा-विश्वामित्रवाक्यं—"अथापरं परिव्राजकलिङ्गं सर्वतः परीमोक्षमेके सत्यानृते सुखदुःखे वेदानिमं लोकं अमुञ्च परित्यज्यात्मानमन्विच्छेत् । शिखा-

---

तद्वाचकपदाभावादित्याशङ्क्याह—त्रिपुष्करेति । व्युत्पत्तेरर्थान्तरेऽपि सम्भवात् कथं वृद्धप्रयोगं विना निर्णयस्तत्राह—त्रिपुष्करापसव्येनेति । यज्ञोपवीतादित्यागपरं न भवत्येतद्वाक्यमिति शङ्कते—नन्विति । त्यागपरत्वे दोषमाह—अन्यथेति । आसक्तिनिषेधाभिधायित्वे श्लोकस्याप्रकृता[1]भिधानमापद्येतेति दूषयति—नेत्यादिना । साहचर्यादन्यस्यापि तर्हि त्यागः स्यादत आह—अन्नेऽपीति । तर्हि मरणमापतेत् जीवनहेतोरभावादिति नेत्याह—परान्नेनेति । शिखादित्यागे हेत्वन्तरमाह—अपरिग्रहेऽपीति । अधमसन्यासिचिह्नोपन्यासानन्तरमुत्तमसन्यासिलक्षणमुपक्षिप्यत इत्याह—अथेति। एके। संसाराद्विरक्ताः सर्वतः शिखादेस्तन्नियतकर्मणश्च त्यागमिच्छन्तीत्यर्थः । न हि किंचिदस्यानुष्ठेयमस्ति, किं तु स्वेच्छाविहरणमिति । नेत्याह—आत्मानमिति ।

---

1. स्य प्रकृतासंगानामेव

यज्ञोपवीतकमण्डलुकपालानां त्यागी"त्यादि । तथा शौनकवाक्यम्—"अथान्यः परिव्राजको मुण्डोऽपरिग्रह" इत्याद्यभिधायोक्तं–"अयज्ञोपवीती शौचनिष्ठ" इत्यादि । [1]तच्छेषे च सन्न्यासमभिधायोक्तम्—'अत ऊर्ध्वं यज्ञोपवीतं मन्त्रमाच्छादनं यष्टयः शिक्यं जलपवित्रं च कमण्डलुं पात्रमित्येतानि वर्जयित्वा अथ दण्डमादत्ते सखा मा गोपायेति। तर्कज्योतिषोऽपि स्मरणम्—

यदा तु विदितं तत्स्यात् परं ब्रह्म सनातनम् ।
तदैतद्दण्डं संगृह्य उपवीतं शिखां त्यजेत् ॥ इति ।

तथा राजधर्मशेषेऽर्जुनवाक्यम्—

जटाजिनधराश्शान्ता मलदिग्धा जितेन्द्रियाः ।
मुण्डा नि[2]स्त्रपतश्चापि वसन्त्यर्थार्थिनः पृथगि"ति ॥

लैङ्गे च पुराणे—

निकृत्य केशान् सशिखानुपवीतं विसृज्य च ।
पञ्चभिर्जुहुयादप्सु भूः स्वाहेति च वीक्षणादि"ति ॥

नन्वेवंविधः सन्न्यास आपस्तम्बेन प्रतिषिद्धः तथा हि—

---

ननु शिखादिमतैवात्मान्वेष्टव्य इति । नेत्याह—**शिखेति** । "तस्याप्यरण्यनित्यत्वं मुण्डः काषायपरिहित" इत्यादिरादिशब्दार्थः । शौनकवाक्यगेन चान्येनादिपदेन "कषायवासा वाङ्मनःकायदण्डो भूतानामद्रोही"त्यादि गृह्यते । द्वितीयेन "क्षमी तुल्यनिन्दास्तुति"रित्यादि । मन्त्रपदेन गायत्री गृह्यते । तर्कज्योतिस्मरणे विदितमिति प्रयोजकज्ञानमुच्यते, न तु साक्षात्कारः । तद्वतो वैधसन्यासानधिकारादिति द्रष्टव्यम् । **पञ्चभिरिति** । व्याहृतिप्रभेदैरिति यावत् । आपस्तम्बस्मृतिविरोधान्न शिखादित्यागपूर्वकः सन्यासः सिध्यतीति शङ्कते—**नन्विति** । सर्वतः परिमोक्षविधानादुपवीतस्यापि त्यागावगमादाहत्य च वेदत्यागविधानात्पारमहंसी वृत्तिरुक्ता । सा चोत्तरेण निषिद्ध-

---

1. बोधायनः इत्यधिकः पाठः 2. निस्तन्त्रतश्च

“सर्वतः परिमोक्षमेके सत्यानृते सुखदुःखे वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेत् । बुद्धे क्षेमप्रापण”मित्युक्त्वोत्तरेण प्रतिषिध्यते । “तच्छास्त्रैर्विप्रतिषिद्धमि”ति । दक्षोऽपि च “मेखलाजिनदण्डेन ब्रह्मचारीत्यादित्रयाणामाश्रमिणां लक्षणमभिधाय चतुर्थस्य च “त्रिदण्डेन यतिश्चैवे”त्युक्त्वा तल्लक्षणरहितस्याश्रमित्वं निषेधति स्म । यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाश्रमीति” ।

न चैतद्वाग्दण्डादिविषयं, तेषां सर्वाश्रमसाधारण्ये विशेषलक्षणापपत्तेः । मैवं बह्वागमविरोधेन निषेधस्यैवाप्रामाण्यप्रसङ्गात् तस्मादापस्तम्बवाक्यैः साक्षाद्ब्रह्मानुभवं विना बुद्धे क्षेमप्रापणं निषिध्यते । तद्धि श्रवणमनननिदिध्यासनाभ्यासशमाद्याश्रमधर्मजीवन्मुक्तिशास्त्रैर्विप्रतिषिद्धम् । तस्यैव दूषणार्थमनुवादो दृश्यते । “बुद्धे चेत्

---

त्वादननुष्ठेयेत्यर्थः । दक्षवचनविरोधाच्चाविवक्षितसन्यासासिद्धिरित्याह—

“मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते ।
गृहस्थो यष्टिवेदाभ्यां नखलोमैर्वनाश्रमी”

इत्याश्रमत्रयलक्षणमुक्त्वा “त्रिदण्डेन यतिश्चैव लक्षणानि पृथक्पृथक्” इति त्रिदण्डित्वं सन्यासलक्षणं निर्दोषमभिधाय सन्यासान्तरमाहत्यैव निषिद्धमित्यर्थः ।

“वाग्दण्डोऽथ मनोदण्डः कर्मदण्डश्च ते त्रयः ।
यस्यैते नियता दण्डास्त्रिदण्डीति स उच्यते ।
वैणवेन त्रिदण्डेन न त्रिदण्डीति कथ्यते” ।

इति विधिव्यवच्छेदाभ्यामन्यथैव त्रिदण्डित्वं व्याख्यातमित्याशङ्क्याह—**न चेति** । श्रौतविधिविरोधे स्मार्तनिषेधस्याप्रमाणत्वान्नैतदिति परिहरति—**मैवमिति** । आपस्तम्बस्मृतेस्तर्हि काऽस्तु गतिस्तत्राह—**तस्मादिति** । तच्छब्देन बुद्धेः क्षेमप्रापणमित्येतदेव परामृश्यते । नपुंसकनिर्देशेन तस्यैव प्रत्यभिज्ञानात्तस्यैवानन्तरस्य परामर्शोपपत्तौ न व्यवहितपरामर्शो मानाभावादिति, मत्वा तच्छास्त्रैरित्यादिवाक्यं व्याचष्टे—**तद्धीति** । अव्यवहितस्यैव सर्वनाम्ना परामर्शे हेत्वन्तरमाह—**तस्यैवेति** । दक्षस्मृतेस्तर्हि का गतिस्तत्राह—**दक्षेति** ।

क्षेमप्रापणमिहैव न दुःखमुपनिपतेदि"ति। दक्षवचनेनापि निन्दा त्रिदण्डविधिपरैव। यथानुदितहोमविधेः। त्रिदण्डविधानेऽपि एकदण्ड-विधेर्न विरोधः। अधिकारिभेदेन व्यवस्थया प्रामाण्योपपत्तेः।

ननु व्यवस्थाश्रयणे त्रिदण्डग्रहणमेवोभयसंप्रतिन्नं प्रामाणिकं, तदेव श्रेष्ठम्-। न। लोकायतिकतीर्थिकसम्मतस्यापि देहात्मभावस्य तथात्वादर्शनात्।

ननु नैषा व्यवस्थोपपद्यते, हारीतादिवचनविरोधात्।

तथा हि हारीतकः—

"चतुर्विधाभिक्षवस्तु स्मृताः सामान्यलिङ्गिनः।
तेषां पृथक् पृथक् नाम वृत्तिभेदात्कृतं श्रुतौ

---

त्रिदण्डविधावेकदण्डनिषेधः सिध्यति, एकस्मिन्नुभयविधिविरोधादिति चेन्ने-त्याह—**त्रिदण्डेति**। हीनोत्तमाधिकारिविभागेन त्रिदण्डैकदण्डव्यवस्था चेत् त्रि-दण्डग्रहणमेव युक्तमुभयसम्मतत्वादिति चोदयति—**नन्विति**। प्रामाणिक-त्वाच्च तदेव ग्राह्यमित्याह—**प्रामाणिकमिति**। प्रामाणिकत्वमविशिष्टमुभयो-रिति चेत नेत्याह—**तदेवेति**।

" ब्रह्मसूत्रं विदण्डं च वस्त्रं जन्तुनिवारणम्।
अक्षसूत्रं वृसी चैव कौपीनं कटिवेष्टनम्॥
यस्यैतद्विद्यते लिङ्गं स यतिर्नेतरो जनः।"

इत्याङ्गिरसादिवाक्याद्यतिमात्रस्योपवीतादिप्रतीतेरित्यर्थः। उभयसंमतत्वात् ग्राह्यत्वं व्यभिचारयति—**नेत्यादिना**। यद्यपि प्रामाणिकत्वं विशेषः, तथापि न त्रिदण्डग्रहणनियमः इतरस्यापि प्रामाणिकत्वात्। न चाङ्गिर-सादिवाक्यविरोधात् त्रिदण्डग्रहणनियमः। तस्य श्रुतिस्मृतिपुराणविरोधात्। त्रिदण्डग्रहणानियामकत्वात्तद्विधिमात्रपरत्वादिति भावः। अधिकारिभेदेनोक्तां व्यवस्थां प्रकारान्तरेणाक्षिपति—**ननु नैषेति**। साधारणलक्षणत्वे कथं चातुर्विध्य-मिति तत्राह—**तेषामिति**। नामभेदे हेतुमाह—**वृत्तिभेदादिति**। आचार-

"कुटीचको बहूदश्च हंसश्चैव तृतीयकः ।
चतुर्थः परहंसोऽथ यो यः पश्चात्स उत्तमः ॥
लिङ्गन्तु वैष्णवं तेषां त्रिदण्डं सपवित्रकम् इति ॥"

तथा च दत्तात्रेयः—

"कुटीचको बहूदश्च हंसश्चैव तृतीयकः ।
चतुर्थः परहंसश्च संज्ञाभेदैः पृथक् स्मृतः ॥
वृत्तिभेदेन भिन्नाश्च नैव लिङ्गेन ते द्विजाः ।
लिङ्गं तु वैष्णवं तेषां त्रिदण्डं सपवित्रकमि"ति ॥

तथा चात्रिः—

"शिखिनस्तु स्मृताः केचित् केचिन्मुण्डाश्च भिक्षुकाः ।
चतुर्धा भिक्षवो विप्राः सर्वे चैव त्रिदण्डिनः ॥" इति ।

एकदण्डवचनानि च दण्डालाभविषयाणि ॥

यथाह मेधातिथिः—

"यावन्न स्युस्त्रयो दण्डास्तावदेकेन पर्यटेदि"ति ॥

हारीतेनाप्युक्तम्—

"नष्टे जलपवित्रे वा त्रिदण्डे वा प्रमादतः ।
एकं तु वैणवं दण्डं पालाशं बैल्वमेव वा ॥
गृहीत्वापि चरेत्तावत् यावल्लभ्येत्त्रिदण्डकम् ॥ इति ।

---

विशेषादित्यर्थः । कुतस्य नामभेदस्योपादेयत्वं दर्शयति—**श्रुताविति** । नामभेदमेवाभिनयति—**कुटीचक इति** । कथं तर्हि साधारणलक्षणत्वं तेषामिति तत्राह—**लिङ्गमिति** । संज्ञाभेदमात्रान्न वस्तुभेदसिद्धिः । तत्राह—**वृत्तिभेदेनेति** । संज्ञाभेदाद्वृत्तिभेदाच्च लिङ्गभेदोऽपि स्यान्नेत्याह—**नैवेति** । किं तर्हि सर्वेषामविशिष्टं लिङ्गमिति तदाह—**लिङ्गं त्विति** । शिखाविकल्पवद्दण्डविकल्पोऽपि स्यादिति चेन्नेत्याह—[1]**सर्वे चेति** । "तदेकदण्डं सङ्गृह्येत्या"दिवाक्यानि तर्हि कथं निर्वहन्ति तत्राह—**एकदण्डेति** । तत्र

---

1. चतुर्धेति

न। उक्तोत्तरत्वात्। उक्तं हि सन्न्यासिनस्त्रिदण्डित्वम्। नियमे बह्वागमविरोध इति। विकल्पवचनविरोधाच्च। तथा हि—बोधायनः स्मरति स्म—"एकदण्डी त्रिदण्डी वे"ति॥

"एकदण्डी भवेद्वापि त्रिदण्डी वा मुनिर्भवेदि"ति। विष्णुः

"त्रिदण्डमेकदण्डं वा व्रतमास्थाय तत्ववित्।
पर्यटेत् पृथिवीं नित्यं वर्षाकाले स्थिरीभवेदि"ति। व्यासः।

"अथ काषायवासाः सखा मा गोपायेति त्रिदण्डमेकदण्डं वा गृह्णाती"ति। शौनकः।

"एकदण्डी त्रिदण्डी वा शिखी मुण्डोऽथ एव वा।
काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिरे"ति।

आश्वमेधिके भगवद्वचनम्।

"अभयं सर्वभूतेभ्यो मत्तः स्वाहेति त्रिदण्डमेकदण्डं वा गृह्णीयादि"ति। कपिलः।

"मुण्डः शिखी वे"ति। गौतमः।

"नित्यं यतिर्द्विधा शान्तो भवेन्मुण्डोऽथवा शिखी"ति। वृद्धयाज्ञवल्क्यः।

"अथ परिव्राजकलिङ्गं मुण्डः शिखी वे"ति। विश्वामित्रः।

"भिक्षार्थी प्रविशेद् ग्रामं शिखी वा मुण्ड एव वे"ति। व्यासस्य

---

प्रमाणमाह—**यथेति**। उक्तं स्मारयन्नुत्तरमाह—**नेत्यादिना**।

"ध्यानं शौचं तथा भिक्षा नित्यमेकान्तशीलता।
भिक्षोश्चत्वारि कर्माणि पञ्चमं नोपपद्यते॥
नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कदाचन।
एतैः सर्वैस्सुनिष्पन्नो यतिर्भवति नेतरः॥"

इति दक्षवचनविरोधः। "लिङ्गाभावात्तु कैवल्यमिति ब्रह्मानुशासनम्" इति पितामहवाक्यविरोधश्च विकल्पवचनविरोधाच्चेत्यत्र चकारार्थः-**नित्यं यतिरिति**। यतिर्हि नित्यं शान्तो भवेत्। स च द्वेधेति योजना। द्वैविध्यमेवाह—**मुण्ड इति**।

वचनान्तरम् ।

"मुण्डः शिखी वा काषायी त्रिदण्डी वा गृहं व्रजे"दिति । क्रतुः ।

"अनग्निस्तु मुण्डः शिखी वे"ति । कपिलस्य वचनान्तरम् ।

"जटी मुण्डी शिखी वापि भिक्षुर्मोक्षपरायणः" । इति भविष्यत्पुराणे ।

यत्तु विकल्पवाक्येष्वस*हायेन वाशब्दः समुच्चयार्थ इति व्याख्यातं, तत्तावद्दण्डविकल्पविधौ नावकल्पते । दर्शितानि दण्डविकल्पविषयाणि बहूनि वचनानि, तत्रावश्याश्रयणीयो दण्डविकल्पः न हि दण्डविकल्पसमुच्चयोऽपीष्यते । तथा सति शिखाविकल्पोऽप्यास्थेयः । अन्यथा एकदण्डी शिखी वेत्यनिष्टमापद्येत । यदप्युक्तम्—त्रिदण्डालाभविषयाणि एकदण्डवाक्यानीति, तदप्यसत् । विकल्पवाक्यविरो-

---

शङ्खलिखितस्मृत्योर्व्याख्याता कश्चिदसहायनामा समस्ति । तदीयमतमुत्थापयति—यत्त्विति । स खल्वेवमाह स्म-विकल्पवाक्येषु सर्वत्र वाशब्दं चार्थे पठित्वा "मुण्डशिखी च भवेदि"त्यर्थो गृह्यत इति । तत्र वाशब्दस्य विकल्पवाचितया प्रसिद्धतरस्य चार्थे पठनं मान्द्यमात्रनिबन्धनम् । अन्यथा निपातानामनेकार्थत्वे नञर्थेऽपि वाकारपाठसम्भवादेकदण्डी त्रिदण्डी नेत्यपि व्याख्योपपत्तिरित्यभिप्रेत्य दण्डविकल्पं समर्थयते—तत्तावदिति । दण्डविकल्पविधिरेव नास्तीति चेत्तत्राह—दर्शितानिति । तत्रापि समुच्चये कानुपपत्तिरिति तत्राह—न हीति । एकदण्डित्वत्रिदण्डित्वयोरेकत्र व्याघातात् त्रिदण्डिन्येकदण्डित्वेऽपि वचनवैयर्थ्यमिति भावः । दण्डविकल्पेऽपि शिखासमुच्चयः स्यादिति चेन्नेत्याह—तथा सतीति । "शिखिनस्तु श्रुताः केचित् केचिन्मुण्डास्तु भिक्षुकाः" इति दत्तात्रेयवाक्यादित्यर्थः । दण्डविकल्पेऽपि शिखाविकल्पानभ्युपगमे दोषमाह—अन्यथेति । ननु नास्त्येवानिष्टं त्रिदण्डालाभविषयत्वादेकदण्डवाक्यानामित्यत आह—यदपीति । एकदण्डित्वममुख्यं

---

* तन्नामकेन शंखलिखितस्मृतिव्याख्यात्रेत्यर्थः

धादेव । नहि मुख्यामुख्ययोर्विकल्प उपपद्यते इति ।

त्रिदण्डस्य परित्याग एकदण्डस्य धारणम् ।
एकस्मिन् दृश्यते वाक्ये तस्मादस्य प्रधानता ।

इति व्यासवचनविरोधाच्च । तस्मात्प्रत्यगात्मज्ञानसमर्थस्य समस्त-कर्मतदङ्गत्यागेऽधिकारः । इतरस्य तु त्रिदण्डादिग्रहे जपादिकर्माणि चेति व्यवस्था ।

यथाह विश्वसाक्षी —

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥

---

त्रिदण्डित्वं मुख्यं इत्येतावता कुतो दण्डविकल्पो नावकल्पते तत्राह—**न हीति** । त्रिदण्डालाभविषयाण्येकदण्डवाक्यानीत्यत्र दोषान्तरमाह—**दण्डस्येति** । अत्र परमहंसा ये व्यपगतरागद्वेषमोहास्त्रिदण्डं कुण्डिकां वृसीभिक्षापात्रकौपीनादीन् परित्यज्य विधिवन्निर्ग्रन्थो भूत्वा ब्रह्ममार्गे प्रयतते इति वाक्यमाश्रित्याह—**एकस्मिन्निति** ।

" त्रिदण्डं कुण्डिकां चैव सूत्रं चाथ कपालिकाम् ।
जन्तूनां वारणं वस्त्रं सर्वं भिक्षुः परित्यजेत् ॥
कौपीनाच्छादनार्थं तु वासोऽर्धस्य परिग्रहम् ।
कुर्यात्परमहंसस्तु दण्डमेकं तथैव च ॥ "

इति विष्णुस्मृत्या 'परमहंसानामत्रिदण्डकमण्डलुशिक्यजलपवित्रपादुकासनशिखायज्ञोपवीतकपालानां त्यागिन' इत्यादिकात्यायनस्मृत्या च विरोधश्चकारार्थः । सन्यासिनस्त्रिदण्डित्वनियमासंभवे पूर्वोक्तां व्यवस्थामुपसंहरति—**तस्मादिति** । आत्मज्ञानसमर्थस्याधिकारिणः सर्वकर्मतदङ्गत्याग इत्यत्र भगवद्वाक्यं प्रमाणयति—**यथाहेति** । ज्वरादिपीडितो गुडाद्यासक्तोऽपि पित्तोपहतेन्द्रियत्वान्न तत्र तृप्यति । तद्वदात्मरतिरपि न तत्र तृप्तः स्यादिति चेन्नेत्याह—**आत्मतृप्तश्चेति** । विषयेषु तृप्यन्नपि तन्नाशभावनया दूयमानमना न तुष्यति, न तथेत्याह—**आत्मन्येव चेति** । तर्हि सर्वथैव प्रहीणानि कर्माणीत्याशङ्क्याह—**आरु-**

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥" इति ॥

आत्मज्ञानं प्रति चोक्तम्—

"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनामि"ति ।

तथागस्त्येनाप्युक्तम्—

"सकषायोऽशक्तश्चेमं विधिमाचरे"दित्युक्त्वा,
"त्रिदण्डं कुण्डिकां चैव सूत्रं चैव कपालिकाम् ।

---

क्षोरिति । सम्यग्ज्ञाननामानं योगमारोढुमिच्छोर्मुनेस्तत्प्रतियोगिचित्तपरिशोधनप्रणाड्या तदारोहणकारणं कर्मोच्यते । योगारूढस्य तु तस्यैव मुनेः शममात्रं कर्मनिरपेक्षं सम्यग्ज्ञानपरिपाकद्वारा मोक्षकारणम् । योगारूढस्यापि कर्मानुष्ठानापेक्षायामारुरुक्षोरिति विशेषणानर्थक्यादित्यर्थः । आत्मज्ञानासमर्थस्य त्रिदण्डादिग्रहणमित्यत्र भगवतः संमतिमाह—**आत्मज्ञानेति** । सर्वकर्मतदङ्गत्यागपूर्वकात्मज्ञाननिष्ठातो निश्रेयसमिति विवेकविधुरतया कर्मैव निरतिशयश्रेयस्साधनमिति तस्मिन्नासक्तचित्तानां त्रिदण्डग्रहणादिव्यग्राणां न ततो बुद्धिविच्छेदं विद्वानुत्पादयेत् । किं तु तस्मिन्नेव प्रवर्तयेदित्याह—**न बुद्धीति** । बुद्ध्यशुद्धेरात्मज्ञानहेतौ शमादिसहिते श्रवणादावसमर्थस्त्रिदण्डग्रहणादौ व्याप्रियेतेत्याह—**सकषाय इति** । तमेव विधिं दर्शयति—**त्रिदण्डमिति** । "ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्या अभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ती"त्यादिश्रुतेः ।

"अनागतां तु ये पूर्वामनतिक्रान्तपश्चिमाम् ।
सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः ॥
सायम्प्रातस्सदा सन्ध्यां ये विप्रा नो उपासते ।
कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेत् ॥"

इति बोधायनवचनात्,

"चत्वारोऽप्याश्रमा ह्येते सन्ध्योपासनवर्जिताः ।
ब्राह्मण्यादेव हीयन्ते यद्यप्युग्रतपोरताः ॥"

इति हारीतवचनात्,

जन्तूनां वारणं वस्त्रं संग्राह्यं सर्वमेव तु ॥" इति ॥

यत्तु—

"काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः।"

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।

स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः॥

इति भगवताप्युक्तम्, तन्नित्यकर्मस्तुतिपरम्। अन्यथा कथं 'न निरग्निर्न चाक्रिय' इति वाक्यशेषो युज्यते। न हि साग्निः सन्न्यासी। पूर्वोदाहृतानि च समुच्चयनिराकरणपराणि सर्वकर्मसन्न्यासपराणि च वाक्यानि कथमुपपद्येरन्। यदपि त्रिदण्डालाभ एकदण्डधारणवाक्यं, तदपि नष्टत्रिदण्डविषयम्।

---

"सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु॥"

इति दक्षवाक्याच्च, सन्ध्यावन्दनादिनित्यकर्मत्यागानुपपत्तेस्तदङ्गयज्ञोपवीतादेरपि न हानमिति मन्वानस्य मतमाह—यत्त्विति।

"परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि।

सर्वैषणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हति॥"

इति बृहस्पतिस्मरणात्—

"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः"

इत्यविशेषश्रवणाच्च, काम्यवन्नित्यकर्मणामपि त्यागसिद्धेस्तदंगयज्ञोपवीतादेरपि त्यागसम्भवमभिप्रेत्याह—तन्नित्येति। नित्यकर्मस्तुतिमात्रं न विवक्षितं किं तु काम्यादित्यागेन नित्याद्यनुष्ठायिनः सन्यासित्वं विधित्सितमिति चेन्नेत्याह—अन्यथेति। वाक्यशेषविरोधं साधयति—न हीति। ननु सन्यासिनस्साग्नित्वासम्भवेऽपि सन्ध्यावन्दनादिसहितज्ञाननिष्ठत्वमुक्तश्रुतिस्मृतिभ्यामेषितव्यमित्याशङ्क्य तयोरधमाधिकारिगोचरत्वादुत्तमाधिकारी सर्वकर्मसन्यासपूर्वकज्ञाननिष्ठायामेवाधिकरीत्याह—पूर्वोदाहृतानीति। एकदण्डवाक्यानि त्रिदण्डालाभविषयाणीत्यस्मिन्नर्थे प्रमाणीकृतं, मेधातिथिहारीतवाक्ययोर्वक्तव्या गतिरित्याशङ्क्याह—यदपीति। तस्य गृहीतत्रिदण्डविषयत्वे गमकमाह—

"नष्टे जलपवित्रे वा त्रिदण्डे वा प्रमादतः ।
एकं तु वैणवं दण्डमि"त्यादि हारीतेन तत्रैवोक्तत्वात् ।

यत्तु हारीतादिवचनं हंसपरमहंसयोरपि त्रिदण्डत्वबोधकं तत्र हंसादिधर्मयोगमभिप्रेत्य कुटीचकादेः हंसत्वादि गौणं व्याख्येयम् । अन्यथा औदुम्बरीसर्ववेष्टनवाक्यवत्तदप्रमाणं स्यात् । यस्तु मन्दमतिः

---

नष्ट इति । हारीतदत्तात्रेयादिवाक्यानां सन्यासमात्रस्य त्रिकृच्छ्रचान्द्रायणादिहंसधर्मयोगात् कुटीचकबहूदकयोरेव हंसशब्दश्रवणमननादिपरमहंसधर्मसम्बन्धाच्च तावेव हंसपरमहंसशब्दवाच्यावित्याह—तत्रेति । न च हारीतेन त्रिदण्डव्यतिरिक्तपरमहंसाभावोऽभिप्रेतः । "परमः सर्वसङ्गपरित्यागी विगतमत्सरः प्राणसन्धारणमात्रकृतप्रयत्नः कृतवचनः परमतत्वतत्परो निर्ममो निरहङ्कारो ध्यानधारणासक्तमानस" इति तदीयवाक्यविरोधादिति भावः । हारीतादिवाक्यानां हंसादेरपि त्रिदण्डित्वबोधिनां मुख्यार्थत्वे दोषमाह—अन्यथेति । "औदुम्बरीं स्पृष्ट्वोद्गायेदि"ति वाक्यविरोधादौ"दुम्बरी सर्वा वेष्टयितव्ये"ति वाक्यस्याप्रामाण्यवदुदाहृतसर्वकर्मसन्यासवाक्यविरोधेन हारीतादिवाक्यानां तद्विरोधिनामप्रामाण्यप्रसङ्गादुक्तविधया प्रामाण्याङ्गीकरणमुचितमित्यभिप्रायः । हारीतादिवचनानि काश्चिद्यथोक्तपरिव्राजकवृत्तेः शाक्यादिवृत्तिवदत्यन्तवेदबाह्यतया पाषण्डवृत्तितामेव प्रतिपादयन्ति । तदनुष्ठाने च प्रायश्चित्तमभिदधति । तथा च वक्तव्या तेषां गतिः । अन्यथा यथोक्तपारिव्राज्यासिद्धिरिति मन्वानस्य मतमुपन्यस्यति—यस्त्विति ।

प्राप्ते कलियुगे घोरे इमेऽन्ये क्षुद्रजन्तवः ।
सम्भविष्यन्ति ते सर्वे गोतमाग्निविदीपिताः ॥

वेदार्थांश्चान्यथा कृत्वा योजयिष्यन्ति ते कलौ ।
नग्नाः प्रच्छन्नबौद्धाश्च विनिन्दन्ति त्रयीमिमाम् ॥

रात्रौ वेदरहस्यानि पठिष्यन्त्यल्पमेधसः ।
भक्षयिष्यन्ति शूद्रान्नं वयं मुक्ता इति *ब्रुवन् ।

---

* आर्षोऽयं प्रयोगः

अन्यानपि स्वधर्मस्थान् प्रेरयिष्यन्ति ते कलौ ।
एकदण्डं समाश्रित्य जीवन्ति बहवो द्विजाः ।
नरके रौरवे घोरे कर्मत्यागात्पतन्ति ते ॥

तस्मात्तैर्नालपेत्प्राज्ञः न च तान्संनिरीक्षयेत् ।
आलोकने च तेषां तु शुध्यते भानुदर्शनात् ॥

नग्नं वानुपनीतं वा विप्रः स्पृष्ट्वा प्रमादतः ।
मृद्भिर्द्वादशभिः स्नात्वा वासोभिः सह शुध्यति ॥

नग्नं वाऽनुपनीतं वा विप्रं श्राद्धे नियोजयन् ।
रेतोमूत्रपुरीषाणि पितृभ्यस्सम्प्रयच्छति ॥

चतुर्णामाश्रमाणां तु प्रेरितानां दुरात्मभिः ।
प्रायश्चित्तं प्रवक्ष्यामि सर्वपापापनुत्तये ।
प्रेरणादथवा लोभादेकदण्डं समाश्रितः ॥

भूयो निर्वेदमापन्नस्त्रिदण्डं धारयेद्बुधः ।
प्राजापत्यं चरेत्कृच्छ्रं नियतो माससङ्ख्यया ॥

उपस्पृशंस्त्रिषवणं गायत्रीं च तथा जपन् ।
विना यज्ञोपवीतेन यत्कृतं भोजनादिकम् ॥

तत्पापप्रशमायालं प्रायश्चित्तं ब्रवीमि वः ।
तेषां तु भोजनादीनां प्रत्येकं सुसमाहितः ॥

सहस्रार्धैरसुयमैर्विधिपूर्वकृतैः शुचिः ।
षण्मासात्प्रागियं शुद्धिरुदिताऽघप्रणाशिनी ॥

विप्लावितानां प्रच्छन्नबौद्धैर्व्यामोहकारिभिः ।
मासं प्रति तदूर्ध्वं च समातोऽर्वाक् विचक्षणः ॥

कृच्छ्राणि षट् प्रकुर्वीत प्राणायामसमन्वितः ।
समादूर्ध्वं विशुध्यन्ति कृच्छ्रेणाब्देन ते पुनः ॥

कृतेन तेन शुध्यन्ति संस्कारैरपि संस्कृताः ।

इति हारीतदत्तात्रेयवचनानि ।

**मुख्ययतिद्वेषात् कांचित् कथां श्लोकांश्च "प्राप्ते कलियुग" इत्यादीन् हारीतदत्तात्रेयादिवचनत्वेनोदाहरति स्म सोऽतिमूढः स्वविरचितेषु दोषं न पश्यति। तत्र हि "वे[1]दार्थांश्चान्यथा कृत्वा योजयिष्यन्ति ते कलौ" इति लिखितम्। तच्च विरुद्धम्। तथाहि—उपक्रमोपसंहारैकरूप्या-**

---

यज्ञोपवीतं सर्वेषां द्विजानां मुक्तिसाधनम्।
परित्यजन्ति ये मोहान्नरा निरयगामिनः॥

ब्रह्मसूत्रादिदैवत्यं ब्रह्मविष्णुशिवात्मकम्।
परित्यजन्ति ये विप्रा मोहात्तर्कावलम्बिनः॥

[स्व]र्गापवर्गमार्गाभ्यां प्रच्युतास्ते न संशयः।
यज्ञोपवीतं ये मोहात्त्यजन्तीह कुबुद्धयः॥

स्वात्मन्येवात्मना तैस्तु स्वयमेव वधः कृतः।
गृहवासविरक्तानां पुरा प्रोक्तं स्वयम्भुवा॥

तस्मात्त्रिदण्डमाश्रित्य वर्तितव्यं मुमुक्षुणा।
आदाय वैष्णवं लिङ्गं यस्सन्त्यजति मूढधीः॥
स याति नरकं घोरं रौरवं तमसावृतः।"

इत्यत्रिवचनानि। तद्विरोधादसिद्धिरेकदण्डाश्रमस्येत्यर्थः।

त्रिदण्डं तु परित्यज्य एकदण्डं तु धारयेत्।
न तत्र दोषमिच्छन्ति नित्यमेव मनीषिणः॥"

इति स्मृतिसमुच्चयविरोधात्प्रागुदीरितश्रुतिस्मृतिशतविरोधाच्चाच्छिन्नमूलत्वात्कैश्चिदेव पुरुषापशदैः सासूयैराहृतत्वात् प्रायेण प्रक्षिप्तान्येवामूनि केनापि पापीयसा वेदविप्लावकेनेति मन्वानो ब्रूते—**सोऽतिमूढ इति**। दोष[2] मेव दर्शयितुमादौ विषयं विभावयति—**तत्रेति**। कथं तत्र दोष इत्यत आह—**तच्चेति**।

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये॥"

---

1. वेदान्तान् अन्यथा 2. विरोध

दिलिङ्गावगततात्पर्यवशेन श्रुत्यांजस्येन व्याख्यातस्यान्यथात्वकल्पने स्फुटस्तात्पर्यादिविरोधः। प्रसिद्धाश्रमनिन्दायामप्युदीरितप्रमाणविरोधं कथं स शोच्यो लटकः कर्णाटवटुर्न पश्यति।

यच्च तेनैवोक्तं—विवादाध्यासितानि वाक्यानि वेदबाह्यानि याज्ञवल्क्यपरिगणितैर्मनुव्यासादिभिः सकलशाखादिभिः सर्वैरेव शिष्टैरपरिगृहीतत्वात् कपिलशाक्यवाक्यवदिति। तदप्यसत्। हेत्वसिद्धेः। तद्विशेषणानां च वैयर्थ्यात्। शौवोद्गीथादिवेदवाक्यैश्च व्यभिचारात्।

अथ पुरुषवचांसि पक्षीकृत्य पौरुषेयत्वेन हेतुर्विशेष्यते। तदापि वेदबाह्यत्वं शब्दतोऽर्थतो वा। आद्ये सिद्धसाधनम्। द्वितीये कालात्य-

---

इति षड्विधलिङ्गतात्पर्यानुसारेण शब्दशक्त्या च व्याख्यातस्य वेदार्थस्य नान्यथात्वसम्भावना समस्ति। शक्तितात्पर्यविरोधादित्यर्थः। यत्तु—

"एकदण्डं समाश्रित्य जीवन्ति बहवो द्विजाः।
नरके रौरवे घोरे कर्मत्यागात्पतन्ति ते॥

यज्ञोपवीतं सर्वेषां द्विजानां मुक्तिसाधनम्।
परित्यजंति ये मोहान्नरा निरयगामिनः॥"

इत्यादि। तत्राह—**प्रसिद्धेति**। एकदण्डवाक्यानि पक्षीकृत्य भास्करोक्तमनुमानमनुवदति—**यच्चेति**। मनुव्यासवसिष्ठापस्तम्बगौतमादिभिर्याज्ञवल्क्यपरिगणितैरेतेषां वाक्यानां परिगृहीतत्वस्य निर्धारितत्वादसिद्धिरुदितहेतोरित्याह—**तदपीति**। व्यावर्त्यव्यभिचाराभावात्तन्निरासेन हेतुविशेषणानामर्थवत्त्वाभावेऽपि स्वरूपविषयत्वेन तेषामर्थवत्त्वमित्याशङ्क्य दोषान्तरमाह—**शौवेति**। न हि सर्वैरेव वृत्तिकारैः "रथातः शौव उद्गीथ" इत्यादिवेदवाक्यानि स्वग्रन्थेषु लिखितानि। तथा च तेषु व्यभिचारान्नानुमानसिद्धिरित्यर्थः। एकदण्डविषयाणि पौरुषेयवाक्यानि, वेदबाह्यानि, पौरुषेयत्वे सत्युक्तरूपत्वात्, सम्प्रतिपन्नवदिति शङ्कते—**अथेति**। एतद्विकल्प्य दूषयति—**तदापीत्यादिना**। विमतानि न स्मृतिवाक्यानि, राज्ञा अलिखितत्वात, शाक्यवाक्यवदित्या-

यापदेशः। तदर्थवेदवाक्यस्य दर्शितत्वात्। यस्तु राज्ञा अलिखित-त्वादस्मृतित्वप्रलापः न स साधुः। लिखितानि हि स्मृतिमहार्णवे—"मुण्डः शिखी वे"त्यादीनि बहूनि वाक्यानि। व्यभिचाराच्च। न हि सर्वं भारतादिवाक्यं राज्ञा लिखितम्। अथैकदण्डविषयत्वेन हेतुर्विशेष्यते। भवद्वाक्यं च दृष्टान्त इति मतम्। न। विपक्षे बाधाभावात्। राज्ञा अलेखनं च तन्नियुक्तग्रन्थकर्तृद्वेषादप्युपपद्यते। तच्छ्रैष्ठ्यं धार्मिकत्वं चासिद्धम्। शूद्रसेवया च व्याख्यातम्। तस्माद्वेदतदर्थापलापशीलश्चार्वाक इव वराकः कर्णाटवटुः शोचनीय एव विद्वद्भिः।

तदेवं सन्यासप्रमाणबलादपि न कर्मणां मोक्षे समुच्चय इत्यध्यवसीयते। अतो ज्ञानमेव मोक्षसाधनमिति सिद्धम्।

एवं सर्वकर्माणि तावत्सत्वशुध्यर्थानीत्यतः प्राग्भवीयान्यपि ज्ञानोपकारीणि। श्रवणादयश्च शमादयश्चावघातवद् दृष्टार्था इति ज्ञानो-

---

शङ्कयाह—यस्त्विति। विमतानि न स्मृतिवाक्यानि एकदण्डविषयत्वे सति काशीश्वरेणालिखितत्वात् भवद्वाक्यवदिति प्रत्याह—अथेत्यादिना। उक्तहेत्वनुपपत्तिरेव विपक्षे बाधिकेत्याशङ्कयाह—राज्ञेति। तेषां श्रेष्ठत्वाद्धार्मिकत्वाच्च द्वेषानुपपत्तिरित्याशङ्कयाह—तच्छ्रैष्ठ्यमिति। सन्यासविधायकवाक्यानां प्रबलप्रमाणत्वान्न भास्कराभिमतः कर्मसमुच्चयवादो युज्यत इत्यभिप्रेत्योपसंहरति—तदेवमिति। भास्करस्य प्रमाणन्यायनैपुणाभावे फलितमाह—अत इति। कथं तर्हि सम्प्रतितनसाधनविधुरस्य वामदेवादेस्तत्त्वज्ञानोत्पत्त्या मुक्तिसिद्धिरित्याशंक्य वृत्तसङ्कीर्तनपूर्वकं उत्तरमाह—एवमित्यादिना। चित्तशुद्धिप्रयोजनत्वात्कर्मणां तस्य च जन्मान्तरानुष्ठितेभ्योऽपि तेभ्यः सम्भवादैहिककर्मापेक्षानियमाभाववदुपायत्वाविशेषतः श्रवणादिष्वपि यदाकदाचिदेकवारमेवानुष्ठानमित्याशङ्कयाह—श्रवणादय इति। तर्हि ज्ञानोत्पत्तिपर्यन्तमेव शमादीनामपि श्रवणादिवदनुष्ठेयत्वम्।

"अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढीभवेत्।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम्।"

त्पत्तिपर्यन्तमनुष्ठेया यद्यपि। तथापि शमादीनामाश्रमधर्मत्वाद्यावज्जीवानुष्ठानम्।

### तत्पदार्थविचारः

तथा वाक्यार्थज्ञानं पदार्थज्ञानपुरस्सरं प्रसिद्धम्। तत्र ब्रह्मात्मनोस्तादात्म्यविषयः तत्त्वमसीतिवाक्यस्थतत्पदार्थस्तावत्सच्चिदानन्दं मायोपहितं जगदुत्पत्तिस्थितिलयनिमित्तमुपादानतया च सर्वात्मकं "सदेव सोम्ये"त्यादिवाक्योक्तं ब्रह्म प्रदर्शितम्। तथा च श्रुत्यन्तरं—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म" एष सर्वेश्वर" इत्यादि च।

ननु क्लेशकर्मविपाकाशयैरपरामृष्टः पृथिव्यादेर्भिन्नो निमित्तकारणमेवेश्वरो वादिभिरिष्यते। युज्यते च। स कथं सर्वसंसारसंसा-

---

इति हि वृद्धाः। तत्राह—[1]तथापीति। आत्मज्ञानस्यारादुपकारकाणि कर्माणि सन्निपत्योपकारकाणि शमादिसहितानि श्रवणादीनीति ब्रुवता तेष्वेवावान्तरभेदोऽपि व्याख्यातः। सम्प्रति साधनविचारस्य परिसमाप्तत्वाच्चातुर्थिके विचारे प्राप्ते [2]तदुपयुक्तमाह—तथेति। सामान्यन्यायं प्रकृते योजयति—तत्रेति। तत्पदार्थस्तावत् ब्रह्म। तच्च प्राक्प्रदर्शितमिति सम्बन्धः। तत्पदलक्ष्यं निक्षिपति—सदिति। तत्पदस्य वाच्यमर्थं कथयति—मायेति। तस्य तटस्थं लक्षणमाह—जगदिति। तस्याद्वितीयत्वसिद्ध्यर्थं ताटस्थ्यं निरस्यति—उपादानतयेति। स्वातिरिक्तजगदुत्पादकनियन्तृत्वं तन्निमित्तत्वं, स्वाश्रितजगज्जन्महेतुत्वं तदुपादानत्वमिति भावः। उक्ते ब्रह्मणि प्रमाणमाह—सदेवेति। छान्दोग्ये दर्शितं ब्रह्म तैत्तिरीयकेऽपि प्रसिद्धमित्याह—तथा चेति। बृहदाण्यकवाक्याच्च यथोक्तब्रह्मसिद्धिरित्याह—एष इति। जगदुपादानत्वेन सर्वात्मकत्वमुक्तमाक्षिपति—नन्विति। रागादिक्लेशैस्तत्कार्यकर्मभिस्तत्फलैश्चासंसृष्टस्येश्वरस्य पृथिव्यादिकर्मफलादत्यन्तभिन्नत्वं युक्तं, चेतनत्वाच्च द्रव्यं प्रति निमित्तत्वमेव तस्योचितमित्याह—युज्यते चेति। ईश्वरस्य निमित्तत्वनियमे सर्वात्मत्वासम्भवं

---

1. यद्यपीति 2. प्रत्याह

र्यात्मा स्यात्। न। तस्य पृथिव्यादिभ्यो भेदे मानाभावात्। प्रागपि च निरस्तो भेदः[1]।

ननु निमित्तश्चेदीश्वरः कथं न भिन्नः। उच्यते—स्वात्मनि कार्यारम्भकतयोपादानस्यैवोपकरणनियन्तृत्वेन निमित्ततोपपत्तेः न भेदसम्भवः। यथा माहेन्द्रजालकुशलस्य। न हि तत्र मायाविनो भिन्नं भिन्नोपादानं वा हस्त्यादि कार्यम्। कुलालादिवत् कर्ता भिन्नः कार्यादिति चेन्न ईश्वरस्य तटस्थकर्तृत्वे मानाभावात्। न चागमादन्यदीश्वरे मानमस्ति। अथ मानम्—अनादिप्रसिद्धाकर्तृकादन्यत्

---

फलमाह—**स कथमिति**। न हि चेतनस्य द्रव्यं प्रति निमित्तत्वनियमः। चेतनस्यैव केशाद्युपादानत्वदर्शनात् केवलस्य तदभावेऽपि विशिष्टस्य तदिष्टेः। न च तस्य पृथिव्यादिभेदो मानाभावादिति दूषयति—**न तस्येति**। प्रपञ्चेश्वरभेदस्य *प्रसिद्धत्वमाशङ्क्य दुर्निरूपतया †विषयाप्रसिद्धिरित्याह—**प्रागपीति**। ईश्वरो जगतस्तुपादानाच्च [2]भिन्नः। तन्निमित्तत्वात्। यथा घटनिमित्तं कुलालो घटात्तदुपादानच्चेति शङ्कते—**नन्विति**। जगन्निमित्तोपादानभेदानुमानं दूषयति—**उच्यत इति**। एकस्यैव जगन्निमित्तोपादानत्वसम्भवे दृष्टान्तमाह—**यथा माहेन्द्रेति**। स्वाश्रितमायारम्भकस्य तदुपकरणमन्त्रादिनियन्तुर्मायाविनो माहेन्द्रजालनिमित्तस्य तदुपादानादभिन्नत्वादुक्तो हेतुस्तस्मिन् व्यभिचरतीति भावः। जगन्निमित्तेश्वरजगतोर्भेदानुमानं व्यभिचारयितुं दृष्टान्तं व्याचष्टे—**न हीति**। विमतं कार्यात् भिद्यते कर्तृत्वात् कुलालवत्। न च मायाविनि व्यभिचारः। मायायास्ततो भेदाभावेऽपि तस्य ततो भेदादिति चोदयति—**कुलालादिवदिति**। न तात्त्विकभेदसाधनं, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादृष्टान्तविरोधादितरसाधने सिद्धसाध्यत्वमिति मत्वा समाधत्ते—**नेश्वरस्येति**। किं च ईश्वरे तटस्थे किं प्रत्यक्षं प्रमाणं किं वानुमानमाहोस्विदागम इति वक्तव्यम्। नाद्य इत्याह—**न चेति**। अयं भावः। न तावदीश्वरस्य बाह्येन्द्रियग्राह्यत्वं, "न चक्षुषेत्यादिश्रुतेः। योगीन्द्रियेषु च श्रुतेरविशेषात्। न च मनोगम्यत्वं, "यन्मनसा न मनुते" इत्यादिश्रुतेः।

---

1. कथम् इत्यधिकः पाठः * प्रत्यक्षप्रमाणसिद्धत्वं † प्रमाणतः अप्रसिद्धिः 2. भारते

सकर्तृकं कार्यत्वात्कुम्भवदिति। न। अनादेरियत्ताऽसंप्रतिपत्तेः। तदन्यधर्मिणोऽसिद्धेः। वियदादयो हि ते अनादयः। अस्माकं तूत्पत्तिमन्तः। यदापि विवादाध्यासितो धर्मी, तदापि ते भागे बाधः, असिद्धिश्च। वियदादौ हि कर्तृमत्त्वविवादविषये ते कर्तृमत्त्वं बाध्यते। कार्यत्वं चासिद्धम्।

वेदानां च धर्मिता तदपौरुषेयत्वविचारे निरस्ता। अस्तु तर्हि भूगोळकं धर्मीति चेन्न। सिद्धसाधनतापत्तेः। भूमिर्हि भोगसाधनं प्राणिनां कर्मोपार्जिता। अतस्ते तत्कर्तारः सिद्धाः। तथा च श्रुतिः—"इयं पृथिवी सर्वेषां भूतानां मध्वि"ति। विशिष्टज्ञानचिकीर्षाशाली कर्ता विवक्षित इति। न। अस्य वैशिष्ट्यस्य दुर्निरूपत्वात्। यदि हि पृथिवीतदुपादानविषयत्वं तद्वैशिष्ट्यं तदापि सिद्धसाधनता। साध्यवि-

---

साक्षिणस्तवाभावान्न तत्प्रत्यक्षता एतस्येति। द्वितीयं शङ्कते—अथेति। भागे बाधनिरासार्थमनादीत्यादिविशेषणम्। सन्दिग्धविशेष्यतया प्रतिज्ञावचनमपार्थकमिति दूषयति—नानादेरिति। असम्प्रतिपत्तिं साधयति—वियदादयो हीति। यत्र सकर्तृकत्वाकतृकत्वाभ्यां विप्रतिपतिस्तस्य धर्मित्वान्नापार्थकतेति चेत्। तत्राह—यदापीति। अन्यतरस्य भागे बाधमेव साधयति—वियदादौ हीती। तस्मिन्नेव वियदादिभागे हेत्वसिद्धिमन्यतरस्य प्रतिज्ञातां प्रज्ञापयति—कार्यत्वमिति। ननु वेदस्य धर्मित्वे पूर्वोक्तसर्वदोषनिवृत्तिरिति नेत्याह—वेदानां चेति। तेषु सकर्तृकत्वकार्यत्वयोर्निरस्तत्वाद्बाधोऽसिद्धिश्चेत्यर्थः। धर्म्यन्तरमाशङ्कते—अस्तु तर्हीति। किं कर्तृमत्त्वमात्रं साध्यं उत विशिष्टर्तृमत्त्वमिति विकल्प्य नाद्य इत्याह—न सिद्धसाधनतेति। तामेव प्रपञ्चयति—भूमिर्हीति। सर्वप्राणिनां भोगसाधनं भूमिरित्यत्र मधुब्राह्मणं प्रमाणयति—तथा चेति। द्वितीयमाशङ्कते—विशिष्टेति। अप्रसिद्धविशेषणत्वेन निराचष्टे—नास्येति। कुतो ज्ञानादिवैशिष्ट्यस्य दुर्निरूपत्वमिति, तत्किं पृथिव्यादिविषयत्वं किं वा नित्यत्वमिति। विकल्प्याद्यमनूद्य दूषयति—यदीत्यादिना। साध्यविकलश्चेति। पृथिवीतदुपादानविषयज्ञानवत्त्वस्य कुलालेष्वभावात्तत्कर्तृके घटे साध्याभावादित्यर्थः। सिद्धसाध्यतां साधयति—

कलश्च दृष्टान्तः। वेदान्तिनोऽपि हिरण्यगर्भज्ञानादिपूर्वकं भूगोळकमिति मतम्। नित्यत्वविशेषणोपेतत्वे तद्वैशिष्ट्येऽप्रसिद्धविशेषणता। साध्यविकलश्च दृष्टान्तः। पक्षधर्मताबलान्नित्यज्ञानादिमत्पूर्वकत्वसिद्धेः सिद्धसाधनताद्यसम्भव इति चेन्न। तदसम्भवात्। तथा हि—साध्यव्याप्तत्वात्साधनस्य पक्षधर्मताबलात् साध्यस्याविपक्षधर्मता सिध्यति। न तु साध्यस्यान्यः कश्चिदपीत्थम्भावः। न हि हिमालयधर्मता धूमस्य शीत इव हिमत्वं[अग्नेः]साधयति। तत्रास्तु तथाग्नेरदृष्टत्वादिति चेन्न। प्रकृतेऽपि तथा कर्तुरदृष्टत्वात्।

किञ्च कार्यत्वमपि ते, दुर्बोधम्। अतो हेत्वसिद्धिः साधनविकलश्च दृष्टान्तः। तथा हि—कार्यत्वमुत्पत्तिमत्वं, तच्च प्रागसतः सत्तायोगित्वं त्वयेष्यते। प्राक्त्वं चोत्पत्त्यपेक्षमित्युत्पत्तिप्राक्त्वयोरन्योन्याश्रयत्वान्नैकमपि सिध्यति। उक्तश्चैतत्पुरस्तात्परमाणुवादे वेदा-

---

वेदान्तिन इति। कल्पान्तरमनुभाष्य दोषमाह—नित्यत्वेति। पक्षद्वयोक्तं वैशिष्ट्यं ज्ञानादेरिष्टं, तच्च न साध्यतया सिध्यति, किं तु पक्षधर्मतावशादिति शङ्कते—पक्षेति। व्याप्यस्य व्यापकनियतत्वाद्व्याप्यसद्भावाद्व्यापकसद्भावमात्रं सिध्येत् न तु तवाभिमतो विशेषः कश्चिदिति समाधत्ते—न तदसम्भवादिति। असंभवमेव साधयति—तथा हीति। पक्षधर्मतावशाद्व्याप्तविशेषासिद्धौ दृष्टान्तमाह—न हीति। धूमानुमाने पक्षधर्मतावशान्न शीतोऽग्निः सिध्यति। तस्यान्यत्रानुपलब्धेरिति शङ्कते—तत्रेति। कार्यत्वानुमानेऽपि पक्षधर्मतानुरोधेन नित्यज्ञानादिमत्कर्तृपूर्वकत्वासिद्धिः। तादृशस्य कर्तुरन्यत्रादृष्टत्वादिति परिहरति—न प्राकृतेऽपीति। सिद्धे कार्यत्वे तस्य पक्षधर्मतावशाद्विशिष्टज्ञानादिमत्कर्तृपूर्वकत्वसिद्धिः। तच्चासिद्धमिति दोषान्तरमाह—किं चेति। कार्यत्वस्य दुर्बोधत्वे फलितं दोषद्वयमाह—अत इति। कथं पुनर्दुरवबोधत्वं कार्यत्वस्येति। तत्राह—तथा हीति। पुनरुक्तिं परिहर्तुमुक्तस्यैव प्रसङ्गागतत्वं दर्शयति—उक्तं चेति। अस्तु तर्हि पृथिव्यादेः सकर्तृकत्वे साध्ये सावयवत्वं हेतुरित्याशङ्क्य स्पर्शवत्का[1]र्यस्यैव सावयत्वादुक्तदोषतादव-

---

1. कार्यत्वस्यैव

पौरुषेयताविचारे च। साध्यासम्भवादेव हेत्वन्तरोत्प्रेक्षयाप्यभिमतेश्वरसाधनं व्याख्यातम्।

मानमनोहरोक्तेश्वरसाधकमहाविद्यानुमानखन्डनम्

यदपि वाममार्गानुसारिणा मानमनोहरे प्रलपितं, विमतं कर्मप्रयत्नाधारजं कर्मत्वात्। तथा मूर्तं प्रयत्नजं परमाण्वन्यत्वे सति मूर्तत्वात्, प्रतिपन्नवदिति, तत्रापि विपक्षे बाधाभावात्, स्पष्टा हिरण्यगर्भाभ्युपगमात्सिद्धसाधनता। द्वितीयहेतोर्विशेषणं मे व्यर्थम्। तत्त्यागे तेऽणुभिर्व्यभिचारश्च। ब्रह्मैवेश्वर इति चेन्न। ईश्वरस्य तद्वि-

---

स्थ्यान्नैवमित्यभिप्रेत्य दोषान्तरमाह— साध्येति। मानमनोहरकारोदीरितमीश्वरानुमानमुत्थापयति— यदपीति। विमतमित्यस्मदादिप्रयत्नाजन्यमुच्यते। अंशतः सिद्धसाध्यत्वं दृष्टान्तासिद्धिं च निरसितुं विमतपदम्। एवमपि प्रकृतसाध्यसंसर्गयोग्यानामङ्कुरादीनां विवादविषयाणां भावादेकस्मिन्मते कर्मत्वहेतोर्भागासिद्धिः। सा मा भूदिति कर्मपदम्। अस्मदादिभिः सिद्धसाध्यत्वमुद्धर्तुं प्रयत्नाधारेत्युक्तम्। अङ्कुरादिकर्मोत्पत्तिसामग्रीसमानकालीनप्रयत्नाधारजन्यत्वस्य विवक्षितत्वादस्मदादीनां च तादृशप्रयत्[1]नानाधारत्वान्न सिद्धसाध्यता। न च तादृशप्रयत्नजन्यत्वमेवास्त्विति वाच्यम्। सकर्तृकशब्दार्थनिर्वचनार्थं तदुपन्यासस्योचितत्वात्तादृक्प्रय[2]त्नवज्जन्यत्वे सति तज्जन्यत्वस्य तदर्थत्वादित्यर्थः। अनुमानान्तरमाह—तथेति। अत्रापि विमतमित्यनुषज्यते। परमाणुषु व्यभिचारं परिहर्तुं परमाण्वन्यत्वे सतीत्युक्तम्। आत्मादिषु व्यभिचारं वारयति—मूर्तत्वादिति। आद्यानुमानेऽस्मत्प्रयत्नजन्यकर्म दृष्टान्तः, द्वितीये घटादिरित्याह—सम्प्रतिपन्नवदिति। अनुमानयोः साधरणं दूषणमाह—तत्रापीति। हेतुद्वयानुपपत्तिर्बाधिकेत्याशङ्क्यान्यथोपपत्तिं मत्वा दोषान्तरमाह—हिरण्यगर्भेति। द्वितीयहेतावसाधारणं दूषणं दर्शयति—द्वितीयहेतोरिति। परमाणूनामप्यस्माकं नित्यत्वासम्प्रतिपत्तेरिति भावः। अथ मूर्तत्वमेव हेतुः। तत्राह—तत्त्याग इति। हिरण्यगर्भाभ्युपगमादभिहितं सिद्धसाध्यत्वं परिहर्तुं शङ्कते—ब्रह्मेति। नियन्तृनियन्तव्यभावेन भेदान्नैवमित्याह—नेश्वरस्येति।

---

1. प्रयत्नाधारत्वात् 2. प्रयत्नजन्यत्वे

धातृत्वात् । "यो ब्रह्माणं विदधाति पूर्वमि"ति श्रुतेः ।

ननु एतत्ज्ञानं एतज्जनकानित्येतरज्ञानजं कार्यत्वात् संप्रतिपन्नज्ञानवदिति, नित्यज्ञाने सिद्धे तदाधार ईश्वरस्सिद्धः । न । इत्थं तत्सिद्धावतिप्रसङ्गाद्विपक्षे बाधाभावाच्च । तथा हि मानमनोहरकर्तृशरीरं एतज्जनकाचण्डालेतरजनितं कार्यत्वात् संप्रतिपन्नवदित्यपि निपुणंमन्येन देवानांप्रियेण तेनानुमीयेतेति । कार्यत्वं च तेऽसिद्धमित्युक्तम् । दृष्टान्ते चानित्येतरज्ञानजत्वाभावात्साध्याभावः । एतज्जनकत्वविशेषणान्नायं दोष इति चेन्न । विशेष्यांशस्य दृष्टान्तेऽभावात् । न च ते विशिष्टं तत्वान्तरम् । एतज्जनकानित्येतरज्ञानं एतज्जनकं न भवति एतज्जनकानित्येतरज्ञानत्वात् अन्यजनकानित्यज्ञानवदिति सत्प्रति-

---

तत्र प्रमाणमाह—**यो ब्रह्माणमिति** । मानमनोहरोक्तमनुमानान्तरमुपन्यस्यति—**नन्विति** । जन्यं किञ्चिज्ज्ञानं पक्षीकरोति—**एतदिति** । एतदितरज्ञानजमित्युक्ते प्रथमज्ञानेन पक्षीकृतज्ञानजकेन तद्व्यतिरिक्तेन सिद्धसाध्यता, तन्निरासार्थमुक्तम्—**जनकेति** । तथापि विरोधः, जनकस्य जनकत्वानधिकरणत्वासम्भवादत आह—**अनित्येति** । तथापि दृष्टान्तासिद्धिः । सर्वस्य जनकज्ञानस्यानित्यत्वनियमादत उक्तम्—**एतदिति** । अथोक्तमनुमानं नित्यं ज्ञानं साधयति न तु भवदभिमतमीश्वरमिति, तत्राह—**नित्येति** । आभाससमानतया दूषयति—**नेत्थमिति** । दोषान्तरमाह—**विपक्ष इति** । आभाससमानतां साधयति—**तथा हीति** । यत्तु विपक्षे बाधाभावादिति । तदयुक्तम् । कार्यत्वानुपपत्तेरेव बाधकत्वादित्याशङ्क्याह—**कार्यत्वं चेति** । दृष्टान्तितस्यानित्यज्ञास्य नित्यज्ञानजन्यत्वानभ्युपगमेन साध्यशून्यं निदर्शनमित्याह—**दृष्टान्ते चेति** । तस्य नित्यज्ञानाजन्यत्वेऽपि पक्षीकृतजनकानित्यज्ञानेतरज्ञानजन्यत्वस्य सत्वान्न साध्यविकलतेति शङ्कते—**एतदिति** । किमेकैकप्रतियोगिकान्यज्ञानजन्यत्वं विवक्षितं किं वा विशिष्टान्यज्ञानजन्यत्वम् । नाद्यः । दृष्टान्ते अनित्यज्ञानेतरज्ञानजन्यत्वविशेषाभावादुक्तदोषप्रसक्तेरित्याह—**न विशेष्येति** । न द्वितीय इत्याह—**न चेति** । पूर्वोक्ते महाविद्यानुमाने प्रत्यनुमानमाह—**एतज्जनकेति** । एतज्जनकत्वेन संमते ज्ञाने व्यभिचारं वारयति—**एतज्जनकेतरेति** । तथाप्येत-

**पक्षता च। न च भागे सिद्धसाधनता। सामान्योपाधौ निषेधात्। अतः सम्भावितमद्यपानस्य वेदान्तद्विषो मतमुपेक्षणीयम्। तस्मान्न कार्यत्वादीश्वरानुमापकम्।**

**किन्तु वेदोदितेश्वरसम्भावनाहेतुः। प्राकृतैर्हि पुरुषैर्मनसाप्यचिन्त्यरचनारूपहिरण्यगर्भतनुभुवनादिकार्यं नियतं नियतप्रयोजनं चाचिन्त्यशक्तेः सर्वज्ञात् सर्वेश्वरात् पुरुषोत्तमादेव सम्भवेत्। आगमगम्य**

---

ज्जनककालादेरन्यत्वं तस्मिन्नस्तीति स एव व्यभिचारस्तत्राह—**अनित्येति**। कालादौ व्यभिचारं निवारयितुं ज्ञानत्वादित्युक्तम्।

नन्वेतज्जनकानित्येतरज्ञानशब्देन नित्यमनित्यं वा ज्ञानमुच्यते। नाद्यः। तत्राश्रयासिद्धेः। न द्वितीयः। घटादिज्ञानस्यास्माभिरेतज्जनकत्वानभ्युपगमाद् भागे सिद्धसाध्यत्वापत्तेरिति। तत्राह—**न चेति**। त्वदीयप्रतिज्ञार्थप्रतिषेधस्याभिप्रेतत्वान्नात्र किमपि दूषणमि[1]त्याह—**सामान्योपाधौ निषेधा[2]दिति**। एतज्जनकेतरत्वाक्रान्तेषु मध्ये यद्यदेतज्जनकत्वेन शङ्क्यते ज्ञानं तदेतज्जनकं न भवतीति प्रतिषेधस्य विवक्षितत्वादिति मानमनोहरोदीरितानि सर्वाण्येवानुमानानि प्रमत्तप्रलापवत्तत्वानिश्चायकानीति सूचयति—**अत इति**। ईश्वरस्यानुमेयत्वाभावमुपसंहरति—**तस्मान्नेति**। कथं तर्हि जन्मादिसूत्रे भाष्यकारैरीश्वरविषयमनुमानमनुमोदितमित्याशङ्क्याह—**किं त्विति**। विचित्रकार्यत्वाज्जगतो विशिष्टविज्ञानवत्कर्तृत्वं चित्रादिवदनुमातुं शक्यमिति सम्भावनाहेतुतां द्रढयति—**प्राकृतैरिति**। हिरण्यगर्भादौ जगद्धेतौ सम्भवति कथमीश्वरे सम्भावनाहेतुरनुमानं, तत्राह—**हिरण्यगर्भेति**। तस्य कार्यप्रपञ्चान्तर्भूतत्वान्न तद्धेतुतेति भावः। विमतं बुद्धिमत्कर्तृकं व्यवस्थितकार्यत्वात्प्रासादवदित्याह—**नियतमिति**। विमतं प्रेक्षावत्कर्तृकं नियतप्रयोजनत्वात् सम्प्रतिपन्नवदित्याह—**नियतेति**। एकस्याः शरीरविरचनायाः विविधसिराजालसंनिवेशविशिष्टाया रूपमपि न शक्यमसर्वज्ञेन विज्ञातुं, दूरे तु जगद्बिम्बविरचनायाः। तत्कथमसर्वशक्तिरसर्वज्ञश्च कुर्याज्जगन्मण्डलमित्याह—**अचिन्त्येति**। क्षराक्षराभ्यामतीतत्वाच्च ब्रह्मणो युक्तं जगद्धेतुत्वमित्याह—**पुरुषोत्तमादिति**। तृतीयमाशङ्कते—

---

1. दूषणमित्यर्थः 2. निषेधादित्यर्थः

एवास्तु तटस्थेश्वर इति चेन्न । तस्यासिद्धेः । वियदादेः प्रकृतिरीश्वरः श्रूयते—"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादि । छान्दोग्येऽपीश्वरस्य प्रकृतिताऽवगम्यते "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवतीत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपत्तये "यथा सोम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकार" इति दृष्टान्ताभिधानात् एवमुपनिषदन्तरेऽपि ब्रह्मणः प्रकृतितावगम्यते । तथा च वेदाचार्यप्रणीतमौपनिषदं सूत्रम्—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"ति ॥

किञ्च तटस्थेश्वरवादेऽन्तर्यामिब्राह्मणविरोधः । भिन्नत्वे कार्यत्वाद्यापत्तिर्लोभगन्धश्च दुष्परिहरः । संयोगादिसम्बन्धात् सर्वान्तर्यामितेश्वरस्येति चेन्न । "असङ्गो न हि सज्जते", "अत्यतिष्ठद्दशाङ्गुलमि"ति

---

आगमेति । तटस्थेश्वरविषयागमस्यासिद्धत्वान्नैवमित्याह—न तस्येति । ईश्वरकारणवादिवेदस्य तटस्थेश्वरविषयत्वमाशङ्क्य परिहरति—वियदादेरिति । यद्यपि तैत्तिरीयश्रुतिस्तटस्थमीश्वरं नावगाहते । तथापि छन्दोगश्रुतिस्तं विषयीकरिष्यतीति आशङ्क्याह—छन्दोगेऽपीति । तथापि श्रुत्यन्तराणि तटस्थमीश्वरं प्रकाशयिष्यन्तीत्याशङ्क्याह— एवमिति । "भूतयोनिं परिपश्यन्ति धीराः" "अक्षरात्संभवतीह विश्व"मित्यादाविति यावत् । ईश्वरो जगदुपादानमित्यत्रैवाप्तवाक्यं प्रमाणयति—तथा चेति । ईश्वरो जगतो निमित्तमुपादानं च । तथा सत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मृत्पिण्डदृष्टान्तस्य चोपपत्तेरित्यक्षरार्थः । तटस्थेश्वरसाधकागमाभावमभिधाय तद्विरोधिनस्तस्य सत्वं कथयति—किं चेति । "एषत आत्मे"ति श्रवणान्न ताटस्थ्यमीश्वरस्य युक्तमित्यर्थः । तत्रैव न्यायविरोधं दर्शयति—भिन्नत्व इति । नियन्तव्येन संयोगो हेतुहेतुमद्भावश्चेति सम्बन्धादन्तर्यामित्वं तटस्थस्यैवेश्वरस्य सम्भवति । आत्मशब्दश्च तस्मिन्नात्मीयत्वादपि युज्यते । अतो नान्तर्यामिब्राह्मणविरोधोऽस्तीति शङ्कते—संयोगादिति । संयोगादिसम्बन्धमीश्वरस्य निरस्यति—नेत्यादिना । आत्मशब्दश्चासति बाधके स्वरूपवाची न युक्तोऽन्यथयितुमिति

चासङ्गश्रुतिविरोधात्। अत एव हि तटस्थेश्वरः सिध्यतीति चेन्न। "एष त आत्मान्तर्याम्यमृत" इति चात्मत्वश्रुतेः। तर्हि वाक्ययोर्विरोधः। सर्वात्मत्वे चेश्वरस्यासंसारित्वं न स्यादिति चेन्न। मायाविन इव मायाकार्येण तत्वतोऽसंस्पर्शात्। मा[1]ययैव बहुरूपत्वं च श्रुतिसिद्धम्। "इन्द्रो मायाभिः पुरुरूप ईयत इति"। अतो न विरोधः। नापीश्वरस्य संसारित्वप्रसङ्गः।

तथा चोक्तं तत्र भवद्भिस्तत्वविद्भिः—"यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाणुमात्रेणापि स न सम्बध्यत" इति। तर्हि कस्य संसारः? परमार्थतश्चेत्पृच्छसि, न कस्यापि। व्यवहारतस्त्वविद्ययाऽऽत्मन एव

---

भावः। असङ्गश्रुतिमेवाश्रित्याशङ्कते—अत एवेति। [2]समबलत्वेन वस्तुनि विकल्पानुपपत्तेः श्रुत्योर्विरोधेऽन्यतरबाधः स्यादिति शङ्कते—तर्हीति। तुल्यबलत्वे स्यादित्थं, सर्वात्मत्वश्रुतिमनुसृत्यासङ्गश्रुतेर्व्याख्येयत्वेन न तटस्थेश्वरसिद्धिरित्याशङ्क्य सर्वात्मत्वश्रुतेरीश्वरस्वरूपविरोधित्वेन दुर्बलत्वमाह—सर्वात्मत्वे चेति। मायिकं सर्वात्मत्वं वास्तवमसङ्गत्वमित्यविरोधं दर्शयन्नुत्तरमाह—नेत्यदिना। कथं पुनर्मायामयत्वं सर्वात्मत्वस्य प्रतिज्ञायते। तत्राह—मायाया इति। वास्तवमसङ्गत्वमवास्तवं सार्वात्म्यमिति स्थिते फलिताह—अत इति। मायामयेन संसारेण चिदात्मनस्तत्वतोऽसंस्पर्शे भाष्यं प्रमाणयति—तथा चेति। यत्र चिदात्मनि यस्याहङ्कारादेरध्यासो, वैपरीत्येन वा, तेनाहङ्कारादिना कृतेनाशनायादिना दोषेण चिदात्मा, तत्कृतेन वा गुणेन चैतन्यादिनाहङ्कारादिर्न वस्तुतः सम्बध्यते। न खलु समारोपितसर्पकृतविसर्पणादिना रज्जू रज्जुकृताबाध्यत्वादिना वा सर्पस्सम्बन्धमनुभवतीति भाष्याक्षरार्थः। ईश्वरस्य संसाराभावे ततोऽन्यस्य चेतनस्याभावादचेतनस्य तदनुपपत्तेः संसारो निरालम्बनः स्यादिति चोदयति—तर्हीति। तत्वतो वा संसारालम्बनं चोद्यते व्यवहारतो वा? नाद्य इत्याह—परमार्थतश्चेदिति। द्वितीयं प्रत्याह—व्यवहारतस्त्विति। स्वमतनिगमनपुरस्सरं परमतनिरसनमुपसंहरति—अतो-

---

1. मायाया: 2. समादायातिनेति

स्वप्न इवोपपद्यते। अतोऽविद्यावद्ब्रह्म, प्रकृतिरित्यागमबलादास्थेयम्। तटस्थेश्वरवादश्च प्रमाणयुक्तिहीनः, श्रुतियुक्तिविरुद्धः शब्दपराङ्मुखैरुत्प्रेक्षित उपेक्षणीयः।

अविद्याश्रयविचारः

ननु ब्रह्मणोऽपि सर्वज्ञस्याविद्येति न समञ्जसम्। मैवम्— न हि सर्वज्ञस्याविद्या। किन्तु प्रकाशरूपस्याविद्यया सर्वसम्बन्धात् सर्वज्ञता। प्रकाशरूपस्याविद्यानुपपन्नेति चेत्। न। अविरोधात्। प्रमाणं ह्यविद्याप्रत्यर्थि प्रसिद्धम्, न नित्योऽनुभवः। तत्साधकत्वात्। स्वापे सहभावदर्शनात्। स्वापे नित्योऽनुभवः अज्ञानं चासकृत्साधितम्। किञ्च जडस्य नाज्ञानं सिध्येत्। नापि प्रयोजनवत्। अज्ञानं न हि

---

ऽविद्यावदिति। अविद्यावद्ब्रह्म जगत्कारणमिति मतमपि नादरणीयं, सर्वज्ञत्वाविद्यावत्त्वयोरेकत्र व्याघातादिति शङ्कते—**नन्विति**। विरोधं समाधत्ते—**मैवमिति**। तस्याः स्वातंत्र्यासंभवात् कस्य सेत्याह—**किं त्विति**। चिन्मात्रस्येत्युत्तरमाह— **प्रकाशरूपस्येति**। कस्य तर्हि सर्वज्ञतेत्याशङ्क्य तस्यैवाविद्यावशादित्याह—**अविद्ययेति**। आत्मा नाप्रकाशाश्रयः प्रकाशत्वात्, आदित्यवदिति शङ्कते-**प्रकाशरूपस्येति**। अज्ञोऽहमित्यनुभवविरोधं मन्वानः समाधत्ते—**नाविरोधादिति**। ज्ञानेनाज्ञानस्य निरस्यत्वप्रसिद्धेरविरोधासिद्धिरिति चेत्, तत्र प्रमाणज्ञानमज्ञाननिवर्तकं किं वा स्वरूपज्ञानमिति विकल्प्याद्यमनुमोदते— **प्रमाणं हीति**। द्वितीयं दूषयति—**नेति**। स्वरूपज्ञानं नाज्ञाननिवर्तकं तदवभासकत्वात् घटप्रकाशकप्रदीपवदित्यर्थः। किं चाज्ञानं न स्वरूपज्ञाननिरस्यं तेन सहावस्थितत्वात् प्रदीपेन स्थितघटवदित्याह—**स्वाप इति**। हेत्वसिद्धिमाशङ्क्य परिहरति—**स्वाप इत्यादिना**। इतश्च चिन्मात्रस्यैवाज्ञानमित्याह— **किं चेति**। यो हि चिन्मात्रादन्यस्याज्ञानं ब्रूते स वक्तव्यः। किमहङ्कारादेरज्ञानं किं वा जीवस्येति। नाद्य इत्याह—**जडस्येति**। साधकाभावादिति शेषः। प्रयोजनाभावाच्च न तस्याज्ञानमित्याह—**नापीति**। कथं पुनस्साधकाभाववचनमिति चेत्तत्र किं प्रमाणं साधकं किं वा साक्षीति विकल्प्याद्यं दूषयति— **न हीति**। द्वितीयं निराचष्टे—**नापीति**। प्रसाधकाभावं प्रतिपाद्य प्रयोजनाभावं प्रकटयति—**न चेति**। अहङ्कारादेरज्ञानमिति पक्षं प्रतिक्षिप्य पक्षान्तरमु-

प्रमाणगम्यमित्युक्तम् । नापि साक्षिवेद्यं जडाज्ञानम् । चैतन्येन सम्बन्धाभावात् । न चास्फुरणं विपरीतस्फुरणं वाऽज्ञानकार्यं सम्भवेत् । जडस्यास्फुरणरूपत्वात् ।

अत्राह स्वयूथ्यः । अस्तु तर्हि जीवाश्रयमज्ञानं, तेषां चेतनत्वात् । तथा हि—अहमज्ञ इति नः प्रत्यक्षमिति । न । अज्ञानकार्याहङ्काराद्यधीनत्वाज्जीवस्य । तत्र यद्यहङ्कारादिविशिष्टो जीवोऽविद्याश्रयः तदा विशेषणस्याप्याश्रयत्वात् कार्याश्रयमुपादानमित्यापद्येत ।

अथ तदुपलक्षितं चैतन्यमाश्रयामः । तदा नाम्नि विवादः । पूर्वपूर्वाविद्याकार्यविशिष्टस्योत्तरोत्तराविद्या[श्रयत्वात् नोपादानस्य कार्याश्रयता ।] न चानवस्थादोषः । अनादित्वादिति चेन्न । अविद्याभेदे प्रमाणाभावात् । मिथ्याज्ञानं तत्संस्कारो वाऽविद्येति चेन्न । तयोःका-

---

पादत्ते—अत्राहेति । जीवानामपि जडत्वादुक्तदोषसाम्यमित्यत आह—तेषामिति । तेषु सम्भवत्यस्फुरणं विपरीतस्फुणं वा प्रयोजनमज्ञानस्येति भावः । साधकाभावोऽपि नास्तीत्याह—तथा हीति । अज्ञानं स्वकार्याहङ्कारादिभावमापन्नं जीवत्वव्यवहारहेतुः । अहङ्कारादेः सकाशात्प्रागेव प्रसिद्धत्वान्न पश्चिमं जीवमाश्रयते परस्पराश्रयादिति परिहरति—नाज्ञानेति । किं चाहङ्कारादिविशिष्टो जीवोऽज्ञानाश्रयस्तदुपलक्षितो वा ? । नाद्य इत्याह—तत्रेत्यादिना । द्वितीयमनूद्य दूषयति—अथेत्यादिना ।[1] [अविद्या]भेदमादाय परस्पराश्रयादिपरिहारमाशङ्कते—पूर्वपूर्वेति । यदविद्याकार्यविशिष्टो यो जीवस्तस्यैव तदविद्याश्रयत्वाभावादज्ञानस्य कार्याश्रयत्वपरस्पराश्रयत्वयोरभावेऽपि स्यादनवस्थेति चेत्तत्राह—न चेति । अविद्यात्वतत्कार्यत्वालिङ्गितव्यक्तीनामेकथापि व्यक्त्या विनानादिकालस्यावृत्तेरिति हेतुमाह—अनादित्वादिति । न तावदुक्तलक्षणमनादित्वमादायानवस्था परिहर्तुं शक्येत । न खलु परम्परामातिष्ठमानस्य तदवगाहि प्रमाणमन्तरेणानवस्थासमाधानमुचितमित्याह—नेति । किं च यदज्ञानं भिन्नं मन्यसे तत्किं मिथ्याज्ञानादेरन्यदनन्यद्वा इति विकल्प्य नाद्य इत्याह—अविद्येति । द्वितीयं उत्थापयति—मिथ्याज्ञानमिति । तदुपा-

---

1. भेदमादाय

र्यत्वादनन्वयादुपादानतायोगात् । कार्यकारणभेदे चासत्कार्यवादप्रसङ्गात् । अतो न मिथ्याज्ञानाद्यहंकारोपादानम् ।

किञ्च कार्यविशिष्टश्चेज्जीवः तदा विशेषणभेदाद्विशिष्टभेदः[1] । अतोऽकृताभ्यागमः कृतविप्रणाशश्च स्यात् । मोक्षे च विशेषणनाशाज्जीवनाशः प्रसज्येत । तदनाशे च मोक्षेऽप्यहङ्कारान्वयात्संसारादविशेषः । तदेवं नाहङ्कारादिविशिष्टो जीवोऽविद्याश्रयः । अहमज्ञ इति ज्ञप्तिश्चैतन्येनाहङ्काराज्ञानयोः सम्बन्धादुपपन्ना । तस्माच्चैतन्यैकरसं ब्रह्म नान्यत् । अविद्याशबळं मूलप्रकृतिस्तत्पदस्य वाच्योऽर्थः । त्वंपदार्थान्वयविरोधिभागत्यागेन स्वरूपमात्रं लक्ष्यम् ।

देहात्मवादः

अथ[2] त्वंपदार्थो जीवात्मा विचार्यते । नन्वत्र किं विचार्यम् ।

---

दानत्वेनान्यदज्ञानमेष्टव्यमिति परिहरति—**न तयोरिति** । तयोरेवान्योन्यमुपादानोपादेयत्वसंभवात् किमज्ञानान्तरेणेति चेन्नेत्याह—**अनन्वयादिति** । मा भूत् कार्ये कारणस्यान्वयः तयोरत्यन्तभेदादित्यत आह—**कार्येति** । स च निरस्तः पुरस्तादित्यर्थः । मिथ्याज्ञानादेरुपादानत्वासंभवे दण्डायमानमानाद्यनिर्वाच्याज्ञानमहङ्कारादेरुपादानं सिध्यतीति फलितमाह—**अत इति** । स्थूलशरीरविशिष्टो वा सूक्ष्मशरीरविशिष्टो वेति विकल्पयति—**किं चेति** । तत्राद्यमनूद्य दूषयति—**कार्यविशिष्टश्चेदिति** । प्रतिजन्म स्थूलदेहभेदात् तद्विशिष्टस्य जीवस्यापि भेदे प्राप्ते दोषमाह—**अत इति** । द्वितीयेऽपि मोक्षे विशेषणस्य नाशोऽनाशो वेति विकल्प्य प्रथमं प्रत्याह—**मोक्षे चेति** । द्वितीयं निराकरोति—**तदनाशे चेति** । अवान्तरप्रकृतमुपसंहरति—**तदेवमिति** । अज्ञोऽहमिति प्रतीतेस्तर्हि का गतिरित्यशङ्क्याह—**अहमिति** । परमप्रकृतमुपसंहरति—**तस्मादिति** । कथं कूटस्थे मुक्तोपसृप्ये ब्रह्मण्यविद्याशबलतेति । तत्राह—**तत्पदस्येति** । तत्पदवाच्यमेव ब्रह्म मुक्तोपसृप्यमिति । नेत्याह—**त्वम्पदार्थेति** । विरोधिभागशब्देन पारोक्ष्यादि विवक्ष्यते ।

---

1. जीव इत्यधिकः पाठः 2. पृथक् इत्यधिकः पाठः

**देह एवात्मा । तत्रैवाहंप्रत्ययस्य सार्वजनीनत्वात् । आत्मसंभेदाद्देहस्यात्मत्वप्रत्यय इति चेन्न । देहादन्यस्यात्मनोऽसिद्धेः । न हि देहादन्य आत्मा उपलभ्यते । नाप्यप्रत्यक्षं मानम् । मानान्तरगम्योऽप्यात्मा देहाद्भिन्नश्चेत् कुम्भवद्विकारः स्यात् । अभिन्नत्वे तु देह एवात्मा । अन्यस्यादर्शनात् । भिन्नाभिन्नश्च नेष्यते । विरोधात् । भेदादिनानिर्वचनीयश्चेदवस्तु स्यात् । अतो नित्यः स्वर्गापवर्गान्वयी आत्मेति किंवदन्तीमात्रम् । मानाभावात् । तस्माद्देह एवात्मा । तदनुसारि च स्वर्गापवर्गाद्यभ्युपेयम् ।**

---

त्वंपदार्थस्तर्हि कीदृगिति तत्राह—**त्वंपदार्थ इति ।** जीवात्मन्यपि विप्रतिपत्तिरस्ति विपश्चितामित्य[1]त आह—**विचार्यत इति ।** संशयो हि विचारबीजं, तदभावादात्मनो न विचार्यत्वमित्याक्षिपति—**नन्विति ।** तत्र प्रमाणमाह—**तत्रैवेति ।** अहम्प्रत्ययालम्बनस्यात्मत्वादिविवादान्मनुष्यत्वादिधर्मवति च देहे तत्प्रत्ययस्य सर्वलोकप्रसिद्धत्वात्तस्यात्मत्वे सति न किञ्चिद्विचार्यमस्तीत्यर्थः । [2]अयसो वीतिहोत्रत्वप्रत्ययवद्देहेऽहम्प्रत्ययस्यान्यथासिद्धेर्न तस्यात्मतेति शङ्कते—**आत्मसंभेदादिति ।** अयसो भिन्नवह्निवदात्मनो देहादन्यस्य मानाभावादसिद्धेर्नैवमित्याह—**न देहादिति ।** कथं पुनरात्मनि देहातिरिक्ते मानाभावः, तत्र वक्तव्यं आत्मा देहादन्योऽध्यक्षसिद्धो वा मानान्तरसिद्धो वेति । नाद्य इत्याह—**न हीति ।** न द्वितीय इत्याह—**नापीति ।** किं च मानान्तराभ्युपगमेऽपि आत्मा देहाद् भिन्नो वा अभिन्नो वा भिन्नाभिन्नो वाऽनिर्वाच्यो वेति विकल्प्य न प्रथम इत्याह—**मानान्तरगम्योऽपीति ।** द्वितीयं प्रत्याह—**अभिन्नत्वे त्विति ।** तृतीयं निराकरोति—**भिन्नाभिन्नश्चेति ।** चतुर्थं शिथिलीकरोति—**भेदादिनेति ।** ननु श्रुतिस्मृतीतिहासपुराणप्रतिपन्नस्वर्गापवर्गान्वयी देहादन्योऽस्त्यात्मेति । तत्राह—**अत इति ।** श्रुत्यादिप्रामाण्येऽपि विप्रतिपत्तिं मत्वा हेतुमाह—**मानाभावादिति ।** देहातिरिक्तात्माभावे प्रत्यक्षसिद्धमात्मानं निगमयति—**तस्मादिति ।** देहातिरिक्तस्य भोक्तुरभावे कथं स्वर्गादेरुपपत्तिस्तत्राह—**तदनुसारि चेति ।** स्वर्गो

---

1. इत्याशंक्याह    2. अप्रसिद्ध....त्र

## देहाद्यात्मवादखण्डनम्

उच्यते—यदि प्रत्यक्षमेव मानं, तदा ते जीवितुमपि न शक्यम्, सुतरामपि न वदितुम्। स्तनपानादेर्हि जीवनसाधनत्वस्याप्रत्यक्षत्वात्। तदर्थप्रवृत्त्यभावात् त्वत्पक्षे जीवनमपि दुर्घटम्। कुतो देह एवात्मेति निश्चयः सम्भवी। देहान्तरचैतन्यस्य च [1]तत्राप्रत्यक्षत्वाद्देहान्तरं न चेतनं सिध्येत्। अत एक एवात्मा स्यात्। परेष्टश्चात्मा ते न सिद्धो न निषिध्यते। चैतन्यस्य च प्रागभावप्रध्वंसयोः प्रत्यक्षागम्ययोरसिद्धेश्चैतन्यमनाद्यनन्तं सम्भवेत्। देहान्तरमपि चेतनं मद्देहवत् परेष्टश्चात्मा तत्प्रसिद्धिसिद्धो निषिध्यते। न च मानान्तरप्रसङ्गः।

---

हि स्रक्चन्दनवनितादिभोगजनितं सुखम्, अपवर्गस्तु चैतन्यविशिष्टदेहापायः। विद्याविद्यागुरुशिष्याद्यपि तदनुसारेणाभ्युपेयमिति भावः।

देहस्यात्मत्वे संशयाभावादविचार्यत्वमुचितं, न तु तस्यात्मत्वमित्युत्तरमाह—**उच्यत इति**। यदुक्तं नाप्रत्यक्षं मानमिति तत्राह—**यदीति**। प्रत्यक्षैकप्रमाणवादिपक्षे सकलव्यवहारविलोपप्रसङ्गं प्रति मानं प्रकटयति—**स्तनपानादेरिति**। किं च लोकायतस्य स्वदेहातिरिक्ते देहे चैतन्यं प्रत्यक्षं न वा?। नाद्यः। तत्राप्यहम्प्रत्ययप्रसङ्गादित्यभिप्रेत्य द्वितीयं प्रत्याह—**देहान्तरेति**। देहादेरतिरिक्तश्चात्मा प्रत्यक्षो न वा?। उभयथापि न तन्निषेधः। प्रमितस्याप्रमितस्य वा तदयोगादित्याह—**परेष्टश्चेति**। किं च चैतन्याभावं न प्रत्यक्षा संविदवगाहते। स्वाभावाग्राहकत्वात्। न चान्या संवित् तद्ग्राहिका। भेदासिद्धेः। समत्वाच्च तदगोचरत्वे तदीयाभावग्राहकत्वायोगात्। न च "न प्रेत्य संज्ञे"ति वाक्यादन्यस्माद्वा मानात्तदभावसिद्धिः। अप्रत्यक्षस्यामानत्वात्। अतश्चैतन्यमेकरसमनादिनिधनं सिध्यतीत्याह—**चैतन्यस्येति**। विमतं चेतनं प्राणादिमत्वात् सम्प्रतिपन्नवदिति देहान्तरं पक्षीकृत्य चेतनभेदं साधयति—**देहान्तरमिति**। यदुक्त परेष्टश्चात्मेत्यादि तत्राह—**परेष्टश्चेति**। प्रतिवादिवाक्यावगतस्य देहाद्यतिरिक्तस्यात्मनो निरसनं सुकरमित्यर्थः। अनुमानागमयोस्तर्हि स्वीकारापत्तेरध्यक्षमेव मानमिति मतविहतिरिति। नेत्याह—**न चेति**।

---

1. तस्य

प्रत्यक्षस्यैव विषयद्वारा* तत्तदर्थस्य बोधकत्वादिति चेत्। तर्ह्यनुमानं, शब्दश्च भङ्ग्यन्तरेण मानम्। तथा च सति देहेन्द्रियप्राणादयो नात्मानः दृश्यत्वात् कुम्भवदित्याद्यनुमानं केन वार्यते। श्रुतिस्मृतीतिहासपुराणेभ्यश्च देहाद्यतिरिक्तस्वर्गापवर्गान्वय्यात्मा परस्येष्टः सिध्येत्। तस्मात्प्रत्यक्षैकमानवादित्वात्, सर्वव्यवहारलोपप्रसङ्गात् कष्टां दशामापन्नो वराकश्चार्वाकोऽनुकम्पनीयः।

### नानाजीववादोपस्थापनम्

अन्ये तु—प्रतिक्षेत्रं भिन्नं भोक्तारं कर्तारं वाऽहंकारमात्मानमाहुः। चिदेकरसम् असङ्गं भिन्नं भोक्तारमेवापरे। तत्र न तावत् अहंकार आत्मा दृश्यत्वात् कुम्भवत्। उक्तं चैतत्पुरस्तात्। नापि प्रतिक्षेत्रं भिन्नता आत्मनो, भेदे मानाभावात्।

ननु सुखदुःखादिव्यवस्था आत्मभेदे मानम्। यदि ह्येक एव सर्वदेहेष्वात्मा स्यात्, तदा सुखदुःखादिव्यवस्था न स्यात्। तस्मा-

---

प्रत्यक्षस्यैव लिङ्गवाक्यद्वारा चेतनान्तरस्य परेष्टात्मनश्च समर्पकत्वादिति हेतुमाह—**प्रत्यक्षस्यैवेति**। एवं स्वमते द्विविधव्यवहारसमर्थने प्रत्यक्षान्तर्भूततया प्रामाण्यमनुमानागमयोरभ्युपगतमित्याह—**तर्हीति**। तथापि पृथक्प्रामाण्याभावे किं सिध्यतीत्यत आह—**तथा चेति**। आदिपदेन जडत्वपरिच्छिन्नत्वादि गृह्यते। अनुमानाङ्गीकारप्रयुक्तं फलमभिधायागमस्वीकारनिबन्धनं फलमाह—**श्रुतीति**। प्रत्यक्षान्तर्भूतत्वेनापि न प्रामाण्यमनुमानादेः अस्माकमभीष्टमित्याशङ्क्याह—**तस्मादिति**। नैयायिकमतमुत्थापयति—**अन्ये त्विति**। साङ्ख्यसमयं सङ्गिरते—**चिदेकरसमिति**। प्रथमं पक्षं प्रतिक्षिपति—**तत्रेति**। उभयोरपि पक्षयोः साधारणं दूषणमाह—**नापीति**। कथं पुनरात्मभेदे प्रमाणभावस्तत्र वक्तव्यः। किमत्रार्थापत्तिर्मानं किं वा प्रत्यक्षमाहोस्विदनुमानमिति। तत्रार्थापत्तिमुत्थापयति—**नन्विति**। व्यवस्थाया भेदसाधकत्वं व्यतिरेकमुखेन साधयति—**यदि हीति**। दृश्यमानां व्यवस्थामास्थाय फलितमाह—**तस्मादिति**। व्यवस्थानुपपत्तिरात्मभेदप्रसाधिकेत्यत्र

---

* लिंगवाक्यद्वारेति यावत्। लिंगवाक्ययोः प्रत्यक्षान्तर्भाव इति चार्वाकाशयः।

त्सुखदुःखादिव्यवस्थावशाद्भिन्नात्मानो निश्चीयन्ते । तदुक्तम्—
"नानात्मानो व्यवस्थात" इति ।

वास्तवनानाजीववादे सुखदुःखादिव्यवस्थाया अनुपपत्तिप्रदर्शनम्

न । भेदव्यवस्थाप्रतीतावन्योन्याश्रयतापत्तेः । धर्मिभेद[1]सिद्धौ हि धर्मव्यवस्था सिध्येत् । तत्सिद्धौ च धर्मिभेदसिद्धिरिति । किञ्चेयं व्यवस्थाऽन्यथाप्युपपद्यते । यथा हि केषाञ्चिदेक एवाकाशः सर्वक्षेत्रेषु कर्णावच्छिन्नं श्रोत्रं व्यवस्थितशब्दग्रहणहेतुः, तथात्मा सर्वान्तःकरणावच्छिन्नः सुखदुःखादिभोगभेदवान् । यद्वा सुखदुःखादिपरिणाम्यन्तःकरणभेदाद्व्यवस्थोपपद्यते । यथान्येषामात्मभेदात् । किञ्चान्येषामेवेयं व्यवस्था दुस्स्था । तथाहि—आत्मानश्चेत्सर्वे सर्वगताः कथं तदा सुखादयो व्यवस्थिताः स्युः । तद्धेतोर्मनस्संयोगस्याव्यवस्थितत्वात् । अदृष्टनियमान्नियम इति चेन्न । अदृष्टस्यापि मनस्संयोगजन्यस्याव्यवस्थापत्तेः । स्यान्मतम्—सुखादिव्यवस्थाप्रसिद्धिबलात्तद्धे-

---

कणादसूत्रमुदाहरति—तदुक्तमिति । अर्थापत्तिमसम्भवेन दूषयति—नेत्यादिना । सम्प्रत्यर्थापत्तेर्दोषान्तरमाह—किं चेति । अन्यथाप्युपपत्तिं दृष्टान्तेन स्पष्टयति—यथेत्यादिना । औपाधिकात्मभेदवशाद्व्यवस्थेत्युक्त्वा विधान्तरेण व्यवस्थामुपपादयति—यद्वेति । स्वपक्षे व्यवस्थां प्रतिपाद्य परपक्षे तदनुपपत्तिमाह—किं चेति । परपक्षानुवादपूर्वकं तत्र व्यवस्थादौःस्थ्यं प्रपञ्चयति—तथाहीति । तत्र हेतुमाह—तद्धेतोरिति । सर्वगतानामात्मनां मनस्संयोगस्याविशिष्टत्वात्तत्कृतसुखादेरपि सर्वात्मसाधारण्यं स्यादित्यर्थः । सुखादिहेतोरदृष्टस्य व्यवस्थितत्वात्तज्जन्यसुखादेरपि व्यवस्थेति शङ्कते—अदृष्टेति । मनस्संयोगस्याव्यवस्थितत्वात्तज्जन्यादृष्टस्यापि तथात्वान्नैवमिति समाधत्ते—नादृष्टस्यापीति । व्यवस्थितं कार्यमुपलभ्यमानं तथाविधं कारणमन्तरेणानुपपन्नं तत्कल्पयतीति चोदयति—स्यान्मतमिति । मनस्संयोगादिव्यवस्था कल्पयितुं

---

1. सिद्धिसिद्धौ

तुमनस्संयोगादिव्यवस्था कल्प्यत इति । न । कल्पनाबीजाभावात् । अनन्यथासिद्धं हि सर्वत्र कल्पनाबीजं प्रसिद्धम् ।

न च सुखादिव्यवस्थाप्रसिद्धिस्तथा । औपाधिकात्मभेदपक्षेऽपि तत्प्रसिध्युपपत्तेः । अतः कूपाकाशादिकार्यव्यवस्थाप्रसिद्धिवदुक्तप्रसिध्युपपत्तेः न तवेष्टसिद्धिः ।

ननु सर्वज्ञेश्वरवशात् सर्वं व्यवस्थाप्यते । न च व्यवस्थाहेतोरीश्वरस्य पक्षपातप्रसङ्गः । प्राणिकर्मानुसारेण तस्य फलहेतुत्वात् । न । तटस्थेश्वरसिद्धौ मानासम्भवस्योक्तत्वात् । वैदिकेश्वरपक्षे तु तस्यात्मनोऽद्वितीयत्वान्न निजभेदनिबन्धना व्यवस्था सिध्येत् ।

किञ्चासतः सुखादेरुत्पत्तिरेवातिप्रसङ्गिनीति न सा सम्भवेत् । तत्र कथय कथं तद्व्यवस्था सम्भवेत् । सत्कार्यवादिनः सांख्यस्यापि सुखाद्युत्पत्तेरयोगात् तद्व्यवस्था दुःस्थैव । अथ सतोऽप्यभिव्यक्तिरेवोपजनव्यवहारगोचरः । अतोऽपि व्यवस्था सुस्थैवेति मतम्, न । अभिव्यक्तेस्सत्वेऽसत्वे च कादाचित्कताऽयोगात् । सुखादेरकार्यताप्रसङ्गात् । अभिव्यक्तेरभिव्यक्त्यभ्युपगमे चानवस्थाप्रसङ्गः ।

---

न शक्यते हेत्वभावादित्युत्तरमाह—न कल्पनेति । व्यवस्थितकार्योपलम्भो दर्शितः तद्धेतुरित्यत आह—अनन्यथेति । सुखादिव्यवस्थाप्रतीतिरप्यनन्यथासिद्धेति चेन्नेत्याह—न चेति । परपक्षे व्यवस्थानुपपत्तेः स्वपक्षे च तदुपपत्तेर्न वास्तवभेदसिद्धिरिति फलितमाह—अत इति । ईश्वरवादिमते शक्यैवाव्यवस्था परिहर्तुमिति शङ्कते—नन्विति । तर्हि तस्य वैषम्यनैर्घृण्यप्रसङ्गादनीश्वरत्वापत्तिरत आह—न चेति । ईश्वरो हि तटस्थो वा वैदिको वा व्यवस्थाहेतुरास्थीयते । नाद्य इत्याह—न तटस्थेति । न द्वितीय इत्याह—वैदिकेति । अपि च भवन्मते सुखादि समुत्पद्यमानमसद्वा सद्वेति विकल्पयति—किंचेति । आद्ये दोषमाह—असत इति । द्वितीयं दूषयति—सदिति । सतश्चिदात्मवदुत्पत्त्ययोगेऽपि तद्व्यवहारस्याभिव्यक्तिविषयत्वाद्युक्ता व्यवस्थेति सांख्यः शङ्कते—अथेति । अभिव्यक्तेः सत्वमसत्वं वेति विकल्प्य दूषयति—नेत्यादिना । नन्वभिव्यक्तेः सदा सत्वेऽपि कदाचिदेवाभिव्यक्तेः तदपेक्षया कादाचित्कत्वात्तद्द्वारा सुखादेरपि कार्यतेति । नेत्याह—अभिव्यक्तेरिति ।

किञ्च एषा अचेतनाऽपूर्वदृष्टविशिष्टा त्वयेष्टा प्रकृतिः। अतः कथं तज्जन्या भोगव्यवस्था स्यात्। मनसोऽसाधारणत्वादिति चेन्न। तस्याप्यसिद्धत्वात्। न च कश्चिदपि नियामको विशेषः कल्पयितुं शक्यः। कल्पनाबीजासम्भवात्। अतो न भेदवादिनां भोगादिव्यवस्था युज्यते। तस्मान्न व्यवस्थानुपपत्त्यात्मभेदसिद्धिरिति सिद्धम्। प्रत्यक्षन्तु न भेदं स्पृशतीति प्रपञ्चितं द्वितीयेऽध्याये।

जीवनानात्वे अनुमानप्रदर्शनम्

अस्तु तर्हि भोक्तृभेदेऽनुमानं मानम्। प्रयोगस्तु—अपरोक्षं दुःखं वर्तमानपरोक्षदुःखाश्रयात् भिन्नाश्रयं, अपरोक्षत्वे सति गुणत्वाद्रूपवत्। विकारत्वाद्वा कुम्भवत्। दुःखाधिकरणान्यन्तःकरणान्येवेति

---

सम्प्रति सांख्यं प्रति प्रकारान्तरेण व्यवस्थानुपपत्तिमाह—**किं चेति**। प्रकृतेः सर्वसाधारणत्वे तज्जन्यभोगस्यापि तथात्वमेवेति भावः। प्रत्यात्मं मनसोऽसाधारणत्वाद् भोगव्यवस्थेति शङ्कते—**मनस इति**। मनसोऽपि नियमे हेतुर्नास्तीति परिहरति—**न तस्यापीति**। अदृष्टनियमान्नियममाशङ्क्याह—**न चेति**। नियतकार्योपलब्धिरेव तथाविधकारणकल्पिकेत्याशङ्क्यान्यथा सिद्धेरुक्तत्वान्नैवमित्याह—**कल्पनेति**। पक्षान्तरे व्यवस्थानुपपत्तिमुपसंहरति—**अत इति**। स्वपक्षे तदुपपत्तेरुक्तत्वान्नार्थापत्तिरात्मभेदावेदिकेति निगमयति—**तस्मान्नेति**। द्वितीयपक्षप्रतिक्षेपं द्वितीये वृत्तं स्मारयति—**प्रत्यक्षं त्विति**। तृतीयमुद्भावयति—**अस्तु तर्हीति**। अनुमानमेव विरचयति—**प्रयोगस्त्विति**। भिन्नाश्रयमित्युक्ते कुतश्चिद्भिन्नाश्रयत्वस्य सिद्धत्वेन सिद्धसाध्यत्वं, तदुद्धरति—**दुःखाश्रयादिति**। तथापि व्याधातः। स्वाश्रयाद् भिन्नाश्रयत्वासिद्धेरत आह-**परोक्षेति**। तथाप्यवर्तमानत्रिविधदुःखसमानाश्रयत्वेन व्याहतिः। अत उक्तं—**वर्तमानेति**। वर्तमानपरोक्षदुःखस्य पक्षीकारे सैव व्याहतिः। अत आह—**अपरोक्षमिति**। अपरोक्षरूपादेरुक्तदुःखाश्रयाद् भिन्नाश्रयतया सिद्धसाध्यत्वं धुनीते—**दुःखमिति**। वर्तमानपरोक्षदुःखे व्यभिचारं निरसितुमपरोक्षत्वे सतीत्युक्तम्। आत्मनि व्यभिचारं वारयितुं गुणत्वादिति पदम्। प्रयोगान्तरमाह—**विकारत्वाद्वेति**। अत्राप्यपरोक्षत्वे सतीति विशेषणं द्रष्टव्यम्।

सिद्धसाधनमिति चेन्न। साक्षात्कर्मफलस्याभोक्त्राऽन्वयायोगात्। अथ तद्वाप्यौपाधिकस्वात्मभेदो दुःखाश्रय इति मतम्। न। अन्यानुपरक्तस्यात्मनोऽहमित्युपलब्धेः। अनुपरक्तस्यौपाधिकत्वे गतमुपाधेर्निजभेदेन। तत औपाधिकोऽपि भेदो न स्यात्। तस्मान्न सिद्धसाधनता। तथापि "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतिबाध इति चेन्न। तस्या अनुपजीव्यत्वात्। अन्तर्यामिविषयतया च तटस्थत्वात्।

नन्वन्तर्याम्येवात्मा "एष त आत्मान्तर्यामी", "सर्वभूतान्तरात्मा" "नान्योतोऽस्ति द्रष्टे" त्यादिश्रुतेः। नैवम्। अस्याः स्तुतिपरत्वात्। यथा ह्यतिहितैषी स्तूयते—"एष ममात्मे"ति, सूक्ष्मदर्शी नान्योतोऽस्ति चक्षुष्मानिति। अन्यथा कथं "य आत्मनि तिष्ठन्नात्मानमन्त-

---

अन्यथा वर्तमानपरोक्षदुःखे व्यभिचारतादवस्थ्यात्। अपरोक्षदुःखाश्रयान्तःकरणस्य वर्तमानपरोक्षदुःखाश्रयान्तःकरणात् भिन्नत्वाभ्युपगमाद् भवति सिद्धसाध्यत्वमिति शङ्कते—**दुःखाधिकरणानीति**। अन्तःकरणानि चेतनान्यचेतनानि वा?। आद्ये नाममात्रे विप्रतिपत्तिरिति मत्वा द्वितीयं दूषयति—**न साक्षादिति**। कर्मफलस्य दुःखस्याचेतानानाश्रयत्वेऽपि सिद्धसाध्यत्वं तदवस्थमिति शङ्कते—**अथेति**। अहं दुःखीत्यहम्प्रत्ययालम्बने दुःखिन्युपाध्युपरागास्फुरणादनौपाधिकस्यात्मनो दुःखाश्रयत्वमिति परिहरति—**नान्यानुपरक्तस्येति**। उपाध्युपरागमन्तरेण प्रतीयमानभेदस्यौपाधिकत्वे दोषमाह—**अनुपरक्तस्येति**। उपाधेरप्यौपाधिको भेदो भविष्यतीत्याङ्क्याह—**तत इति**। अनवस्थानादिति भावः। सिद्धसाधनत्वाभावेऽपि कालातीततेति शङ्कते—**तथापीति**। आगमस्यानुपजीव्यत्वेन बलीयस्त्वाभावान्न तद्बाधोऽनुमानस्येति दूषयति—**न तस्या इति**। अन्यविषयत्वेनोदासीनत्वाच्च न बाधकत्वमित्याह—**अन्तर्यामीति**। श्रुतेरन्तर्यामिविषयत्वेऽपि नान्यविषयत्वमन्तर्याम्यात्मनोरेकत्वादिति शङ्कते—**नन्विति**। अन्तर्याम्यात्मनोरैक्यमत्र न विवक्षितमिति परिहरति—**नैवमिति**। श्रुतेरुपाध्यात्मस्तुतिपरत्वं दृष्टान्तेन स्पष्टयति—**यथा हीति**। किमिति मुख्यार्थसम्भवे स्तुतिराश्रीयते तत्राह—**अन्यथेति**। श्रुति-

रो यमयती"ति श्रुतिः समञ्जसा स्यात्। एतेन "एक एव तु भूतात्मा भूते भूते व्यवस्थितः।" इत्याद्याः स्मृतयोऽपि व्याख्याताः।

ननु—"एकधा बहुधा चैव दृश्यते जलचन्द्रवदि"ति, प्रतिभूतमिथ्याप्रतिभासमानभेदानुवादेनैकत्वमत्र बोध्यते। सत्यम्। तदपि नियन्तृविषयमेव। नियन्तैव हि नृपादिरेकधा दृश्यते [1]प्रतिदेशं च बहुधेति। अन्यथा कथं भूते भूते एकधेति चोपपद्यते। न हि जीवो जीवे व्यवस्थितः एकधा वा दृश्यते। तस्मान्न कालात्ययापदेशः। विपक्षे निखिलदुःखानुसन्धानप्रसङ्गो बाधः। नापि सत्प्रतिपक्षता।

---

विरोधाभावेऽपि स्मृतिविरोधो भेदानुमानस्यास्तीत्याशङ्क्याह—**एतेनेति**। अन्तर्यामिविषयतया श्रुतेरविरोधप्रदर्शनेनेति यावत्। यथैकश्चन्द्रमाः प्रतिजलपात्रमेकधैकधावस्थितो बहुधा दृश्यते तथायं भूतात्मा प्रतिभूतमेकधैकधावस्थितो बहुधाधिगम्यते। एवं प्रतिभूतं प्रतिभासमानमिथ्याभेदानुवादेनैक एवेत्येकत्वमत्र विधीयते। प्रसिद्धानुवादेनाप्रसिद्धविधेर्न्याय्यत्वात्। अतो न स्मृतेरन्यविषयतया विरोधसमाधिरिति चोदयति—**नन्विति**। अनूद्यविधानप्रकारमङ्गीकरोति—**सत्यमिति**। न तर्हि स्मृतेरन्तर्यामिविषयता। तत्र भेदाप्राप्तेरनूद्यविधानायोगादत आह—**तदपीति**। एकत्वबोधनं तदा परामृश्यते। नियन्तरि भेदप्राप्तिं प्रदर्शयति—**नियन्तैवेति**। इतिशब्दः स्मृतेर्नियन्तृविषयत्वोपसंहारार्थः। स्मृतेरन्तर्यामिविषयत्वमनादृत्य जीवविषयत्वनिर्बन्धे दोषमाह—**अन्यथेति**। कथमिति सूचितामनुपपत्तिमेव स्फोरयति—**न हीति**। कालात्ययापदेशाभावेऽपि व्याप्यत्वासिद्धिमाशङ्क्याह—**विपक्षे चेति**। सर्वेषु देहेष्वात्मैक्यादेकस्यैवाशेषदुःखाश्रयत्वे शिरसि मे वेदना, पादे मे वेदनेत्येकस्मिन्देहेऽनुसन्धानवद् देहान्तरेष्वपि चैत्रे मे वेदना, मैत्रे मे वेदनेत्यनुसन्धानप्रसङ्गे प्रवृत्तिसाङ्कर्यान्न व्याप्यत्वासिद्धिरित्यर्थः। अपरोक्षत्वे सति गुणत्वादित्यादिहेतुद्वयस्य दोषान्तरं निरस्यति—**नापीति**। प्रतिप्रयोगमा-

---

1. प्रतिदेहं

प्रतिप्रयोगासम्भवात् । विवादपदानि शरीराण्यविवादास्पदस्य भोगायतनानि, जीवच्छरीरत्वात्, भोगायतनत्वाद्वा, प्रतिवादिशरीरवदिति प्रयोगः प्रतिमल्ल इति चेन्न । तत्कर्मोपार्जितत्वोपाधिहतत्वात् । यद्यप्यद्वैतवादे साधनव्याप्तिः स्पष्टा, तथापि नासौ भेदवादेऽस्ति । तत्कर्मजत्वसाधने च विपक्षे बाधाभावः । अथान्यतरोपाधिसद्भावे को दोषः । अनुमानासिद्धिः । लिङ्गस्योभयसिद्धनिरुपाधिसम्बन्धासिद्धेः । अपि च नात्र विपक्षे बाधः कश्चित् । यदपि प्रयोगान्तरं आत्मा द्रव्यत्वव्यतिरिक्तापरजात्याधारभेदेन नाना न भवति, नित्यत्वात् विभुत्वान्निरवयवद्रव्यत्वाच्च गगनवदिति । तदप्यतिमन्दम् । आद्ये च

---

शङ्कते—**विवादपदानीति** । प्रतिवादिशरीरभागे सिद्धसाध्यत्वपरिहारार्थं विवादपदम् । इन्द्रियादिनिरासेन विशेष्यनिर्धारणार्थं शरीराणीत्युक्तम् । प्रत्येकमात्मसंभोगायतनानि शरीराणि सिद्धानीत्यत आह—**अविवादस्पदस्येति** । मृतशरीरे व्यभिचारनिरासाय जीवद्विशेषणम् । प्रतिवादिकर्मोपार्जितत्वं तद्भोगायतनत्वे प्रयोजकं, न जीवच्छरीरत्वं भोगायतनत्वं वेति हेतुद्वयस्याप्रयोजकत्वमाह—**नेत्यादिना** । यत् प्रतिवादिभोगायतनं तत् तत्कर्मोपार्जितं यथा प्रतिवादिशरीरं, यन्न प्रतिवादिकर्मोपार्जितं न तत्तद्भोगायतनं यथा प्रतिवाद्यात्मेति साध्यव्याप्तावपि न साधनाव्याप्तिः । अद्वैतिमत्ते सर्वशरीरेषु प्रतिवादिकर्मोपार्जितत्वसम्भवादित्याशङ्क्याह—**यद्यपीति** । विमतानि प्रतिवादिकर्मोपार्जितानि भोगायतनत्वात् प्रतिवादिशरीरवदिति अन्यतरोपाधिनिरासमाशङ्क्याह—**तत्कर्मजत्वेति** । अन्यकर्मोपार्जितत्वेऽपि भोगायतनत्वादि सिध्यतीत्यभिसन्धिः । अन्यतरोपाधेर्दोषापर्यवसायित्वमाशङ्कापूर्वकमादर्शयति—**अथेत्यादिना** । प्रकारान्तरेण हेत्वोरप्रयोजकत्वमाह— **अपि चेति** । भोक्तृभेदेऽपि भोगायतनत्वादिसम्भवादित्यर्थः । आत्मा द्रव्यत्वव्यतिरिक्तापरजात्याधारभेदेन [1]नाना न भवति, निरवयवत्वे सति विशेषगुणाधिकरणत्वात् [2]गगनवदित्युक्तं हेतुचक्रे । तन्निराकरणार्थं परोदीरितमनुभाषते—**यदपीति** । रूपादौ व्यभिचारं वारयितुं द्रव्यत्वादिति पदम् । कटादौ व्यभिचारं निरसितुं निरवयवविशेषणम् ।

---

1. अ....नवन्न 2. घटवत्

**प्रयोगेऽन्त्ये च निरवयवत्वे त्वन्मते साधनशून्यता दृष्टान्तस्य। विभुत्वं चयुगपत्सकलमूर्तसंयोगित्वम्। तत्रासिद्धिरतिरिच्यते।**

**न चैतत्सर्वं लोकसिद्धमिति वाच्यम्। लोकस्याकाशनित्यत्वादावुदासीनत्वात्। तदलमाचार्यविद्वेषोपहतमतेर्मानदूषणान्वेषणेनेति न सत्प्रतिपक्षतासम्भवः। तस्मान्निष्प्रत्यूहमात्मभेदानुमानमिति। एतेनाद्वैताऽऽशाप्यपास्या। तच्छ्रुतिश्चान्यपरा व्याख्येया। संविदोऽनन्ततोक्तिश्च प्रक्रियामात्रम्। तन्मानाभावादिति सिद्धम्।**

---

हेतुत्रयं प्रत्याचष्टे—**तदपीति**। **अन्त्ये चेति** चकाराद्विभुत्वमनुकृष्यते। आकाशस्य वेदान्तिभिर्नित्यत्वविभुत्वनिरवयवत्वानामनभ्युपगमादित्यर्थः।

विभुत्वस्य स्वरूपनिरूपणपूर्वकं दोषान्तरमाह—**विभुत्वं चेति**। असङ्गत्वादात्मनः सर्वमूर्तसंयोगानभ्युपगमादित्यर्थः। लोकप्रसिध्यनुसारेणाकाशदृष्टान्तसिद्धिरित्याशङ्क्याह—**न चेति**। न च परीक्षकप्रसिध्या दृष्टान्तसिद्धिः। उभयप्रसिद्धस्यैव दृष्टान्तत्वाभ्युपगमादिति भावः। **तदलमित्यादेरय**मर्थः। आचार्येषु पुनरिष्टसिद्धिकारप्रमुखेषु विहतो द्वेषो भक्तिश्रद्धयोरतिशयस्तेनोपहत्या तेषामेव पादमूलगता मतिर्यस्यानन्दबोधाचार्यस्य, तस्य यन्मानं पूर्वोक्तं, तस्य यद् दूषणं, तस्यान्वेषणमात्रमेव, न तु वस्तुतस्तदीय मानं दोषवदालक्ष्यते। अतस्तद्दूषणान्वेषणेन कृतमिति। कथं तर्हि प्रकृतं भेदानुमानमसत्प्रतिपक्षमिति नित्यत्वादिहेतुषु प्रातीतिकदोषसद्भावादित्याह—**इति नेति**।

ननु अद्वैतं तत्वमिति तत्वविदा कथमात्मभेदप्रसाधनमिति। तत्राह—**एतेनेति**। आत्मभेदानुमानस्य निर्दोषत्वेनेति यावत्। अद्वैतश्रुतेः तर्हि कास्तु गतिरित्यपेक्षायामविवक्षितार्थत्वेनोपासनापरत्वमित्याह—**तच्छ्रुतिश्चेति**। यत्तु चार्वाकं प्रति चैतन्यस्यानाद्यनन्तत्वमुक्तं तद्दुरुक्तमित्याह—**संविद इति**।

जीवनानात्वानुमानखण्डनम्

अत्रोच्यते—किमयं भोक्तृभेदस्तात्त्विकः साध्यते किं वाऽतात्त्विकः आहोस्वित् साधारणम्। न तावदाद्यः। "एको देव" इत्याद्यागमहतत्वात्। अनुपजीव्येनापि बलवता पूर्वबाध उक्तः। "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि युज्यते"। इति। अनपेक्षत्वं चात्र स्फुटमुक्तम्।

"पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेदि"ति॥

ननु बलाबलविचारे श्रुत्यादिबाधकस्योपजीव्यत्वमुक्तम्। सत्यम्। किन्तु तद्बलवत्त्वख्यापनाय। अथानुमानबाधकस्यैवोपजीव्य-

---

सिद्धान्तमुपक्रमते—अत्रेति। यत्तावदपरोक्षं दुःखं वर्तमानपरोक्षदुःखाश्रयाद् भिन्नाश्रयमिति भोक्तृभेदानुमानं तद् दूषयितुं साध्यं विकल्पयति—**किमयमिति**। तात्त्विकभोक्तृभेदपक्षं प्रत्याह—**न तावदिति**। आगमस्यानुपजीव्यत्वादनुमानाबाधकत्वमभिहितमपाकरोति—**अनुपजीव्येनापीति**। बलवत्त्वमेव बाधकत्वे प्रयोजकं, तच्च प्रमाणेषु विपक्षत्वे सत्युत्तरभावित्वकृतम्। अतः सति विरोधे बलवतोत्तरेण पूर्वं बाध्यमित्यर्थः। आगमस्य तर्हि प्रत्यक्षानुमानसापेक्षस्य कुतो बलवत्वं तत्राह—**अनपेक्षत्वमिति**। आगमिकज्ञानस्योत्पत्तौ तदपेक्षायामप्यर्थपरिच्छेदकत्वलक्षणे प्रमात्वे तदभावादनपेक्षोत्तरमानत्वेनागमप्राबल्यं भट्टपादैरुक्तमित्यर्थः। उपजीव्यत्वं विनापि बलवत्वेन बाधकत्वं श्रुतिलिङ्गादिसूत्रविरुद्धमिति शङ्कते—**नन्विति**। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वस्योत्तरोत्तरेणोपजीव्यत्वमुक्तमङ्गीकरोति—**सत्यमिति**। उपजीव्यत्वं तर्हि बाधकत्वे प्रयोजकमभ्युपगतमित्याह—**किं त्विति**। प्रयोजकज्ञापकत्वेनोक्तस्य केवलव्यतिरेकविरहिणो न बाधकत्वप्रयोजकत्वमित्याह—**तद्बलवत्त्वख्यापनायेति**। श्रुत्यादिषु यथा तथास्तु, अनुमानबाधके पुनरस्ति नियतिरिति शङ्कयित्वा व्यभिचारयति—**अथेत्यादिना**। स्पार्शनप्रत्यक्षस्यानु-

**त्वनियमः । न । अग्न्यनुष्णतानुमानस्याप्यनुपजीव्येन स्पार्शनप्रत्यक्षेण बाधात् । न हि तदुपजीव्यम् । किन्तूपजीव्यजातीयम् । उपजीव्यजातिमात्रसम्बन्धादुपजीव्यत्वं प्रकृतेऽपि सुलभम् । प्रत्यक्षत्वजातिविशेषसम्बन्धादिति तु वैधर्म्यमात्रम् । न प्रयोजकम् । मानाभावात् । स्मर्यमाणाग्न्यनुष्णतानुमानस्यापि प्रत्यक्षबाधात् । योऽपि बाधसमायां**

---

ष्णतानुमानेनानुपजीव्यत्वमुपपादयति—**न हीति** । ननु प्रत्यक्षं व्याप्तिग्राहकमुपजीव्यैवानुष्णतानुमानस्य प्रवृत्तिः । अतोऽनुपजीव्यत्वं स्पार्शनप्रत्यक्षस्यासिद्धमित्याह—**किं त्विति** । यद्यपि प्रत्यक्षमुपजीव्यानुमानमुत्तिष्ठति । तथाप्युपजीव्यवृत्तिजात्याक्रान्तमेव स्पार्शनं प्रत्यक्षं, न तु साक्षादुपजीव्यमित्याह—**उपजीव्यजातीयमिति** । ननु द्रव्यत्वजातीयत्वस्य द्रव्यत्ववदुपजीव्यजातीयमप्युपजीव्यमेवेत्याशङ्क्य तद्गतजातिमात्रसम्बन्धादुपजीव्यत्वं तन्निष्ठप्रत्यक्षत्वजातिसम्बन्धाद्वेति विकल्प्याद्यं प्रत्याह—**उपजीव्यजातीति** । त्वदनुमानोपजीव्यप्रत्यक्षे पूर्वोक्तागमे च प्रमाणत्वादिजातिसम्भवाद्विरोध्यागमबाधस्त्वदनुमानस्य स्यादिति भावः । द्वितीयं दूषयति—**प्रत्यक्षत्वेति** । अनुष्णतानुमानस्याप्रत्यक्षमपि स्मरणमुपजीव्यमुपलभ्यते । तत्र न तद्बाधकस्य स्पार्शनस्य प्रत्यक्षत्वादिजातिसम्बन्धादुपजीव्यत्वसिद्धिरिति प्रयोजकत्वाभावं प्रकारान्तरेण प्रदर्शयति—**स्मर्यमाणेति** । *प्रकरणसमायां जातौ प्रतिप्रयोगस्य बाधकत्वनिश्चयः कारणम् । अनधिकबलत्वेनोपजीव्यत्वाभावमभिदधानेनाचार्यवाचस्पतिना बाधकस्योपजीव्यत्वमुपदर्शितं न्यायवार्तिकटीकायाम् । अतोऽनुपजीव्यस्यापि बाधकत्वे न्यायशास्त्रविरोधः स्यादित्याशङ्क्याह—**योऽपीति** । उपजीव्यं यद्यपि बलवदिष्यते । तथापि बलवतो बाधकस्य नोपजीव्यत्वं नियन्तुं शक्यते । अनुष्णतानुमाने स्पार्शनप्रत्यक्षस्याबाधकत्वप्रसङ्गात् । तस्मादाचार्यवाचस्पतेरपि बाधकं बलवदित्येतावदभिप्रेतम् । बाधकगतबलवत्वज्ञापनार्थं तस्योपजीव्यत्वमुपदर्शितमित्याशयः । आगमस्यानुपजीव्यत्वेनाबाधकत्वमुक्तं निराकृत्यान्तर्यामि-

---

* वाद्युक्तहेतोः साध्यविपरीतसाधकं हेत्वन्तरोद्भावनं प्रकरणसमा जातिः । सत्प्रतिपक्ष इति यावत्

जातौ बाधस्य विशेषो दर्शितः—उपजीव्यत्वरूपो वाचस्पतिमिश्रैः, सोऽपि तद्बलवत्त्वख्यापनायैव । तस्यैव सर्वबाधेष्व[1]नुगतत्वात् ।

अथैवम"प्येको देव" इत्याद्यागम आत्मनोऽन्यन्नियन्तारमेकं बोधयति । न । "एष त आत्मे"ति तस्यात्मत्वश्रवणात् । तर्हि 'आत्मनि तिष्ठन्नात्मानमन्तरोयमयतीति च भेदावभासविरोधः । न । तस्यान्यपरत्वात् । न ह्यत्र भेद आगमगम्यः । लोकसिद्धत्वात् । निष्फलत्वाच्च भेदप्रतिपत्तेः । "द्वितीयाद्वै भयं भवतीति" "उदरमन्तरं कुरुते । अथ तस्य भयं भवती"ति च प्रतिषिद्धत्वात् । न चैषाद्वैतागमस्यापि गतिः । ऐकात्म्यपरत्वलिङ्गस्यापूर्वार्थत्वादेः स्पष्टत्वात् । तस्मात्तात्त्विकभेदसाधनस्य सिद्धमागमबाधितत्वम् । पक्षस्य चाप्रसिद्धविशेषणत्वम् । दृष्टान्तस्य च साध्यशून्यत्वम् । रूपाद्याश्रयभेदस्य परमार्थत्वास्वीकारात् ।

---

विषयत्वेनानुमानाबाधकत्वं तस्योक्तमनुस्मारयति—**अथेति** । अन्तर्यामिविषया श्रुतिरात्मविषयैवेति समाधत्ते—**नेत्यादिना** । अन्तर्याम्यात्मैव चेन्नियन्तृनियन्तव्यभेदश्रुतिविरोधः स्यादित्युक्तमाशङ्कते—**तर्हीति** । भेदप्रतिपादकत्वाभावाद्वाक्यस्य प्रसिद्धानुवादेनाप्रसिद्धैक्यपरत्वान्न विरोधाशङ्केत्याह—**न तस्येति** । यथाश्रुतेऽर्थे तात्पर्यमागमस्य किं न स्यादित्याशङ्क्य भेदस्यापूर्वत्वाभावान्नैवमित्याह—**न हीति** । भेदप्रतिपत्तेरपुरुषार्थत्वाच्च न भेदस्य शास्त्रगम्यत्वमित्याह—**निष्फलत्वाच्चेति** । अनर्थकरत्वाच्च न शास्त्रीयता भेदस्येत्याह—**द्वितीयादिति** । "उदरमि"त्यादेरयमर्थः, अद्वितीये वस्तुनि अल्पमपि भेदं पश्यतोऽनर्थपरम्परा दुष्परिहरेति । ननु प्रत्यक्षादिविरोधादद्वैतश्रुतेरेवान्यपरत्वं किं न स्यादित्यत आह—**न चेति** । अपिशब्दोऽवधारणार्थः । आदिपदेनोपक्रमोपसंहारावित्यादिश्लोकोक्तान्यपूर्वतातिरिक्तानि तात्पर्यलिङ्गानि गृह्यन्ते । ऐकात्म्यागमस्य [2]भेदानुमानबाधकत्वं साधितमुपसंहरति—**तस्मादिति** । तात्त्विकभेदसाधने दूषणान्तरमाह—**पक्षस्येति** । दृष्टान्ते साध्यप्रसिद्धेर्नैवमित्याशङ्क्याह—**दृष्टान्तस्येति** । साध्यशून्यत्वं साधयति—

---

1. अननुगतत्वात् 2. ते ...भानुमान

न चात्र विपक्षे बाधः कश्चित् । दुःखप्रतीतीनामसाङ्कर्यं चौपाधिकात्मभेदाश्रितत्वेनाप्युपपद्यते । यथा कूपकुम्भाकाशादिषु तद्धर्मासंकरः । अतो न तात्त्विकात्मभेदः साध्यः । अतात्त्विकादिविकल्पे तु सिद्धसाधनता । अभ्युपेयते ह्यौपाधिकः समष्टिरूपेणैकधा व्यष्टिरूपेण चानेकधा । आत्मभेदे उपाधिविवेकश्च यद्यपि न सार्वजनीनः, तथापि रत्नतत्त्वविदुषां सिद्धम् । छान्दोग्ये चात्माहंकारादेशयोः पृथक्पाठात् प्रव्यक्तोऽहंकारतद्द्रष्टृभेदः । तस्मान्नात्मभेदो भङ्ग्यन्तरेणाप्यनुमेयः । अतो भेदो बुद्धिदोषादवभासते । तत्त्वतस्त्वभेद एव श्रुतिस्मृतीतिहासपुराणविद्वत्प्रत्ययप्रसिद्धः । यथाहुः, बृहट्टीकायां भट्टाचार्याः—

---

रूपादीति । दुःखाश्रये तत्त्विकभेदाभावे बाधकाभावाच्चाप्रयोजको हेतुरित्याह—न चेति । एकस्यैव निखिलदुःखानुसन्धानप्रसङ्गेन प्रतिपत्तिप्रवृत्तिसाङ्कर्यं बाधकमिति चेन्नेत्याह—दुःखप्रतीतीनामिति । औपाधिकं भेदमास्थाय व्यवस्थायामुदाहरणमाह—यथेति । प्रथमपक्षनिराकरणं निगमयति—अत इति । अतात्त्विको भेदः साध्यं साधारणो वेति पक्षद्वयं प्रतिक्षिपति—अतात्त्विकादीति । सत्वरजस्तमोरूपानाद्यनिर्वचनीयानवच्छिन्नमायोपाधिकपरिपूर्णपरमात्मभावेनैकधा, तत्कार्याहङ्कारादिपरिच्छिन्नोपाध्यात्मकमायावच्छिन्नानन्तजीवात्मनानेकधेत्येकस्मिन्नेवाखण्डैकरसे चिदात्मनि कार्यकारणोपाधिवशादाश्रितं नानात्वमिति सिद्धसाध्यत्वमेव साधयति—अभ्युपेयते हीति । यत्पुनरनुपरक्तस्यात्मनोऽहमित्युपलब्धेरनौपाधिकस्यैव दुःखाधारत्वादौपाधिकभेदाभ्युपगमे कुतः सिद्धसाध्यत्वमिति । तत्राह—उपाधिविवेकश्चेति । उपाध्यात्मनोर्विवेको न केवलं विद्वदनुभवादधिगतः । किं तु श्रुत्यन्तरादपीत्याह—छन्दोगे चेति । अहङ्कारतद्द्रष्ट्रोरनुभवागमाभ्यां भेदावगमे सत्यहङ्कारगतं यद् भङ्ग्यन्तरं शब्देतरविशेषगुणवत्त्वादि तेनापि नात्मभेदोऽनुमातुं शक्यते । व्यधिकरणत्वात् । भेदस्योक्तविकल्पकवलीकृतत्वाच्चेत्याह—तस्मादिति । आत्मा द्रव्यत्वातिरिक्तापरजात्याधारः, शब्देतरविशेषगुणवत्त्वात् घटवदित्यनुमानं न सम्भवतीति भावः । आत्मभेदप्रतीतेस्तर्हि का गतिरित्याशङ्क्याह—अत इति । अभेदस्य दोषतोऽदोषतो वा भानाभावान्नासावभ्युपेयस्तत्राह—तत्त्वतस्त्विति । मानहीनस्य कथमुपादानमत आह—श्रुतीति । बुद्धिदोषाद्भेदप्रतीतिः, अभेद-

"द्वैतपक्षात्पराणुद्य बुद्ध्यशुद्धिसमाश्रयात् ।
परमात्मानमेवैकं तत्त्वं वेदविदो विदुः" ॥ इति ॥

जीवानानात्वेऽनुमानप्रदर्शनम्

अथ यदि कश्चिदनुमानैकरुचिर्नागमैः परितुष्यति, तदा तदनुकम्पया प्रयुज्यते । विवादाध्यासिता दृष्टयोऽस्मदाश्रयाः दृष्टित्वात् संप्रतिपन्नवदिति ।

ननु तवात्मनो "नेति नेति" इति श्रुतिबोधितस्य न दृष्टिधर्मता सम्मता । सत्यम्—तथापि व्यावहारिकस्तथाभावोऽभ्युपेयते । कथमन्यथा "नान्योऽतोऽस्ति द्रष्टे"ति श्रुतिरम्लाना भवेत् । एवमपि योग्यानुपलब्धिबाध इति चेन्न । दृष्टेर्दृष्ट्यन्तरायोग्यत्वस्य प्रपञ्चित-

---

प्रतीतिस्तु प्रमाणादित्यत्र वृद्धसम्मतिमाह—**यथाहुरिति** । छान्दसानामागमाद्विश्वासेऽपि तार्किकाणामनुमानोन्मुखत्वात्तेन विना नार्थप्रतिपत्तिरित्यत आह—**अथेति** । तार्किकप्रतिबोधनार्थमनुमानमवतारयति—**तदेति** । स्वाश्रयत्वेन सम्प्रतिपन्नदृष्टिव्यतिरिक्ता दृष्टीः पक्षीकरोति—**विवादाध्यासिता इति** । अस्मच्छब्देन विशिष्टो वा केवलो वाभिलप्यते ? नाद्यः । विशिष्टस्य विशिष्टान्तरगतदृष्ट्याश्रयत्वस्यानिष्टत्वात् । न द्वितीयः । श्रुतिविरोधादिति चोदयति—**नन्विति** । वस्तुतो दृष्ट्याश्रयत्वाभावं श्रुतिसिद्धमङ्गीकरोति—**सत्यमिति** । कथं तर्हि प्रतिज्ञेत्याशङ्क्याह—**तथापीति** । व्यवहारतोऽपि दृष्ट्याश्रयत्वाभावे द्रष्ट्रन्तरनिषेधेनास्यैव द्रष्टृत्वविधानमनवकाशं स्यादित्युक्तेऽर्थे श्रुतार्थापत्तिमाह—**कथमिति** । श्रुत्यविरोधेऽपि सर्वदृष्टीनामेकत्रादृष्टेर्योग्यानुपलब्धिविरुद्धमनुमानमिति शङ्कते—**एवमपीति** । साक्षिणो वा प्रतीचि सर्वदृष्टीनां योग्यानुपलब्धिर्दृष्ट्यन्तरस्य वा ? । नाद्यः, असिद्धत्वात् । न हि साक्षिणा प्रतीचि सर्वा दृष्टयो न दृश्यन्ते । न द्वितीयः । विशेषणासिद्धेरिति दूषयति—**न दृष्टेरिति** । ननु सर्वदृष्टीनां मदाश्रयत्वे मम स्वदृष्टितन्निमित्तसुखाद्यनुसन्धानवदितरदृष्ट्याद्यनुसन्धानापत्तिरिति पक्षबाधकपराहतमनुमान-

त्वात्। सर्वदृष्ट्यननुसन्धानं त्वौपाधिकात्मभेदादुपपद्यते । यथा आकाशदेशभेदात् सर्वशब्दानुपलब्धिः । तथापि भवदन्तःकरणजन्यत्वोपाधिव्याधेः किमौषधम् ? साध्याव्यापकत्वमिति ब्रूमः । अस्मदाश्रयमपि ह्यज्ञानं नान्तःकरणजन्यम् । यस्य तु ज्ञानान्तरमज्ञानं तस्यास्मत्त्वाद्युदाहरणीयम् । अथ दृष्टिभेदे किं बाधकम् ? दृष्टिविनाशप्रसङ्ग इति ब्रूमः । वेदेऽपि हि भिन्नस्य विनाशिता श्रूयते, "यदल्पं तन्मर्त्य"-मिति । सत्प्रतिपक्षता चागमग्रस्ता । यद्वा एवमनुमेयम्—विवादपदान्यविवादास्पदस्य भोगायतनानि भोगायतनत्वात् संप्रतिपन्नवदिति । यथाहुरारण्यके वार्तिककृतः—

"एकात्मवन्तो देहाः स्युरि" त्यादिना । विपक्षे च बाधक-

---

मिति। नेत्याह—सर्वदृष्टीति । विशिष्टस्याननुसन्धानेऽपि स्वरूपस्य तदस्त्येवेति भावः । औपाधिक[1]भेदादननुसन्धाने दृष्टान्तमाह—यथेति । [2]आकाशस्यैकत्वेऽपि श्रोत्रस्यावच्छेदकभेदाच्छब्दोपलब्धिव्यवस्थावदौपाधिकभेदादात्मन्यप्यनुसन्धानव्यवस्थेत्यर्थः । पक्षबाधकाभावेऽप्युपाध्यपहारेऽप्रयोजकतेति शङ्कते-तथापीति । अन्वयव्यतिरेकव्याप्त्यभावेन दूषयति—साध्येति । तदेव साधयति—अस्मदिति । अनादित्वादित्यर्थः । 'विज्ञानं वान्यवस्तुनी'ति मते तस्यापि तज्जन्यत्वाद्याप्तिरित्याशङ्क्याह—यस्येति । विपक्षे बाधाभावादप्रयोजकत्वमित्याशङ्कते—अथेति । बाधकं तर्कं दर्शयन्नुत्तरमाह—दृष्टिविनाशेति । भिन्नमपि किंचिदविनाशि किं न स्यादित्याशङ्क्य प्रयोगान्तरमाह—यद्वेति । आनन्दबोधीयमनुमानमवतार्य तत्र वार्तिककारसंमतिमाह—यथाहुरिति । बृहद्विचारगतं वार्तिकमुदाहरति—एकात्मवन्त इति ।

'.................. विवादो येषु वर्तते ।
शरीरत्वाविशेषाद्धि प्रतिवादिशरीरवत् ॥"

इत्यादिपदार्थः । शङ्कितोपाधिं धुनीते—विपक्षे चेति । दृष्टिविनाशप्रसङ्ग इत्यादाविति शेषः । प्रतिवादिदेहस्य तद्भोगायतनत्वं तत्कर्मजत्वान्न भोगायत-

---

1. भेदादनुसंधाने 2. आकाशत्वेऽपि

मुक्तम् । नन्वत्र तत्कर्मजत्वमुपाधिः । न । तस्य साध्याधिकवृत्ति-त्वात् । तत्कर्मजं हि दुःखादि न तद्भोगायतनम् ।

ननु साधनाव्यापकः साध्य[1]स्य व्यापक उपाधिः । अतो न तस्याधिकवृत्तिता दोषाय । न । प्रसिद्धानुमानेष्वपि पक्षेतरत्वोपाधि-सद्भावप्रसङ्गात् ।

नन्वक्षपादमतानुसारिभिरग्निरनुष्ण इत्यनुमाने पक्षेतरत्वमेवाते-जस्त्वमुपाधिरुक्तः । सत्यम्—तथापि तस्य साध्यसमव्याप्तेरुपाधि-त्वेऽतिप्रसङ्गाभावः । हन्त उपाधेः समव्याप्तावप्यतिप्रसङ्गस्तुल्यः । मिथ्यात्वसाधनेऽपि ह्यात्मेतरत्वे सति पक्षेतरत्वमुपाधिः । केवलान्व-यिनोऽपि पक्षेतरत्वमुपाधिः स्यात् । अतः पक्षेतरत्वान्यत्वेनोपाधिलक्षणं विशेषणीयम् । न । साध्यासमव्याप्तेः । पक्षेतरत्वं हि मिथ्यावस्तु-

---

नत्वादिति शङ्कित्वा निरस्यति—**नन्वित्यादिना** । अधिकवृत्तित्वं व्यनक्ति—**तत्कर्मजं हीति** । साध्याधिकवृत्तित्वमुपाधिलक्षणवतो नोपाधित्वबाधकमिति शङ्कते—**नन्विति** । अतिप्रसङ्गेनोत्तरमाह—**न प्रसिद्धेति** । पक्षे साध्य-सन्देहाद्व्यतिरेकाभावान्नायं प्रसङ्गः । लक्षणसत्त्वे तु तस्यापीष्टमुपाधित्वमिति शङ्कते—**नन्विति** । लक्षणवतस्तस्योपाधित्वमङ्गीकरोति—**सत्यमिति** । अप्रसङ्गस्तर्हि कथमित्याशङ्क्य साध्येनान्वयादिशून्योपाध्युपगमे स स्यादि-त्याह—**तथापीति** । अन्वयादिवदुपाध्यभ्युपगमेऽपि प्रसङ्गसाम्यमिति शङ्कते—**हन्तेति** । मिथ्यात्वे सत्युक्तोपाधेः शुक्तिरजतादौ *भावात्तदभावे चात्मनि मिथ्यात्वाभावादसाधनव्याप्तेश्च लक्षणस्य सत्त्वादिति हेतुमाह—**मिथ्यात्वेति** । स्वर्गादि कस्यचित् प्रत्यक्षं प्रमेयत्वादित्यत्रापि पक्षेतरत्वमुपाधिः । साध्यभावे कटादौ तद्भावादुपाध्यभावे च पक्षे साध्यानिश्चयादिति अतिप्रसङ्गा-न्तरमाह—**मिथ्यात्वेति** । अतिप्रसङ्गनिरासस्तर्हि कथमिति तत्राह—**अत इति** । समाधत्ते—**नेति** । यत्तावदात्मेतरत्वे सति पक्षेतरत्वमुपाधिर्मिथ्या-त्वानुमाने भवतीति । तत्राह—**साध्येति** । असमव्याप्तिं साधयति—**पक्षेतरत्वं**

---

1. साध्यः सव्यापारः

* आत्मेतरत्वे सति पक्षेतरत्वरूपोपाध्यभावे चेत्यर्थः ।

धर्मत्वान्मिथ्या । न च तत्र पक्षेतरत्वमस्ति । संवेदने चामिथ्याभूते पक्षेतरत्वमिष्टम् । तर्हि भवन्मत एवायमुपाधिरस्तु । त्वया हि पक्षेतरत्वेऽपि पक्षेतरत्वमिष्यते, दृश्यत्व इव दृश्यत्वम् । संवेदने चात्मेतरत्वं नेष्टम् । न । मन्मते आगमसिद्धमिथ्यात्वे पक्षे पक्षेतरत्वाभावात् । न चैवमनुमानं व्यर्थम् । परार्थत्वात् । एवं केवलान्वयिप्रयोगेऽपि द्रष्टव्यम् । तथा हि—विमतं कस्यचिदपरोक्षं पदार्थत्वात् संप्रतिपन्नवदित्यादौ । "यः सर्वज्ञः सर्वविदि"त्यादिमानान्तरसिद्धसाध्यवति पक्षे पक्षेतरत्वस्याप्यतेजस्त्वोपाधेरिष्टत्वात् । तस्मात् साध्यसमव्याप्तिरेवोपाधिः । अतो न तत्कर्मजत्वमुपाधिः । दोषान्तरविरहोऽतिरोहित एव । तदेवमैकात्म्यमेवानुमानतोऽपि सिध्यति, नात्मभेद इति स्थितम् ।

### अद्वैतश्रुतेरनन्यपरत्वव्यवस्थापनम्

अद्वितीयं तु वस्तु "एकमेवाद्वितीय"मित्याद्यागमगम्यम् । न च

---

हीति । स्ववृत्त्यनुपपत्तेरित्यर्थः । सत्युपाधौ साध्यासत्वमिति मीमांसकं प्रत्याह—संवेदने चेति । मायावादिमतमाश्रित्य दर्शितोपाधिसद्भावमाशङ्कते—तर्हीति । मयापि नेष्टा स्ववृत्तिरिति साध्याव्याप्तिमाशङ्क्याह—त्वया हीति । यत्तु मीमांसकं प्रत्युक्तं संवेदने चेत्यादि तदपि ते नास्तीत्याह—संवेदने चेति । अन्यतरोपाधिमन्वयाद्यभावेन निरस्यति—नेत्यादिना । आगमसिद्धमिथ्यात्वे च पक्षस्य मिथ्यात्वानुमानवैयर्थ्यमित्याशङ्क्याह—न चेति । केवलान्वयिनि पक्षेतरत्वोपाधिमुक्तं प्रत्याह—एवमिति । साध्याव्यापकत्वं साधयति—तथा हीति । अतिप्रसङ्गं निरसितुं शङ्कितं विशेषणं दूषयति—पक्षेतरत्वस्यापीति । उपाधेः साध्येनान्वयव्यतिरेकवत्वात्तत्कर्मजत्वे तदभावात्तस्य लक्षणविकलस्यानुपाधित्वमिति नित्यत्वादिसाधनेषु न विकलता । परं प्रति तत्सिद्धदृष्टान्तोपादानाद् देशतोऽनवच्छिन्नत्वविभुत्वस्यात्मन्युभयसंमतत्वान्नासिद्धिरित्यभिसन्धिमानुपसंहरति—तदेवमिति । एतेनाद्वैताशाप्यपास्येत्यतिदेशं शिथिलयति—अद्वितीयं त्विति । यत्तु तच्छुतिश्चान्यपरा व्याख्येयेति । तत्राह—न चेति । शिष्यं प्रत्यागमोपन्यासेऽपि न प्रतिवादिनं

तस्यान्यपरत्वम्। अद्वैतपरतालिङ्गस्य तदुपक्रमोपसंहारादेः स्पष्टत्वात्। अथ तथापि श्रद्धाप्रधानस्यैवागमाद्विश्वासः। न तु नैयायिकस्य। यथाहोदयनः–श्राद्धोऽसि चेदुपनिषदं पृच्छ। नैयायिकोऽसि चेदनुसर न्यायमि"ति। ननु दर्शितमत्रानुमानमपि कैश्चित्। विप्रतिपन्नं तात्त्विकस्वान्तर्भेदहीनं ज्ञातत्वात् यथाकाशमिति। सत्यम्। तत्रानात्मनो भेदराहित्यमेव कथञ्चित्, नाद्वितीयवस्तुता। तत्स्वरूपस्य मायामयत्वाभ्युपगमात्। यदपि प्रयोगान्तरम्—विवादाध्यासिता भेदाः सद्रूपे परिकल्पिताः। प्रत्येकं सदनुविद्धत्वात्। ये येन प्रत्येकमनुविद्धास्ते तत्र परिकल्पिताः, यथा जलचन्द्रभेदाः। अथवा विवादाध्यासिताः स्वानुगतप्रतिभासे वस्तुनि परिकल्पिताः विभक्तत्वात् कल्पितसर्पधारादिवदिति। तत्राप्याद्ये साध्यविकलो दृष्टान्तः। न

---

प्रति तदुपन्यासो युक्तः। तस्य विनानुमानमविश्वासादिति चोदयति–**अथेति**। उक्तेऽर्थे [1]सम्प्रतिपत्तिं दर्शयति—**यथाहेति**। अद्वैते वेदान्तिभिरुक्तमनुमानं, ततस्तत्र नैयायिकस्यापि श्रद्धा सिध्यतीति शङ्कते—**नन्विति**। आकाशव्यतिरिक्तं विप्रतिपन्नमित्युच्यते। अध्यक्षबाधं निरसितुं तात्त्विकपदम्। आकाशदृष्टान्ते साध्यवैकल्यं परिहर्तुं स्वान्तरिति विशेषणम्। अनात्मभेदनिरासार्थमनुमानमुक्तमित्यनुजानाति–**सत्यमिति**। तर्हि कथमद्वैतासिद्धिरित्याशङ्क्य भेदहीनानात्मसिद्धावपि न वास्तवाद्वैतसिद्धिरित्याह—**तत्रेति**। निर्भेदवस्तुसिद्धिरेवाद्वैतसिद्धिरित्याशङ्क्याह—**तत्स्वरूपस्येति**। परकीयमनुमानान्तरमनुद्रवति—**यदपीति**। भागे सिद्धसाध्यत्वमुद्धर्तुं विवादाध्यासितपदम्। असद्वादापवादार्थं सद्रूपविशेषणम्। वनाकारानुरक्ततरुषु व्यभिचारं निरस्यति—**प्रत्येकमिति**। एकैकशः सत्सामानाधिकरण्येन भानस्य विवक्षितत्वान्न वाच्यत्वादिना व्यभिचार इति भावः। अनुमानान्तरमाह—**अथवेति**। विवादाध्यासितपदं पूर्ववच्छून्यबाह्यार्थविज्ञानवादिमतानि निरसितुम्। विशेषणानि च। घटत्वादौ पटादेरकल्पितत्वाद्बाधे प्राप्ते तन्निरासार्थं स्वपदम्। न च घटत्वे घटानामकल्पितत्वाद्बाधतादवस्थ्यं, तस्य महासामान्यात्मना

---

1. कथमित्यधिकः पाठः

हि परस्य सद्रूपे चन्द्रभेदाः कल्पिता इति मतम् । द्वितीयेऽप्येष एव दोषः। स्वशब्दार्थस्य दृष्टान्तेऽननुगमात् । अथ विवादाध्यासिता भेदा एकस्मिन् परिकल्पिताः प्रत्येकमेकानुविद्धत्वात् चन्द्रभेदवदित्यनुमानम्। अत्राप्येकानुवेधः किमेकानुगतिः तत्प्रतिभासो वा । असिद्धिराद्ये । न हि सर्वमस्माकमेकानुगतम् । द्वितीये तु पुरोवर्तिषु कल्पितसर्पादिभेदैर्व्यभिचारः । एवं प्रयोगान्तरेऽप्यूहनीयम् । तस्मादुपदेशयोग्यमेवाद्वैतं न तु तत्सह्यम् ।

#### अद्वैतमेव तत्त्वमित्यत्र तीर्थिकान्प्रत्यनुमानप्रयोगः

अत्रोच्यते–युक्तमागमार्थे श्रद्धाभावे विश्वासाभाव इति । विश्वासहेतुत्वाच्छ्रद्धायाः । तद्धेतुत्वं च विद्याप्रकरणे–"श्रद्धत्स्व सोम्य" "श्रद्धा-

---

तत्कल्पनाधिष्ठानत्वात् । प्रतिभासपदेनाधिष्ठानस्य सामान्येन प्रतिभासनियमं सूचयति । प्रत्येकं सदनुविद्धत्वानुमानमपनुदति––तत्रेति । चन्द्रभेदानामपि सति कल्पितत्वमद्वैतिनामभिमतमिति कुतस्साध्यवैकल्यमित्याशङ्क्याह––**न हीति** । विभक्तत्वानुमानं प्रतिवक्ति––**द्वितयेऽपीति** । घटादेः स्वपदार्थस्य कल्पितसर्पादावसत्वात्तत्र विशिष्टसाध्यासिद्धेरिति साध्यविकलतां साधयति–– **स्वशब्दार्थस्येति** । अनुमानान्तरमाशङ्कते— **अथेति** । विज्ञानवादिनं प्रति सिद्धसाध्यत्वं निरसितुमेकस्मिन्निति पदम् । विवादाध्यासितपदं प्रत्येकमिति विशेषणं च । पूर्ववद्धेतुं विकल्प्याद्येऽन्यतरासिद्धिमाह––**अत्रेत्यादिना** । असिद्धिमेव प्रपञ्चयति––**न हीति** । एकानुगतिप्रतिभासपक्षं प्रत्याह–– **द्वितीये त्विति** । सर्पत्वाद्यनुगतिप्रतीतेस्तेषु सत्वेऽपि पुरोवर्तिषु कल्पितत्वेनैकस्मिन् कल्पितत्वाभावादित्यर्थः । विमतं भेदसंवेदनं मिथ्या, भेदसंवेदनत्वात् स्वप्नसंवेदनवत् । यद्वा विमतो भेदो मिथ्या, भेदत्वात् सम्प्रतिपन्नवदित्यादावुक्तन्यायमतिदिशति— **एवमिति** । पूर्वपक्षमुपसंहरति–**तस्मदिति** ।

सिद्धान्तयति––**अत्रेति** । यत्तु श्रद्धाप्रधानस्यागमार्थे विश्वासो न नैयायिकस्येति तदङ्गीकरोति––**युक्तमित्यादिना** । श्रद्धायाः शास्त्रार्थविश्वासहेतुत्वे प्रमाणमाह––**तद्धेतुत्वं चेति** । भूत्वात्मानं पश्येदिति सम्बन्धः । ननु श्रुतागमस्यापि तार्किकस्य तदर्थे ज्ञानानुत्पत्तेरागमाप्रामाण्यमिति । तत्राह––

वित्तो भूत्वे''ति श्रुतेः। "श्रद्धावान् लभते ज्ञानम्'' इति स्मृतेश्चाव-गम्यते। अतोऽत्राश्रद्दधानस्यानधिकारित्वात्। प्रमित्यनुत्पादो न दोषाय। यद्यपि चायमलौकिकार्थः श्रुत्यनुभवानुसारी गुरूपदेशगम्यः, तथापि न न्यायशून्यः। दर्शितो ह्यत्र दुन्दुभ्यादिदृष्टान्तश्रुत्या न्यायः। प्रपञ्चितश्चात्रभवद्भिर्भाष्यकारादिभिः। अनुमानप्रयोगोऽप्यत्र न दुष्करः। तथा हि—तीर्थिकान् प्रति तावत्प्रयुज्यते। विवादाध्या-सिता भेदाः एकस्यां संविदि परिकल्पिताः दृश्यत्वात् यथा बौद्धोक्ताः

---

अत इति। अधिकारिणः प्रमितिजनको वेद इति न्यायादित्यर्थः। ननु न श्रद्धामात्रात् ज्ञानं, तथा सति श्रुतिन्यायवैयर्थ्यप्रसङ्गात्। न चागमैकगम्ये न्यायावकाशोऽस्तीत्याशङ्क्याह——यद्यपीति। तर्हि शुष्कतर्कानुप्रवेशात्तर्का-प्रतिष्ठानन्यायेनालौकिकार्थस्य बाध्यत्वमित्याशङ्क्याह——दर्शितो हीति। व्या-वृत्तमनुवृत्तव्यतिरेकेण नास्ति। न हि मृद्व्यतिरेकेण घटादयः सन्ति। तथा चानुगतसन्मात्रव्यतिरेकेण व्यावृत्तं जगन्नास्तीति निर्धारितमित्यर्थः। [1]यो ह्यनुमानपरः तुष्यति तं प्रत्याह——अनुमानेति। ज्ञातत्वानुमानं तावदद्वैत-साधकम्। द्वैतस्यातात्त्विकत्वेऽर्थात्तात्त्विकाद्वैतसिद्धेः। द्वितीयानुमानेऽपि न दृष्टान्तस्य साध्यविकलता। चन्द्रभेदकल्पनाधिष्ठानस्य चन्द्रस्यापि सद्रूपत्वा-भ्युपगमात्। विभक्तत्वानुमानेऽपि न साध्यवैकल्यं, खशब्दस्य प्रकृतगामि-त्वोपगमात्। न चानुमानान्तरे [2]अनुगतत्वसिध्यादेरवकाशः। प्रत्येकमेक-सत्सामानाधिकरण्येन प्रतिभानस्य हेत्वर्थत्वात्। एवं भेदसंवेदनादिष्वपि दोषाभावसिद्धिरित्यभिसन्धिः। अनुमानान्तरमाह—तथा हीति। तीर्थिका वैदिका विवक्ष्यन्ते। भागे सिद्धसाध्यतां परिहर्तुं विवादाध्यासितपदम्। भेदा वियदादयः।

शून्यवादिनं निराकरोति—संविदिति। विज्ञानवादिनं प्रत्याह——एक स्यापीति। अत्र चावधारणमवधेयम्। अन्यथा संविदोरेकस्याः संविदोऽध्यासे सिद्धसाध्यत्वात्। दृश्यत्वहेतोः स्वरूपासिध्यादिनिरासे सम्प्रति न प्रयतितव्यमि-त्याह—अत्रेति। ननु बौद्धोक्ताः संविद्भेदा न दृश्यत्वादेकस्यामेव संविद्यध्यस्यन्ते।

---

1. य...परः 2. उत्पत्तिसिद्ध्यादेः

संवित्क्षणाः। अत्र हेतोरसिद्धिनिरासस्तावत्प्रपञ्चमिथ्यात्वसाधनस्येव। अस्य उपाधेरपि तदुपाधेरिव गतिः। नापि विरुद्धता। सपक्षवृत्ते-र्विपक्षाद्व्यावृत्तेश्च। अत एव नानैकान्तिकतापि।

नन्वस्मन्मते संविद आत्मनश्च सर्वस्य दृश्यत्वादन्यतरव्यभि-चारस्स्पष्टः। न। तयोः पक्षनिक्षिप्तत्वात्। तथा हि—अहंप्रत्ययगोचरस्य बुद्धेश्च प्रकृतविवादगोचरत्वात् पक्षत्वं तावदक्षतम्। न चैतावता आत्मनः संविदश्चासत्वम्। दर्शितं ह्यहंकारात् पृथगात्मसत्वम्। बुद्धेश्च पृथक् संवित्सत्वम्। साधितं च तयोः स्वप्रकाशत्वम्। अतो न व्यभि-चारकलङ्काशङ्का। न च कालात्ययापदिष्टता। बलवत्प्रत्ययेन साध्यस्य बाधानुपलब्धेः। नापि सत्प्रतिपक्षता, प्रतिमल्लप्रयोगासम्भवात्।

### अद्वैतं न तत्वमिति प्रतिप्रयोगखण्डनम्

अथ प्रयोगः—विमतं न संविदि कल्पितं सद्बुद्धिविषयत्वात् आत्मवदिति। न च साधनशून्यं निदर्शनम्। आत्मनः शास्त्रीयज्ञान-विषयत्वाभ्युपगमात्। मैवम्। असिद्ध्यादिप्राप्तेः। तथा हि—

---

किं तु दोषगम्यत्वादित्याशङ्क्याह—अस्योपाधेरपीति। दृश्यत्वस्य विरुद्धत्वा-नैकान्तिकत्वाभ्यामनाक्रान्तत्वं दर्शयति-नापीत्यादिना। अन्यतरव्यभिचारमा-शङ्क्य परिहरति—नन्वित्यादिना। पक्षान्तर्भावं संविदात्मनोः साधयति—तथा हीति। ननु तयोरपि पक्षनिक्षिप्तत्वेन कल्पितत्वे सर्वशून्यतापतेदिति। तत्राह—न चेति। तत्र हेतुमाह—दर्शितं हीति। अहङ्कारात्मनोर्भेदवचनात् बुध्यभावेऽपि स्वापे संविद्भावाच्च दृश्ययोरात्मसविदोर्वस्तुतोऽसत्वेऽपि न शून्यवादावकाश इत्यर्थः। तर्हि तयोरेवाहङ्कारबुद्धिव्यतिरिक्तयोरात्मसंविदोर्व्य-भिचारः। नेत्याह—साधितं चेति। अन्यतरव्यभिचाराभावं निगमयति—अत इति। दृश्यत्वस्य कालात्ययापदिष्टत्वं निराचष्टे—न चेति। तस्यैव सत्प्रतिपक्षत्वं प्रतिक्षिपति—नापीति। प्रतिप्रयोगमाशङ्कते—अथेति। संवेद्यं विमतमित्युच्यते। अविषयात्मवादे दृष्टान्तस्य साधनशून्यत्वमाशङ्क्य परिहरति—न चेति। प्रत्यनुमानं प्रत्याचष्टे—मैवमिति। असिध्यादि निर्धारयितुं हेतुं विकल्पयति—तथा हीति। सद्विषया बुद्धिः सद्बुद्धिरिति

सद्बुद्धिः किं सद्विषया बुद्धिः किं वा सदाकारा बुद्धिः। तथा सती वा बुद्धिः। तत्रासिद्धिराद्ये। द्वितीयतृतीययोस्तु संविदि कल्पितैः परप्रक्रियासिद्धैर्व्यभिचारः। न च विपक्षे बाधः कश्चित्। कल्पितेनापि हि स्वप्नवत्सर्वव्यवहारसम्भवः। प्रपञ्चितश्चैतत्पुरस्तात्। एवं प्रयोगान्तरेऽप्यूहनीयम्। अतो न सत्प्रतिपक्षता।

ननु कुम्भादेरकल्पितत्वे किमनुपपन्नम्। यत्तु मतं जडस्य सत्यत्वे दृक्संबन्धाभावाद् दृश्यत्वासम्भवः। सम्बन्धाभावेऽपि दृश्यत्वे अतिप्रसङ्ग इति, तदतिमन्दम्। क्रियास्वाभाव्यान्नियमोपपत्तेः। ज्ञानं हि ज्ञातुर्विक्रिया। क्रिया च स्वभावात् गमिवन्नियतविषया विषयाभिमुखातिशयजननी। स चातिशयः प्राकट्याख्यः तादात्म्यसम्बन्ध-

---

पक्षं प्रत्याह—तत्रेति। द्वैतस्य सद्विलक्षणत्वाङ्गीकारादित्यर्थः। सदाकारा बुद्धिः, सती वा बुद्धिः, सद्बुद्धिरिति पक्षयोरेकस्यां बुद्धौ बौद्धपरिकल्पितबुद्धिभेदैर्व्यभिचारं दर्शयति—द्वितीयेति। पक्षत्रयसाधारणं दूषणमाह—न चेति। द्वैतस्य संविदि कल्पितत्वे व्यवहारानुपपत्तिर्बाधिकेत्याशङ्क्याह-कल्पितेनापीति। विमतं संविदि न कल्पितं भासमानत्वात् सम्प्रतिपन्नवदिति प्रतिप्रयोगान्तरमाशङ्क्याह—एवमिति। भासमानत्वं भानविषयत्वं वा भानरूपत्वं वा?। नाद्यः। दृष्टान्तस्य साधनविकलत्वापत्तेः। न हि संविदो भानविषयत्वं संभवति। न द्वितीयः। असिद्धेः। न हि द्वैतं भानरूपमभ्युपेयते। अस्ति च रजतभुजगादौ भासमानत्वम्। न च तस्य संविद्यकल्पितत्वं शुक्त्याद्यवच्छिन्नचैतन्यस्यैव रजतादिकल्पनाधिष्ठानत्वाभ्युपगमात्। तस्मादनैकान्तिकत्वमित्यभिप्रायः। विपक्षे बाधकाभावादप्रयोजकत्वमिति शङ्कते—नन्विति। परोदीरितं बाधकमनुद्रवति—यत्त्विति। सम्बन्धाभावेऽपि दृश्यत्वं किं न स्यादित्याशङ्क्याह—सम्बन्धाभावे चेति। अतिप्रसङ्गं प्रत्यादिशति—तदतिमन्दमिति। क्रियायाः स्वभावतो नियतविषयत्वेऽपि ज्ञानस्य किमायातमित्याह—ज्ञानं हीति। सापि कथं सम्बन्धं विना नियतविषया भवेदित्यत आह—क्रिया चेति। तत्रातिशयाधायकत्वं तद्विषयत्वं, येन यत्रातिशयः स तस्य विषय इत्यभ्युपगमादिति क्रियायाः नियतविषयत्वमेव विशदयति—विषयोभिमुखेति।

नियत इति । मैवम्—प्राकट्यं हि प्रकाशः अप्रकाशो वा । आद्ये कुम्भ-प्राकट्ययोस्तमःप्रकाशयोरिव तादात्म्यासम्भवः । अतो न विषय-प्रकाशनियमः । द्वितीये तु विषयासिद्धिः । अपि च कथमतीतादिना तादात्म्यं वर्तमानप्राकट्यस्य । न हि सदसतोस्तादात्म्यसम्भवः । न चातीतत्वमेव स्वतन्त्रं क्वचिदवसीयते । अतीतधर्मतया तु निश्चये सदसत्तादात्म्यापत्तिः । तस्मादेकस्मिन् संवेदनेऽनभ्यस्तस्य संविद्भेदस्य कुम्भादेश्च न कथञ्चिदपि सिद्धिः संभवेदिति । विपक्षे बाधाभावान्न शङ्किताप्रयोजकतापि ।

अथैनमपि कथमपि कथं दृष्टान्तसिद्धिः । न हि बौद्धप्रक्रिया-सिद्धं तीर्थिकस्यापि संप्रतिपन्नम् । उच्यते । तत्किमत्यन्तासिद्धं अप्र-

---

ननु हानोपादानोपेक्षणामन्यतमः सोऽतिशयः, यो ज्ञानक्रियया विषयनिष्ठः समाधीयते । तत्राह—स चेति । हानादेरेकैकस्य व्यभिचारान्मिलितस्य चासंभवित्वान्न विषयत्वप्रयोजकत्वमित्यभिप्रायः । प्राकट्यस्यापि कथमसम्बद्धस्य विषयव्यवस्थापकत्वं, तत्राह—तादात्म्येति । दृश्यत्वहेतोरप्रयोजकत्वं प्राप्तं प्रतिवदति—मैवमिति । यत्तु प्राकट्याख्योऽतिशयो ज्ञानक्रियाया विषयनियमे हेतुरिति । तत्र प्राकट्यं विकल्पयति—प्राकट्यं हीति । प्राकट्यस्य प्रकाशत्वपक्षं दूषयति—आद्य इति । प्राकट्यस्य विषयेण तादात्म्यासंभवे फलितमाह—अतो नेति । अप्रकाशे प्राकट्ये तेन तमसेव विषयासिद्धिरित्याह—द्वितीये त्विति । कल्पद्वयेऽपि साधारणं दूषणमाह—अपि चेति । कथमित्युक्तामनुपपत्तिं विशदयति—न हीति । वृष्ट्यादेरसत्वेऽपि तदतीतत्वस्येदानीमपि भावात्तेन वर्तमानप्राकट्यस्य तादात्म्यमविरुद्धमित्याशङ्क्याह—न चेति । तत् किं स्वतन्त्रं परतन्त्रं वा ? । नाद्यः । अनुभवविरोधादिति मन्वानो द्वितीयं निरस्यति—अतीतधर्मतयेति । भेदप्रपञ्चस्य सत्यत्वे दृशा सम्बन्धानुपपत्तेर्दृश्यत्वासिद्धिर्बाधिकेत्यप्रयोजकत्वपरिहारमुपसंहरति—तस्मादिति ।, हेतुदोषाभावेऽपि निदर्शनमाश्रयशून्यमिति शङ्कते—अथेति । परप्रक्रियातो दृष्टान्तसिद्धिरित्याशङ्क्याह—न हीति । न खल्वाश्रयशून्ये दृष्टान्ते साधनादिसम्भवः । अतो दोषचतुष्टयविशिष्टता दृष्टान्तस्येति भावः । दृष्टान्तस्य निर्दुष्टत्वसमर्थनार्थं परपरिभाषासिद्धं संवि-

माणसिद्धं वा। आद्ये तद्द्वेषासम्भवः। अशक्यत्वात्। द्वितीये तु न दृष्टान्तानुपपत्तिः। प्रतिबिम्बादेरप्रामाणिकस्यापि दृष्टान्ततादर्शनात्।

ननु क्षणिकतादिसिद्धिरस्माकं न भ्रमरूपा। किन्तु विकल्परूपा। विकल्पश्च विषयशून्यः।" शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति लक्षणात्। दूषणमपि परमतस्य निर्विषयत्वसम्पादनम्। तत्र कथय कथं दृष्टान्तसिद्धिरिति। उच्यते—यदि भ्रान्त्या क्षणिकादेरसिद्धिः तदा तद्दूषणं निर्विषयमापद्येत। न हि क्षणिकासत्वमापाद्येत। न च क्षणिकत्वसत्वव्याप्त्यभावादिदोषो ज्ञानादिविषय उपपद्यते। अतः क्षणिकादि भ्रान्तिसिद्धमित्यनिच्छताप्यच्छमतिनाभ्युपेयम्। तस्माद्दृष्टान्ते न किञ्चिदप्यनुपपन्नम्।

अद्वैतं तत्वमित्यत्र बौद्धं प्रत्यनुमानप्रयोगः

बौद्धं प्रति संविद्भेदादि विप्रतिपन्नं धर्मी। दृष्टान्तस्तु नीलादिरेव।

---

द्भेदादिकं विकल्पयति—उच्यत इति। क्षणिकत्वसंविद्भेदादेः सुषुप्तत्वपक्षं प्रत्याह—आद्य इति। सुषुप्तस्य दूषणं प्रत्यालम्बनत्वायोग्यत्वादिति हेत्वर्थः। प्रसिद्धमेव संविद्भेदादि, न तु प्रमाणसिद्धमिति विकल्पं पराकरोति—द्वितीये त्विति। प्रतिपन्नस्य दृष्टान्तत्वसंभवात्तस्य दोषचतुष्टयविरहित्वमित्यर्थः। प्रतीतमप्यप्रमितं कथमुदाहरणमित्याशङ्क्याह—प्रतिबिम्बादेरिति। दृष्टान्तस्य भ्रान्त्यापि प्रसिद्धिमसहमानः शङ्कते—नन्विति। तर्हि मानतोऽपि क्षणिकत्वादेरसिद्धेरसिद्धस्य तस्य न निषेध्यत्वसिद्धिरित्यत आह—किं त्विति। ननु विकल्पस्यापि ज्ञानत्वात्तत्प्रतिपन्नस्य दृष्टान्ततोपपत्तिरित्यत्राह—विकल्पश्चेति। तत्र पातञ्जलं योगसूत्रमुदाहरति—शब्देति। क्षणिकत्वादेरप्रतिपन्नत्वे कथं दूषणमिति तत्राह—दूषणमपीति। दृष्टान्तस्य दोषचतुष्टयवैशिष्ट्यं फलितमाचष्टे—तत्रेति। परमतस्य दूषणानुपपत्त्या ज्ञातत्वस्यावश्यकत्वात दृष्टान्तस्य निर्दुष्टतेति समाधत्ते—उच्यत इति। क्षणिकत्वादेर्दूषणविषयत्वात्कुतो दूषणस्य निर्विषयत्वमित्याशङ्क्याह—न हीति। दूषणस्याज्ञातविषयत्वासंभवे फलितमाह—अत इति। अन्यथा तस्य दूष्यत्वानुपपत्तिरित्यर्थः। दृष्टान्तस्य दोषराहित्यमुपसंहरति—तस्मादिति। एवं तीर्थिकान्प्रतिबोध्यापरेषां प्रतिबोधनप्रकारं प्रदर्शयति—बौद्धं प्रतीति। पक्ष-

एवमेकस्मिन् द्रष्टरि कल्पितत्वं विमतस्य परिच्छिन्नत्वजडत्वाभ्यां स्वप्नप्रपञ्चस्येव शक्यमनुमातुम् । स्वप्नस्य हि नान्यथैकस्यैवापरोक्ष्यं सम्भवेत् । दूषणान्तरोद्धारस्तु पूर्ववदेवेत्यलमतिप्रपञ्चेनेति । तदेवं नात्मानात्मभेदे किञ्चिदपि मानं समस्ति । तस्मात् परमात्मैवैको हिरण्यगर्भादिजीवभेददशामाविशति । यथाकाशः कुम्भाकाशादिभेददशामिति, वेदान्तरहस्यमास्थेयम् ।

अध्यायार्थोपसंहारः

अतः शमादिसाधनोपेतस्य शोधितत्वंपदार्थस्य वेदान्तवाक्यादेव तत्वबोधोदय इति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्नारायणज्योतिःपूज्यचरण शिष्यस्य भगवत आनन्दानुभवस्य कृतौ न्यायरत्नदीपावल्यां तृतीयोऽध्यायः समाप्तः

---

सपक्षयोरेकत्वाशङ्कां निराकर्तुं सपक्षं विभजते---दृष्टान्तस्त्विति । तीर्थिकातीर्थिकभेदेनानुमानमुक्त्वा विमतं द्रष्टरि कल्पितं परिच्छिन्नत्वात् जडत्वाच्च, स्वप्नप्रपञ्चवदिति सर्वान्प्रत्याह---एवमिति ।

दृष्टन्तस्य साध्यविकलत्वं परिहरति---स्वाप्नस्येति । परिच्छिन्नत्वादिहेतोरसिध्यादिदोषराहित्यमतिरोहितमित्याह---दूषणान्तरेति । अनात्मत्वादिनापि प्रपञ्चस्य कल्पितत्वं शक्यमनुमातुमित्याशयेनाह---अलमिति ।

अद्वैतं प्रतिपाद्य, प्रकृतं निगमयति---तदेवमिति । जीवभेदस्य प्रसिद्धत्वादलमिह प्रमाणगवेषणयेत्याशङ्क्य प्रसिद्धिमन्यथयति---तस्मादिति। परस्यैवात्मनो हिरण्यगर्भाद्यात्मनावस्थानमप्रामाणिकमित्याशङ्क्याह---इति वेदान्तेति । मनननिदिध्यासनयोरमानत्वाद्वाक्यस्यैवाधिकारिणं प्रति सम्यग्ज्ञानकरणत्वमिति मन्वानः साधनलक्षणमुपसंहरति---अतः शमादीति ।

इति श्रीमत्परमहंसपरिव्राजकश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचित न्यायरत्नदीपावलीटीकायां तृतीयोऽध्यायः समाप्तः

॥ श्रीः ॥

# ॥ न्यायरत्नदीपावलिः ॥

## ॥ चतुर्थोऽध्यायः ॥

### उपोद्घातः

साधनानि विचित्राणि चिन्तितानि प्रयत्नतः ।
तत्वज्ञप्तेः फलं तस्याः क्रमप्राप्तं विचार्यते ॥

#### अज्ञाननिवृत्त्युपलक्षितानन्द एव मोक्ष इति प्रतिज्ञा

नन्वज्ञाननिवृत्तिरूपं तत्वबोधस्य फलं प्रसिद्धम् । उक्तं च तत्वविद्भिः—"यतो ज्ञानमज्ञानस्यैव निवर्तकमिति" । तत्र किं विचारणीयम् । सत्यम्—तथाप्यमुष्या न निवृत्तिरूपेण पुरुषार्थता । किन्तु निखिलान-

---

॥ श्रीः ॥

# ॥ न्यायरत्नदीपावलिटीकायां ॥

## ॥ चतुर्थोऽध्यायः ॥

पूर्वाध्यायार्थमनुवदति—**साधनानीति** । चतुर्थाध्यायार्थं सङ्गृह्णाति—**फलमिति** । उपायानन्तर्यमुपेयस्य युक्तमिति हेतुहेतुमद्भावं सम्बन्धं द्योतयति—**क्रमप्राप्तमिति** । फलविचारमाक्षिपति—**नन्विति** । तत्र प्रमाणमाह—**प्रसिद्धमिति** । शुक्त्यादितत्वज्ञानात्तदज्ञाननिवृत्तेरन्वयव्यतिरेकसिद्धत्वादात्मतत्वज्ञानादपि तदज्ञाननिवृत्तिः फलति । तथा च किं फलविचारेणेत्यर्थः । तत्रैव पञ्चपादिकाचार्यवचनमुदाहरति—**उक्तं चेति** । अन्वयव्यतिरेकाभ्यामाप्तवाक्याच्च तत्वज्ञानफले निश्चिते फलितमाह—**तत्रेति** । ज्ञानस्य फलमज्ञाननिवृत्तिरित्येतदङ्गीकरोति—**सत्यमिति** । विचारानवसरस्तर्हीत्यत आह—**तथापीति** । अज्ञाननिवृत्तेस्तर्हि कथं पुरुषार्थतेति । तदाह—**किं त्विति** ।

**र्थोपादाननिवृत्तितया परमानन्दाभिव्यक्तिलक्षणमोक्षतया च ।**

**मोक्षस्वरूपे विप्रतिपत्तिप्रदर्शनम्**

**तत्र वादिनां विप्रतिपत्तेरस्त्येव विचारः । तथाहि—केचिद्वि-शुद्धज्ञानसन्तानोदयं मोक्षमाहुः । तस्याप्यभावमन्ये । सततोर्ध्वगतिं केचित् । नवानामात्मगुणानामात्यन्तिकोच्छेदमपरे । प्रकृतिपुरुषविवेकद-र्शिनामात्यन्तिकमौदासीन्यमितरे । आत्यन्तिकदुःखादिभोगोपरमेऽपरि-णामितयात्मनोऽवस्थानं नित्यानन्दगुणस्याभिव्यक्तिं मीमांसकाः । उपाध्यवच्छेदोपरमे ब्रह्मरूपताप्राप्तिं केचित् । संसारबीजाज्ञाननिवृत्ति-मात्मस्वरूपानन्दाभिव्यक्तिं च वेदान्तिन इति विप्रतिपत्तेर्विचार्यते ।**

**विज्ञानवाद्यभिमतमोक्षस्वरूपखण्डनम्**

**तथाहि—तत्र न तावदाद्यः पक्षः सम्भवेत् । विषयोपराग-**

---

मुक्तेरविद्यानिवृत्तेरनतिरेकात्तद्रूपतया सा पुमर्थेत्यर्थः । तथापि कथं चातुर्थिको विचारोऽवसरमुपढौकते । तत्राह—**तत्रेति** । विप्रतिपत्तिमेव प्रदर्शयति—**तथा हीति** । योगाचारादिमोक्षप्रकारमुद्भावयति—**केचिदित्यादिना** । माध्य-मिकमोक्षं कथयति—**तस्यापीति** । क्षपणकपक्षमाह—**सततेति** । वैशेषिकादि-मोक्षं दर्शयति—**नवानामिति** । सांख्यादिसमयं सङ्गिरते—**प्रकृतीति** । भाट्टादिमोक्षस्वरूपमुत्थापयति—**आत्यन्तिकेति** । स्वयूथ्यकथां कथयति—**उपाधीति** । आचार्यमतमवतारयति—**संसारेति** । शुक्त्याद्यज्ञाननिवृत्तिव्या-वृत्तये संसारबीजेति विशेषणम् ।

ननु सुखस्यैव प्रेप्सितत्वात् कथमस्याः पुमर्थता । न च तत्र सुखमस्ति, हेत्वभावात्तत्राह—**आत्मस्वरूपेति** । विप्रतिपत्तिमुपसंहृत्य तन्निवृत्तये विचा-रारम्भसमाधानमुपसंहरति—**इति विप्रतिपत्तेरिति** । सफलं विचारं प्रपञ्च-यति—**तथा हीति** । योगाचारसौत्रान्तिकवैभाषिकाणां मोक्षं प्रतिक्षिपति—**तत्रेति** । ज्ञानस्य हि विषयास्पृष्टत्वं शुद्धत्वमभिमतं, तच्चायुक्तं, तदा धर्म्य-सिद्धे[1]रुक्तगुत्त्ययुक्तेरिति हेतुमाह—**विषयेति** । नैमित्तिकविषयोपरागस्य निमित्त-

---

1. उक्तमुज्ययुक्तेः

मन्तरेण बुध्युत्पत्त्यसम्भवात्, विशुद्धसन्तानोदयायोगात्। ननु वासनावशाद्विषयोपप्लवो बुद्धेर्न स्वतः। अतो वासनोपरमे विषयोपप्लवासम्भवाद्विशुद्धमेव ज्ञानमुत्पद्यते। न। वासनाऽनिरूपणात्। वासना हि ज्ञानादन्या न ते स्थिरास्ति। क्षणिका च न ज्ञानादन्या सिध्येत्। ज्ञानमेव विषयाकारं पूर्वोत्पन्नं वासनेति चेत्, तद्यदि समनन्तरप्रत्ययरूपं तदैकसन्तानगतानि सदृशविषयाकाराण्येव ज्ञानानि स्युः।

अथ व्यवहितज्ञानमेकसन्तानतया वासनेति मतं, तत्रैकसन्तानतानुपरमान्न वासनोपरमः स्यात्। ज्ञानस्वरूपोपरमाद्वासनोपरमश्चेन्मोक्षो निर्निमित्तः स्यात्। ज्ञानस्य स्वरसभङ्गुरत्वात्। न च मोक्षस्येत्थम्भावे मानमस्ति।

### शून्यवाद्यभिमतमोक्षस्वरूपखण्डनम्

शून्यत्वे तु मोक्षस्यापुमर्थता स्यात्। शरीरादेरपि हि नाभावः

---

निवृत्त्या निवृत्तेरुक्ता मुक्तिरुपपन्नेति शाक्यः शङ्कते––**नन्विति**। वासना हि ज्ञानादन्यानन्या वेति दुर्निरूपेति दूषयति–**नेति**। आद्ये सा स्थिरा क्षणिका वेति विकल्प्य क्रमेण निराकरोति––**वासना हीत्यादिना**। कल्पान्तरमालम्बते–**ज्ञानमिति**। मुक्त्यालम्बनं ज्ञानं व्यावर्तयति—**विषयाकारमिति**। वास्यवासकभेदसिध्यर्थमाह—**पूर्वोत्पन्नमिति**। तत्किमव्यवधानेन पूर्वोत्पन्नं, यदा कदाचिद्वा पूर्वोत्पन्नमिति विकल्प्याद्यमनूद्याह—**तद्यदीति**। समानसन्ततिपतितं पूर्वविज्ञानं वासनेत्युच्यते। तथा चाव्यवहितं पूर्वविज्ञानं वासनेति पक्षे घटज्ञस्य पटज्ञता न भवेत्। पटज्ञानोत्पादकवासनाभावादिति भावः। द्वितीयमुत्थाप्य शिथिलयति—**अथेत्यादिना**। सन्तानानुपरमेऽपि वासनाया जन्यज्ञाननिवृत्त्या निवृत्तिः। न हि जन्यं ज्ञानं स्थातुं पारयते। तथा च ज्ञानत्वादेव स्वतो वासनानिवृत्तिरिति शङ्कते—**तज्ज्ञानेति**। [1]शास्त्रारम्भावैयर्थ्येन परिहरति—**मोक्ष इति**। योगाचारादिमोक्षे दोषान्तरमाह—**न चेति**। माध्यमिकमोक्षं दूषयति—**शून्यत्वे त्विति**। अपुमर्थतामेव

---

1. दर्थक्येन

केनापीष्यते। किमु शरीरिणोऽस्मत्प्रत्ययगोचरस्य। प्रसिद्धा हि सर्वजन्तोर्मा न भूवं, भूयासमित्याशीः। संवृतिसिद्धमेव सर्वमनर्थ-बीजं भावरूपम्। अतस्तस्य न पुमर्थत्वमिति चेन्न। इत्थम्भावासम्भवात्। तथा हि—केयं संवृतिः?। शून्येऽशून्यज्ञानयोग्यतेति चेन्न। तदयोगात्। न हि निस्स्वभावे कापि योग्यता युक्ता। न चान्यस्तदाश्रयोऽन्यस्य तत्सिद्धत्वात्। न स्वतन्त्रा। प्रसिद्धिविरोधात्। न चास्मिन्नपि पक्षे मानमस्ति। "न प्रेत्य संज्ञास्ती"ति तु न सर्वशून्यतामाह—किन्तु बुद्धेरभावम्। अन्यथा "अविनाशी वा अरे अयमात्मे"त्युत्तर-वाक्यविरोधात्।

---

समर्थयते—शरीरादेरिति। आत्मनो दुःखित्वेनाद्विष्टत्वात्तदभावस्येष्टत्वमाशङ्क्य निराचष्टे—प्रसिद्धा हीति। सर्वस्य भावरूपस्य संवृतिसिद्धत्वेनानर्थमूलत्वात्तस्यापुमर्थत्वादभावस्य पुमर्थत्वमार्थिकमिति शङ्कते—सम्वृतीति। संवृतेर्दुर्निरूपत्वान्न तत्सिद्धत्वेन भावरूपस्यानर्थमूलतेति समाधत्ते—नेत्यादिना। कथं पुनः संवृतेर्दुर्निरूपत्वं तत्राह—तथा हीति। सा हि न सती तत्त्वविरोधात्। नाप्यसती [1]हानासम्भवादित्याह—केयमिति। पृष्टं मत्वा शून्यवाद्याह—शून्य इति। निस्स्वभावत्वादशेषयोग्यताहीने शून्ये [2]कथमशून्यता ज्ञानयोग्यतालक्षणा संवृतिः सिध्येदित्युत्तरमाह—न तदयोगादिति। शून्ये अशून्यताख्यातिः सेति चेत्। सा किं परतन्त्रा स्वतन्त्रा वा? प्रथमेऽपि शून्याश्रया भावाश्रया वा। नाद्य इत्याह—न हीति। योग्यतेति ख्यातिरुच्यते। तत्र हेत्वभावादन्यथातिप्रसङ्गादित्यभिप्रायः। न द्वितीय इत्याह—न चान्य इति। कल्पान्तरं प्रत्याह—नेति। शून्यवादिनो मोक्षे दूषणान्तरमाह—न चास्मिन्निति। वैदिकं प्रतिप्रमाणमाशङ्क्य प्रत्याह—न प्रेत्येति। संज्ञया युज्यमानज्ञानचैतन्यप्रतिषेधमाशङ्क्याह—किं त्विति। तत्र नियामकमाह—अन्यथेति। क्षपणकमोक्षं प्रतिक्षिपति—सततेति। वैशेषिकादिमोक्षेऽपि केवलं ज्ञानमेव वा हेतुः कर्मसहितं वेति विकल्प्य नाद्य इत्याह—आत्मविशेषगुणेति। तत्र हेतुत्वेनाचार्यवाक्य-

---

1. हानभेदासंभवात् 2. अनूयता

क्षपणकाभिमतमोक्षस्वरूपखण्डनम् ।

सततोर्ध्वगतिपक्षे तु परिच्छिन्नस्यात्मनोऽनित्यत्वप्रसङ्गो मानाभावश्च स्पष्टः ।

नैयायिकाभिमतमोक्षस्वरूपखण्डनम्

आत्मविशेषगुणोच्छेदोऽपि तत्वज्ञानान्न साक्षाद्युक्तः । उक्तं हि ज्ञानमज्ञानमेव निवर्तयतीति । कर्मसहितं च ज्ञानं न मोक्षसाधनमिति प्रपञ्चितम् । मानासम्भवश्चात्रापि तुल्यः । यत्तु मानं, 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति, तदयुक्तम् । अस्मिन् पक्षे अशरीरत्वासम्भवात् । शरीरवत्त्वं हि ते वास्तवम् । न तद् ज्ञानादेव निवर्तेत ।

ननु कर्मनिमित्तं शरीरवत्वं कर्माभावे कथं भवेत् ? । न च सर्वकर्मणां युगपदभावासम्भवः । पूर्वसञ्चितानां हि कर्मणां भोगेनोपक्षये

---

मुपादत्ते—उक्तं हीति । द्वितीयं दूषयति—कर्मसहितं चेति । वैशेषिकादिमोक्षासंभवे हेत्वन्तरमाह—मानासंभवश्चेति । प्रियाप्रियोपलक्षितसुखदुःखादिनिखिलविशेषगुणोच्छेदलक्षणे मोक्षे वेदान्ता मानमिति मतमनुवदति—यत्त्विति । परकीयं प्रमाणं प्रत्याचष्टे—तदयुक्तमिति । कथं पुनर्वैशेषिकादिपक्षेऽनुपपत्तिरशरीरत्वस्येति चेत् । तत्राशरीरत्वं नाम शरीरवत्वाभावः । शरीरवत्वं चावास्तवं वास्तवं वा, आद्ये ज्ञानादज्ञाननिवृत्तिरित्यस्मन्मतप्रवेशप्रसक्तिरित्यभिप्रेत्य द्वितीयं निराकरोति—शरीरवत्वं हीति । वास्तवमपि शरीरवत्वं निमित्तनिवृत्या निवृत्तिप्रतियोगीति प्रत्यवतिष्ठते—नन्विति । अनियतविपाकान्यनन्तानि च कर्माणि कथमपर्यायेण निवर्तेरन् । तथा च कर्मनिवृत्त्या नात्यन्तिकी शरीरनिवृत्तिरित्याशंक्याह—न चेति । द्विविधं हि कर्म । आरब्धमनारब्धं च । तत्र आरब्धं भोगेन क्षयान्न शरीरान्तरमारब्धुं पारयतीत्याह—पूर्वेति । अनारब्धमपि कर्म काम्यं प्रतिषिद्धं नित्यं नैमित्तिकमिति चतुर्विधम् । तत्राद्ययोर्न विदुषि शरीरान्तरारम्भकत्वमित्याह—काम्येति । न च नित्यनैमित्तिकाभ्यां क्रियमाणाभ्यां शरीरान्तरमारप्स्यते । तदनुष्ठानस्य

काम्यनिषिद्धयोस्तु विदुषोऽनुष्ठानासम्भवात्त*दन्यकरणे च प्रत्यवायानु-त्पादाच्छरीरप्रदसर्वकर्माभावो युगपदुपपद्यते। न च विरुद्धफलानामेकस्मिन् जन्मनि भोगासम्भवः। चरमदेहस्य योगिनः कायव्यूहेनाप्युपयोगात्तद्भावाविरोधाच्च। अतो नानुपपन्नाऽशरीरतेति। भवेदेवं यदि निरानन्दावस्थाप्रेप्सया परमानन्दप्राप्तिः हिरण्यगर्भप्राप्तावुपेक्ष्येत। निरानन्दैर्हि दुःखबहुलो अनित्योऽल्पोऽप्यानन्दः प्रेप्स्यते। किमु परमानन्दो नित्योऽपि। अतस्ते न विदुषः सर्वकर्माभावादशरीरता सम्भवेत्।

नन्वात्मविशेषगुणसन्ततिरुच्छेदार्हा सन्ततित्वात् ज्वालासन्ततिवदित्यनुमानमेवात्रास्तु मानम्। न च परमाणुरूपादिसन्तत्या

---

तदकरणनिमित्तप्रत्यवायनिवृत्तिमात्रहेतुत्वादित्याह---तदन्येति। निमित्तनिवृत्तिमुपसंहरति---शरीरेति। यत्तु पूर्वसंचितानां कर्मणां भोगेन क्षय इति। तदयुक्तम्। न हि विरुद्धफलानन्तानादिभवपरम्परार्जितकर्मणां युगपदेव भोगेनोच्छेदः सङ्गच्छते। एकैकस्य कर्मणोऽनेकदेहभोगफलत्वश्रवणादित्यत आह---न चेति। पराभिप्रेतं मोक्षं निगमयति---अत इति। यदि सर्वं काम्यादि कर्म परित्युक्तुं पार्येत तदा स्यादुक्तया रीत्या मुक्तिः। नहि सर्वं काम्यादि त्यक्तुं शक्यते। निपुणानामपि सूक्ष्मापराधदर्शनात्। न हि तत्वज्ञानं विना निरानन्दावस्थाप्रेप्सया काम्यादिकर्मवर्जनसिद्धिरिति परिहरति---भवेदिति। ज्ञानकर्मसमुच्चयानुष्ठानात् प्राजापत्यपदप्राप्तौ सत्यामस्ति परमानन्दावाप्तिः। सा चेत् त्वदुत्प्रेक्षितसुखसंवेदनविकलमोक्षापेक्षयोपेक्ष्येत तदैवं भवेदिति योजना। हिरण्यगर्भप्राप्तेरनित्यत्वात्तन्निमित्तमपि सुखं तादृक्षमित्युपेक्षा सम्भवतीत्याशङ्क्याह---निरानन्दैरिति। विविधसांसारिकसुखोपभोगहेतुभूतस्य कर्मणोऽकस्मात्त्यागायोगे फलितमाह---अत इति। वैशेषिकादिमोक्षे वेदान्ता मानमित्येतन्निराकृत्य मानान्तरमुत्थापयति---नन्विति। बाधं निरसितुमर्हपदम्। पार्थिवपरमाणुगतपाकजरूपादिसन्तत्या व्यभिचारमा-

---

* नित्याचरणे

व्यभिचारः। तस्याः सपक्षत्वात्। प्राणिनां हि भोगाय कर्मोत्पाद्यं रूपादि कार्यम्। अतः क्रमेण सर्वमुक्तौ निःशेषकर्माभावादुपरमत एव रूपादिसन्ततिरपि। अतो न तया व्यभिचार इति। मैवम्—तत्र निःशेषकर्माभावासम्भवस्योक्तत्वात्। परमाण्वात्मसंयोगसन्तत्या व्यभिचाराच्च। न च सा व्युच्छिद्यत इति वाच्यम्। आत्मनोऽसर्वगतत्वप्रसङ्गात्। परमाण्वात्मसंयोगनिवर्तकविभागतद्धेतुकर्मतज्जन्यसंयोगसन्ततेर्दुष्परिहरत्वाच्च। तदन्यत्वविशेषणादयमदोष इति चेन्न। अस्मत्पक्षे तस्य व्यर्थत्वात्। तस्मान्न विशेषगुणोच्छेदोऽपि मोक्ष इति सिद्धम्।

---

शङ्कयाह—**न चेति**। सपक्षत्वं साधयति—**प्राणिनां हीति**। रूपादिसन्ततेः सपक्षत्वे सिद्धे फलितमाह—**अतो नेति**। सर्वकर्माभावस्य तवासंभवात् सर्वमुक्त्ययुक्तेरुक्तव्यभिचारतादवस्थ्यमिति परिहरति—**मैवमिति**। व्यभिचारान्तरमाह—**परमाण्विति**। परमाणोरात्मनश्च परमाणुक्रियया संयोगो जायते। स च विभागान्नश्यति। कालान्तरे च परमाणुक्रियान्तरात् परमाणोरात्मना संयोगः। तथा च तया संयोगसन्तत्या प्रकृतो हेतुर्व्यभिचरतीत्यर्थः। तस्याः सपक्षत्वमाशङ्कयाह—**न चेति**। यदि कदाचित्परमाणुरात्मासंयुक्तोऽपि वर्तेत तदात्मशून्योऽपि कश्चित्प्रदेशः स्यात्। तथा चात्मनो मध्यमपरिमाणत्वमणुपरिमाणत्वं वा स्वमतविहतमापतेदिति हेतुमाह—**आत्मन इति**। प्रकारान्तरेण सन्ततित्वहेतोर्व्यभिचारमाह—**परमाण्विति**। परमाण्वात्मनोस्संयोगस्य निवर्तकस्तयोरेव विभागः। तस्य च परमाणुगतं कर्म हेतुस्तच्च स्वाश्रये परमाणौ [1]संयोगसन्ततिं जनयति। संयोगावसानं कर्मेत्यभ्युपगमात्। तथा च तन्निवर्तकं विभागान्तरं तद्धेतुकर्मान्तरं तदवसानं संयोगान्तरमिति दुर्वारा सन्ततिरित्यर्थः। उक्तसन्ततिभ्यां व्यभिचारपरिहारार्थं ताभ्यामन्यत्वे सति सन्ततित्वादिति विशेषणमाशङ्कते—**तदन्यत्वेति**। अन्यतरस्य व्यर्थविशेषणत्वादसिद्धो हेतुरित्युत्तरमाह—**नास्मादिति**। स्वपक्षे परमाण्वभावाद् दर्शितसन्तत्यभावः। तथा च तन्निवर्तकं विशेषणमनर्थकमित्यर्थः। वैशेषिकादिमोक्षनिरसनमुपसंहरति—**तस्मान्नेति**।

---

1. संयोग......संयो

## सांख्याभिमतमोक्षस्वरूपखण्डनम्

साङ्ख्यस्य तु सदोदासीनासङ्ग एवात्मा । अतो नास्य बन्धो मोक्षसाधनानुष्ठानं वा घटते । स्यान्मतम्—पुंसां प्रकृतिरेव गृहिणीवत् पुरुषार्थं चेष्टते । तदविवेकाच्च तेषां संसारित्वव्यवहार इति । तन्न । अचेतनायाः प्रकृतेर्व्यवस्थितपुरुषार्थहेतुताया निरस्तत्वात् । अविवेकोऽपि किं विवेकाभावः उत तदन्यस्तद्विरोधी वा । नाद्यः । अभावानभ्युपगमात् । प्रतियोगिसापेक्षं वस्त्वेवाभावव्यवहारगोचर इति चेन्न । भूतलादेः स्वरूपज्ञप्तिव्यवहारेषु प्रतियोगिनिरपेक्षत्वात् । सापेक्षनिरपेक्षयोश्च भेदः प्रसिद्धतरो लोके । यदि विवेकादन्यस्तद्विरोधी वाऽविवेकः तदा तस्य सत्वादनिवृत्तिः । न चेत्थम्भूते मोक्षे मानमस्ति ।

## मीमांसकाभिमतमोक्षस्वरूपखण्डनम्

मीमांसकपक्षेऽप्यनादिकालसञ्चितविरुद्धफलानां कर्मणामेकस्मि-

---

सम्प्रति सांख्यपक्षं प्रतिक्षेप्तुं प्रक्रमते—**सांख्यस्येति** । आत्मनस्सदाऽसंगोदासीनत्वेऽपि प्रकृते किमायातमिति ? बन्धमोक्षयोरनुपपत्तिरायातेत्याह—**अत इति** । स्वतो बन्धमोक्षाभावेऽपि प्रकृतिविवेकाविवेकाभ्यां तदुपपत्तिरिति शङ्कते—**स्यान्मतमिति** । 'कथं च कारणमचेतनं चेतनानधिष्ठितं चे'त्यादावुक्तन्यायेन निरस्तमेतदिति दूषयति—**तन्नेति** । संसारहेतुं विकल्पयति—**अविवेकोऽपीति** । विवेकाभावपक्षं प्रत्याह—**नाद्य इति** । अनभ्युपगमासिद्धिमाशङ्कते—**प्रतियोगीति** । विमतौ मिथो भिन्नौ मिथो विरुद्धत्वात् पयःपावकवदित्यनुमानेन परिहर्तुं हेतुं साधयति—**नेत्यादिना** । अभावस्य च सर्वत्र प्रतियोगिसापेक्षत्वादिति शेषः । व्याप्तिं व्यनक्ति—**सापेक्षेति** । विकल्पद्वयपनुद्य दूषयति—**यदीत्यादिना** । "नाभावो विद्यते सत" इति स्मृतेरित्यर्थः । सांख्यमोक्षे दूषणान्तरमाह—**न चेति** । आत्यन्तिकदुःखादिभोगोपरमे सत्यपरिणामित्वेनात्मनोऽवस्थानं नित्यानन्दगुणाभिव्यक्तिश्च मुक्तिरिति मीमांसकमतं निरस्यति—**मीमांसकेति** । जन्ममरणान्तरालस्थं सर्वं कर्मान्तेऽभिव्यक्तमविशेषादेतच्छरीरमारभते । मुमुक्षु-

न्नेव जन्मनि भोगेनानुपक्षयान्मोक्षासम्भवस्तुल्यः। अथैकभविकः कर्माशयः। अतो नोक्तदोष इति मतम्। न। कर्मणामैकभविकत्वे मानाभावात्। न च मोक्षानुपपत्त्यैवं कल्पनीयम्। अन्यथैव मोक्षोपपत्तेर्वक्ष्यमाणत्वात्। किञ्चैकभविकत्वे कर्माशयस्य ब्राह्मणाद्यधिकारिशरीरप्राप्तौ मोक्षाप्राप्तिः स्यात्। मुमुक्षोत्पत्तेः प्राक्कृतैरेव कर्मभिर्जन्मान्तरप्राप्तेः। अनधिकारिणां व्याघ्रादीनाञ्च मोक्षः सुलभो भवेदिति कृतं मीमांसाभ्यासपरिश्रमेण। मोक्षे नित्यानन्दगुणाभिव्यक्तिश्च प्रमाणहीना। "नेह नानास्ति किञ्चन" "एकमेवाद्वितीयमि"त्यागमविरोधाच्चोपेक्षणीया।

### भास्कराभिमतमोक्षस्वरूपखण्डनम्

यत्तूपाध्यवच्छिन्नो ब्रह्मांशो जीवः। तस्योपाध्युपशमात् ब्रह्मभावो मोक्ष इति मतम्। तदतिमन्दम्। न हि निरंशस्यांशकल्पनोपपद्यते, व्याघातापत्तेः। अवच्छेदोऽपि सांशस्यैव दृष्ट, इष्टश्च वादिभिर्लौकिकैश्च। सांशत्वे च ब्रह्मणोऽनित्यत्वलोभगन्धोऽनपास्यः स्यात्। किञ्चोपाध्य-

---

शरीरे चोत्तरशरीरहेतुकर्माभावात्तस्मिन् पतिते मुक्तिसिद्धिरिति चोदयति—**अथेति**। प्रमाणाभावेन प्रत्याचष्टे—**न कर्मणामिति**। अनारब्धकर्मसद्भावे मुमुक्षुदेहपातेऽपि ततो देहान्तरारम्भसंभवादमुक्तिः। तथा च कर्मराशेरैकभविकत्वे मोक्षानुपपत्तिरूपार्थापत्तिर्मानमित्याशङ्क्याह—**न चेति**। कर्मणामैकभविकत्वमङ्गीकृत्य दोषान्तरमाह—**किं चेति**। तत्र हेतुमाह—**मुमुक्षेति**। तत्रैव दूषणान्तरमाह—**अनधिकारिणामिति**।

यत्तु मुक्तौ नित्यानन्दगुणाभिव्यक्तिरिति। तत्राह—**मोक्ष इति**। मोक्षस्य पुरुषार्थत्वानुपपत्त्या तत्रानन्दाभिव्यक्तिः कल्पनीयेत्याशङ्क्यान्यथोपपत्तिं मत्वाह—**नेति**। एकदेशिनां मोक्षमनुभाष्य दूषयति—**यत्त्वित्यादिना**। किमंशस्य सतोऽवच्छेदो विवक्षितः किं वावच्छिन्नस्यांशत्वम्? नाद्य इत्याह—**न हीति**। न द्वितीय इत्याह—**अवच्छेदोऽपीति**। ननु "पादोऽस्य सर्वा भूतानि" "ममैवांशो जीवलोके" "अंशो नानाव्यपदेशात्" इति श्रुतिस्मृतिसूत्रेभ्यो ब्रह्मणोऽपि सांशत्वमस्तीति। तत्राह—**सांशत्वे चेति**। अनंश-

वच्छेदविशिष्टो जीवः, किं वा तदुपलक्षितः। नाद्यः। मोक्षे विशेषणानन्वयाद्विशिष्टजीवानन्वयप्रसङ्गात्। द्वितीये तु ब्रह्मैव जीव इत्यस्मत्सिद्धान्तानुप्रवेशः स्यात्। सत्योपाध्यवच्छेदाश्रयणान्न मायावादस्वीकार इति चेन्न। 'असङ्गो ह्ययं पुरुषः'' इत्याद्यसङ्गागमविरोधात्। तदेवं पक्षान्तरेषु मोक्षानुपपत्तेः संसारबीजाज्ञाननिवृत्तिर्मुक्तिरास्थेया। तथा च शास्त्रम्—''तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिरि''ति।

### अज्ञाननिवृत्तिर्मोक्ष इत्यत्र आक्षेपप्रदर्शनम्

नन्वज्ञाननिवृत्तिपक्षेऽप्यनुपपत्तिस्तुल्या। तथाहि—न तावत्तत्त्वाज्ञाननिवृत्तिस्सती [1]द्वैतवादापत्तेः। आत्मैव सेति नोक्तदोष इति

---

स्यापि नभसोऽवच्छेदोऽभ्युपगम्यते वादिभिरित्याशङ्क्य दूषणान्तरमाह—**किं चेति**। तदेव दर्शयितुं विकल्पयति—**उपाधीति**। विशिष्टपक्षं प्रत्याह—**नाद्य इति**। मोक्षिणोऽभावान्मोक्षस्यापुमर्थता स्यादिति शेषः। उपलक्षितपक्षं प्रतिक्षिपति—**द्वितीये त्विति**। मायावादप्रसक्तिमुक्तामेकदेशी परिहरति—**सत्येति**। श्रुत्यनुसारेण सिद्धान्ती समाधत्ते—**नेत्यादिना**। उक्तानुवादपुरस्सरं स्वमतमवतारयति—**तदेवमिति**। अत्रापि मानाभावसाम्यमाशङ्क्याह—**तथा चेति**। ईश्वरस्य प्रत्यक्त्वेन श्रवणादिरूपानुसन्धानात् कर्तृत्वादि सत्यमिति भ्रमहेतुर्माया निवर्तते, तस्यैव प्रत्यगभेदसाक्षात्कारात्तदर्थक्रियासामर्थ्यभ्रमहेतुर्मायाकारो भूयोऽपि ध्वंसते। प्रारब्धकर्मावसाने च विदेहकैवल्याद्वैतप्रतीतिहेत्वशेषमायाकारनिवृत्तिरिति श्रुत्यर्थः। मतान्तरवदस्यापि मतस्यानादेयत्वमाशङ्कते—**नन्विति**। कथमनुपपत्तेस्तुल्यतेत्याशङ्क्याज्ञाननिवृत्तिः सती वा असती वा सदसती वा अनिर्वचनीया वा पञ्चमप्रकारा वेति विकल्पयति—**तथा हीति**। नाद्य इत्याह—**न तावदिति**। सा किमात्मनोऽन्या वानन्या वेति विकल्प्याद्ये दोषमाह—**द्वैतवादापत्तेरिति**। द्वितीयं शङ्कते—**आत्मैवेति**। तत्र निवृत्तेरात्मन्यन्तर्भावो वा निवृत्तावात्मनोऽन्तर्भावो वा? नाद्य इत्याह—

---

[1]. ज्ञानवदापत्ते।

चेन्न । तस्याः सदातनत्वेन ज्ञानानर्थक्यप्रसङ्गात् । नाप्यसती। ज्ञाना-नर्थक्यप्रसङ्गादेव । न ह्यसज्जन्यते अतिप्रसङ्गात् । तथा न सदसती । विरोधात् । नाप्यनिर्वचनीया अनिर्वचनीयनिवृत्तित्वात् ।

अज्ञाननिवृत्तेः पञ्चमप्रकारताक्षेपः

ननूक्तप्रकारेभ्यो विलक्षणा पञ्चमप्रकारैवास्त्वज्ञाननिवृत्तिः । तत्रोक्तदोषासम्भवात् । न । इत्थम्भावस्यासिद्धेः । न ह्यत्र प्रत्यक्षादि किञ्चिदपि साधकमस्ति । किञ्चैवंप्रकाराऽप्यसौ बाध्या, अबाध्या वा, नाद्यः । तद्बाधकासम्भवात् । निवृत्त्यन्तरापत्तेरज्ञानोन्मज्जनप्रसङ्गाच्च । द्वितीयेऽपि सा दृश्या अदृश्या वा । आद्ये मिथ्यात्वसाधने व्यभिचारः स्यात् । न च तदन्यत्वेन हेतुर्विशेष्यः । अनिर्वचनीयवादिनोऽन्यत्वा-सिद्धेः । द्वितीये तु कल्पेऽज्ञाननिवृत्त्यसिद्धेस्तदर्था प्रवृत्तिर्न स्यात् ।

---

न तस्या इति । द्वितीये त्वात्मनो भावत्वविरोध इति द्रष्टव्यम् । कल्पान्तरं निरस्यति—नापीति । ननु ज्ञानमज्ञाननिवृत्तिमसतीमपि जनयिष्यति । तथा च कथमानर्थक्यमिति । तत्राह—न हीति । न तृतीय इत्याह—तथेति । न चतुर्थ इत्याह—नापीति । पञ्चममाशङ्कते—नन्विति । पञ्चमप्रकारत्व-मज्ञाननिवृत्तेरप्रामाणिकमिति प्रत्यादिशति—नेत्यादिना । अप्रामाणिकत्वं प्रपञ्चयति—न हीति। पञ्चमप्रकारत्वमज्ञाननिवृत्तेरङ्गीकृत्यापि विकल्पयति—किं चेत्यादिना । बाध्येति पक्षं प्रत्याचष्टे—नाद्य इति । न खल्वज्ञान-निवृत्तिकाले तन्निवर्तकमस्ति । तदा बुद्धिवृत्तेरभावात् । स्वरूपस्य चातद्भावात् । अतो न बाध्याज्ञाननिवृत्तिरित्यर्थः । अनवस्थाप्रसङ्गाच्च नासौ बाध्येत्याह—निवृत्त्यन्तरेति । प्रध्वंसप्रध्वंसे प्रध्वस्ताप्रध्वस्तेः संसारापत्तेश्च नासौ बाध्ये-त्याह—अज्ञानेति । अबाध्यत्वपक्षं विकल्प्य निराकरोति—द्वितीयेऽपी-त्यादिना । अविद्यानिवृत्तेरन्यत्वेन दृश्यत्वस्य विशेषणान्न मिथ्यात्वसाधनं सव्यभिचारमित्याशङ्क्याह—न चेति । अदृश्यत्वपक्षं दूषयति—द्वितीये त्विति । आत्मत्वनिराकरणेनाज्ञाननिवृत्तेः स्वप्रकाशता निरस्तेति भावः ।

तदेवमनिर्वचनीयाज्ञानपक्षेऽज्ञाननिवृत्त्यसिद्धेः[1] नाज्ञानमनिर्वचनीयं, नापि प्रपञ्चस्तज्जन्यो मिथ्या। अत एव नात्माऽद्वितीयो नापि ज्ञानादेव मोक्ष इति।

### अज्ञाननिवृत्तेः पंचमप्रकारताव्यवस्थापनम्

उच्यते—एवं कल्पयन् अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढो न प्रौढः स्यात्। अज्ञाननिवृत्तिप्रकारार्थं हि बहूनिह श्रुतिस्मृतिन्यायोत्थानर्थांस्त्यजन् कथं विचारमूढः प्रौढः स्यात्। किञ्चाज्ञाननिवृत्तेः सत्वासत्वसदसत्वानिर्वचनीयप्रकारचतुष्टयासम्भवेऽपि परिशेषसिध्या पञ्चमप्रकारता केन वार्यते। तथाहि—अज्ञानं तावदनिर्वचनीयं साधितम्। अतस्तन्निवृत्तिरुक्तप्रकारैव युज्यते। न हि मिथ्यार्थस्य निवृत्तिस्सती। प्रतियोगिनोऽपि नित्यत्वप्रसङ्गात्। नापि शशविषाणवदसती। सत्प्रतियोगित्वादुत्पाद्यत्वाच्च। न च सदसती।

---

अज्ञाननिवृत्तेर्दुर्वचत्वे सर्वमेव पूर्वोक्तमयुक्तमिति फलितमाह—**तदेवमिति**। कार्यवशादज्ञानस्यानिर्वाच्यत्वमित्याशङ्क्याह—**नापीति**। आत्मनोऽद्वितीयत्वानुपपत्त्या प्रपञ्चस्य मिथ्यात्वमित्याशङ्क्याह—**अत एवेति**। अद्वितीयात्मज्ञानस्यैव मोक्षहेतुत्वं श्रूयते। तदनुपपत्तिरात्मनोऽद्वितीयत्वमावेदयतीत्याशङ्क्याह—**नापीति**। श्रुतिस्तु समुच्चयपरत्वेनापि निर्वहतीति भावः। अज्ञाननिवृत्तेर्दुर्वचत्वमाश्रित्याज्ञानानिर्वाच्यतादिनिरसनमनुचितमिति परिहरति—**उच्यत इति**। तदेव प्रपञ्चयति—**अज्ञानेति**। तिष्ठतु तावदधिक्षेपः। अज्ञाननिवृत्तिप्रकारस्तु निरुच्यतामिति चेत्तत्राह—**किं चेति**। परिशेषमेव विशदयति—**तथा हीति**। अज्ञानस्यानिर्वाच्यत्वेऽपि पञ्चमप्रकारत्वं कथं तन्निवृत्तेरिष्यते। सत्वस्यापि रूप्यादिनिवृत्तिवत्संभावितत्वादित्याशङ्क्याह—**न हीति**। रूप्यादिनिवृत्तिरपि पक्षतुल्येति भावः। अस्तु तर्हि घटादिनिवृत्तिवदज्ञाननिवृत्तेरसत्वं, नेत्याह—**नापीति**। अस्तु तर्हि परिशेषादज्ञाननिवृत्तेरुभयरूपत्वं तत्राह—**न चेति**। आत्मनिवृत्तिवदनिर्वाच्यत्वं तर्हि तस्याः स्यादिति चेन्नेत्याह—**नानिर्व-**

---

1. सम्भवात्

विरोधात् । नानिर्वचनीयापि सा । तन्निवृत्तित्वात् । अत उक्तप्रकारै-र्वाज्ञाननिवृत्तिः ।

नन्वसौ सदादिविलक्षणा चेत् कथं नानिर्वचनीया । सदादिवैलक्षण्यं ह्यनिर्वचनीयलक्षणं त्वयेष्टम् । न । ज्ञाननिवर्त्यमनिर्वचनीयमिति तल्लक्षणाश्रयणात् । न चाज्ञाननिवृत्तिर्ज्ञाननिवर्त्या । ज्ञानजन्यत्वात् । ज्ञानानिवर्त्यापि च सा बाधगोचरः । अतो न प्रपञ्चमिथ्यात्वसाधनं सव्यभिचारम् । "नेह नानास्ति किञ्चने"ति हि प्रतिपन्नोपाधौ निषेधात्मा बाधोऽज्ञाननिवृत्तेरपि तुल्यः स्यात् ।

### अज्ञाननिवृत्तेः पंचमप्रकारतायाम् इष्टसिद्धिकारसंमतिप्रदर्शनम्

आचार्येणात्मैवाज्ञाननिवृत्तिरित्युक्तम् । तद्वस्तुवृत्त्या नात्मनोऽन्यो भावो अभावो वास्ति, स्वप्न इवेत्यभिप्रायेणेति न विरुध्यते । अन्यथा कथं पञ्चमप्रकारामविद्यानिवृत्तिं निरूपयति स्म । तस्मान्मू-

---

चनीयेति । परिशेषफलमाह—अत इति । प्रसिद्धत्वात्प्रकारान्तराभावच्चेत्यर्थः । सदसद्विलक्षणमनिर्वाच्यमिति लक्षणमाश्रित्याशङ्कते—नन्वसाविति । अतिव्याप्तिपरिहारार्थमज्ञाननिवृत्तेरनिर्वाच्यत्वमभ्युपेयमिति भावः । लक्षणान्तरेण परिहरति—न ज्ञानेति । तदपि लक्षणमज्ञाननिवृत्तावस्तीत्यनिर्वाच्यत्वतादवस्थ्यमिति चेन्नेत्याह—न चेति । तर्हि तस्या बाधाभावात् दृश्यत्वाच्च मिथ्यात्वसाधनस्य सव्यभिचारत्वमत आह—ज्ञाननिवर्त्यापीति । ज्ञानानिवर्त्यत्वे कथं बाध्यत्वं, तन्निवर्त्यत्वस्यैव तत्वादित्याशङ्क्याह—नेहेति । अथेष्टसिद्धिकारैरात्मैवाज्ञाननिवृत्तिरित्यङ्गीकारात्पञ्चमप्रकारत्वं तस्याः सिद्धान्तविरुद्धमित्याशङ्क्य परिहरति—आचार्येणेति । "आत्मैवाज्ञानहानिर्वा तदाप्यात्मैव शिष्यते" इत्याचार्यवाक्यं अज्ञान[1] निवृत्तिशब्दलक्ष्यानु-सारेण प्रवृत्तम् । पञ्चमप्रकारत्वं तु तस्या आचार्यानुरोधीत्यविरोध इत्यर्थः । आचार्यस्य सर्वथैव पञ्चमप्रकारत्वमज्ञाननिवृत्तेरनभिप्रेतं चेदुपक्रमविरोधः स्यादित्याह—अन्यथेति । स्वपक्षमुसंहरति—तस्मादिति । पञ्चमप्रकारत्वमङ्गी-

---

1. अज्ञानशब्द

लाज्ञाननिवृत्तिर्मोक्ष इति पक्षः न कांचन दोषकलामपि स्पृशति ।

### प्रकारान्तरेण मोक्षाक्षेपः

नन्वेवमपि त्वत्पक्षे मोक्षोऽनुपपन्नः । तथाहि—अज्ञानस्यानेकतानिष्टेस्तन्निवृत्तेरप्यनेकता भवता नेष्यते । तत्र सा पूर्वमुत्पन्ना न वेति विचार्यम् । नाद्यः, इदानीं संसाराभावप्राप्तेः । तन्मूलाज्ञानस्य निवृत्तत्वात् । द्वितीये तु शुकजनकादिमोक्षागमविरोधः स्यात् । निवृत्ताविद्यस्य गुरोरभावात् विद्यालाभासम्भवान्मोक्षोऽपि दुर्लभो भवेत् । किञ्चानादिपूर्वकालप्रवृत्तानन्तजन्मसु नोत्पन्ना विद्या, अज्ञाननिवृत्तिश्च उत्तरकालमुत्पत्स्यत इति कः श्रद्दध्यात् । तस्मादविद्यानिवृत्तिर्मोक्ष इति मनोरथमात्रम् ।

### प्रकारान्तरकृतमोक्षाक्षेपप्रतिक्षेपः

अत्रोच्यते—यद्यपि पूर्वं नोत्पन्ना अज्ञाननिवृत्तिः, तथापि

---

कृत्य प्रकारान्तरेणाज्ञाननिवृत्तिलक्षणं मोक्षमाक्षिपति—**नन्विति** । अनुपपन्नत्वमेवोपदर्शयितुं भूमिकां करोति—**तथा हीति** । मूलाज्ञाननिवृत्तेरेकत्वेऽपि कथमनुपपत्तिरित्याशङ्क्यानुपपत्तिं दर्शयितुं विकल्पयति—**तत्रेति** । उत्पन्ना पूर्वमज्ञाननिवृत्तिरिति पक्षं प्रतीतिविरोधेन प्रत्याचष्टे—**नाद्य इति** । प्रागितो नासीदज्ञाननिवृत्तिरिति पक्षं श्रुतिविरोधेन धुनीते—**द्वितीये त्विति** । उत्पन्नविद्यस्य मुक्तिनियमादुक्तदोषद्वयनिवृत्तिरित्याशङ्क्यैकजीववादे, नेयं व्यवस्थेत्याह—**निवृत्तेति** । अपिरवधारणार्थो भिन्नक्रमो दुर्लभादुपरि सम्बध्यते । एकजीववादे दोषान्तरमाह—**किं चेति** । शास्त्रप्रामाण्याद्विश्वासोत्पत्तिमाशंक्य तत्प्रामाण्यादेव शुकादिमुक्तत्वसिद्धेरेकजीववादस्य त्याज्यतेत्यभिप्रेत्याह—**तस्मादिति** ।

सिद्धान्तयति—**अत्रेति** । यत्तु अनादिपूर्वकालप्रवृत्तानन्तजन्मसु या नोत्पन्ना विद्या अविद्यानिवृत्तिश्च सोत्तरकालमुत्पत्स्यत इति कथं श्रद्धासिद्धिरिति तत्राह—**यद्यपीति** । न वयमन्वयव्यतिरेकाभ्यामुत्पत्स्यते विद्येति वदामः । किं तु शास्त्रप्रामाण्यात् । तच्च श्रवणादिभिस्तत्वज्ञानेनाज्ञाननिवृत्तिं वक्तीत्यर्थः

शास्त्रप्रामाण्यादुत्पत्स्यत इति न विश्वासासम्भवः। शास्त्रञ्च प्रागेव दर्शितम्, 'तस्याभिध्यानादि'त्यादि। किञ्चानादिपूर्वकालादनुत्पन्नमेव कुम्भाद्युत्पद्यमानं दृश्यते इष्यते च। तत्र किमपराद्धमज्ञाननिवृत्त्या। उत्पन्नसजातीया कुम्भाद्युत्पत्तिः। अविद्यानिवृत्तिस्तु न तथेति चेन्न, एवमनियमात्। अजातिरपि कुम्भप्रध्वंसो जायते। प्रध्वंसोऽपि क्रियात्वाज्जातिमानिति चेन्न। अविद्यानिवृत्तेरपीत्थंभावस्य तुल्यत्वात्। प्रध्वंसेऽपि प्रतियोगिद्वारा जातिसंबन्धोऽस्तीति चेन्न। प्रागभावप्रध्वंसस्याप्यतथाभूतस्य जन्माश्रयणात्। शब्दप्रवृत्तिनिमित्तत्वादुत्पद्यत इति चेत्। तर्हि अविद्यानिवृत्तेरपि कुम्भनिवृत्तिवत्तन्निमित्तत्वादुपजनो निष्प्रत्यूहः। तस्माद्यत्किञ्चिदेतत् [1]अनादिकालादनुत्पन्नायामविद्यानिवृत्तावनाश्वास इति।

न च शुकादिमोक्षागमविरोधः। तस्यान्यपरत्वात्। शुका-

---

किं तच्छास्त्रमिति। तदाह—**शास्त्रमिति**। यत्पूर्वं नोत्पन्नं तन्नोत्पद्यते कदाचिदपीत्युच्यते किं वोत्पन्नसजातीयं नोत्पद्यत इति विकल्पयति—**किं चेति**। शास्त्रप्रामाण्यात् नाद्य इत्याह—**अनादीति**। द्वितीयमुपादत्ते—**उत्पन्नेति**। आशङ्कितं नियमं भिनत्ति—**नैवमिति**। नियमाभावमभिव्यनक्ति—**अजातिरपीति**। ध्वंसस्यापि धात्वर्थत्वेन वा षड्भावविकारान्त्यविकारत्वेन वा क्रियात्वाज्जातिमत्वोपपत्तेरुक्तनियमसिद्धिरिति शङ्कते—**प्रध्वंसोऽपीति**। साम्येन सामाधत्ते—**नाविद्येति**। न क्रियात्वाद् ध्वंसस्य जातिमत्वं, किं तु प्रतियोगिनो जातिमत्वात्। न चाज्ञानस्य जातिमत्वमस्ति येन तद्द्वारा तन्निवृत्तिर्जातिमती स्यादिति शङ्कते—**प्रध्वंसेऽपीति**। तत्रापि व्यभिचारमादर्शयन्नुत्तरमाह—**न प्रागभावेति**। प्रागभूतस्य भावित्वमित्युत्पत्तिशब्दप्रवृत्तिनिमित्तत्वात् कुम्भध्वंसस्य कुम्भवज्जन्मेति शङ्कते—**शब्देति**। साम्येन समाधिमाह—**तर्हीति**। विकल्पद्वयासंभवमुपसंहरति—**तस्मादिति**। यत्तु द्वितीये शुकजनकादिमोक्षागमविरोध इति तत्राह—**न चेति**।

---

1. भस्तिकालादु

दयस्तत्वविदो मुक्ता इति श्रवणं न स्वार्थपरं, फलविकलत्वात् । न हि शुको मुक्त इति प्रतिपादने प्रयोजनमस्ति । अतो विद्यातो मोक्ष इत्येतत्परं शास्त्रं प्रवृत्त्यनुगुणं प्रयोजनवत्स्यात् । तथा च शास्त्रम्— "ब्रह्म वेद ब्रह्मैव भवति" । "श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदि"ति । ननु तत्रान्यपरमपि वाक्यं देवताधिकरणन्यायेन स्वार्थे प्रमाणम् । न । अविरोधे हि देवताधिकरणान्यायावसरः स्यात् । प्रकृते च विरोधः स्पष्टः । तथाहि—अद्वितीय आत्मेति वेदान्तानामर्थः प्रसिद्धः । प्रतिपादितं चाद्वैतत्वं तस्य । तत्र यदि मुक्तिरासीत् तदेदानीं संसारोपलम्भेन विरोधोऽतिरोहितः । तदेवं न मोक्षागमविरोधोऽपि । न चास्मिन् पक्षे निवृत्ताविद्यस्य गुरोरभावात् विद्यामोक्षयोरभाव इति वाच्यम् । जीवन्मुक्तेराश्रयणात् । निवृत्ताविद्यो हि विद्वान् जीवन्मुक्त इत्युच्यते । तदुपदेशात् विद्यामोक्षयोरुपपत्तिः । तथा च शास्त्रम्—'आचार्यवान् पुरुषो वेद । तस्य तावदेव

---

ननु स्वार्थपरत्वसंभवे किमित्यन्यपरत्वं परिकल्प्यते । अत आह— **शुकादय इति** । फलविकलत्वं प्रपञ्चयति—**न हीति** । अन्यपरत्वेऽपि तुल्यं फलवैकल्यमित्यशङ्क्याह—**प्रवृत्तीति** । विद्यावतो मोक्षस्याप्रामाणिकत्वात् कथं तत्र शुकादिमोक्षशास्त्रस्य तात्पर्यमित्याशङ्क्याह—**तथा चेति** । अन्यपरस्यापि शुकादिमोक्षागमस्य द्वारार्थे प्रामाण्यमाशङ्कते—**नन्विति** । स न्यायो नेह प्रभवतीति परिहरति— **नाविरोधे हीति** । विरोधं दर्शयितुं वेदान्तानामर्थमनुवदति—**तथा हीति** । तद्वद्विद्वदनुभवं प्रमाणयति—**प्रसिद्ध इति** । तत्रैवानुग्राहकं न्यायं स्मारयति—**प्रतिपादितं चेति** । फलितं विरोधमभिदधाति—**तत्रेति** । शुकादिमोक्षागमस्यान्यपरत्वे विरोधाभावमुपसंहरति—**तदेवमिति** । अपिरनाश्वासाभावसमुच्चयार्थः । यत्तु निवृत्ताविद्यस्य गुरोरभावाद्विद्यालाभासम्भवान्मोक्षो दुर्लभ एवेति तत्राह—**न चेति** । ननु जीवति चेन्न विद्ययाऽविद्या निवृत्ता, मुक्तश्चेन्न तस्योपदेष्टत्वमिति कुतो विद्यामोक्षावित्यत आह—**निवृत्तेति** । जीवन्मुक्तौ प्रमाणमाह—**तथा**

चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये'। 'ब्रह्मैव सन् ब्रह्माप्येति'। 'विमुक्तश्च विमुच्यते'। 'सचक्षुरचक्षुरिव'। 'तद्यथा अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेत' इत्यादि। "स्थितप्रज्ञः स उच्यते" इत्यादिस्थितप्रज्ञगुणातीतलक्षणं च पारमेश्वरमुक्तार्थम्। तस्मादस्मत्पक्षे नाविद्यानिवृत्तिः कांचन दोषकलामपि स्पृशतीति स्थितम्।

### जीवन्मुक्त्याक्षेपः

ननु जीवन्मुक्तो गुरुरिति प्रक्रियामात्रं न विचारक्षमम्। अविद्याकार्यप्राणाद्युपाधिमान् जीवन्नित्युच्यते। स कथं तथाभूत एव निवृत्ताविद्यो भवेत्। तत्त्वज्ञाने च सति कथमविद्याकार्यानुवृत्तिः। अथ निवृत्ताविद्यस्यापि प्राणादिः चक्रभ्रमणवत् संस्कारादनुवर्तत इति मतम्। तन्मन्दम्। अविद्यानिवृत्तौ निरुपादानस्य संस्काररूपकार्यासम्भवात्। न हि निरुपादानं भावरूपं कार्यं दृश्यते। इष्यते वा। विनो-

---

चेति। "प्रजहाति यदा कामान्" "प्रकाशं च प्रवृत्तिं च" इत्यादिभगवद्वाक्यमपि जीवन्मुक्तौ प्रमाणमित्याह—**स्थितेति**। स्वपक्षस्य निर्दोषत्वादादेयत्वमुपसंहरति—**तस्मादिति**। जीवन्मुक्तिपदयोर्विरुद्धार्थत्वं मन्वानश्चोदयति—**नन्विति**। मात्र[1]पदोत्थं कथयति—**न विचारेति**। पदद्वयस्य विरुद्धार्थत्वनिर्धारणार्थं जीवत्पदार्थं निर्दिशति—**अविद्येति**। तस्य मुक्तपदार्थकथनपूर्वकं तेनान्वयायोग्यत्वमाह—**स कथमिति**। ननु ज्ञानं विरोधितया स्वसमानाश्रयमज्ञानमेव निवर्तयति। तथा च ज्ञानिनो निवृत्ताज्ञानस्यापि [2]प्राणाद्यनुवृत्तेरुपपन्ना जीवन्मुक्तिरिति। तत्राह—**तत्वज्ञानेति**। उपादानाभावे कार्यानुपपत्तिः सुप्रसिद्धेत्यभिसन्धिः।

एकदेशिमतमाशङ्कते—**अथेति**। संस्कारस्य कार्यत्वादुपादानं विनानवस्थानात्तद्वशान्न प्राणाद्यनुवृत्तिरिति दूषयति—**तन्मन्दमिति**। प्रध्वंसवदुपादानानपेक्षः संस्कारः स्यादिति चेन्नेत्याह—**न हीति**। यद् भावरूपं कार्यं तदुपादानसापेक्षमिति व्याप्तेः समवाये व्यभिचारमाशङ्क्य निरस्यति—**विने-**

---

1. मात्रयोक्तं 2. प्रामाण्याद्यनु

पादानं समवायो जायत इति तु गुरूपदेशमात्रम्। नात्र मानं किञ्चिदस्ति। अस्तु तर्ह्यविद्यालेशवशात् प्राणाद्यनुवृत्तिः। तत्वज्ञानं ह्यविद्यां निवर्तयत् प्रारब्धफलेन कर्मणा प्रतिबन्धान्न कात्स्न्र्येन तां निवर्तयति। ततोऽनारब्धफलानां कर्मणां तत्कारणाविद्याभागस्यैव च निवृत्तेर्जीवन्मुक्तिरप्युपपद्यते। मैवम्। अविद्यालेशासम्भवात्। सावयवं हि घटादि लेशवद् दृश्यते। इष्यते च। न चाविद्या सावयवेष्यते। अतो नाविद्यालेशवशाज्जीवन्मुक्त्युपपत्तिः।

### प्रकारान्तरेण पुनर्जीवन्मुक्त्याक्षेपः

किञ्चाचार्यः शिष्यदृश्यो न वा। आद्येऽविद्यामयस्य विद्याऽसम्भवादुपदेशासम्भवः। द्वितीयेऽप्ययमेव दोषः। अदृष्टं प्रत्युपगमादेरसम्भवात्। किञ्च जीवन्मुक्त एवैको जीवः किं वानेके जीवाः।

---

त्यादिना। संस्कारपक्षे दूषिते सिद्धान्ती शङ्कते--अस्त्विति। सति परिपन्थिनि तत्वज्ञाने कथमज्ञानलेशसिद्धिरित्याशङ्क्याह—तत्त्वज्ञानं हीति। तर्हि तत्वज्ञानस्य वैयर्थ्यमनिवर्तकत्वादित्यत आह—तत इति। अनारब्धफलकर्मणां तद्धेत्वविद्याभागस्य च •तत्वज्ञानान्निवृत्तावप्यारब्धकर्मणां तत्कारणाविद्यांशस्य च तत्वज्ञानादनिवृत्त्युपपत्तेर्विवक्षिता जीवन्मुक्तिरुपपद्यत एव। ज्ञानस्य वैयर्थ्याशङ्कापीत्यपेरर्थः। पूर्ववादी दूषयति—मैवमिति। असंभवं व्यतिरेकमुखेन विशदयति--सावयवं हीति। अस्तु तर्हि घटादिवदविद्यापि सावयवेत्याशङ्क्याह--न चेति। अविद्यायाः सांशत्वासंभवे फलितमाह-- अत इति। इतश्च जीवन्मुक्तिरयुक्तेत्याह--किं चेति। तदेव दर्शयितुमाचार्यं विकल्पयति--आचार्य इति। यत् दृश्यं तदविद्यात्मकमिति रज्जुसर्पादौ व्याप्तिं पश्यन्नाह--आद्य इति। उपदेशासंभवे च ज्ञानाभावाज्जीवन्मुक्त्यनुपपत्तिरेवेति भावः। आचार्यस्य शिष्यादृश्यत्वे तं प्रति शिष्यस्योपसदनादेरयोगादुपदेशासंभवादितादवस्थ्यमित्याह--द्वितीयेऽपीति। जीवन्मुक्तिमाचार्यं चाङ्गीकृत्य दूषणान्तरमाह—किं चेति। तदेव दर्शयितुं

तत्राद्ये उपदेशो न स्यात् । शिष्याभावात् । न च शिष्य एव जीवः । तदविद्याकल्पितो गुरुः । उक्तोत्तरत्वात् । अविद्यामयस्य विद्यासम्भवा-दुपदेशासम्भव इत्युक्तम् । द्वितीये तु द्वैतापत्तिः । तद्भेदस्य च कल्पितत्वे मण्डनमतप्रवेशः स्यात् । तन्मतेऽपि च जीवन्मुक्तिः संस्कारासम्भवेन व्याख्याता । किञ्चामी जीवभेदाः कस्यचिज्जीवस्य दृश्याश्चेत्तदविद्याकल्पिताः स्युः । स च द्रष्टा अकल्पितः स्यात् । अन्यथा दृश्यत्वप्रसङ्गात् । अतस्तन्मतेऽप्येक एव जीवः स्यात् । अदृश्याश्चेन्नोपदेशव्यवहारभाजो भवेयुः । अतो न तत्पक्षेऽपि जीव-न्मुक्त्युपपत्तिः ।

ननु मानवत्वाज्जीवन्मुक्तेरुपपत्तिरवश्यमुन्नेया । नैवम् । मानस्या-प्यन्यपरत्वसम्भवात् । यत्तावत् "आचार्यवान् पुरुषो वेदे"त्यादि

---

जीवं विकल्पयति—जीवन्मुक्त इति । एकजीववादं दूषयति—तत्रेति । एको मूढः । तदविद्याकल्पितो जीवन्मुक्तो गुरुः । तथा चोपदेशाद्युपपत्तिरि-त्याशङ्क्याह—न चेति । उक्तमेवोत्तरं व्यक्तीकरोति—अविद्यामयस्येति । अनेकजीवपक्षे तद्भेदस्याकल्पितत्वं कल्पितत्वं वा ? । नाद्य इत्याह—द्वितीये त्विति । तथा चोपदेशानुपपत्तितादवस्थ्यमिति भावः । न द्वितीय इत्याह—तद्भेदस्येति । भवतु ब्रह्मसिद्धिकारमतं, तत्र जीवन्मुक्त्युपपत्तेरित्यत आह—तन्मतेऽपीति । नानाजीववादे दोषान्तरमाह—किं चेति । एकस्य जीव-स्यान्ये जीवा दृश्या न वेति विकल्प्याद्यं प्रत्याह—अमी जीवभेदा इति । तेषां द्रष्टृत्वादकल्पितत्वमाशङ्क्याह—स चेति । चकारोऽवधारणार्थः । कथमकल्पितत्वमित्याशङ्क्य द्रष्टृत्वादित्याह—अन्यथेति । आद्ये कल्पे फलितमाह—अत इति । द्वितीयमनुभाष्य दूषयति—अदृश्याश्चेदिति । विकल्पद्वयेऽपि फलितमाह—अतो नेति । श्रुतिस्मृतिप्रमिताया जीवन्मुक्ते-र्युक्त्या निरासासंभवस्तयोर्बलीयस्त्वादिति चोदयति—नन्विति । श्रुति-स्मृत्योर्जीवन्मुक्तावतात्पर्यान्नेति परिहरति—नैवमिति । अतत्परत्वमेव दर्शयति—यत्तावदित्यादिना उपपत्तिमेवोपदर्शयति—तस्येति । ज्ञानस्य

तत्रावधिश्रवणं मतान्तर एवोपपद्यते। 'तस्य तावदेव चिरमि'ति हि शरीरपातावधिश्रवणं ज्ञानोत्पत्तेरेव युज्यते। ज्ञानस्यैव प्रकृतत्वात्। पुरुषविशेषस्य च तदापि तत्सम्भवात्। यदपि "ब्रह्मैव सन्ब्रह्माप्ये-ती"ति, तत्रापि ब्रह्मप्राप्तिः स्तूयते। यत्तु "विमुक्तश्च विमुच्यत" इति, तत्र रागादिभिर्विमुक्त उपाधिभिर्बुध्यादिगुणैर्वा विमुच्यत इत्यर्थो द्रष्टव्यः। यच्च 'सचक्षुरचक्षुरिव'। 'तद्यथाहिनिर्ल्वयनी'ति च, तत्रापि चक्षुरादावौदासीन्यमर्थो ग्राह्य इत्येषा दिक्।

### जीवन्मुक्तिव्यवस्थापनम्

अत्रोच्यते—न तावत्संस्कारलेशप्रयुक्त उक्तदोषः समस्ति। इह तादृक्संस्काराद्यनभ्युपगमात्। संस्कारलेशशब्दाभ्यां ह्यत्राविद्यैवा-वस्थाविशेषापन्नाभिधीयते। अवस्थाविशेषश्चाविद्याया विचित्रशक्ति-

---

तावदेव चिरमनुत्पादो यावदवसादःप्राणस्य न भवति, संनिहिते तु प्राणावसादे ज्ञानो[1]त्पत्तिरित्येतत्परं तस्य तावदेवेत्यादिवाक्यं न जीवन्मुक्तिपरमित्यर्थः। संनिहिते मरणे व्याकुलेन्द्रियस्य कुतो ज्ञानसमुत्पत्तिरित्याशङ्क्य सामान्यतो दर्शनं पुरुषधौरेये न प्रभवतीत्याह—**पुरुषविशेषस्येति**। वाक्यान्तरस्य जीव-न्मुक्तिपरत्वाभावं परिदर्शयति—**यदपीत्यादिना**। तथापि जीवन्मुक्तिप्रद्योत-कमस्ति वाक्यान्तरमित्याशङ्क्याह—**यत्त्वित्यादिना**।

ननु "सचक्षुरचक्षुरिवे"त्यादिवाक्यानि जीवन्मुक्तिं व्यक्तां प्रत्याययन्ति दृश्यन्ते। तत्राह—**यच्चेत्यादि**। स्थितप्रज्ञगुणातीतलक्षणवादि भगवद्वाक्यमपि परोक्षज्ञानिविषयमिति मत्वाह—**इत्येषा दिगिति**।

सिद्धान्तमारभते—**अत्रेति**। यत्तु जीवन्मुक्तिं दूषयितुं संस्काराद्यसंभवे कारणमुक्तं तन्निराकरोति—**न तावदिति**। तत्र हेतुमाह—**इहेति**। संस्कारलेशौ तर्हि कीदृशौ त्वद्दर्शने विवक्षितौ इत्याशङ्क्याह—**संस्कारेति**। कथमनिर्वाच्यस्या-ज्ञानस्यावस्थाविशेषोपपत्तिरित्यत आह—**अवस्थाविशेषश्चेति**। तथापि कथं जीवन्मुक्तिरित्यत आह—**तद्वानिति**। जीवन्मुक्तिसिद्धावुपदेशादेरुपपत्तिरिति

---

1. ज्ञानोत्....स्य

त्वात् प्रारब्धभोगतत्कारणमात्ररूपेणावस्थानम् । तद्वान्विद्वांश्च जीवन्मुक्तोऽभ्युपेयते । अतो नोक्तदोषसम्भवः ।

तत्वज्ञाने जातेऽपि चाविद्यानुवृत्तिर्नादृष्टचरी । तर्वादितत्वज्ञानामपि तत्र भ्रमदर्शनात् । विचित्रशक्तितापि मायाया लोके पुराणादिषु च प्रसिद्धा । जीन्मुक्तेश्चेत्थम्भावोऽभ्युपेयः । प्रकारान्तरासम्भवात् । जीवन्मुक्तिमानावष्टम्भाच्च । तत्प्रमाणं च मतान्तरेषु भाक्तं भवेन्न मुख्यम् । तथा हि—"आचार्यवान् पुरुषो वेद ।" "तस्य तावदेव चिरं, यावन्न विमोक्ष्येऽथ संपत्स्य" इत्युत्पन्नेऽपि तत्ववेदने मुक्तेः शरीरपातावधिश्रवणं नेतरपक्षेषूपपद्यते ।

पक्षान्तरेषु जीवन्मुक्तेर्विदेहमुक्तश्चासम्भवनिरूपणम्

पक्षान्तरेषु हि बन्धबीजे निवृत्तेऽनन्तरमेव विमुक्तिः । अनिवृत्ते

---

फलितमाह—**अतो नेति** । विरोधिज्ञाने सति कथमवस्थाविशेषावस्थानमविद्यायाः सिध्येदित्याशंक्याह—**तत्वज्ञान इति** । तरुस्वरूपज्ञानेऽपि तर्वोरेकत्वज्ञानस्य, चन्द्रादिनिश्चयेऽपि तत्र द्वित्वादिज्ञानस्य च दृष्टत्वादिति दृष्टान्तगर्भं हेतुमाह—**तर्वादीति** । विचित्रशक्तित्वादविद्याया बाधिताया नानुवृत्तिरनुपपन्नेति भावः । विचित्रशक्तित्वेऽपि निवृत्ताविद्यावस्थाने कथमतिप्रसङ्गो न प्रसरेदित्याशङ्क्याह—**जीवन्मुक्तेश्चेति** । असंभाव्यमानमपि प्रतिभासमानं संभावयति मायेत्यवगम्यते "माया ह्येषा मया सृष्टे"त्यादिवाक्यादित्यभिप्रायः । पूर्वोक्तजीवन्मुक्तिविषयश्रुतिस्मृतिभ्यां च बाधितानुवृत्तिरुपपन्नेत्याह—**जीवन्मुक्तीति** । जीवन्मुक्तिविषयप्रमाणस्य प्रदर्शितं गत्यन्तरमित्याशङ्क्याह—**तत्प्रमाणं चेति** । प्रकृतपरामर्शिना तच्छब्देन विद्यावन्तं पुरुषमाकृष्य तस्य विदेहनिर्वाणविलम्बावधिं शरीरपातं दर्शयति—**तस्य तावदेव चिरमित्यादि**। श्रुतिरिति वाक्यालोचनतो गम्यते न तस्य पक्षान्तरेषूपपत्तिरित्युपपादयति—**तथा हीति** । पक्षान्तरेष्वसंभवाभिधानं कथमिति चेत्तत्र ज्ञाने जाते बन्धबीजं निवर्तते वा नवेति विकल्प्याद्ये दोषमाह—**पक्षान्तरेषु हीति** । न द्वितीय

च तस्मिन् जन्मान्तरापत्तिर्दुर्वारा । अतो मुक्तेरवधिकरणं नार्थवत्स्यात् । तत्रापि तत्तुल्यमिति चेन्न । संसारस्यारब्धभोगमात्रावशिष्टताभ्युपगमात्, अवधिश्रुतेरुपपन्नत्वात् । न चेयं ज्ञानोत्पत्तेरवधिश्रुतिः । अश्रुतकल्पनाप्रसङ्गात् । विद्वानेव हि प्रकृतः । तस्यैव च "यावन्न विमोक्ष्येऽथ संपत्स्य" इत्यन्वयः सम्भवी । एवं "ब्रह्मैव सन् ब्रह्माप्येति," "विमुक्तश्च विमुच्यत" इति जीवन्मुक्तिपक्ष एवोपपद्यते नान्यत्र । किञ्च मतान्तरे मुक्तिरेव न सम्भविनीत्युक्तम् । तत्र कथय कथं जीवन्मुक्तिस्तन्मानं वा सम्भवेत् ।

---

इत्याह—**अनिवृत्ते चेति** । पक्षद्वयेऽपि फलितमाह—**अत इति** । ज्ञानस्य सनिदानसंसारनिरासित्वस्वीकारादवधिश्रुत्यनुपपत्तिः सिद्धान्तेऽपि समानेत्याशङ्कते—**तत्रापीति** । उत्सर्गापवादन्यायेन परिहरति—**न संसारस्येति** । सनिदानसकलसंसारनिरसनसमर्थमपि तत्वसाक्षात्करणं प्रारब्धकर्मप्रतिबन्धात् न भोगाभाससम्पादकाज्ञानावास्थाविशेषदौस्थ्यहेतुरित्यर्थः । यत्तु ज्ञानोत्पत्तेरेवेयमवधिश्रुतिरिति तत्राह—**न चेति** । किं तर्हि श्रुतमित्याशङ्क्याह—**विद्वानेवेति** । तद्विशेषणत्वेन ज्ञानमपि प्रकृतमित्याशङ्क्याह—**तस्यैवेति** । यत्तु तस्य ज्ञानस्य तावदेव चिरमनुत्पादो यावदवसन्नप्राणो न भवतीत्यादि तदसत् । न हि प्राणावसादसमये कस्यचिदपि सम्यग्ज्ञानसमुद्भवः सम्भवेत्" 'शरीरं मे विचर्षणमि' त्यादिश्रुतिविरोधादिति चकारार्थः । ब्रह्मैव सन्नि''त्यादिवाक्यान्तरस्यापि स्वपक्षे मुख्यत्वं दर्शयति—**एवमिति** । स्तुतिपरत्वे तु न मुख्यत्वसिद्धिः । विमुक्तश्चेत्यत्रापि संकोचाभावात् । तत्वसाक्षात्कारसमुदयसमकालं सकलसंसारबीजाज्ञाननिवृत्या मुक्तः शरीरपातानन्तरं विदेहमुक्तो भवति । 'सचक्षुर' चक्षुरित्यादावासङ्गहेत्वज्ञानानिवृत्तावौदासीन्यासंभवात्तन्निवृत्या जीवन्मुक्तिरभिमता । स्थितप्रज्ञादिलक्षणं पुनर्न परोक्षादिविषयम् । तस्य तत्वसाक्षात्कारविषयत्वोपपत्तेरित्यभिप्रेत्याह—**नान्यत्रेति** । पक्षान्तरेषु जीवन्मुक्तेस्तत्प्रमाणस्य चासंभवे हेत्वन्तरमाह—**किं चेति** । यत्र मुक्तिरेवानुपपन्ना तत्र सविशेषणायास्तस्यास्तत्प्रमाणस्य च दूरनिरस्ततेत्यर्थः । सिद्धान्तेऽपि गुर्वभावेन विद्यामुक्त्योरसंभादसंभवो जीवन्मुक्तितन्मानयोरिति चोदयति—**नन्विति** । किं तात्विकस्य गुरोरभावोऽभिमतः किं वा अतात्विकस्येति वक्तव्यम् । नाद्यः ।

### जीवन्मुक्तिविदेहमुक्त्योः स्वमत एव संभवप्रदर्शनम्

नन्वायुष्मतोऽपि मते गुरोरसम्भवान्मुक्त्यसम्भव इत्युक्तम्। तद्दुरुक्तम्। व्यवहारसिद्धादपि हि मायामयात् स्वप्नादिवत् गुरोरुपदेशसम्भवान्नास्मन्मते मुक्त्यनुपपत्तिः। गुरोस्तात्त्विकत्वे चाद्वैतश्रुतिरवरुद्धा स्यात्। तात्पर्यलिङ्गश्चावधीरितं स्यात्। आत्मभेदे च न किञ्चिन्मानमस्तीत्युक्तम्। तदेवमस्मत्पक्ष एव जीवन्मुक्तिश्चोक्तप्रकारेणैवोपपद्यते।

### जीवन्मुक्तिविदेहमुक्त्योरपि स्वमते मायिकत्वव्यवस्थापनम्

किञ्चाचार्यस्वरूपवज्जीवन्मुक्तिरपि मायामयी नानुपपत्त्यालं चालयितुमपि। मायामयस्य वास्तवत्वानुपपत्तित्वात्। न ह्यस्ति सम्भवो मायातनुराचार्यस्तज्जीवन्मुक्तिर्वास्तवीति। मुक्तेः सत्यत्वे च बन्धस्यापि सत्यत्वापत्तेरद्वैतागमविरोधोऽनपास्यः स्यात्। अवास्तवा-

---

अभ्युपगमादित्याह—तद्दुरुक्तमिति। अतात्त्विकस्य गुरोरङ्गीकारात्। न च तस्य रज्जुसर्पवत्कल्पितस्य विद्योपदेशयोरयोगः शङ्कनीयः। स्वप्नवदुपपत्तेरित्याह—व्यवहारेति। 'आचार्यवानि'त्यादिवाक्ये कल्पिताकल्पितगुरुसाधारणे सति गुरुरकल्पित एव किं न स्यादित्याशङ्क्य बलवत्प्रमाणविरोधादित्याह—गुरोरिति। अद्वैतश्रुतेरुपासनादिविषयत्वेनाविरोधमाशङ्क्याह—तत्तात्पर्येति। अद्वैतश्रुत्यनुग्राहिकामुपपत्तिं पूर्वोक्तां स्मारयति—आत्मभेदे चेति। स्वपक्षे मोक्षादेरुपपत्तिमुपसंहरति—तदेवमिति। इतश्च जीवन्मुक्तौ नानुपपत्तिरित्याह—किं चेति। तदेव हेत्वन्तरं प्रकटयति—आचार्येति। कथं पुनर्जीवन्मुक्तेर्मायामयत्वमिति तत्राह—न हीति। मुक्तेर्वास्तवत्वाज्जीवन्मुक्तेरपि तथात्वमेष्टव्यमित्याशङ्क्य निराचष्टे—मुक्तेरिति। यदि जीवन्मुक्तिरवास्तवी न तर्हि मानगम्या भवेत्। अन्यथा वास्तवत्वापत्तेरित्याशङ्क्याह—अवास्तवेति। मुक्तेरतात्त्विकत्वे सिद्धान्तविरोधमाशङ्क्य सर्वविशेषातीतं वस्तु सिद्धान्तितं श्रीगौडपादाचार्यैरित्याह—उक्तं चेति। जीवन्मुक्तिप्रकरणमुपसंहरति—तस्मादिति। अध्यायचतुष्टयार्थं श्रोतृप्रतिपत्तिसौकर्यार्थं संक्षिप्य क्रमेणानुद्रवति—तदेवमित्यादिना। प्रकरणार्थमुपसंहरति—इत्यशेषमिति।

चार्यविषयप्रमाणवच्च जीवन्मुक्तिप्रमाणं न विरुध्यते। उक्तं च तत्वविद्भिः—मुक्तेरप्यवास्तवत्वम्।

"न निरोधो न चोत्पत्तिर्न बन्धो नैव साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥" इति॥

तस्मादतिविशदा जीवन्मुक्तिः।

### ग्रन्थार्थोपसंहारः

तदेवं निरस्तसमस्ताप्रमाणाद्युपप्लवेभ्यो वेदान्तेभ्यः सच्चैतन्यानन्दैकरसेऽद्वितीयात्मन्यपरोक्षज्ञानोपजन इत्युक्तम्। उक्तश्च तत्राविरोधः। दर्शितानि च तत्साधनानि तत्फलश्चेत्यशेषमपि निरवद्यमवसेयम्। सेयम्—

आचार्यरत्नाकरसम्प्रसूता सन्न्यायरत्नैरतिरत्नरूपा।
उद्योतयन्ती परमं पुमांसं दीपावलिस्स्यात्पुरुषार्थसिध्यै॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्नारायणज्योतिः-
पूज्यचरणशिष्यस्य भगवत आनन्दानुभवस्य कृतौ
न्यायरत्नदीपावल्यां चतुर्थोऽध्यायः समाप्तः ग्रन्थश्च

---

सम्प्रति स्वकृतिं विदोषतया स्तोतुकामः संक्षेपविस्तराभ्यामुक्तां तां परामृशति—सेयमिति। तस्याः सम्प्रदायागतत्वेन कर्तृद्वारा दोषराहित्यं दर्शयति—आचार्येति। स्वरूपतो निर्दोषत्वं निर्दिशति—सन्न्यायेति। विषयतो निर्दोषतामाभाषते—उद्योतयन्तीति। तस्या निरतिशयपुरुषार्थहेतुभूतसम्यग्ज्ञानजनकतया तत्र श्रोतॄणां प्रवृत्तिं प्रार्थयते—दीपावलिरिति।

शुद्धानन्दमुनीश्वरं सुविशदज्ञानामृताम्भोनिधिं
संसेव्य प्रतिलब्धबुद्धिविभवः सद्बुद्धिसंवर्धनम्।
वेदान्तार्थविवेकमर्थगमनं स्वार्थप्रवाहावहं
चक्रे वक्रविलक्षणेन सुपथेनानन्दपूर्वो गिरिः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्द-
पूज्यपादशिष्यभगवदानन्दज्ञानविरचित-
न्यायरत्नदीपावलीटीकायां
चतुर्थोऽध्यायः समाप्तः

